



# ॥ श्रौतपाठः ॥

# A VEDIC READER

*FOR M. A. STUDENTS*




**IN TWO PARTS**

**PART I, SAMHITĀS**
**PART II, BRĀHMAṆAS**

**PART I**






PUBLISHED BY THE
UNIVERSITY OF CALCUTTA
1942



# FOREWORD

The present Vedic Reader, *Śrautapāṭha,* is primarily intended to meet the requirements of the M.A. Students of the University of Calcutta, according to the new Syllabus. Excepting the Upaniṣads which are easily accessible and the Vedāṅgas, the inclusion of which would make the volume too big, it represents in a small compass all the different branches of the Vedic literature. Mainly it aims at giving an idea of it as a whole, special stress being laid on its language and style in its different stages. Besides, the compilation is so made, as it will, it is hoped, enable the student to understand to some extent the culture and civilization and through them the minds of the ancient sages of the country regarding both the spiritual and secular matters.

The contents will show that passages are culled here from different Saṃhitās and Brāhmaṇas representing more or less all the four Vedas, some of them being in more than one recension. The special feature of the Sāmaveda lies in its chanting, so in order to make the student a little acquainted with it, only one hymn, the well-known *Vāmadevya Sāman,* is added hereto. Passages of different sages and on different topics are intended to avoid monotony of the Reader.

Yāska says in his *Nirukta,* vii. 3, that the *mantras* are visioned by the sages with various intentions or purposes ( एवमुच्चावचैरभिप्रायैरृषीणां मन्त्रदृष्टयो भवन्ति ). He wants to mean there-

by that from *mantras* a variety of purposes of their sages can be known. For instance, the *mantra* Ṛv, X. 95. 14 (*Śrautapāṭha*, Part I, p. 129) shows one's repentance (*paridevanā*). Now while Yāska gives only eight such examples, viz., censure, praise (*nindā*, *praśaṃsā*), etc., and in the *Bṛhaddevatā*, I. 35-39, there are thirty-six, in the *Vāraruカaniruktasamuccaya* (University of Madras, 1938), IV, we have thirty-one, each with a particular stanza followed by an explanation. As it is very interesting and helps a student in finding out the purpose of a *mantra* this portion of the above book is collected here. Old commentaries, where available, have been added, as their importance can in no way be denied.

It goes without saying that in the Vedic language accents play a very important part, and as such they must be mastered by a serious student. These accents are marked differently in different texts, as the present volume will show. With a view to making the students acquainted with the systems of marking the accents the compiler has prefaced the work with an essay, *Vaidikasvaravivaraṇa*, dealing with the subject in simple language as lucidly as he could. It is hoped that readers will derive much help from it.

The *Śrautapāṭha* is divided into two Parts each Part being of two sections with different paginations. The first section of Part I contains the texts of the Saṃhitās, and the second section the commentaries thereon. Similarly, the first section of Part II is composed of the texts of the Brāhmaṇas, and the second section of their commentaries.

Mahāmahopādhyāya Pandit Sitaram Sastri, Lecturer in Vedic literature in the University of Calcutta, is a renowned

Vedic scholar in the country representing perfectly the traditional school of Vedic Studies. Indeed, I am very glad to note that the compilation of the present volume was entrusted entirely to him, and he has kindly complied with our request, for the benefit not only of his own pupils in the University, but also of students at large. We are thankful to him.

Our thanks are also due to Sj. Prabhat Kumar Mukhopadhyaya, M.A., and Sj. Narendra Chandra Bhattacharya, Vedānta-mīmāṃsā-tīrtha, M.A., both of the Department of Śanskrit in the University, for their suggestions and revising the proofs.

UNIVERSITY OF CALCUTTA,
*April, 1942.*

VIDHUSHEKHARA BHATTACHARYA
*Head of the Department of Sanskrit.*

# साङ्केतिकान्यक्षराणि

| | |
|---|---|
| अनु० | अनुक्रमणी=सर्वानुक्रमणी |
| आ० श्रौ० | आश्वलायनश्रौतसूत्रम् |
| उ० | उणादिसूत्रम् |
| ऋ० प्रा० | ऋक्प्रातिशाख्यम् |
| ऋ० सं० | ऋक्संहिता |
| ऐ० आ० | ऐतरेयारण्यकम् |
| ऐ० ब्रा० | ऐतरेयब्राह्मणम् |
| छा० उ० | छान्दोग्योपनिषत् |
| जै० | जैमिनिसूत्रम् |
| जै० न्या० | जैमिनीयन्यायमालाविस्तरः |
| तै० आ० | तैत्तिरीयारण्यकम् |
| तै० ब्रा० | तैत्तिरीयब्राह्मणम् |
| तै० सं० | तैत्तिरीयसंहिता |
| नि० | निरुक्तम् |
| निघ० | निघण्टुः |
| पा० | पाणिनिः |
| पा० वा० | पाणिनिवार्त्तिकम् |
| फि० | फिट्सूत्रम् |
| बृ० | बृहदारण्यकोपनिषत् |
| शु० य० प्रा० | शुक्लयजुःप्रातिशाख्यम् |

# सूचीपत्रम्

## पूर्वखण्डम्



## उत्तरखण्डम्

# अनुक्रमणी

## संहितासु

(इह सर्वास्वनुक्रमणीषु संख्ययोः प्रथमा तत्तद्ग्रन्थेभ्यः समाहृतान् सन्दर्भान् सूचयति। द्वितीया तु पत्राणि।)

## १। विषयानुक्रमणी

### ऋग्वेदसंहितायाम्

## वाजसनेयिसंहितायाम्



## तैत्तिरीयसंहितायाम्



## मैत्रायणीयसंहितायाम्



## सामवेदसंहितायाम्



## अथर्ववेदसंहितायाम

# २। ऋष्यनुक्रमणी

## ऋक्संहितायाम्



## वाजसनेयिसंहितायाम्



## अथर्ववेदसंहितायाम्

# २ । छन्दोऽनुक्रमणी

## ऋग्वेदसंहितायाम्



## वाजसनेयिसंहितायाम्



## अथर्ववेदसंहितायाम्

## ब्राह्मणेषु

# विषयानुक्रमणी

### ऐतरेयब्राह्मणे



### साङ्ख्यायनब्राह्मणे

## शतपथब्राह्मणे



## तैत्तिरीयब्राह्मणे



## ताण्ड्यमहाब्राह्मणे

## षड्विंशब्राह्मणे



## जैमिनीयतलवकारब्राह्मणे



## गोपथब्राह्मणे



## ऐतरेयारण्यके

## तैत्तिरीयारण्यके



## आश्वलायनश्रौतसूत्रे

# वैदिकस्वरविवरणम्

वेदानां प्रधानं वैशिष्ट्यं स्वरा नाम । ते चेमे स्वरा वर्णधर्मरूपा न धर्मिणः साक्षात् । गानस्वरास्त्वितो भिन्ना धर्मिरूपाः । ते च सामवेदे साम्नां गानेष्वेवोपयुक्ताः । धर्मरूपास्तु स्वराः सर्वेषु वेदेषूपयुज्यन्ते । ते चोदात्तानुदात्तस्वरितप्रचिता इति चतुर्विधाः । मुखत एवोच्चारणमेषामाधारभूतवर्णोच्चारणोपयुक्तस्थानावयवसम्बन्धात् । तदुक्तं पाणिनिना (१-२-२९—३१) उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः स्वरित इति । प्रचितस्त्वनुदात्तस्यैवावस्थाविशेष उदात्तवच्चास्योच्चारणमिति तस्य विषये न किमपि वक्तव्यम् । अक्षराश्रया ( ऋ० प्रा० ३-२ ) इति वचनेन ऋक्प्रातिशाख्यकारेणापि मौखिकत्वं तेषां मन्यते वर्णधर्मत्वमपि ।

इमे च स्वरा उच्चार्यमाणाः संस्कारदार्ढ्याय मुखेतराङ्गसञ्चालनमपेक्षन्ते । तदुक्तमृक्प्रातिशाख्यकारेण (३-१) आयामविस्रम्भाक्षेपैस्त उच्यन्तेऽक्षराश्रयाः । इति । तदर्थश्चोवटेन आयाम ऊर्ध्वीकरणं गात्राणां विस्रम्भोऽधोनयनमाक्षेपश्च तिर्यग्भाव इति तत्र विवृतः ।

तदिदमङ्गसञ्चालनं वेदभेदेन सम्प्रदायतो विभिद्यते । यथा ऋग्वेदिभिः कृष्णयजुर्वेदिभिरथर्ववेदिभिश्च मस्तकसञ्चालनेन ते स्वराः प्रदर्श्यन्ते । शुक्लयजुर्वेदिभिस्तु हस्तसञ्चालनेन । तदुक्तं शुक्लयजुःप्रातिशाख्ये (१-१२१) हस्तेन ते इति । हस्तेन वेदं योऽधीत इति (५५) पाणिनीयशिक्षावचनमप्यत्रानुकूलम् । सामवेदिभिस्तु केवलं निर्गानमन्त्रपाठावसरे हस्ताङ्गुलिसञ्चालनेन ते प्रदर्श्यन्ते । अत एव पाणिनीयशिक्षायाम ( ४४ ) उदात्तं प्रदेशिनीं विद्यात्प्रचयं मध्यतोऽङ्गुलिम् । निहतं तु कनिष्ठिक्यां स्वरितोपकनिष्ठिकाम् ॥ इत्युक्तं सङ्गच्छते ।

एषामुच्चारणेऽङ्गभेद इव लेखनेऽपि सम्प्रदायतश्चिह्नभेदः प्रायेण । तत्रर्ग्वेदिभिरक्षरस्योपरिष्टादधस्ताच्च रेखालेखनेन ते स्वराः प्रदर्श्यन्ते । तत्राक्षरस्याधस्तात्तिर्यग्गामिन्या रेखयानुदात्तः प्रदर्श्यते । यथा अग्निमित्यत्राकारे । अक्षरस्योपरिष्टादूर्ध्वगामिन्या रेखया स्वरितः प्रदर्श्यते । यथा अग्निमीळे इत्यत्र मकारात्परवर्तिनि ईकारे । उदात्तश्चिह्नाभावेन विज्ञायते । यथा अग्निमीळे इत्यत्र मीकारात् पूर्ववर्ती ग्निशब्देकार उदात्तः । प्रचितस्तु तस्योदात्तवद्भाव इति वर्णनेन चिह्नराहित्येनैव विज्ञायते । यथा अग्निमीळे इत्यत्र ळेकारस्यैकारः प्रचितः । उभयत्रापि चिह्नराहित्यम् ।

कृष्णयजुर्वेदिभिरपीमान्येव स्वरचिह्नानि प्रयुज्यन्ते । शुक्लयजुर्वेदिभिरपि तथैव

क्रियते स्वरितविशेषस्त्वक्षरस्याधस्ताच्चतुरङ्कचिह्नविलेखनेन प्रदर्श्यते। यथा धान्य-
४
मसि इत्यत्र यकाराकारे। क्वचित्पुनरक्षरस्य स्वरितविशेषस्याधस्तात्तिर्यक्काक-
पदचिह्नेन ( ़ ) एवंरूपेण स प्रदर्श्यते।

कठशाखिभिः पुनरक्षरस्योपरिष्टादूर्ध्वगामिन्या रेखयोदात्तः प्रदर्श्यते। स्वरितविशेषेऽक्षरस्याधस्तात्तिर्यक्काकपदचिह्नम् ( ़ ) एवंरूपं प्रयुज्यते। अनुदात्तचिह्नं तु न दीयते। यथा किं ब्राह्मणस्य पितरं किमु पृच्छसि मातरम् इत्यत्राक्षरोपरिवर्तिनीभी रेखाभिरुदात्ताः प्रदर्श्यन्ते। चिह्नरहितानामनुदात्तत्वं चिह्नाभावाद्विज्ञायते। स्वरितविशेषे च व्यृद्धयता इत्यत्र वकारायकाराधोवर्तीव चिह्नं दीयते।

अथर्ववेदे स्वरितानुदात्तचिह्ने ऋग्वेद इव। स्वरितविशेषे तु स्वरिताक्षरस्याग्रे विदण्डाङ्कुशचिह्नम् ( ꣳ ) ईदृशं दीयते। यथा कन्या इत्यत्र।

सामवेदे तु रेखाचिह्नैर्नोदात्तादयः प्रदर्श्यन्ते किंतु अक्षराणामुपरिष्टादङ्कविलेखनेन। तत्रोदात्तेऽक्षरस्योपरिष्टादेकाङ्कविलेखः स्वरिते द्व्यङ्कोऽनुदात्ते त्र्यङ्कः। प्रचिते तु न किमपि चिह्नम्। यथा अग्न आ याहि इत्यत्रोदात्तयोरकाराकारयोरुपरिष्टादेकाङ्कः। अनुदात्ते ग्नाकारे त्र्यङ्कः। स्वरिते याकारे द्व्यङ्कः। प्रचिते तु हीकारे न किमपि चिह्नम्। एवं स्वरचिह्नान्युपयुज्यन्ते।

यजुर्वेदं विहायान्येषु वेदेषु ब्राह्मणान्येकश्रुतीनि भवन्ति। न तत्र त्रैस्वर्यमुपयुज्यते लिख्यते वा। यजुर्वेदे कृष्णयजुर्वेदिभिः संहितावदेव स्वरत्रयं ब्राह्मणग्रन्थेऽप्युच्चार्यते लिख्यते च। शुक्लयजुर्वेदिभिस्तु अनुदात्तचिह्नमेव केवलं ब्राह्मणे लिख्यते। तेन च भाषिकः स्वरः सूच्यते। भाषिकः स्वरस्तु ब्राह्मणे उदात्तविशेषोऽनुदात्तविशेषश्चोच्येते। तदुक्तं शुक्लयजुःप्रातिशाख्ये (१-१२९) द्वौ इति सूत्रेण। तदर्थश्चोवटेन विवृतः किमविशेषेण यजुर्वेदे त्रीन् स्वरानाहुः। नेत्युच्यते। द्वौ स्वरावुदात्तानुदात्तौ भाषितलक्षितौ शतपथब्राह्मण आहुरिति। भाषिकभाषितशब्दयोरर्थभेदाभावोऽभिप्रेयते। यदोदात्तोऽनुदात्तात्पूर्वो भवति तदा तस्यानुदात्तात्पूर्ववर्तिन उदात्ताक्षरस्याधस्तात्तिर्यग्रेखा विलिख्यते। यथा हस्तेऽग्नी आदधीत इत्यत्र। स्वरितात्पूर्वभाविन्यनुदात्ते चेदं चिह्नं द्विगुणितं विलिख्यते। यथा वीर्यम् इत्यत्र वीकारे। यदा संहितायाः स्पष्टत्वेन स्वराः स्पष्टास्तदैवं विलेखः। यदा तु विच्छेदेन संहितायाः स्वरा अस्पष्टास्तदा तेषामस्पष्टत्वबोधनायोक्तचिह्नस्थाने बिन्दवो विलिख्यन्ते। यजुर्वेदे ब्राह्मणे कण्डिकाप्रारम्भे वाक्यस्य

वाक्यांशस्य वा विच्छेदो भवति। तत्र अनुदात्तात्पूर्वं उदात्ते(...)एवं बिन्दवो विलिख्यन्ते। स्वरितपूर्ववर्तिनि अनुदात्ते तु (: : :) इत्येवं बिन्दूनां द्वैगुण्यं भवति।

स्वरितः स्वरो जात्याजात्यभेदेन द्विविधः। ऋग्वेदिभिर्जात्या प्रकृत्या स्वभावेन वा यः स्वरितः स जात्य इत्युच्यते। यस्य स्वरितस्य पूर्ववर्त्युदात्तसम्बन्धवशात् परवर्त्यनुदात्तस्थानिकत्वं नास्ति स उदात्तरूपनिमित्तं विना स्वभावेनैव स्वरित इति स जात्यो भवति। तद्व्यतिरिक्तस्त्वजात्यः। उदात्तनिमित्तकः पूर्वं विद्यमानादुदात्तात्परवर्त्यनुदात्तस्थानिक इत्युक्तं भवति।

शुक्लयजुर्वेदिभिस्तु एकपदे नीचपूर्वः सयवो जात्य इति ( शु० प्रा० १-१११ ) जात्यस्वरितलक्षणमुच्यते। एकस्मिन्पदेऽनुदात्तपूर्वो यकारेण वकारेण वा सहितो जात्यः स्वरित इति तदर्थः। यथा कन्या धान्यमित्यत्र। अनुदात्तपूर्वत्वाभावेऽप्ययं जात्यो भवतीति तद्भाष्यकृदुवटः। यथा स्वः इति।

अजात्यस्य स्वरितस्य परस्तादुदात्तान्तरे प्राप्तेऽनुदात्तत्वं भवति अन्यथा स्वरितत्वम्। तत्र स्वरिते उपर्युक्तं चिह्नं (४) विलिख्यते। जात्यस्यापि स्वरितस्यानुदात्तो परो यदा तदानीमजात्यवदेव चिह्नमुपयुज्यते। पूर्वोक्त अग्निमीळ इत्युदाहरणे मीकारोऽजात्यः स्वरितः। स तु परस्तात् ळे इत्यस्यानुदात्तत्वाद् उपरिलेखया विलिख्य प्रदर्श्यते यथोक्तं पुरस्तात्। वर्ण्या अभि इत्यत्र जात्यस्य ण्या इति स्वरितस्यापि परस्तादभीत्यस्याकारोऽनुदात्तः पर इति उपरिरेखयैव विलेखः। यदा तु जात्यात्स्वरितात्परस्तादुदात्तो वा जात्यस्वरितान्तरं वा भवति तदा तस्य जात्यस्वरितस्याङ्कचिह्नं स्वरितानुदात्तचिह्ने च प्रदाय विलेखो भवति। तादृशस्थले कदाचिदेकाङ्कचिह्नं कदाचिच्च त्र्यङ्कचिह्नं विलिख्यते। यथा न्य१न्त्रिणम्, कन्या ३ वाः इत्यत्र। एवंविलेखो बह्वृचैः कम्पशब्देन व्यवह्रियते। अङ्कपरिमितया पूर्वाक्षरावृत्त्या चोच्चार्यते।

स्वरितस्य शुक्लयजुःप्रातिशाख्ये अभिनिहितः, क्षैप्रः, प्रश्लिष्टः, तैरोव्यञ्जनः, तैरोविरामः, पादवृत्तः, ताथाभाव्य इति सप्तविधत्वमुच्यते। उदात्ताभ्यामेकारौकाराभ्यां परवर्त्ती अनुदात्तोऽकारो यदा लुप्यते तत्रत्यः स्वरितोऽभिनिहित इत्युच्यते। यथा ते+अवदन्=तेऽवदन्। अत्र सन्ध्यस्ते इत्यस्य स्वरोऽभिनिहितः स्वरितः। तदुक्तं शुक्लयजुःप्रातिशाख्ये

(१-११४) पदोद्ग्रयामकारो लुगभिनिहित इति। उदात्तयोरिकारोकारयोरनुदात्तेऽकारे परे यो यण्सन्धिः स क्षैप्रः। तत्र योऽनुदात्ताकारस्य स्वरितः स्वरः स क्षैप्र इत्युच्यते। यथा नि+अत्रिणम्=न्य१त्रिणम्। अत्र उदात्तनिकारेकारात्परवर्त्त्यत्रिणमित्यस्याकारेऽनुदात्ते यणि यकाराकारः स्वरितः क्षैप्रः स्वरितः। तदुक्तं प्रातिशाख्ये (शु० प्रा० १-११५) युवर्णौ यवौ क्षैप्र इति। यत्र ह्रस्वयोरिकारयोर्मध्ये पूर्व इकार उदात्तः परश्चेकारोऽनुदात्तस्तत्र सन्धिजः सवर्णदीर्घः स्वरः प्रश्लिष्टस्वरित इत्युच्यते। यथा स्रुचि+इव। अत्र चिकारस्येकारो ह्रस्व उदात्तः परवर्ती इवशब्दस्येकारो ह्रस्वोऽनुदात्तः। अत्र सन्धिजः स्रुचीव इत्यत्र चीकारः स्वरितः। स च प्रश्लिष्टः। तदुक्तं प्रातिशाख्ये (शु० प्रा० १-११६) इवर्णं उभयतो ह्रस्वः प्रश्लिष्ट इति। उदात्तानुदात्तयोर्मध्ये व्यञ्जनेन व्यवधाने योऽनुदात्तः स्वरितः स तैरोव्यञ्जन इत्युच्यते। यथा अग्निमीळे इत्यत्राग्निशब्देकार उदात्त ईळेशब्देकारश्चानुदात्तः। तयोर्मकारेण व्यञ्जनेन व्यवधानादयमीकारस्वरस्तैरोव्यञ्जनसञ्ज्ञः। तदुक्तम् (शु० प्रा० १-११७) स्वरो व्यञ्जनयुतस्तैरोव्यञ्जन इति। यत्रावगृह्ये पदे उदात्तात्परोऽवग्रहस्तत्र ततः परवर्ती स्वरितस्तैरोविराम इत्युच्यते। यथा यज्ञपतिमिति पदे पदपाठकाले यज्ञऽपतिम् इत्यत्र ज्ञाकारादुदात्तात्परोऽवग्रह इति ततः परवर्ती पकाराकारः स्वरितः स तैरोविरामसञ्ज्ञितः। तदुक्तम् (शु० प्रा० १-११८) उदवग्रहस्तैरोविराम इति। यत्राव्यवहितयोरुदात्तानुदात्तस्वरयोः संहितायामनुदात्तः पूर्ववर्त्युदात्तवशात् स्वरितः स पादवृत्त इत्युच्यते। एतस्यैव स्वरस्य वैवृत्त इत्यपि नामान्तरम्। यथा यः+इन्द्रः=यऽइन्द्र इत्यत्र यकाराकारस्योदात्तस्य इन्द्रशब्देकारस्य चानुदात्तस्याव्यवधानम्। अत्र यकाराकारादुदात्तात्पर इन्द्रशब्देकारोऽनुदात्तः संहितायां स्वरितः। सोऽयं पादवृत्तसञ्ज्ञः। स्वरयोरन्तरस्य प्रातिशाख्ये स्वरान्तरं विवृत्तिरिति विवृत्तिसञ्ज्ञा क्रियते। तया व्यवहित इति वा तया लक्षित इति वा स वैवृत्तशब्देन बोध्यते। तस्यैवैतस्य पादवृत्तसञ्ज्ञेत्युक्तम्। तदुक्तम् (शु० प्रा० १-११९) विवृत्तिलक्षणः

पादवृत्त इति। यत्रावगृह्ये पदे उदात्तयोः स्वरयोर्मध्यवर्ती पूर्वपदान्तोऽनुदात्तः पदपाठे स्वरितो भवति स ताथाभाव्यसञ्ज्ञकः। यथा तनूनपात् इति पदे तकाराकारनकाराकारयोरुदात्तयोर्मध्यवर्ती नूकारोऽनुदात्तः पदपाठकाले स्वरितो भवति तनूऽनपात् इति। अयं च नूकारः पूर्वपदस्य तनूइत्येतस्यान्तः स्वरित उदात्तद्वयमध्यवर्ती चेति ताथाभाव्य इत्युच्यते। अत्र पदपाठे ऋग्वेदिभिर्नूकार उक्तरीत्या स्वरितः प्रोच्यते। सकम्पता च तत्र तस्य भवति। अत एव तैः पदपाठे तनूऽऽनपात् इति पदं पठ्यते लिख्यते च। शुक्लयजुर्वेदिभिः पुनर्नायं पठ्यते लिख्यते वा। उक्तस्थलेऽनुदात्तस्यैव तैरुच्चारणं लेखनञ्च। शुक्लयजुः प्रातिशाख्ये तदुक्तिरन्येषामाचार्याणां मताभिप्रायेणेति तत्र उदाद्यन्तो न्यवग्रहस्ताथाभाव्य इति (शु० प्रा० १ १२०) सूत्रव्याख्यायामुवटः। एतस्य ताथाभाव्यस्य कारिकया लक्षणं प्रोच्यते। अवग्रहो यदा नीच उच्चयोर्मध्यतः क्वचित्। ताथाभाव्यो भवेत्कम्पस्तानूनप्त्रे निदर्शनम् ॥ इति। सर्वे चेमे सन्धिवशतो भवन्ति।

यथेमेऽक्षरधर्मभूता उदात्तादयः स्वराः सर्ववेदेषूच्चार्यन्ते लिख्यन्ते च तथैव सामवेदे गानोपयोगिनो धर्मिभूता अपि स्वरा गान उपयुज्यन्तेऽङ्कचिह्नैश्च लिख्यन्ते। ते च धर्मिभूताः सप्त गानस्वरा भवन्ति। क्रुष्टः प्रथमो वा १, द्वितीयः २, तृतीयः ३, चतुर्थः ४, मन्द्रः ५, अतिस्वार्यः ६, अतिक्रुष्टः सप्तमो वा ७ इति। ये खल्विमे क्रुष्टादयः सामगानस्वरास्त एव लौकिकगानोपयोगिनः षड्जादयो भवन्ति। क्रमस्तु तेषां सामवेदे लौकिकगानेषु च विभिद्यते। लोके षड्जऋषभगान्धारमध्यमपञ्चमधैवतनिषादा इत्येवंक्रमेण तदाद्यक्षरग्रहणेन सारेगमपधनीत्येवमुपयुज्यन्ते। एषामेतेनैव क्रमेण पूर्वपूर्वस्वरापेक्षया परपरवर्तिनः स्वरस्योच्चध्वनिना गानं भवति यत्खलु गायकैरारोहक्रमः स्वराणामिति व्यवह्रियते। एतेषामेव च स्वराणामन्तिमं निषादमारभ्य पूर्वपूर्वस्य परपरवर्तिस्वरापेक्षया नीचैर्ध्वनिना षड्जपर्यन्तं गानेऽवरोहक्रम इत्युच्यते। एते स्वराः सप्तापि ध्वनित्रयेणोच्चार्यन्ते मन्द्रमध्यमताररूपेणेति यथाक्रमं मन्द्रसप्तकं मध्यमसप्तकं तारसप्तकञ्चेति व्यवहारः। त एते लोके मुखेन वेणुवीणादिवाद्यैश्च गीयन्ते। सामसु ये क्रुष्टादयः स्वरास्तेषां लौकिकगानस्वरसाम्यं क्रमश्च नारदीयशिक्षायाम्—

यः सामगानां प्रथमः स वेणोर्मध्यमः स्वरः ।
यो द्वितीयः स गान्धारस्तृतीयस्त्वृषभः स्मृतः ॥

इत्यादिना प्रपञ्चिते । एवं च लोकगता गानस्वरा ये षड्जादयस्त एव मध्यममारभ्य विपरीतक्रमेण गृहीताः क्रुष्टाद्यो गानस्वराः क्रमिका भवन्ति सामवेद इति पर्यवसितम् । यथा सामस्वराः क्रमिकाः क्रुष्टः, द्वितीयः, तृतीयः, चतुर्थः, मन्द्रः, अतिस्वार्यः, अतिक्रुष्टश्चेति, एवं लौकिकगानस्वराः मध्यमः, गान्धारः, ऋषभः, षड्जः, निषादः, धैवतः, पञ्चमश्चेति । एते च केवलसंख्यया स्वरबोधकशब्दाद्याक्षरैश्च क्रमेण विलिखिता एवंरूपा भवन्ति—

सामस्वराः १, २, ३, ४, ५, ६, ७ इति ।
लौकिकगानस्वराः म, ग, रे, सा, नि, ध, प । इति ।

एवं च षड्जमारभ्यारोहक्रमेण लोके ये स्वराः प्रदर्श्यन्ते तेषां मध्यममारभ्यावरोहक्रमेण ग्रहणे सामवेदीयाः सामस्वरा भवन्तीति फलितम् । सामसु चैषां क्रुष्टादीनां स्वराणां गानावसरे हस्ताङ्गुलिषु निवेशः क्रियते । यथा । अङ्गुष्ठस्याग्रे पर्वणि क्रुष्टः १, प्रदेशिन्या मध्यमे पर्वणि द्वितीयः २, मध्यमाया मध्यमे पर्वणि तृतीयः ३, अनामिकाया मध्यमे पर्वणि चतुर्थः ४, कनिष्ठिकाया मध्यमे पर्वणि मन्द्रः ५, कनिष्ठिकाया मूलपर्वणि अतिस्वार्यः ६, अङ्गुष्ठस्योत्तमे पर्वणि अतिक्रुष्टः ७ इति । अत्र सर्वत्र दक्षिणहस्ताङ्गुलयो मन्तव्याः । तदुक्तम्

अङ्गुष्ठस्योत्तमे क्रुष्टः प्रथमे प्रथमः स्मृतः ।
प्रदेशिन्यां तु गान्धार ऋषभस्तदनन्तरम् ॥
अनामिकायां षड्जः स्यात्कनिष्ठायां निषादकः ।
धैवतस्तु कनिष्ठाया मूलपर्वगतो भवेद् ॥

इति । गानावसरे दक्षिणं हस्तमुत्तानं प्रसार्याङ्गुष्ठाग्रेण तत्तत्स्वरार्थं तत्तदङ्गुलिपर्व स्प्रष्टव्यं भवति । तदुक्तम् ।

प्रसार्य चाङ्गुलीः सर्वा रोपयेत्स्वरमण्डलम् ।
न चाङ्गुलिभिरङ्गुष्ठमङ्गुष्ठेनाङ्गुलीः स्पृशेत् ॥
विरला नाङ्गुलीः कुर्यान्मूले चैना न संस्पृशेत् ।
अङ्गुष्ठाग्रेण ता नित्यं मध्यमे पर्वणि स्पृशेद् ॥

इति । तत्राङ्गुष्ठेनेतराङ्गुलिसंस्पर्शः प्रथमसप्तमौ विना भवति । तयो-

र्वेलायामङ्गुष्ठः पश्चात्प्रसार्यते सम्प्रदायतः। लेखनावसरे चेमे स्वरा ऋगक्षराणामुपरिष्टादग्रे च तत्पङ्क्तौ उपर्युक्तक्रममनुरुध्याङ्कचिह्नैर्लिख्यन्ते। यथा

३ २
कयानश्चित्रेत्यत्र सामलेखने का ऽ ५ या इत्यत्र काक्षरोपरिवर्तिना त्र्यङ्कचिह्नेन साम-सम्बन्धी तृतीयः स्वरो बोध्यते। तस्यैवाक्षरस्य परस्तात्तत्पङ्क्तौ वर्तमानेन पञ्चाङ्केन मन्द्रः स्वरो बोध्यते।

गानलेखने कानिचन ऋगक्षराणि साङ्कानि कानिचन तु निरङ्कानि लिख्यन्ते। तस्यायमभिप्रायः। पूर्ववर्ति साङ्काक्षरं तदङ्कबोधितस्वरेण गेयं परवर्त्तिनिरङ्कमक्षरमपि तेनैव पूर्वाक्षराङ्कस्वरेण गेयम्। एवं च निरङ्कान्यक्षराणि पूर्ववर्तिनाङ्कस्वरेण गेयानीति स्पष्टम्। यथोक्तायामेव कयेत्यृचि

४ २ ४र ५
गानलेखने द्वितीयभागो नश्चाऽइत्राऽआभुवाद् इति। अत्र चकाराक्षरोपरि चतुरङ्केण चतुर्थः स्वरश्चकाराक्षरस्य भवति। ततः पुनः साङ्काक्षरं त्रेति। तन्मध्यवर्ति इकाररूपमक्षरं पूर्ववर्तिना त्र्यङ्कस्वरेण गेयं भवति। एवमाकाराक्षरस्य चतुरङ्कचिह्नितत्वेन चतुर्थः स्वरः। परवर्तिनो भू इत्यस्य निरङ्कत्वेन पूर्वस्य आ इत्यक्षरस्य यः स्वरश्चतुर्थस्तेनैतद् भूइत्यक्षरमपि गेयं भवति। एवं सर्वत्र।

यद्यपि अक्षराणामुपरि तत्पङ्क्तौ वा वर्तमानेनाङ्कस्वरेण परवर्तीनि निरङ्कान्यक्षराणि गेयानीति नियमोऽक्षराणामुपरिष्टादक्षरपङ्क्तौ वाऽङ्कलेखने समस्तथापि अक्षरोपर्यङ्केन तदेवाक्षरं तत्सङ्ख्याकेन स्वरेण गेयं भवतीति तस्याक्षरस्य व्यक्तत्वेन व्यक्तस्वराभिप्रायेऽक्षरस्योपर्यङ्कविलेखेन स्वरबोधः। यदा तु गेयस्वरस्याक्षरमव्यक्तं तदा तादृशस्वरबोधनायाक्षरपङ्क्तौ स्वरबोधार्थान्यङ्कचिह्नानि विलिख्यन्त इति विशेषः।

सामगानलेखने स्वरसूचकाङ्केभ्योऽपरेऽपि केचन विशेषा भवन्ति। यथा अक्षरोपरि कुत्रचन कुत्रचन र क उ इत्येतेषामक्षराणामन्यतमं लिखितं भवति। तत्र र इत्यनेन यदुपरि रेत्यक्षरं विलिखितं तदक्षरं दीर्घं कृत्वा गेयमित्यर्थः सूच्यते। इदं दीर्घीकरणं लौकिकगाने आलापशब्देन प्रतिपाद्यते। क इत्यनेन कनिष्ठः स्वरो बोध्यते। उ इत्यनेन तु उच्चस्वरबोधः। यदा चाक्षरस्योपरिष्टाद्रेखा(—)एवंरूपा लिखिता भवेत्तदा स स्वरस्त्रिगुण उच्चारणीय इत्यर्थो भवति। (^ ^ ) एवंचिह्नयोर्विलेखे स स्वरः परवर्तिस्वरेण मीलितवदुच्चारणीय इत्यर्थो भवति।

सामगाने प्रथमाक्षरोपरि योऽङ्को भवेत्तद्बोध्यः स्वरस्तस्य साम्न आरम्भको

मुख्यो वा स्वर उच्यते। ते चारम्भका विभिन्नेषु सामसु विभिन्ना भवन्ति। तत्राप्यतिस्वार्यातिकुष्टौ ( षष्ठसप्तमौ ) विनाऽवशिष्टानामेवारम्भकत्वं भवति। एवं सत्यारम्भकस्वरभेदेन साम्नां पञ्चविधता सम्पद्यते। तस्य चारम्भकस्य स्वरस्य षड्जत्वकल्पनया गानं प्रवर्तते। अत एवोच्यते प्रत्येकं षड्जभावेनेति सूत्रम्।

साम्नां गाने पञ्च सप्त वा भागा भवन्ति ये सामभक्तिशब्देन व्यवह्रियन्ते। तत्राद्यो भाग उद्गीथशब्देन व्यवह्रियते। स चोद्गात्रा गेयः। प्रणवस्योद्गीथशब्दव्यवहार उपनिषत्सु विस्पष्टः। एवं च साम्नां गाने प्रथमं प्रणवगानं नियतमिति फलितम्। तदुक्तं प्रणवं प्राक् प्रयुञ्जीतेति। प्रणवश्च साम्नामारम्भकस्वरभेदेन भिन्नभिन्नस्वरो भवति। प्रणवगाने स्वरत्रितयमपेक्ष्यते। साम्न आरम्भकः स्वर एकः। तस्मात्पूर्ववर्ती परवर्ती चेति द्वौ स्वरौ। एवं च यदा साम्न आरम्भकस्तृतीयः स्वरो भवेत्तदा तत्पूर्वसङ्ख्याको द्वितीयः स्वरः परवर्तिसङ्ख्याकश्चतुर्थः स्वरश्चेति त्रिभिः स्वरैस्तत्र प्रणवो गीयेत। तत्राप्यारम्भकः स्वरः प्रथमः परवर्ती स्वरो द्वितीयः पूर्ववर्ती च स्वरस्तृतीय इत्येवमेषां क्रमो भवति। एवं च तृतीयस्वरारम्भकसा-

३ २ ४

मनि ओऽ ४ म् इत्येवंरूपता प्रणवस्य सम्पद्यते। चतुर्थस्यारम्भकत्वे ओऽ ५

३ ५ ४

म्। पञ्चमस्वरारम्भकत्वे ओऽ ६ म् इत्येवंरूपता भवति। द्वितीयस्यारम्भ-

२ १

कत्वे प्रणव ओऽ३म् इत्येवंरूपः। प्रथमस्यारम्भकत्वेऽपि तादृश-

२ १

स्वरूप ओऽ२म्इत्येवमेव भवति। यतः प्रथमस्यारम्भकत्वे तत्पूर्ववर्तिस्वराभावः। सामगाने यो भागः पृथक्पृथग्भावेन गीयते तस्य पर्वशब्देन व्यवहारः सम्प्रदायसिद्धः। पर्वभेदश्च (॥) एवंरूपरेखाद्वयविलेखेन प्रदर्श्यते। यथा कयेत्य-

३ र ४ २ ४र ५

र्चि वामदेव्यसामगाने काऽ५या॥ नश्चाऽ३इत्राऽ आभूवात्॥ इत्यादिरूपेण। सामसु ऋगक्षरापेक्षया अधिकान्यक्षराणि ऋग्वर्णविकारतः स्तोभवशतो वा लभ्यन्ते। स्तोभाश्च स्तोभग्रन्थ उपदिष्टा नानारूपा भवन्ति। यस्याक्षरजातस्य गानमात्रोपयोगित्वमर्थावबोधे चानुपयोगः स स्तोभ इति व्यवह्रियते। ते च औहोहायिप्रभृतयः।

ॐ३म्

# १ । ऋक्संहिता

॥१॥

१·१

१—९ । वैश्वामित्रो मधुच्छन्दा ऋषिः । गायत्री छन्दः । अग्निर्देवता ।

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।

होतारं रत्नधातमम् ॥१॥

अग्निम् । ईळे । पुरःऽहितम् । यज्ञस्य । देवम् । ऋत्विजम् ।

होतारम् । रत्नऽधातमम् ॥१॥

अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।

स देवाँ एह वक्षति ॥२॥

अग्निः । पूर्वेभिः । ऋषिऽभिः । ईड्यः । नूतनैः । उत ।

सः । देवान् । आ । इह । वक्षति ॥२॥

अग्निना रयिमश्नवत्पोषमेव दिवेदिवे ।

यशसं वीरवत्तमम् ॥३॥

अग्निना । रयिम् । अश्नवत् । पोषम् । एव । दिवेऽदिवे ।

यशसम् । वीरवत्ऽतमम् ॥३॥

अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि ।

स इद्देवेषु गच्छति ॥४॥

अग्ने । यम् । यज्ञम् । अध्वरम् । विश्वतः । परिऽभूः । असि ।

सः । इत् । देवेषु । गच्छति ॥४॥

अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः ।

देवो देवेभिरागमत् ॥५॥

अग्निः । होता । कविऽक्रतुः । सत्यः । चित्रश्रवःऽतमः ।

देवः । देवेभिः । आ । गमत् ॥५॥

यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि ।

तवेत्तत्सत्यमङ्गिरः ॥६॥

यत् । अङ्ग । दाशुषे । त्वम् । अग्ने । भद्रम् । करिष्यसि ।

तव । इत् । तत् । सत्यम् । अङ्गिरः ॥६॥

उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् ।

नमो भरन्त एमसि ॥७॥

उप । त्वा । अग्ने । दिवेऽदिवे । दोषाऽवस्तः । धिया । वयम् ।

नमः । भरन्तः । आ । इमसि ॥७॥

राजन्तमध्वराणां गोपामृतस्य दीदिविम् ।

वर्धमानं स्वे दमे ॥८॥

राजन्तम् । अध्वराणाम् । गोपाम् । ऋतस्य । दीदिविम् ।

वर्धमानम् । स्वे । दमे ॥८॥

स नः पितेव सूनवेऽग्ने सूपायनो भव ।

सचस्वा नः स्वस्तये ॥९॥

सः । नः । पिताऽइव । सूनवे । अग्ने । सुऽउपायनः । भव ।

सचस्व । नः । स्वस्तये ॥९॥

॥२॥

१·२

१-३वायुः, ४-६इन्द्रवायू, ७-९मित्रावरुणौ देवताः। वैश्वामित्रो मधुच्छन्दा ऋषिः। गायत्री छन्दः।

वायवा याहि दर्शतेमे सोमा अरंकृताः।

तेषां पाहि श्रुधी हवम् ॥१॥

वायो इति। आ। याहि। दर्शत। इमे। सोमाः। अरम्ऽकृताः।

तेषाम्। पाहि। श्रुधि। हवम् ॥१॥

वाय उक्थेभिर्जरन्ते त्वामच्छा जरितारः।

सुतसोमा अहर्विदः ॥२॥

वायो इति। उक्थेभिः। जरन्ते। त्वाम्। अच्छ। जरितारः।

सुतऽसोमाः। अहःऽविदः ॥२॥

वायो तव प्रपृञ्चती धेना जिगाति दाशुषे।

उरूची सोमपीतये ॥३॥

वायो इति। तव। प्रऽपृञ्चती। धेना। जिगाति। दाशुषे।

उरूची। सोमऽपीतये ॥३॥

इन्द्रवायू इमे सुता उप प्रयोभिरा गतम् ।

इन्दवो वामुशन्ति हि ॥४॥

इन्द्रवायू इति । इमे । सुताः । उप । प्रयःऽभिः । आ । गतम् ।

इन्दवः । वाम् । उशन्ति । हि ॥४॥

वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू ।

तावा यातमुप द्रवत् ॥५॥

वायो इति । इन्द्रः । च । चेतथः । सुतानाम् । वाजिनीवसू इति वाजिनीऽवसू ।

तौ । आ । यातम् । उप । द्रवत् ॥५॥

वायविन्द्रश्च सुन्वत आ यातमुप निष्कृतम् ।

मक्ष्वि१त्था धिया नरा ॥६॥

वायो इति । इन्द्रः । च । सुन्वतः । आ । यातम् । उप । निःऽकृतम् ।

मक्षु । इत्था । धिया । नरा ॥६॥

मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् ।

धियं घृताचीं साधन्ता ॥७॥

मित्रम् । हुवे । पूतऽदक्षम् । वरुणम् । च । रिशादसम् ।

धियम् । घृताचीम् । साधन्ता ॥७॥

ऋतेन मित्रावरुणावृतावृधावृतस्पृशा ।

क्रतुं बृहन्तमाशाथे ॥८॥

ऋतेन । मित्रावरुणौ । ऋतऽवृधौ । ऋतऽस्पृशा ।

क्रतुम् । बृहन्तम् । आशाथे इति ॥८॥

कवी नो मित्रावरुणा तुविजाता उरुक्षया ।

दक्षं दधाते अपसम् ॥९॥

कवी इति । नः । मित्रावरुणा । तुविऽजातौ । उरुऽक्षया ।

दक्षम् । दधाते इति । अपसम् ॥९॥

॥२॥

१·३

१-३अश्विनौ, ४-६इन्द्रः, ७-९विश्वेदेवाः, १०-१२सरस्वती देवताः ।

वैश्वामित्रो मधुच्छन्दा ऋषिः । गायत्री छन्दः ।

अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती ।

पुरुभुजा चनस्यतम् ॥१॥

अश्विना । यज्वरीः । इषः । द्रवत्पाणी इति द्रवत्ऽपाणी । शुभः । पती इति ।
पुरुऽभुजा । चनस्यतम् ॥१॥

अश्विना पुरुदंससा नरा शवीरया धिया ।
धिष्ण्या वनतं गिरः ॥२॥

अश्विना । पुरुऽदंससा । नरा । शवीरया । धिया ।
धिष्ण्या । वनतम् । गिरः ॥२॥

दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः ।
आ यातं रुद्रवर्तनी ॥३॥

दस्रा । युवाकवः । सुताः । नासत्या । वृक्तऽबर्हिषः ।
आ । यातम् । रुद्रवर्तनी इति रुद्रऽवर्तनी ॥३॥

इन्द्रा याहि चित्रभानो सुता इमे त्वायवः ।
अण्वीभिस्तना पूतासः ॥४॥

इन्द्र । आ । याहि । चित्रभानो इति चित्रऽभानो । सुताः । इमे । त्वाऽयवः ।
अण्वीभिः । तना । पूतासः ॥४॥

इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः ।

उप ब्रह्माणि वाघतः ॥५॥

इन्द्र । आ । याहि । धिया । इषितः । विप्रऽजूतः । सुतऽवतः ।

उप । ब्रह्माणि । वाघतः ॥५॥

इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः ।

सुते दधिष्व नश्चनः ॥६॥

इन्द्र । आ । याहि । तूतुजानः । उप । ब्रह्माणि । हरिऽवः ।

सुते । दधिष्व । नः । चनः ॥६॥

ओमासश्चर्षणीधृतो विश्वे देवास आ गत ।

दाश्वांसो दाशुषः सुतम् ॥७॥

ओमासः । चर्षणिऽधृतः । विश्वे । देवासः । आ । गत ।

दाश्वांसः । दाशुषः । सुतम् ॥७॥

विश्वे देवासो अप्तुरः सुतमा गन्त तूर्णयः ।

उस्रा इव स्वसराणि ॥८॥

विश्वे । देवासः । अप्ऽतुरः । सुतम् । आ । गन्त । तूर्णयः ।

उस्राःऽइव । स्वसराणि ॥८॥

विश्वे देवासो अस्रिध एहिमायासो अद्रुहः ।

मेधं जुषन्त वह्नयः ॥९॥

विश्वे । देवासः । अस्रिधः । एहिऽमायासः । अद्रुहः ।

मेधम् । जुषन्त । वह्नयः ॥९॥

पावका नः सरस्वती वाजेभिर्वाजिनीवती ।

यज्ञं वष्टु धियावसुः ॥१०॥

पावका । नः । सरस्वती । वाजेभिः । वाजिनीऽवती ।

यज्ञम् । वष्टु । धियाऽवसुः ॥१०॥

चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् ।

यज्ञं दधे सरस्वती ॥११॥

चोदयित्री । सूनृतानाम् । चेतन्ती । सुऽमतीनाम् ।

यज्ञम् । दधे । सरस्वती ॥११॥

महो अर्णः सरस्वती प्र चेतयति केतुना ।

धियो विश्वा वि राजति ॥१२॥

महः । अर्णः । सरस्वती । प्र । चेतयति । केतुना ।

धियः । विश्वाः । वि । राजति ॥१२॥

॥ ४ ॥

१·४

१-१० वैश्वामित्रो मधुच्छन्दाः । इन्द्रः । गायत्री ।

सुरूपकृत्नुमूतये सुदुघामिव गोदुहे ।

जुहूमसि द्यविद्यवि ॥१॥

सुरूपऽकृत्नुम् । ऊतये । सुदुघाम्ऽइव । गोऽदुहे ।

जुहूमसि । द्यविऽद्यवि ॥१॥

उप नः सवना गहि सोमस्य सोमपाः पिब ।

गोदा इद्रेवतो मदः ॥२॥

उप । नः । सवना । आ । गहि । सोमस्य । सोमऽपाः । पिब ।

गोऽदाः । इत् । रेवतः । मदः ॥२॥

अथा ते अन्तमानां विद्याम सुमतीनाम् ।

मा नो अति ख्य आ गहि ॥३॥

अथ । ते । अन्तमानाम् । विद्याम । सुऽमतीनाम् ।

मा । नः । अति । ख्यः । आ । गहि ॥३॥

परेहि विग्रमस्तृतमिन्द्रं पृच्छा विपश्चितम् ।

यस्ते सखिभ्य आ वरम् ॥४॥

परा । इहि । विग्रम् । अस्तृतम् । इन्द्रम् । पृच्छ । विपःऽचितम् ।

यः । ते । सखिऽभ्यः । आ । वरम् ॥४॥

उत ब्रुवन्तु नो निदो निरन्यतश्चिदारत ।

दधाना इन्द्र इद्दुवः ॥५॥

उत । ब्रुवन्तु । नः । निदः । निः । अन्यतः । चित् । आरत ।

दधानाः । इन्द्रे । इत् । दुवः ॥५॥

उत नः सुभगाँ अरिर्वोचेयुर्दस्म कृष्टयः ।

स्यामेदिन्द्रस्य शर्मणि ॥६॥

उत । नः । सुऽभगान् । अरिः । वोचेयुः । दस्म । कृष्टयः ।

स्याम । इत् । इन्द्रस्य । शर्मणि ॥६॥

एमाशुमाशवे भर यज्ञश्रियं नृमादनम् ।

पतयन्मन्दयत्सखम् ॥७॥

आ । ईम् । आशुम् । आशवे । भर । यज्ञऽश्रियम् । नृऽमादनम् ।

पतयत् । मन्दयत्ऽसखम् ॥७॥

अस्य पीत्वा शतक्रतो घनो वृत्राणामभवः ।

प्रावो वाजेषु वाजिनम् ॥८॥

अस्य । पीत्वा । शतक्रतो इति शतऽक्रतो । घनः । वृत्राणाम् । अभवः ।

प्र । आवः । वाजेषु । वाजिनम् ॥८॥

तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो ।

धनानामिन्द्र सातये ॥९॥

तम् । त्वा । वाजेषु । वाजिनम् । वाजयामः । शतक्रतो इति शतऽक्रतो ।

धनानाम् । इन्द्र । सातये ॥९॥

यो रायोऽवनिर्महान्त्सुपारः सुन्वतः सखा ।

तस्मा इन्द्राय गायत ॥१०॥

यः । रायः । अवनिः । महान् । सुऽपारः । सुन्वतः । सखा ।

तस्मै । इन्द्राय । गायत ॥१०॥

॥ ५ ॥

१·५

१-१० वैश्वामित्रो मधुच्छन्दाः । इन्द्रः । गायत्री ।

आ त्वेता नि षीदतेन्द्रमभि प्र गायत ।

सखायः स्तोमवाहसः ॥१॥

आ । तु । आ । इत । नि । सीदत । इन्द्रम् । अभि । प्र । गायत ।

सखायः । स्तोमऽवाहसः ॥१॥

पुरूतमं पुरूणामीशानं वार्याणाम् ।

इन्द्रं सोमे सचा सुते ॥२॥

पुरुऽतमम् । पुरूणाम् । ईशानम् । वार्याणाम् ।

इन्द्रम् । सोमे । सचा । सुते ॥२॥

स घा नो योग आ भुवत्स राये स पुरन्ध्याम् ।

गमद्वाजेभिरा स नः ॥३॥

सः । घ । नः । योगे । आ । भुवत् । सः । राये । सः । पुरम्ऽध्याम् ।

गमत् । वाजेभिः । आ । सः । नः ॥३॥

यस्य संस्थे न वृण्वते हरी समत्सु शत्रवः ।

तस्मा इन्द्राय गायत ॥४॥

यस्य । सम्ऽस्थे । न । वृण्वते । हरी इति । समत्ऽसु । शत्रवः ॥

तस्मै । इन्द्राय । गायत ॥४॥

सुतपाव्ने सुता इमे शुचयो यन्ति वीतये ।

सोमासो दध्याशिरः ॥५॥

सुतऽपाव्ने । सुताः । इमे । शुचयः । यन्ति । वीतये ।

सोमासः । दधिऽआशिरः ॥५॥

त्वं सुतस्य पीतये सद्यो वृद्धो अजायथाः ।

इन्द्र ज्यैष्ठ्याय सुक्रतो ॥६॥

त्वम् । सुतस्य । पीतये । सद्यः । वृद्धः । अजायथाः ।

इन्द्र । ज्यैष्ठ्याय । सुक्रतो इति सुऽक्रतो ॥६॥

आ त्वा विशन्त्वाशवः सोमास इन्द्र गिर्वणः ।

शं ते सन्तु प्रचेतसे ॥७॥

आ । त्वा । विशन्तु । आशवः । सोमासः । इन्द्र । गिर्वणः ।

शम् । ते । सन्तु । प्रऽचेतसे ॥७॥

त्वां स्तोमा अवीवृधन् त्वामुक्था शतक्रतो ।

त्वां वर्धन्तु नो गिरः ॥८॥

त्वाम् । स्तोमाः । अवीवृधन् । त्वाम् । उक्था । शतक्रतो इति शतऽक्रतो ।

त्वाम् । वर्धन्तु । नः । गिरः ॥८॥

अक्षितोतिः सनेदिमं वाजमिन्द्रः सहस्रिणम् ।

यस्मिन्विश्वानि पौंस्या ॥९॥

अक्षितऽऊतिः । सनेत् । इमम् । वाजम् । इन्द्रः । सहस्रिणम् ।

यस्मिन् । विश्वानि । पौंस्या ॥९॥

मा नो मर्ता अभि द्रुहन्तनूनामिन्द्र गिर्वणः ।

ईशानो यवया वधम् ॥१०॥

मा । नः । मर्ताः । अभि । द्रुहन् । तनूनाम् । इन्द्र । गिर्वणः ।

ईशानः । यवय । वधम् ॥१०॥

॥ ६ ॥

१·६

१—१० वैश्वामित्रो मधुच्छन्दाः । १—३ आद्यानां तिसृणामिन्द्रः, ततः ४—९ षण्णां मरुतः, (५, ७) पञ्चमसप्तम्योरिन्द्रश्च, १० दशम्या इन्द्रः । गायत्री ।

युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः ।

रोचन्ते रोचना दिवि ॥१॥

युञ्जन्ति । ब्रध्नम् । अरुषम् । चरन्तम् । परि । तस्थुषः ।

रोचन्ते । रोचना । दिवि ॥१॥

युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ।

शोणा धृष्णू नृवाहसा ॥२॥

युञ्जन्ति । अस्य । काम्या । हरी इति । विऽपक्षसा । रथे ।

शोणा । धृष्णू इति । नृऽवाहसा ॥२॥

केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे ।

समुषद्भिरजायथाः ॥३॥

केतुम् । कृण्वन् । अकेतवे । पेशः । मर्याः । अपेशसे ।

सम् । उषत्ऽभिः । अजायथाः ॥३॥

आदह स्वधामनु पुनर्गर्भत्वमेरिरे ।

दधाना नाम यज्ञियम् ॥४॥

आत् । अह । स्वधाम् । अनु । पुनः । गर्भऽत्वम् । आऽईरिरे ।

दधानाः । नाम । यज्ञियम् ॥४॥

वीळु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः ।

अविन्द उस्रिया अनु ॥५॥

वीळु । चित् । आरुजत्नुऽभिः । गुहा । चित् । इन्द्र । वह्निऽभिः ।

अविन्दः । उस्रियाः । अनु ॥५॥

देवयन्तो यथा मतिमच्छा विदद्वसुं गिरः ।

महामनूषत श्रुतम् ॥६॥

देवऽयन्तः । यथा । मतिम् । अच्छ । विदत्ऽवसुम् । गिरः ।

महाम् । अनूषत । श्रुतम् ॥६॥

इन्द्रेण सं हि दृक्षसे सञ्जग्मानो अबिभ्युषा ।

मन्दू समानवर्चसा ॥७॥

इन्द्रेण । सम् । हि । दृक्षसे । सम्ऽजग्मानः । अबिभ्युषा ।

मन्दू इति । समानऽवर्चसा ॥७॥

अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति ।

गणैरिन्द्रस्य काम्यैः ॥८॥

अनवद्यैः । अभिद्युऽभिः । मखः । सहस्वत् । अर्चति ।

गणैः । इन्द्रस्य । काम्यैः ॥८॥

अतः परिज्मन्नागहि दिवो वा रोचनादधि ।

समस्मिन्नृञ्जते गिरः ॥११॥

अतः । परिऽज्मन् । आ । गहि । दिवः । वा । रोचनात् । अधि ।

सम् । अस्मिन् । ऋञ्जते । गिरः ॥११॥

इतो वा सातिमीमहे दिवो वा पार्थिवादधि ।

इन्द्रं महो वा रजसः ॥१०॥

इतः । वा । सातिम् । ईमहे । दिवः । वा । पार्थिवात् । अधि ।

इन्द्रम् । महः । वा । रजसः ॥१०॥

॥७॥

१.७

१-१० वैश्वामित्रो मधुच्छन्दा इन्द्रो गायत्री ।

इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः ।

इन्द्रं वाणीरनूषत ॥१॥

इन्द्रम् । इत् । गाथिनः । बृहत् । इन्द्रम् । अर्केभिः । अर्किणः ।

इन्द्रम् वाणीः । अनूषत ॥१॥

इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा ।

इन्द्रो वज्री हिरण्ययः ॥२॥

इन्द्रः । इत् । हर्योः । सचा । सम्ऽमिश्लः । आ । वचःऽयुजा ।

इन्द्रः । वज्री । हिरण्ययः ॥२॥

इन्द्रो दीर्घाय चक्षसआ सूर्यं रोहयद्दिवि ।

वि गोभिरद्रिमैरयत् ॥३॥

इन्द्रः । दीर्घाय । चक्षसे । आ । सूर्यम् । रोहयत् । दिवि ।

वि । गोभिः । अद्रिम् । ऐरयत् ॥३॥

इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च ।

उग्र उग्राभिरूतिभिः ॥४॥

इन्द्र । वाजेषु । नः । अव । सहस्रऽप्रधनेषु । च ।

उग्रः । उग्राभिः । ऊतिऽभिः ॥४॥

इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे ।

युजं वृत्रेषु वज्रिणम् ॥५॥

इन्द्रम् । वयम् । महाऽधने । इन्द्रम् । अर्भे । हवामहे ।

युजम् । वृत्रेषु । वज्रिणम् ॥५॥

स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि ।

अस्मभ्यमप्रतिष्कुतः ॥६॥

सः । नः । वृषन् । अमुम् । चरुम् । सत्राऽदावन् । अप । वृधि ।

अस्मभ्यम् । अप्रतिऽस्कुतः ॥६॥

तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः ।

न विन्धे अस्य सुष्टुतिम् ॥७॥

तुञ्जेऽतुञ्जे । ये । उत्ऽतरे । स्तोमाः । इन्द्रस्य । वज्रिणः ।

न । विन्धे । अस्य । सुऽस्तुतिम् ॥७॥

वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा ।

ईशानो अप्रतिष्कुतः ॥८॥

वृषा । यूथाऽइव । वंसगः । कृष्टीः । इयर्ति । ओजसा ।

ईशानः । अप्रतिऽस्कुतः ॥८॥

य एकश्चर्षणीनां वसूनामिरज्यति ।

इन्द्रः पञ्च क्षितीनाम् ॥९॥

यः । एकः । चर्षणीनाम् । वसूनाम् । इरज्यति ।

इन्द्रः पञ्च । क्षितीनाम् ॥९॥

इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः ।

अस्माकमस्तु केवलः ॥१०॥

इन्द्रम् । वः । विश्वतः । परि । हवामहे । जनेभ्यः ।

अस्माकम् । अस्तु । केवलः ॥१०॥

॥ ८ ॥

१.८

१-१० वैश्वामित्रो मधुच्छन्दा इन्द्रो गायत्री ।

एन्द्र सानसिं रयिं सजित्वानं सदासहम् ।

वर्षिष्ठमूतये भर ॥१॥

आ । इन्द्र । सानसिम् । रयिम् । सऽजित्वानम् । सदाऽसहम् ।

वर्षिष्ठम् । ऊतये । भर ॥१॥

नि येन मुष्टिहत्यया नि वृत्रा रुणधामहै ।

त्वोतासो न्यर्वता ॥२॥

नि । येन । मुष्टिऽहत्यया । नि । वृत्रा । रुणधामहै ।

त्वाऽऊतासः । नि । अर्वता ॥२॥

इन्द्र त्वोतास आ वयं वज्रं घना ददीमहि ।

जयेम सं युधि स्पृधः ॥३॥

इन्द्र । त्वाऽऊतासः । आ । वयम् । वज्रम् । घना । ददीमहि ।

जयेम । सम् । युधि । स्पृधः ॥३॥

वयं शूरेभिरस्तृभिरिन्द्र त्वया युजा वयम् ।

सासह्याम पृतन्यतः ॥४॥

वयम् । शूरेभिः । अस्तृऽभिः । इन्द्र । त्वया । युजा । वयम् ।

ससह्याम । पृतन्यतः ॥४॥

महाँ इन्द्रः परश्च नु महित्वमस्तु वज्रिणे ।

द्यौर्न प्रथिना शवः ॥५॥

महान् । इन्द्रः । परः । च । नु । महिऽत्वम् । अस्तु । वज्रिणे ।

द्यौः । न । प्रथिना । शवः ॥५॥

समोहे वा य आशत नरस्तोकस्य सनितौ ।

विप्रासो वा धियायवः ॥६॥

समऽओहे । वा । ये । आशत । नरः । तोकस्य । सनितौ ।

विप्रासः । वा । धियाऽयवः ॥६॥

यः कुक्षिः सोमपातमः समुद्रइव पिन्वते ।

उर्वीरापो न काकुदः ॥७॥

यः । कुक्षिः । सोमऽपातमः । समुद्रःऽइव । पिन्वते ।

उर्वीः । आपः । न । काकुदः ॥७

एवा ह्यस्य सूनृता विरप्शी गोमती मही ।

पक्वा शाखा न दाशुषे ॥८॥

एव । हि । अस्य । सूनृता । विऽरप्शी । गोऽमती । मही ।

पक्वा । शाखा । न । दाशुषे ॥८॥

एवा हि ते विभूतय ऊतय इन्द्र मावते ।

सद्यश्चित्सन्ति दाशुषे ॥९॥

एव । हि । ते । विऽभूतयः । ऊतयः । इन्द्र । माऽवते ।

सद्यः । चित् । सन्ति । दाशुषे ॥९॥

एवा ह्यस्य काम्या स्तोम उक्थं च शंस्या ।

इन्द्राय सोमपीतये ॥१०॥

एव । हि । अस्य । काम्या । स्तोमः । उक्थम् । च । शंस्या ।

इन्द्राय । सोमऽपीतये ॥१०॥

॥ ९ ॥

१·६

१-१० वैश्वामित्रो मधुच्छन्दा इन्द्रो गायत्री ।

इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः ।

महाँ अभिष्टिरोजसा ॥१॥

इन्द्र । आ । इहि । मत्सि । अन्धसः । विश्वेभिः । सोमपर्वऽभिः ।

महान् । अभिष्टिः । ओजसा ॥१॥

एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने ।

चक्रिं विश्वानि चक्रये ॥२॥

४

आ । ईम् । एनम् । सृजत । सुते । मन्दिम् । इन्द्राय । मन्दिने ।

चक्रिम् । विश्वानि । चक्रये ॥२॥

मत्स्व सुशिप्र मन्दिभिः स्तोमेभिर्विश्वचर्षणे ।

सचैषु सवनेष्वा ॥३॥

मत्स्व । सुऽशिप्र । मन्दिऽभिः । स्तोमेभिः । विश्वऽचर्षणे ।

सचा । एषु । सवनेषु । आ ॥३॥

असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत ।

अजोषा वृषभं पतिम् ॥४॥

असृग्रम् । इन्द्र । ते । गिरः । प्रति । त्वाम् । उत् । अहासत ।

अजोषाः । वृषभम् । पतिम् ॥४॥

सं चोदय चित्रमर्वाग्राध इन्द्र वरेण्यम् ।

असदित्ते विभु प्रभु ॥५॥

सम् । चोदय । चित्रम् । अर्वाक् । राधः । इन्द्र । वरेण्यम् ।

असत् । इत् । ते । विऽभु । प्रऽभु ॥५॥

अस्मान्त्सु तत्र चोदयेन्द्र राये रभस्वतः ।

तुविद्युम्न यशस्वतः ॥६॥

अस्मान् । सु । तत्र । चोदय । इन्द्र । राये । रभस्वतः ।

तुविऽद्युम्न । यशस्वतः ॥६॥

सं गोमदिन्द्र वाजवदस्मे पृथु श्रवो बृहत् ।

विश्वायुर्धेह्यक्षितम् ॥७॥

सम् । गोऽमत् । इन्द्र । वाजऽवत् । अस्मे इति । पृथु । श्रवः । बृहत् ।

विश्वऽआयुः । धेहि । अक्षितम् ॥७॥

अस्मे धेहि श्रवो बृहद् द्युम्नं सहस्रसातमम् ।

इन्द्र ता रथिनीरिषः ॥८॥

अस्मे इति । धेहि । श्रवः । बृहत् । द्युम्नम् । सहस्रऽसातमम् ।

इन्द्र । ताः । रथिनीः । इषः ॥८॥

वसोरिन्द्रं वसुपतिं गीर्भिर्गृणन्त ऋग्मियम् ।

होम गन्तारमूतये ॥९॥

वसोः । इन्द्रम् । वसुऽपतिम् । गीःऽभिः । गृणन्तः । ऋग्मियम् ।

होम । गन्तारम् । ऊतये ॥९॥

सुतेसुते न्योकसे बृहद्बृहत एदरिः ।

इन्द्राय शूषमर्चति ॥१०॥

सुतेऽसुते । निऽओकसे । बृहत् । बृहते । आ । इत् । अरिः ।

इन्द्राय । शूषम् । अर्चति ॥१०॥

॥ १० ॥

१·१०

१—१२ वैश्वामित्रो मधुच्छन्दा इन्द्रोऽनुष्टुप् ।

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।

ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥१॥

गायन्ति । त्वा । गायत्रिणः । अर्चन्ति । अर्कम् । अर्किणः ।

ब्रह्माणः । त्वा । शतक्रतो इति शतऽक्रतो । उत् । वंशम्ऽइव । येमिरे ॥१॥

यत्सानोः सानुमारुहद्भूर्यस्पष्ट कर्त्वम् ।

तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥२॥

यत् । सानोः । सानुम् । आ । अरुहत् । भूरि । अस्पष्ट । कर्त्वम् ।

तत् । इन्द्रः । अर्थम् । चेतति । यूथेन । वृष्णिः । एजति ॥२॥

युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।

अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥३॥

युक्ष्व । हि । केशिना । हरी इति । वृषणा । कक्ष्यऽप्रा ।

अथ । नः । इन्द्र । सोमऽपाः । गिराम् । उपऽश्रुतिम् । चर ॥३॥

एहि स्तोमाँ अभि स्वराभि गृणीह्या रुव ।

ब्रह्म च नो वसो सचेन्द्र यज्ञं च वर्द्धय ॥४॥

आ । इहि । स्तोमान् । अभि । स्वर । अभि । गृणीहि । आ । रुव ।

ब्रह्म । च । नः । वसो इति । सचा । इन्द्र । यज्ञम् । च । वर्धय ॥४॥

उक्थमिन्द्राय शंस्यं वर्धनं पुरुनिष्षिधे ।

शक्रो यथा सुतेषु णो रारणत्सख्येषु च ॥५॥

उक्थम् । इन्द्राय । शंस्यम् । वर्धनम् । पुरुनिःऽसिधे ।

शक्रः । यथा । सुतेषु । नः । रणत् । सख्येषु । च ॥५॥

तमित्सखित्व ईमहे तं राये तं सुवीर्ये ।

स शक्र उत नः शकदिन्द्रो वसु दयमानः ॥६॥

तम् । इत् । सखिऽत्वे । ईमहे । तम् । राये । तम् । सुऽवीर्ये ।

सः । शक्रः । उत । नः । शकत् । इन्द्रः । वसु । दयमानः ॥६॥

सुविवृतं सुनिरजमिन्द्र त्वादातमिद्यशः ।

ऊँ गवामप व्रजं वृधि कृणुष्व राधो अद्रिवः ॥७॥

सुऽविवृतम् । सुनिःऽअजम् । इन्द्र । त्वा दातम् । इत् । यशः ।

गवाम् । अप । व्रजम् । वृधि । कृणुष्व । राधः । अद्रिऽवः ॥७॥

नहि त्वा रोदसी उभे ऋघायमाणमिन्वतः ।

जेषः स्वर्वतीरपः सं गा अस्मभ्यं धूनुहि ॥८॥

नहि । त्वा । रोदसी इति । उभे इति । ऋघायमाणम् । इन्वतः ।

जेषः । स्वःऽवतीः । अपः । सम् । गाः । अस्मभ्यम् । धूनुहि ॥८॥

आश्रुत्कर्ण श्रुधी हवं नूचिद्दधिष्व मे गिरः ।

इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम् ॥९॥

आश्रुत्ऽकर्ण । श्रुधि । हवम् । नु । चित् । दधिष्व । मे । गिरः ।

इन्द्र । स्तोमम् । इमम् । मम । कृष्व । युजः । चित् । अन्तरम् ॥९॥

विद्मा हि त्वा वृषन्तमं वाजेषु हवनश्रुतम् ।

वृषन्तमस्य हूमह ऊतिं सहस्रसातमाम् ॥१०॥

विद्म । हि । त्वा । वृषन्ऽतमम् । वाजेषु । हवनऽश्रुतम् ।

वृषन्ऽतमस्य । हूमहे । ऊतिम् । सहस्रऽसातमाम् ॥१०॥

आ तू न इन्द्र कौशिक मन्दसानः सुतं पिब ।

नव्यमायुः प्र सू तिर कृधी सहस्रसामृषिम् ॥११॥

आ । तु । नः । इन्द्र । कौशिक । मन्दसानः । सुतम् । पिब ।

नव्यम् । आयुः । प्र । सु । तिर । कृधि । सहस्रऽसाम् । ऋषिम् ॥११॥

परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः ।

वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः ॥१२॥

परि । त्वा । गिर्वणः । गिरः । इमाः । भवन्तु । विश्वतः ।

वृद्धऽआयुम् । अनु । वृद्धयः । जुष्टाः । भवन्तु । जुष्टयः ॥१२॥

॥ ११ ॥

१·११

१-८ जेता माधुच्छन्दस इन्द्रोऽनुष्टुप् ।

इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।
रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥१॥

इन्द्रम् । विश्वाः । अवीवृधन् । समुद्रऽव्यचसम् । गिरः ।
रथिऽतमम् । रथिनाम् । वाजानाम् । सत्ऽपतिम् । पतिम् ॥१॥

सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते ।
त्वामभि प्र णोनुमो जेतारमपराजितम् ॥२॥

सख्ये । ते । इन्द्र । वाजिनः । मा । भेम । शवसः । पते ।
त्वाम् । अभि । प्र । नोनुमः । जेतारम् । अपराऽजितम् ॥२॥

पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः ।
यदी वाजस्य गोमतः स्तोतृभ्यो मंहते मघम् ॥३॥

पूर्वीः । इन्द्रस्य । रातयः । न । वि । दस्यन्ति । ऊतयः ।
यदि । वाजस्य । गोऽमतः । स्तोतृऽभ्यः । मंहते । मघम् ॥३॥

पुरां भिन्दुर्युवा कविरमितौजा अजायत ।

इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥४॥

पुराम् । भिन्दुः । युवा । कविः । अमितऽओजाः । अजायत ।

इन्द्रः । विश्वस्य । कर्मणः । धर्ता । वज्री । पुरुऽस्तुतः ॥४॥

त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् ।

त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥५॥

त्वम् । वलस्य । गोऽमतः । अप । अवः । अद्रिऽवः । बिलम् ।

त्वाम् । देवाः । अबिभ्युषः । तुज्यमानासः । आविषुः ॥५॥

तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन् ।

उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारवः ॥६॥

तव । अहम् । शूर । रातिऽभिः । प्रति । आयम् । सिन्धुम् । आऽवदन् ।

उप । अतिष्ठन्त । गिर्वणः । विदुः । ते । तस्य । कारवः ॥६॥

मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः ।

विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर ॥७॥

मायाभिः । इन्द्र । मायिनम् । त्वम् । शुष्णम् । अव । अतिरः ।

विदुः । ते । तस्य । मेधिराः । तेषाम् । श्रवांसि । उत् । तिर ॥७॥

इन्द्रमीशानमोजसाभि स्तोमा अनूषत ।

सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥८॥

इन्द्रम् । ईशानम् । ओजसा । अभि । स्तोमाः । अनूषत ।

सहस्रम् । यस्य । रातयः । उत । वा । सन्ति । भूयसीः ॥८॥

॥१२॥

१·१२

१—१२ काण्वो मेधातिथिः । निर्मन्थ्याहवनीयावग्नी । गायत्री ।

अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।

अस्य यज्ञस्य सुक्रतुम् ॥१॥

अग्निम् । दूतम् । वृणीमहे । होतारम् । विश्वऽवेदसम् ।

अस्य । यज्ञस्य । सुऽक्रतुम् ॥१॥

अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् ।

हव्यवाहं पुरुप्रियम् ॥२॥

अग्निम्ऽअग्निम् । हवीमऽभिः । सदा । हवन्त । विश्पतिम् ।

हव्यऽवाहम् । पुरुऽप्रियम् ॥२॥

अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे ।

असि होता न ईड्यः ॥३॥

अग्ने । देवान् । इह । आ । वह । जज्ञानः । वृक्तऽबर्हिषे ।

असि । होता । नः । ईड्यः ॥३॥

ताँ उशतो वि बोधय यदग्ने यासि दूत्यम् ।

देवैरा सत्सि बर्हिषि ॥४॥

तान् । उशतः । वि । बोधय । यत् । अग्ने । यासि । दूत्यम् ।

देवैः । आ । सत्सि । बर्हिषि ॥४॥

घृताहवन दीदिवः प्रति ष्म रिषतो दह ।

अग्ने त्वं रक्षस्विनः ॥५॥

घृतऽआहवन । दीदिऽवः । प्रति । स्म । रिषतः । दह ।

अग्ने । त्वम् । रक्षस्विनः ॥५॥

अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ।

हव्यवाड् जुह्वास्यः ॥६॥

अग्निना । अग्निः । सम् ऽइध्यते । कविः । गृहऽपतिः । युवा ।

हव्यऽवाट् । जुहुऽआस्यः ॥६॥

कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे ।

देवममीवचातनम् ॥७॥

कविम् । अग्निम् । उप । स्तुहि । सत्यऽधर्माणम् । अध्वरे ।

देवम् । अमीवऽचातनम् ॥७॥

यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति ।

तस्य स्म प्राविता भव ॥८॥

यः । त्वाम् । अग्ने । हविःऽपतिः । दूतम् । देव । सपर्यति ।

तस्य । स्म । प्रऽअविता । भव ॥८॥

यो अग्निं देववीतये हविष्माँ आविवासति ।

तस्मै पावक मृळय ॥९॥

यः । अग्निम् । देवऽवीतये । हविष्मान् । आऽविवासति ।

तस्मै । पावक । मृळय ॥९॥

स नः पावक दीदिवोऽग्ने देवाँ इहा वह ।

उप यज्ञं हविश्च नः ॥१०॥

सः । नः । पावक । दीदिऽवः । अग्ने । देवान् । इह । आ । वह ।

उप । यज्ञम् । हविः । च । नः ॥१०॥

स नः स्तवान आ भर गायत्रेण नवीयसा ।

रयिं वीरवतीमिषम् ॥११॥

सः । नः । स्तवानः । आ । भर । गायत्रेण । नवीयसा ।

रयिम् । वीरऽवतीम् । इषम् ॥११॥

अग्ने शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिः ।

इमं स्तोमं जुषस्व नः ॥१२॥

अग्ने । शुक्रेण । शोचिषा । विश्वाभिः । देवहूतिऽभिः ।

इमम् । स्तोमम् । जुषस्व । नः ॥१२॥

॥ १३ ॥

१·१३

१—१२ काण्वो मेधातिथिः । आप्रीसूक्तम् । १इध्मः, २तनूनपात्, ३नराशंसः, ४ इडः, ५बर्हिः, ६देव्यो द्वारः, ७उषासानक्ता, ८दैव्यौ होतारौ, ९तिस्रो देव्यः, १०त्वष्टा, ११वनस्पतिः, १२स्वाहाकृतिः गायत्री ।

सुसमिद्धो न आ वह देवाँ अग्ने हविष्मते ।

होतः पावक यक्षि च ॥१॥

सुऽसमिद्धः । नः । आ । वह । देवान् । अग्ने । हविष्मते ।

होतरिति । पावक । यक्षि । च ॥१॥

मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे ।

अद्या कृणुहि वीतये ॥२॥

मधुऽमन्तम् । तनूऽनपात् । यज्ञम् । देवेषु । नः । कवे ।

अद्य । कृणुहि । वीतये ॥२॥

नराशंसमिह प्रियमस्मिन्यज्ञ उप ह्वये ।

मधुजिह्वं हविष्कृतम् ॥३॥

नराशंसम् । इह । प्रियम् । अस्मिन् । यज्ञे । उप । ह्वये ।

मधुऽजिह्वम् । हविःऽकृतम् ॥३॥

अग्ने सुखतमे रथे देवाँ ईळित आ वह ।

असि होता मनुर्हितः ॥४॥

अग्ने । सुखऽतमे । रथे । देवान् । ईळितः । आ । वह ।

असि । होता । मनुःऽहितः ॥४॥

स्तृणीत बर्हिरानुषग्घृतपृष्ठं मनीषिणः ।

यत्रामृतस्य चक्षणम् ॥५॥

स्तृणीत । बर्हिः । आनुषक् । घृतऽपृष्ठम् । मनीषिणः ।

यत्र । अमृतस्य । चक्षणम् ॥५॥

वि श्रयन्तामृतावृधो द्वारो देवीरसश्चतः ।

अद्या नूनं च यष्टवे ॥६॥

वि । श्रयन्ताम् । ऋतऽवृधः । द्वारः । देवीः । असश्चतः ।

अद्य । नूनम् । च । यष्टवे ॥६॥

नक्तोषासा सुपेशसास्मिन्यज्ञ उप ह्वये ।

इदं नो बर्हिरासदे ॥७॥

नक्तोषसा । सुऽपेशसा । अस्मिन् । यज्ञे । उप । ह्वये ।

इदम् । नः । बर्हिः । आऽसदे ॥७॥

ता सुजिह्वा उप ह्वये होतारा दैव्या कवी ।

यज्ञं नो यक्षतामिमम् ॥८॥

ता । सुऽजिह्वौ । उप । ह्वये । होतारा । दैव्या । कवी इति ।

यज्ञम् । नः । यक्षताम् । इमम् ॥८॥

इळा सरस्वती मही तिस्रो देवीर्मयोभुवः ।

बर्हिः सीदन्त्वस्रिधः ॥९॥

इळा । सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः ।

बर्हिः । सीदन्तु । अस्रिधः ॥९॥

इह त्वष्टारमग्रियं विश्वरूपमुप ह्वये ।

अस्माकमस्तु केवलः ॥१०॥

इह । त्वष्टारम् । अग्रियम् । विश्वऽरूपम् । उप । ह्वये ।

अस्माकम् । अस्तु । केवलः ॥१०॥

अव सृजा वनस्पते देव देवेभ्यो हविः ।

प्र दातुरस्तु चेतनम् ॥११॥

अव । सृज । वनस्पते । देव । देवेभ्यः । हविः ।

प्र । दातुः । अस्तु । चेतनम् ॥११॥

स्वाहा यज्ञं कृणोतनेन्द्राय यज्वनो गृहे ।

तत्र देवाँ उप ह्वये ॥१२॥

स्वाहा । यज्ञम् । कृणोतन । इन्द्राय । यज्वनः । गृहे ।

तत्र । देवान् । उप । ह्वये ॥१२॥

॥ १४ ॥

१·१४

१—१२ मेधातिथिः काण्वः । विश्वे देवाः । गायत्री ।

ऐभिरग्ने दुवो गिरो विश्वेभिः सोमपीतये ।

देवेभिर्याहि यक्षि च ॥१॥

आ । एभिः । अग्ने । दुवः । गिरः । विश्वेभिः । सोमऽपीतये ।

देवेभिः । याहि । यक्षि । च ॥१॥

आ त्वा कण्वा अहूषत गृणन्ति विप्र ते धियः ।

देवेभिरग्न आ गहि ॥२॥

आ । त्वा । कण्वाः । अहूषत । गृणन्ति । विप्र । ते । धियः ।

देवेभिः । अग्ने । आ । गहि ॥२॥

इन्द्रवायू बृहस्पतिं मित्राग्निं पूषणं भगम् ।

आदित्यान्मारुतं गणम् ॥३॥

इन्द्रवायू इति । बृहस्पतिम् । मित्रा । अग्निम् । पूषणम् । भगम् ।

आदित्यान् । मारुतम् । गणम् ॥४॥

प्र वो भ्रियन्त इन्दवो मत्सरा मादयिष्णवः ।

द्रप्सा मध्वश्चमूषदः ॥४॥

प्र । वः । भ्रियन्ते । इन्दवः । मत्सराः । मादयिष्णवः ।

द्रप्साः । मध्वः । चमूऽसदः ॥४॥

ईळते त्वामवस्यवः कण्वासो वृक्तबर्हिषः ।

हविष्मन्तो अरंकृतः ॥५॥

ईळते । त्वाम् । अवस्यवः । कण्वासः । वृक्तऽबर्हिषः ।

हविष्मन्तः । अरम्ऽकृतः ॥५॥

घृतपृष्ठा मनोयुजो ये त्वा वहन्ति वह्नयः ।

आ देवान् सोमपीतये ॥६॥

घृतऽपृष्ठाः । मनःऽयुजः । ये । त्वा । वहन्ति । वह्नयः ।

आ । देवान् । सोमऽपीतये ॥६॥

तान्यजत्राँ ऋतावृधोऽग्ने पत्नीवतस्कृधि ।

मध्वः सुजिह्व पायय ॥७॥

तान् । यजत्रान् । ऋतऽवृधः । अग्ने । पत्नीऽवतः । कृधि ।

मध्वः । सुऽजिह्व । पायय ॥७॥

ये यजत्रा य ईड्यास्ते ते पिबन्तु जिह्वया ।

मधोरग्ने वषट्कृति ॥८॥

ये । यजत्राः । ये । ईड्याः । ते । ते । पिबन्तु । जिह्वया ।

मधोः । अग्ने । वषट्ऽकृति ॥८॥

आकीं सूर्यस्य रोचनाद्विश्वान्देवाँ उषर्बुधः ।

विप्रो होतेह वक्षति ॥९॥

आकीम् । सूर्यस्य । रोचनात् । विश्वान् । देवान् । उषःऽबुधः ।

विप्रः । होता । इह । वक्षति ॥९॥

विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना ।

पिबा मित्रस्य धामभिः ॥१०॥

विश्वेभिः । सोम्यम् । मधु । अग्ने । इन्द्रेण । वायुना ।

पिब । मित्रस्य । धामऽभिः ॥१०॥

त्वं होता मनुर्हितोऽग्ने यज्ञेषु सीदसि ।

सेमं नो अध्वरं यज ॥११॥

त्वम् । होता । मनुःऽहितः । अग्ने । यज्ञेषु । सीदसि ।

सः । इमम् । नः । अध्वरम् । यज ॥११॥

युक्ष्वा ह्यरुषी रथे हरितो देव रोहितः।

ताभिर्देवाँ इहा वह ॥१२॥

युक्ष्व। हि। अरुषीः। रथे। हरितः। देव। रोहितः।

ताभिः। देवान्। इह। आ। वह ॥१२॥

॥१४॥

१·१५

१—१२ काण्वो मेधातिथिः। १इन्द्रः, २मरुतः, ३त्वष्टा, ४अग्निः, ५इन्द्रः, ६मित्रावरुणौ, ७—१० द्रविणोदा अग्निः, ११ अश्विनौ, १२ अग्निः। गायत्री।

इन्द्र सोमं पिब ऋतुना त्वा विशन्त्विन्दवः

मत्सरासस्तदोकसः ॥१॥

इन्द्र। सोमम्। पिब। ऋतुना। आ। त्वा। विशन्तु। इन्दवः।

मत्सरासः। तत्ऽओकसः ॥१॥

मरुतः पिबत ऋतुना पोत्राद्यज्ञं पुनीतन।

यूयं हि ष्ठा सुदानवः ॥२॥

मरुतः। पिबत। ऋतुना। पोत्रात्। यज्ञम्। पुनीतन।

यूयम्। हि। स्थ। सुऽदानवः ॥२॥

अभि यज्ञं गृणीहि नो ग्नावो नेष्टः पिब ऋतुना ।

त्वं हि रत्नधा असि ॥३॥

अभि । यज्ञम् । गृणीहि । नः । ग्नावः । नेष्टरिति । पिब । ऋतुना ।

त्वम् । हि । रत्नऽधाः । असि ॥३॥

अग्ने देवाँ इहा वह सादया योनिषु त्रिषु ।

परि भूष पिब ऋतुना ॥४॥

अग्ने । देवान् । इह । आ । वह । सादय । योनिषु । त्रिषु ।

परि । भूष । पिब । ऋतुना ॥४॥

ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु ।

तवेद्धि सख्यमस्तृतम् ॥५॥

ब्राह्मणात् । इन्द्र । राधसः । पिब । सोमम् । ऋतून् । अनु ।

तव । इत् । हि । सख्यम् । अस्तृतम् ॥५॥

युवं दक्षं धृतव्रत मित्रावरुण दूळभम् ।

ऋतुना यज्ञमाशाथे ॥६॥

युवम् । दक्षम् । धृतऽव्रता । मित्रावरुणा । दुःऽदभम् ।

ऋतुना । यज्ञम् । आशाथे इति ॥६॥

द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे ।

यज्ञेषु देवमीळते ॥७॥

द्रविणःऽदाः । द्रविणसः । ग्रावऽहस्तासः । अध्वरे ।

यज्ञेषु । देवम् । ईळते ॥७॥

द्रविणोदा ददातु नो वसूनि यानि शृण्विरे ।

देवेषु ता वनामहे ॥८॥

द्रविणःऽदाः । ददातु । नः । वसूनि । यानि । शृण्विरे ।

देवेषु । ता । वनामहे ॥८॥

द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत ।

नेष्ट्रादृतुभिरिष्यत ॥९॥

द्रविणःऽदाः । पिपीषति । जुहोत । प्र । च । तिष्ठत ।

नेष्ट्रात् । ऋतुऽभिः । इष्यत ॥९॥

यत्त्वा तुरीयमृतुभिर्द्रविणोदो यजामहे ।

अध स्मा नो ददिर्भव ॥१०॥

यत् । त्वा । तुरीयम् । ऋतुऽभिः । द्रविणःऽदः । यजामहे ।

अध । स्म । नः । ददिः । भव ॥१०॥

अश्विना पिबतं मधु दीद्यग्नी शुचिव्रता ।

ऋतुना यज्ञवाहसा ॥११॥

अश्विना । पिबतम् । मधु । दीद्यग्नी इति दीदिऽअग्नी । शुचिऽव्रता ।

ऋतुना । यज्ञऽवाहसा ॥११॥

गार्हपत्येन सन्त्य ऋतुना यज्ञनीरसि ।

देवान्देवयते यज ॥१२॥

गार्हऽपत्येन । सन्त्य । ऋतुना । यज्ञऽनीः । असि ।

देवान् । देवऽयते । यज ॥१२॥

॥ १६ ॥

१·१६

१—९ मेधातिथिः काण्वः । इन्द्रः । गायत्री ।

आ त्वा वहन्तु हरयो वृषणं सोमपीतये ।

इन्द्र त्वा सूरचक्षसः ॥१॥

आ । त्वा । वहन्तु । हरयः । वृषणम् । सोमऽपीतये ।

इन्द्र । त्वा । सूरऽचक्षसः ॥१॥

इमा धाना घृतस्नुवो हरी इहोप वक्षतः ।

इन्द्रं सुखतमे रथे ॥२॥

इमाः । धानाः । घृतऽस्नुवः । हरी इति । इह । उप । वक्षतः ।

इन्द्रम् । सुखऽतमे । रथे ॥२॥

इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे ।

इन्द्रं सोमस्य पीतये ॥३॥

इन्द्रम् । प्रातः । हवामहे । इन्द्रम् । प्रऽयति । अध्वरे ।

इन्द्रम् । सोमस्य । पीतये ॥३॥

उप नः सुतमा गहि हरिभिरिन्द्र केशिभिः ।

सुते हि त्वा हवामहे ॥४॥

उप । नः । सुतम् । आ । गहि । हरिऽभिः । इन्द्र । केशिऽभिः ।

सुते । हि । त्वा । हवामहे ॥४॥

सेमं नः स्तोममा गह्युपेदं सवनं सुतम् ।

गौरो न तृषितः पिब ॥५॥

सः । इमम् । नः । स्तोमम् । आ । गहि । उप । इदम् । सवनम् । सुतम् ।

गौरः । न । तृषितः । पिब ॥५॥

इमे सोमास इन्दवः सुतासो अधि बर्हिषि ।

ताँ इन्द्र सहसे पिब ॥६॥

इमे । सोमासः । इन्दवः । सुतासः । अधि । बर्हिषि ।

तान् । इन्द्र । सहसे । पिब ॥६॥

अयं ते स्तोमो अग्रियो हृदिस्पृगस्तु शन्तमः ।

अथा सोमं सुतं पिब ॥७॥

अयम् । ते । स्तोमः । अग्रियः । हृदिऽस्पृक् । अस्तु । शम्ऽतमः ।

अथ । सोमम् । सुतम् । पिब ॥७॥

विश्वमित्सवनं सुतमिन्द्रो मदाय गच्छति ।

वृत्रहा सोमपीतये ॥८॥

विश्वम् । इत् । सवनम् । सुतम् । इन्द्रः । मदाय । गच्छति ।

वृत्रऽहा । सोमऽपीतये ॥८॥

सेमं नः काममा पृण गोभिरश्वैः शतक्रतो ।

स्तवाम त्वा स्वाध्यः ॥९॥

सः । इमम् । नः । कामम् । आ । पृण । गोभिः । अश्वैः । शतक्रतो इति शतऽक्रतो ।

स्तवाम । त्वा । सुऽआध्यः ॥९॥

॥ १७ ॥

१·१७

१—६ काण्वो मेधातिथिः । इन्द्रावरुणौ । १-३,६-६ गायत्री,
४,५, पादनिचृत् ।

इन्द्रावरुणयोरहं सम्राजोरव आ वृणे ।

ता नो मृळात ईदृशे ॥१॥

इन्द्रावरुणयोः । अहम् । सम्ऽराजोः । अवः । आ । वृणे ।

ता । नः । मृळातः । ईदृशे ॥१॥

गन्तारा हि स्थोऽवसे हवं विप्रस्य मावतः ।

धर्तारा चर्षणीनाम् ॥२॥

गन्तारा । हि । स्थः । अवसे । हवम् । विप्रस्य । माऽवतः ।

धर्तारा । चर्षणीनाम् ॥२॥

अनुकामं तर्पयेथामिन्द्रावरुण राय आ ।

ता वां नेदिष्ठमीमहे ॥३॥

अनुऽकामम् । तर्पयेथाम् । इन्द्रावरुणा । रायः । आ ।

ता । वाम् । नेदिष्ठम् । ईमहे ॥३॥

युवाकु हि शचीनां युवाकु सुमतीनाम् ।

भूयाम वाजदाव्नाम् ॥४॥

युवाकु । हि । शचीनाम् । युवाकु । सुऽमतीनाम् ।

भूयाम । वाजऽदाव्नाम् ॥४॥

इन्द्रः सहस्रदाव्नां वरुणः शंस्यानाम् ।

क्रतुर्भवत्युक्थ्यः ॥५॥

इन्द्रः । सहस्रऽदाव्नाम् । वरुणः । शंस्यानाम् ।

क्रतुः । भवति । उक्थ्यः ॥५॥

तयोरिदवसा वयं सनेम नि च धीमहि ।

स्यादुत प्ररेचनम् ॥६॥

तयोः । इत् । अवसा । वयम् । सनेम । नि । च । धीमहि ।

स्यात् । उत । प्रऽरेचनम् ॥६॥

इन्द्रावरुण वामहं हुवे चित्राय राधसे ।

अस्मान्त्सु जिग्युषस्कृतम् ॥७॥

इन्द्रावरुणा । वाम् । अहम् । हुवे । चित्राय । राधसे ।

अस्मान् । सु । जिग्युषः । कृतम् ॥७॥

इन्द्रावरुण नू नु वां सिषासन्तीषु धीष्वा ।

अस्मभ्यं शर्म यच्छतम् ॥८॥

इन्द्रावरुणा । नु । नु । वाम् । सिसासन्तीषु । धीषु । आ ।

अस्मभ्यम् । शर्म । यच्छतम् ॥८॥

प्र वामश्नोतु सुष्टुतिरिन्द्रावरुण यां हुवे ।

यामृधाथे सधस्तुतिम् ॥९॥

प्र । वाम् । अश्नोतु । सुऽस्तुतिः । इन्द्रावरुणा । याम् । हुवे ।

याम् । ऋधाथे इति । सधऽस्तुतिम् ॥९॥

॥१८॥

१·१८

१ - ९ काण्वो मेधातिथिः । १-३ ब्रह्मणस्पतिः, ४ इन्द्रसोमब्रह्मणस्पतयः, ५ इन्द्रसोम-
ब्रह्मणस्पतयो दक्षिणा च, ६-८ सदसस्पतिः, ९ सदसस्पतिर्नराशंसो वा ।
गायत्री ।

सोमानं स्वरणं कृणुहि ब्रह्मणस्पते ।

कक्षीवन्तं य औशिजः ॥१॥

सोमानम् । स्वरणम् । कृणुहि । ब्रह्मणः । पते ।

कक्षीवन्तम् । यः । औशिजः ॥१॥

यो रेवान्यो अमीवहा वसुवित्पुष्टिवर्धनः ।

स नः सिषक्तु यस्तुरः ॥२॥

यः । रेवान् । यः । अमीवऽहा । वसुऽवित् । पुष्टिऽवर्धनः ।

सः । नः । सिसक्तु । यः । तुरः ॥२॥

मा नः शंसो अररुषो धूर्तिः प्रणङ् मर्त्यस्य ।

रक्षा णो ब्रह्मणस्पते ॥३॥

मा । नः । शंसः । अररुषः । धूर्तिः । प्रणक् । मर्त्यस्य ।

रक्ष । नः । ब्रह्मणः । पते ॥३॥

स घा वीरो न रिष्यति यमिन्द्रो ब्रह्मणस्पतिः ।

सोमो हिनोति मर्त्यम् ॥४॥

सः । घ । वीरः । न । रिष्यति । यम् । इन्द्रः । ब्रह्मणः । पतिः ।

सोमः । हिनोति । मर्त्यम् ॥४॥

त्वं तं ब्रह्मणस्पते सोम इन्द्रश्च मर्त्यम् ।

दक्षिणा पात्वंहसः ॥५॥

त्वम् । तम् । ब्रह्मणः । पते । सोमः । इन्द्र । च । मर्त्यम् ।

दक्षिणा । पातु । अंहसः ॥५॥

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।

सनिं मेधामयासिषम् ॥६॥

सदसः । पतिम् । अद्भुतम् । प्रियम् । इन्द्रस्य । काम्यम् ।

सनिम् । मेधाम् । अयासिषम् ॥६॥

यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन ।

स धीनां योगमिन्वति ॥७॥

यस्मात् । ऋते । न । सिध्यति । यज्ञः । विपःऽचितः । चन ।

सः । धीनाम् । योगम् । इन्वति ॥७॥

आदृध्नोति हविष्कृतिं प्राञ्चं कृणोत्यध्वरम् ।

होत्रा देवेषु गच्छति ॥८॥

आत् । ऋध्नोति । हविःऽकृतिम् । प्राञ्चम् । कृणोति । अध्वरम् ।

होत्रा । देवेषु । गच्छति ॥८॥

नराशंसं सुधृष्टममपश्यं सप्रथस्तमम् ।

दिवो न सद्ममखसम् ॥९॥

नराशंसम् । सुऽधृष्टमम् । अपश्यम् । सप्रथःऽतमम् ।

दिवः । न । सद्मऽमखसम् ॥९॥

॥१८॥

१.१९

१—९ काण्वो मेधातिथिः । अग्निर्मरुतश्च । गायत्री ।

प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे ।

मरुद्भिरग्न आ गहि ॥१॥

प्रति । त्यम् । चारुम् । अध्वरम् । गोऽपीथाय । प्र । हूयसे ।

मरुत्ऽभिः । अग्ने । आ । गहि ॥१॥

नहि देवो न मर्त्यो महस्तव क्रतुं परः ।

मरुद्भिरग्न आ गहि ॥२॥

नहि । देवः । न । मर्त्यः । महः । तव । क्रतुम् । परः ।

मरुत्ऽभिः । अग्ने । आ । गहि ॥२॥

ये महो रजसो विदुर्विश्वे देवासो अद्रुहः ।

मरुद्भिरग्न आ गहि ॥३॥

ये । महः । रजसः । विदुः । विश्वे । देवासः अद्रुहः ।

मरुत्ऽभिः । अग्ने । आ । गहि ॥३॥

य उग्रा अर्कमानृचुरनाधृष्टास ओजसा ।

मरुद्भिरग्न आ गहि ॥४॥

ये । उग्राः । अर्कम् । आनृचुः । अनाधृष्टासः । ओजसा ।

मरुत्ऽभिः । अग्ने । आ । गहि ॥४॥

ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः ।

मरुद्भिरग्न आ गहि ॥५॥

ये । शुभ्राः । घोरऽवर्पसः । सुऽक्षत्रासः । रिशादसः ।

मरुत्ऽभिः । अग्ने । आ । गहि ॥५॥

ये नाकस्याधि रोचने दिवि देवास आसते ।

मरुद्भिरग्न आ गहि ॥६॥

ये । नाकस्य । अधि । रोचने । दिवि । देवासः । आसते ।

मरुत्ऽभिः । अग्ने । आ । गहि ॥६॥

य ईङ्खयन्ति पर्वतान्तिरः समुद्रमर्णवम् ।

मरुद्भिरग्न आ गहि ॥७॥

ये । ईङ्खयन्ति । पर्वतान् । तिरः । समुद्रम् । अर्णवम् ।

मरुत्ऽभिः । अग्ने । आ । गहि ॥७

आ ये तन्वन्ति रश्मिभिस्तिरस्समुद्रमोजसा ।

मरुद्भिरग्न आ गहि ॥८॥

आ । ये । तन्वन्ति । रश्मिऽभिः । तिरः । समुद्रम् । ओजसा ।

मरुत्ऽभिः । अग्ने । आ । गहि ॥८॥

अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु ।

मरुद्भिरग्न आ गहि ॥९॥

अभि । त्वा । पूर्वऽपीतये । सृजामि । सोम्यम् । मधु ।

मरुत्ऽभिः । अग्ने । आ । गहि ॥९॥

प्रथमाष्टके प्रथमोऽध्यायः ।

॥२०॥

१·१०१

१—११ कुत्स आङ्गिरसः। इन्द्रः। प्रथमा गर्भस्राविण्युपनिषत्।
१—७ जगती; ८—११ त्रिष्टुप्।

प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना।
अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हवामहे ॥१॥

प्र। मन्दिने। पितुऽमत्। अर्चत। वचः।
यः। कृष्णऽगर्भाः। निःऽअहन्। ऋजिश्वना।
अवस्यवः। वृषणम्। वज्रऽदक्षिणम्।
मरुत्वन्तम्। सख्याय। हवामहे ॥१॥

यो व्यंसं जाहृषाणेन मन्युना यः शम्बरं यो अहन्पिप्रुमव्रतम्।
इन्द्रो यः शुष्णमशुषं न्यावृणङ् मरुत्वन्तं सख्याय हवामहे ॥२॥

यः। विऽअंसम्। जहृषाणेन। मन्युना।
यः। शम्बरम्। यः। अहन्। पिप्रुम्। अव्रतम्।
इन्द्रः। यः। शुष्णम्। अशुषम्। नि। अवृणक्।
मरुत्वन्तम्। सख्याय। हवामहे ॥२॥

यस्य द्यावापृथिवी पौंस्यं महद्यस्य व्रते वरुणो यस्य सूर्यः ।
यस्येन्द्रस्य सिन्धवः सश्चति व्रतं मरुत्वन्तं सख्याय हवामहे ॥३॥

यस्य । द्यावापृथिवी इति । पौंस्यम् । महत् ।
यस्य । व्रते । वरुणः । यस्य । सूर्यः ।
यस्य । इन्द्रस्य । सिन्धवः । सश्चति । व्रतम् ।
मरुत्वन्तम् । सख्याय । हवामहे ॥३॥

यो अश्वानां यो गवां गोपतिर्वशी य आरितः कर्मणिकर्मणि स्थिरः ।
वीळोश्चिदिन्द्रो यो असुन्वतो वधो मरुत्वन्तं सख्याय हवामहे ॥४॥

यः । अश्वानाम् । यः । गवाम् । गोऽपतिः । वशी ।
यः । आरितः । कर्मणिऽकर्मणि । स्थिरः ।
वीळोः । चित् । इन्द्रः । यः । असुन्वतः । वधः ।
मरुत्वन्तम् । सख्याय । हवामहे ॥४॥

यो विश्वस्य जगतः प्राणतस्पतिर्यो ब्रह्मणे प्रथमो गा अविन्दत् ।
इन्द्रो यो दस्यूँरधराँ अवातिरन्मरुत्वन्तं सख्याय हवामहे ॥५॥

यः । विश्वस्य । जगतः । प्राणतः । पतिः ।

यः । ब्रह्मणे । प्रथमः । गाः । अविन्दत् ।

इन्द्रः । यः । दस्यून् । अधरान् । अवऽअतिरत् ।

मरुत्वन्तम् । सख्याय । हवामहे ॥५॥

यः शूरेभिर्हव्यो यश्च भीरुभिर्यो धावद्भिर्हूयते यश्च जिग्युभिः ।

इन्द्रं यं विश्वा भुवनाभि सन्दधुर्मरुत्वन्तं सख्याय हवामहे ॥६॥

यः । शूरेभिः । हव्यः । यः । च । भीरुऽभिः ।

यः । धावत्ऽभिः । हूयते । यः । च । जिग्युऽभिः ।

इन्द्रम् । यम् । विश्वा । भुवना । अभि । सम्ऽदधुः ।

मरुत्वन्तम् । सख्याय । हवामहे ॥६॥

रुद्राणामेति प्रदिशा विचक्षणो रुद्रेभिर्योषा तनुते पृथु ज्रयः ।

इन्द्रं मनीषा अभ्यर्चति श्रुतं मरुत्वन्तं सख्याय हवामहे ॥७॥

रुद्राणाम् । एति । प्रऽदिशा । विऽचक्षणः ।

रुद्रेभिः । योषा । तनुते । पृथु । ज्रयः ।

इन्द्रम् । मनीषा । अभि । अर्चति । श्रुतम् ।

मरुत्वन्तम् । सख्याय । हवामहे ॥७॥

यद्वा मरुत्वः परमे सधस्थे यद्वावमे वृजने मादयासे ।

अत आ याह्यध्वरं नो अच्छा त्वाया हविश्चकृमा सत्यराधः ॥८॥

यत् । वा । मरुत्वः । परमे । सधऽस्थे ।

यत् । वा । अवमे । वृजने । मादयासे ॥

अतः । आ । याहि । अध्वरम् । नः । अच्छ ।

त्वाऽया । हविः । चकृम । सत्यऽराधः ॥८॥

त्वायेन्द्र सोमं सुषुमा सुदक्ष त्वाया हविश्चकृमा ब्रह्मवाहः ।

अधा नियुत्वः सगणो मरुद्भिरस्मिन्यज्ञे बर्हिषि मादयस्व ॥९॥

त्वाऽया । इन्द्र । सोमम् । सुसुम । सुऽदक्ष ।

त्वाऽया । हविः । चकृम । ब्रह्मऽवाहः ॥

अध । नियुत्वः । सऽगणः । मरुत्ऽभिः ।

अस्मिन् । यज्ञे । बर्हिषि । मादयस्व ॥९॥

मादयस्व हरिभिर्ये त इन्द्र वि ष्यस्व शिप्रे वि सृजस्व धेने ।

आ त्वा सुशिप्र हरयो वहन्तूशन्हव्यानि प्रति नो जुषस्व ॥१०॥

मादयस्व । हरिऽभिः । ये । ते । इन्द्र ।

वि । स्यस्व । शिप्रे इति । वि । सृजस्व । धेने इति ।

आ । त्वा । सुऽशिप्र । हरयः । वहन्तु ।

उशन् । हव्यानि । प्रति । नः । जुषस्व ॥१०॥

मरुत्स्तोत्रस्य वृजनस्य गोपा वयमिन्द्रेण सनुयाम वाजम् ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥११॥

मरुत्ऽस्तोत्रस्य । वृजनस्य । गोपाः ।

वयम् । इन्द्रेण । सनुयाम । वाजम् ।

तत् । नः । मित्रः । वरुणः । ममहन्ताम् ।

अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥११॥

॥ २१ ॥

१.१२५

१—७ कक्षीवान् औशिजो दैर्घतमसः । स्वनयस्य दानस्तुतिः ।
१—३, ६—७ त्रिष्टुप् ; ४—५ जगती ।

प्राता रत्नं प्रातरित्वा दधाति तं चिकित्वान्प्रतिगृह्या नि धत्ते ।
तेन प्रजां वर्धयमान आयू रायस्पोषेण सचते सुवीरः ॥१॥

प्रातरिति । रत्नम् । प्रातःऽइत्वा । दधाति ।
तम् । चिकित्वान् । प्रतिऽगृह्य । नि । धत्ते ।
तेन । प्रऽजाम् । वर्धयमानः । आयुः ।
रायः । पोषेण । सचते । सुऽवीरः ॥१॥

सुगुरसत्सुहिरण्यः स्वश्वो बृहदस्मै वय इन्द्रो दधाति ।
यस्त्वायन्तं वसुना प्रातरित्वो मुक्षीजयेव पदिमुत्सिनाति ॥२॥

सुऽगुः । असत् । सुऽहिरण्यः । सुऽअश्वः ।
बृहत् । अस्मै । वयः । इन्द्रः । दधाति ।
यः । त्वा । आऽयन्तम् । वसुना । प्रातःऽइत्वः ।
मुक्षीजयाऽइव । पदिम् । उत्ऽसिनाति ॥२॥

आयमद्य सुकृतं प्रातरिच्छन्निष्टेः पुत्रं वसुमता रथेन ॥

अंशोः सुतं पायय मत्सरस्य क्षयद्वीरं वर्धय सूनृताभिः ॥३॥

आयम् । अद्य । सुऽकृतम् । प्रातः । इच्छन् ।

इष्टेः । पुत्रम् । वसुऽमता । रथेन ॥

अंशोः । सुतम् । पायय । मत्सरस्य ।

क्षयत्ऽवीरम् । वर्धय । सूनृताभिः ॥३॥

उप क्षरन्ति सिन्धवो मयोभुव ईजानं च यक्ष्यमाणं च धेनवः ॥

पृणन्तं च पपुरिं च श्रवस्यवो घृतस्य धारा उप यन्ति विश्वतः ॥४॥

उप । क्षरन्ति । सिन्धवः । मयःऽभुवः ।

ईजानम् । च । यक्ष्यमाणम् । च । धेनवः ।

पृणन्तम् । च । पपुरिम् । च । श्रवस्यवः ।

घृतस्य । धाराः । उप । यन्ति । विश्वतः ॥४॥

नाकस्य पृष्ठे अधि तिष्ठति श्रितो यः पृणाति स ह देवेषु गच्छति ॥

तस्मा आपो घृतमर्षन्ति सिन्धवस्तस्मा इयं दक्षिणा पिन्वते सदा ॥५॥

नाकस्य । पृष्ठे । अधि । तिष्ठति । श्रितः ।

यः । पृणाति । सः । ह । देवेषु । गच्छति ।

तस्मै । आपः । घृतम् । अर्षन्ति । सिन्धवः ।

तस्मै । इयम् । दक्षिणा । पिन्वते । सदा ॥५॥

दक्षिणावतामिदिमानि चित्रा दक्षिणावतां दिवि सूर्यासः ॥

दक्षिणावन्तो अमृतं भजन्ते दक्षिणावन्तः प्र तिरन्त आयुः ।६॥

दक्षिणाऽवताम् । इत् । इमानि । चित्रा ।

दक्षिणाऽवताम् । दिवि । सूर्यासः ।

दक्षिणाऽवन्तः । अमृतम् । भजन्ते ।

दक्षिणाऽवन्तः । प्र । तिरन्ते । आयुः ॥६॥

मा पृणन्तो दुरितमेन आरन्मा जारिषुः सूरयः सुव्रतासः ॥

अन्यस्तेषां परिधिरस्तु कश्चिदपृणन्तमभि सं यन्तु शोकाः ॥७॥

मा । पृणन्तः । दुःऽइतम् । एनः । आ । अरन् ।

मा । जारिषुः । सूरयः । सुऽव्रतासः ।

अन्यः । तेषाम् । परिऽधिः । अस्तु । कः । चित् ।

अपृणन्तम् । अभि । सम् । यन्तु । शोकाः ॥७॥

॥२२॥

१·१६३

१—१३ दीर्घतमा औचथ्यः । अश्वः । त्रिष्टुप् ।

यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् ।

श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् ॥१॥

यत् । अक्रन्दः । प्रथमम् । जायमानः ।

उत्ऽयन् । समुद्रात् । उत । वा । पुरीषात् ।

श्येनस्य । पक्षा । हरिणस्य । बाहू इति ।

उपऽस्तुत्यम् । महि । जातम् । ते । अर्वन् ॥१॥

यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत् ।

गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं वसवो निरतष्ट ॥२॥

यमेन । दत्तम् । त्रितः । एनम् । अयुनक् ।

इन्द्रः । एनम् । प्रथमः । अधिऽअतिष्ठत् ।

गन्धर्वः । अस्य । रशनाम् । अगृभ्णात् ।

सूरात् । अश्वम् । वसवः । निः । अतष्ट ॥२॥

असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन ।

असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि ॥३॥

असि । यमः । असि । आदित्यः । अर्वन् ।

असि । त्रितः । गुह्येन । व्रतेन ।

असि । सोमेन । समया । विऽपृक्तः ।

आहुः । ते । त्रीणि । दिवि । बन्धनानि ॥३॥

त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे ।

उतेव मे वरुणश्छन्त्स्यर्वन्यत्रा त आहुः परमं जनित्रम् ॥४॥

त्रीणि । ते । आहुः । दिवि । बन्धनानि ।

त्रीणि । अप्ऽसु । त्रीणि । अन्तरिति । समुद्रे ।

उतऽइव । मे । वरुणः । छन्त्सि । अर्वन् ।

यत्र । ते । आहुः । परमम् । जनित्रम् ॥४॥

इमा ते वाजिन्नवमार्जनानीमा शफानां सनितुर्निधाना ।

अत्रा ते भद्रा रशना अपश्यमृतस्य या अभिरक्षन्ति गोपाः ॥५॥

इमा । ते । वाजिन् । अवऽमार्जनानि ।

इमा । शफानाम् । सनितुः । निऽधाना ।

अत्र । ते । भद्राः । रशनाः । अपश्यम् ।

ऋतस्य । याः । अभिऽरक्षन्ति । गोपाः ॥५॥

आत्मानं ते मनसारादजानामवो दिवा पतयन्तं पतङ्गम् ।

शिरो अपश्यं पथिभिः सुगेभिररेणुभिर्जेहमानं पतत्रि ॥६॥

आत्मानम् । ते । मनसा । आरात् । अजानाम् ।

अवः । दिवा । पतयन्तम् । पतङ्गम् ।

शिरः । अपश्यम् । पथिऽभिः । सुऽगेभिः ।

अरेणुऽभिः । जेहमानम् । पतत्रि ॥६॥

अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः ।

यदा ते मर्तो अनु भोगमानळादिद् ग्रसिष्ठ ओषधीरजीगः ॥७॥

अत्र । ते । रूपम् । उत्ऽतमम् । अपश्यम् ।

जिगीषमाणम् । इषः । आ । पदे । गोः ।

यदा । ते । मर्तः । अनु । भोगम् । आनट् ।

आत् । इत् । ग्रसिष्ठः । ओषधीः । अजीगरिति ॥७॥

अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनाम् ।

अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यं ते ॥८॥

अनु । त्वा । रथः । अनु । मर्यः । अर्वन् ।

अनु । गावः । अनु । भगः । कनीनाम् ।

अनु । व्रातासः । तव । सख्यम् । ईयुः ।

अनु । देवाः । ममिरे । वीर्यम् । ते ॥८॥

हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत् ।

देवा इदस्य हविरद्यमायन्यो अर्वन्तं प्रथमो अध्यतिष्ठत् ॥९॥

हिरण्यऽशृङ्गः । अयः । अस्य । पादाः ।

मनःऽजवाः । अवरः । इन्द्रः । आसीत् ।

देवाः । इत् । अस्य । हविःअद्यम् । आयन् ।

यः । अर्वन्तम् । प्रथमः । अधिऽअतिष्ठत् ॥९॥

ईर्मान्तासः सिलिकमध्यमासः सं शूरणासो दिव्यासो अत्याः ।

हंसाइव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः ॥१०॥

ईर्मऽअन्तासः । सिलिकऽमध्यमासः ।

सम् । शूरणासः । दिव्यासः । अत्याः ।

हंसाःऽइव । श्रेणिऽशः । यतन्ते ।

यत् । आक्षिषुः । दिव्यम् । अज्मम् । अश्वाः ॥१०॥

तव शरीरं पतयिष्ण्वर्वन्तव चित्तं वातइव ध्रजीमान् ।

तव शृङ्गाणि विष्ठिता पुरुत्रारण्येषु जर्भुराणा चरन्ति ॥११॥

तव । शरीरम् । पतयिष्णु । अर्वन् ।

तव । चित्तम् । वातःऽइव । ध्रजिऽमान् ।

तव । शृङ्गाणि । विऽस्थिता । पुरुऽत्रा ।

अरण्येषु । जर्भुराणा । चरन्ति ॥११॥

उप प्रागाच्छसनं वाज्यर्वा देवद्रीचा मनसा दीध्यानः ।
अजः पुरो नीयते नाभिरस्यानु पश्चात्कवयो यन्ति रेभाः ॥१२॥

उप । प्र । अगात् । शसनम् । वाजी । अर्वा ।
देवद्रीचा । मनसा । दीध्यानः ।
अजः । पुरः । नीयते । नाभिः । अस्य ।
अनु । पश्चात् । कवयः । यन्ति । रेभाः ॥१२॥

उप प्रागात्परमं यत्सधस्थमर्वां अच्छा पितरं मातरं च ।
अद्या देवाञ्जुष्टतमो हि गम्या अथाशास्ते दाशुषे वार्याणि ॥१३॥

उप । प्र । अगात् । परमम् । यत् । सधऽस्थम् ।
अर्वान् । अच्छ । पितरम् । मातरम् । च ।
अद्य । देवान् । जुष्टऽतमः । हि । गम्याः ।
अथ । आशास्ते । दाशुषे । वार्याणि ॥१३॥

॥२३॥

१·१६४

१—१५ दीर्घतमा औचथ्यः । १—१५ विश्वेदेवाः । १—११, १३—१४ त्रिष्टुप्, १२, १५ जगती।

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः ।
तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥१॥

अस्य । वामस्य । पलितस्य । होतुः ।
तस्य । भ्राता । मध्यमः । अस्ति । अश्नः ।
तृतीयः । भ्राता । घृतऽपृष्ठः । अस्य ।
अत्र । अपश्यम् । विश्पतिम् । सप्तऽपुत्रम् ॥१॥

सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा ।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥२॥

सप्त । युञ्जन्ति । रथम् । एकऽचक्रम् ।
एकः । अश्वः । वहति । सप्तऽनामा ।
त्रिऽनाभि । चक्रम् । अजरम् । अनर्वम् ।
यत्र । इमा । विश्वा । भुवना । अधि । तस्थुः ॥२॥

इमं रथमधि ये सप्त तस्थुः सप्तचक्रं सप्त वहन्त्यश्वाः ।

सप्त स्वसारो अभि सं नवन्ते यत्र गवां निहिता सप्त नाम ॥३॥

इमम् । रथम् । अधि । ये । सप्त । तस्थुः ।

सप्तऽचक्रम् । सप्त । वहन्ति । अश्वाः ।

सप्त । स्वसारः । अभि । सम् । नवन्ते ।

यत्र । गवाम् । निऽहिता । सप्त । नाम ॥३॥

को ददर्श प्रथमं जायमानमस्थन्वन्तं यदनस्था बिभर्ति ।

भूम्या असुरसृगात्मा क्व स्वित्को विद्वांसमुप गात् प्रष्टुमेतत् ॥४॥

कः । ददर्श । प्रथमम् । जायमानम् ।

अस्थन्ऽवन्तम् । यत् । अनस्था । बिभर्ति ।

भूम्याः । असुः । असृक् । आत्मा । क्व । स्वित् ।

कः । विद्वांसम् । उप । गात् । प्रष्टुम् । एतत् ॥४॥

पाकः पृच्छामि मनसाविजानन्देवानामेना निहिता पदानि ।

वत्से बष्कयेऽधि सप्त तन्तून्वि तत्निरे कवय ओतवा उ ॥५॥

पाकः । पृच्छामि । मनसा । अविऽजानन् ।

देवानाम् । एना । निऽहिता । पदानि ।

वत्से । बष्कये । अधि । सप्त । तन्तून् ।

वि । तत्निरे । कवयः । ओतवै । ऊँ इति ॥५॥

अचिकित्वाञ्चिकितुषश्चिदत्र कवीन्पृच्छामि विद्मने न विद्वान् ।

वि यस्तस्तम्भ षळिमा रजांस्यजस्य रूपे किमपि स्विदेकम् ॥६॥

अचिकित्वान् । चिकितुषः । चित् । अत्र ।

कवीन् । पृच्छामि । विद्मने । न । विद्वान् ।

वि । यः । तस्तम्भ । षट् । इमा । रजांसि ।

अजस्य । रूपे । किम् । अपि । स्वित् । एकम् ॥६॥

इह ब्रवीतु य ईमङ्ग वेदास्य वामस्य निहितं पदं वेः ।

शीर्ष्णः क्षीरं दुहते गावो अस्य वव्रिं वसाना उदकं पदापुः ॥७॥

इह । ब्रवीतु । यः । ईम् । अङ्ग । वेद ।

अस्य । वामस्य । निऽहितम् । पदम् । वेरिति वेः ।

शीर्ष्णः । क्षीरम् । दुहते । गावः । अस्य ।

वव्रिम् । वसानाः । उदकम् । पदा । अपुः ॥७॥

माता पितरमृत आ बभाज धीत्यग्रे मनसा सं हि जग्मे ।

सा बीभत्सुर्गर्भरसा निविद्धा नमस्वन्त इदुपवाकमीयुः ॥८॥

माता । पितरम् । ऋते । आ । बभाज ।

धीती । अग्रे । मनसा । सम् । हि । जग्मे ।

सा । बीभत्सुः । गर्भऽरसा । निऽविद्धा ।

नमस्वन्तः । इत् । उपऽवाकम् । ईयुः ॥८॥

युक्ता मातासीद्धुरि दक्षिणाया अतिष्ठद्गर्भो वृजनीष्वन्तः ।

अमीमेद्वत्सो अनु गामपश्यद्विश्वरूप्यं त्रिषु योजनेषु ॥९॥

युक्ता । माता । आसीत् । धुरि । दक्षिणायाः ।

अतिष्ठत् । गर्भः । वृजनीषु । अन्तरिति ।

अमीमेत् । वत्सः । अनु । गाम् । अपश्यत् ।

विश्वऽरूप्यम् । त्रिषु । योजनेषु ॥९॥

तिस्रो मातृस्त्रीन् पितृन् बिभ्रदेक ऊर्ध्वस्तस्थौ नेमव ग्लापयन्ति ।

मन्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदं वाचमविश्वमिन्वाम् ॥१०॥

तिस्रः । मातृः । त्रीन् । पितृन् । बिभ्रत् । एकः ।

ऊर्ध्वः । तस्थौ । न । ईम् । अव । ग्लपयन्ति ।

मन्त्रयन्ते । दिवः । अमुष्य । पृष्ठे ।

विश्वऽविदम् । वाचम् । अविश्वऽमिन्वाम् ॥१०॥

द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य ।

आ पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः ॥११॥

द्वादशऽअरम् । नहि । तत् । जराय ।

वर्वर्ति । चक्रम् । परि । द्याम् । ऋतस्य ।

आ । पुत्राः । अग्ने । मिथुनासः । अत्र ।

सप्त । शतानि । विंशतिः । च । तस्थुः ॥११॥

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् ।

अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम् ॥१२॥

पञ्चऽपादम् । पितरम् । द्वादशऽआकृतिम् ।

दिवः । आहुः । परे । अर्द्धे । पुरीषिणम् ।

अथ । इमे । अन्ये । उपरे । विऽचक्षणम् ।

सप्तऽचक्रे । षट्ऽअरे । आहुः । अर्पितम् १२॥

पञ्चारे चक्रे परिवर्तमाने तस्मिन्ना तस्थुर्भुवनानि विश्वा ।

तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते सनाभिः ॥१३॥

पञ्चऽअरे । चक्रे । परिऽवर्तमाने ।

तस्मिन् । आ । तस्थुः । भुवनानि । विश्वा ।

तस्य । न । अक्षः । तप्यते । भूरिऽभारः ।

सनात् । एव । न । शीर्यते । सऽनाभिः ॥१३॥

सनेमि चक्रमजरं वि वावृत उत्तानायां दश युक्ता वहन्ति ।

सूर्यस्य चक्षू रजसैत्यावृतं तस्मिन्नार्पिता भुवनानि विश्वा ॥१४॥

सऽनेमि । चक्रम् । अजरम् । वि । ववृते ।

उत्तानायाम् । दश । युक्ताः । वहन्ति ।

सूर्यस्य । चक्षुः । रजसा । एति । आऽवृतम् ।

तस्मिन् । आर्पिता । भुवनानि । विश्वा ॥१४॥

साकंजानां सप्तथमाहुरेकजं षळिद्यमा ऋषयो देवजा इति ।

तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः ॥१५॥

साकम्ऽजानाम् । सप्तथम् । आहुः । एकऽजम् ।

षट् । इत् । यमाः । ऋषयः । देवऽजाः । इति ।

तेषाम् । इष्टानि । विऽहितानि । धामऽशः ।

स्थात्रे । रेजन्ते । विऽकृतानि । रूपऽशः ॥१५॥

॥२४॥

२.२५

१—५ गृत्समदः । ब्रह्मणस्पतिः । जगती ।

इन्धानो अग्निं वनवद्वनुष्यतः कृतब्रह्मा शूशुवद्रातहव्य इत् ।

जातेन जातमति स प्र सर्सृते यंयं युजं कृणुते ब्रह्मणस्पतिः ॥१॥

इन्धानः । अग्निम् । वनवत् । वनुष्यतः ।

कृतऽब्रह्मा । शूशुवत् । रातऽहव्यः । इत् ।

जातेन । जातम् । अति । सः । प्र । सस्रुते ।

यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥१॥

वीरेभिर्वीरान्वनवद्वनुष्यतो गोभी रयिं पप्रथद्बोधति त्मना ।

तोकं च तस्य तनयं च वर्धते यंयं युजं कृणुते ब्रह्मणस्पतिः ॥२॥

वीरेभिः । वीरान् । वनवत् । वनुष्यतः ।

गोभिः । रयिम् । पप्रथत् । बोधति । त्मना ।

तोकम् । च । तस्य । तनयम् । च । वर्धते ।

यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥२॥

सिन्धुर्न क्षोदः शिमीवाँ ऋघायतो वृषेव वध्रीँरभि वष्ट्योजसा ।

अग्नेरिव प्रसितिर्नाह वर्तवे यंयं युजं कृणुते ब्रह्मणस्पतिः ॥३॥

सिन्धुः । न । क्षोदः । शिमीऽवान् । ऋघायतः ।

वृषाऽइव । वध्रीन् । अभि । वष्टि । ओजसा ।

अग्नेःऽइव । प्रऽसितिः । न । अह । वर्तवे ।

यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥३॥

तस्मा अर्षन्ति दिव्या असश्चतः स सत्वभिः प्रथमो गोषु गच्छति ।

अनिभृष्टतविषिर्हन्त्योजसा यंयं युजं कृणुते ब्रह्मणस्पतिः ॥४॥

तस्मै । अर्षन्ति । दिव्याः । असश्चतः ।

सः । सत्वऽभिः । प्रथमः । गोषु । गच्छति ।

अनिभृष्टऽतविषिः । हन्ति । ओजसा ।

यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥४॥

तस्मा इद्विश्वे धुनयन्त सिन्धवोऽच्छिद्रा शर्म दधिरे पुरूणि ।

देवानां सुम्ने सुभगः स एधते यंयं युजं कृणुते ब्रह्मणस्पतिः ॥५॥

तस्मै । इत् । विश्वे । धुनयन्त । सिन्धवः ।

अच्छिद्रा । शर्म । दधिरे । पुरूणि ।

देवानाम् । सुम्ने । सुऽभगः । सः । एधते ।

यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥५॥

॥ २५ ॥

३·१७

१-५ कतो वैश्वामित्रः । अग्निः । त्रिष्टुप् ।

समिध्यमानः प्रथमानु धर्मा समक्तुभिरज्यते विश्ववारः ।

शोचिष्केशो घृतनिर्णिक् पावकः सुयज्ञो अग्निर्यजथाय देवान् ॥१॥

सम्ऽइध्यमानः । प्रथमा । अनु । धर्म ।

सम् । अक्तुऽभिः । अज्यते । विश्वऽवारः ।

शोचिःऽकेशः । घृतऽनिर्निक् । पावकः ।

सुऽयज्ञः । अग्निः । यजथाय । देवान् ॥१॥

यथायजो होत्रमग्ने पृथिव्या यथा दिवो जातवेदश्चिकित्वान् ।

एवानेन हविषा यक्षि देवान्मनुष्वद्यज्ञं प्र तिरेममद्य ॥२॥

यथा । अयजः । होत्रम् । अग्ने । पृथिव्याः ।

यथा । दिवः । जातऽवेदः । चिकित्वान् ।

एव । अनेन । हविषा । यक्षि । देवान् ।

मनुष्वत् । यज्ञम् । प्र । तिर । इमम् । अद्य ॥२॥

त्रीण्यायूंषि तव जातवेदस्तिस्र आजानीरुषसस्ते अग्ने ।
ताभिर्देवानामवो यक्षि विद्वानथा भव यजमानाय शं योः ॥३॥

त्रीणि । आयूंषि । तव । जातऽवेदः ।
तिस्रः । आऽजानीः । उषसः । ते । अग्ने ।
ताभिः । देवानाम् । अवः । यक्षि । विद्वान् ।
अथ । भव । यजमानाय । शम् । योः ॥३॥

अग्निं सुदीतिं सुदृशं गृणन्तो नमस्यामस्त्वेड्यं जातवेदः ।
त्वां दूतमरतिं हव्यवाहं देवा अकृण्वन्नमृतस्य नाभिम् ॥४॥

अग्निम् । सुऽदीतिम् । सुऽदृशम् । गृणन्तः ।
नमस्यामः । त्वा । ईड्यम् । जातऽवेदः ।
त्वाम् । दूतम् । अरतिम् । हव्यऽवाहम् ।
देवाः । अकृण्वन् । अमृतस्य । नाभिम् ॥४॥

यस्त्वद्धोता पूर्वो अग्ने यजीयान्द्विता च सत्ता स्वधया च शम्भुः ।
तस्यानु धर्म प्र यजा चिकित्वोऽथा नो धा अध्वरं देववीतौ ॥५॥

यः । त्वम् । होता । पूर्वः । अग्ने । यजीयान् ।

द्विता । च । सत्ता । स्वधया । च । शम्ऽभुः ।

तस्य । अनु । धर्म । प्र । यज । चिकित्वः ।

अथ । नः । धाः । अध्वरम् । देवऽवीतौ ॥५॥

॥ २६ ॥

४.५४

१—६ वामदेवो गौतमः । सविता । १—५ जगती, ६ त्रिष्टुप् ।

अभूद्देवः सविता वन्द्यो नु न इदानीमह्न उपवाच्यो नृभिः ।

वि यो रत्ना भजति मानवेभ्यः श्रेष्ठं नो अत्र द्रविणं यथा दधत् ॥१॥

अभूत् । देवः । सविता । वन्द्यः । नु । नः ।

इदानीम् । अह्नः । उपऽवाच्यः । नृऽभिः ।

वि । यः । रत्ना । भजति । मानवेभ्यः ।

श्रेष्ठम् । नः । अत्र । द्रविणम् । यथा । दधत् ॥१॥

देवेभ्यो हि प्रथमं यज्ञियेभ्योऽमृतत्वं सुवसि भागमुत्तमम् ।

आदिद्दामानं सवितर्व्यूर्णुषेऽनूचीना जीविता मानुषेभ्यः ॥२॥

देवेभ्यः । हि । प्रथमम् । यज्ञियेभ्यः ।

अमृतऽत्वम् । सुवसि । भागम् । उत्ऽतमम् ।

आत् । इत् । दामानम् । सवितः । वि । ऊर्णुषे ।

अनूचीना । जीविता । मानुषेभ्यः ॥२॥

अचित्ती यच्चकृमा दैव्ये जने दीनैर्दक्षैः प्रभूती पूरुषत्वता ।

देवेषु च सवितर्मानुषेषु च त्वं नो अत्र सुवतादनागसः ॥३॥

अचित्ती । यत् । चकृम । दैव्ये । जने ।

दीनैः । दक्षैः । प्रऽभूती । पूरुषत्वता ।

देवेषु । च । सवितः । मानुषेषु । च ।

त्वम् । नः । अत्र । सुवतात् । अनागसः ॥३॥

न प्रमिये सवितुर्दैव्यस्य तद्यथा विश्वं भुवनं धारयिष्यति ।

यत्पृथिव्या वरिमन्ना स्वङ्गुरिर्वर्ष्मन्दिवः सुवति सत्यमस्य तत् ॥४॥

न । प्रऽमिये । सवितुः । दैव्यस्य । तत् ।

यथा । विश्वम् । भुवनम् । धारयिष्यति ।

यत् । पृथिव्याः । वरिमन् । आ । सुऽअङ्गुरिः ।

वर्ष्मन् । दिवः । सुवति । सत्यम् । अस्य । तत् ॥४॥

इन्द्रज्येष्ठान्बृहद्भ्यः पर्वतेभ्यः क्षयाँ एभ्यः सुवसि पस्त्यावतः ।

यथायथा पतयन्तो वियेमिर एवैव तस्थुः सवितः सवाय ते ॥५॥

इन्द्रऽज्येष्ठान् । बृहत्ऽभ्यः । पर्वतेभ्यः ।

क्षयान् । एभ्यः । सुवसि । पस्त्यऽवतः ।

यथाऽयथा । पतयन्तः । विऽयेमिरे ।

एव । एव । तस्थुः । सवितरिति । सवाय । ते ॥५॥

ये ते त्रिरहन्त्सवितः सवासो दिवेदिवे सौभगमासुवन्ति ।

इन्द्रो द्यावापृथिवी सिन्धुरद्भिरादित्यैर्नो अदितिः शर्म यंसत् ॥६॥

ये । ते । त्रिः । अहन् । सवितरिति । सवासः ।

दिवेऽदिवे । सौभगम् । आऽसुवन्ति ।

इन्द्रः । द्यावापृथिवी इति । सिन्धुः । अत्ऽभिः ।

आदित्यैः । नः । अदितिः । शर्म । यंसत् ॥६॥

॥२७॥

५·५६

१—९ श्यावाश्व आत्रेयः । मरुतः । १-२,४-६, ८-९ बृहती ; ३,७ सतो बृहती ।

अग्ने शर्धन्तमा गणं पिष्टं रुक्मेभिरञ्जिभिः ।

विशो अद्य मरुतामव ह्वये दिवश्चिद्रोचनादधि ॥१॥

अग्ने । शर्धन्तम् । आ । गणम् ।

पिष्टम् । रुक्मेभिः । अञ्जिऽभिः ।

विशः । अद्य । मरुताम् । अव । ह्वये ।

दिवः । चित् । रोचनात् । अधि ॥१॥

यथा चिन्मन्यसे हृदा तदिन्मे जग्मुराशसः ।

ये ते नेदिष्ठं हवनान्यागमन्तान्वर्ध भीमसन्दृशः ॥२॥

यथा । चित् । मन्यसे । हृदा ।

तत् । इत् । मे । जग्मुः । आऽशसः ।

ये । ते । नेदिष्ठम् । हवनानि । आऽगमन् ।

तान् । वर्ध । भीमऽसन्दृशः ॥२॥

मीळ्हुष्मतीव पृथिवी पराहता मदन्त्येत्यस्मदा ।

ऋक्षो न वो मरुतः शिमीवाँ अमो दुध्रो गौरिव भीमयुः ॥३॥

मीळ्हुष्मतीऽइव । पृथिवी । पराऽहता ।

मदन्ती । एति । अस्मत् । आ ।

ऋक्षः । न । वः । मरुतः । शिमीऽवान् । अमः ।

दुध्रः । गौःऽइव । भीमऽयुः ॥३॥

नि ये रिणन्त्योजसा वृथा गावो न दुर्धुरः ।

अश्मानं चित्स्वर्यं१ पर्वतं गिरिं प्र च्यावयन्ति यामभिः ॥४॥

नि । ये । रिणन्ति । ओजसा ।

वृथा । गावः । न । दुःऽधुरः ।

अश्मानम् । चित् । स्वर्यम् । पर्वतम् । गिरिम् ।

प्र । च्यवयन्ति । यामऽभिः ॥४॥

उत्तिष्ठ नूनमेषां स्तोमैः समुक्षितानाम् ।

मरुतां पुरुतममपूर्व्यं गवां सर्गमिव ह्वये ॥५॥

उत । तिष्ठ । नूनम् । एषाम् ।

स्तोमैः । सम्ऽउक्षितानाम् ।

मरुताम् । पुरुऽतमम् । अपूर्व्यम् ।

गवाम् । सर्गम्ऽइव । ह्वये ॥५॥

युङ्ग्ध्वं ह्यरुषी रथे युङ्ग्ध्वं रथेषु रोहितः ।

युङ्ग्ध्वं हरी अजिरा धुरि वोळ्हवे वहिष्ठा धुरि वोळ्हवे ॥६॥

युङ्ग्ध्वम् । हि । अरुषीः । रथे ।

युङ्ग्ध्वम् । रथेषु । रोहितः ।

युङ्ग्ध्वम् । हरी इति । अजिरा । धुरि । वोळ्हवे ।

वहिष्ठा । धुरि । वोळ्हवे ॥६॥

उत स्य वाज्यरुषस्तुविष्वणिरिह स्म धायि दर्शतः ।

मा वो यामेषु मरुतश्चिरं करत्प्र तं रथेषु चोदत ॥७॥

उत । स्यः । वाजी । अरुषः । तुविऽस्वनिः ।

इह । स्म । धायि । दर्शतः ।

मा । वः । यामेषु । मरुतः । चिरम् । करत् ।

प्र । तम् । रथेषु । चोदत ॥७॥

रथं नु मारुतं वयं श्रवस्युमा हुवामहे ।

आ यस्मिन्तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी ॥८॥

रथम् । नु । मारुतम् । वयम् ।

श्रवस्युम् । आ । हुवामहे ।

आ । यस्मिन् । तस्थौ । सुऽरणानि । बिभ्रती ।

सचा । मरुत्ऽसु । रोदसी ॥८॥

तं वः शर्धं रथेशुभं त्वेषं पनस्युमा हुवे ।

यस्मिन्सुजाता सुभगा महीयते सचा मरुत्सु मीळ्हुषी ॥९॥

तम् । वः । शर्धम् । रथेऽशुभम् ।

त्वेषम् । पनस्युम् । आ । हुवे ।

यस्मिन् । सुऽजाता । सुऽभगा । महीयते ।

सचा । मरुत्ऽसु । मीळ्हुषी ॥९॥

॥ २८ ॥

५·८०

१—६ सत्यश्रवा आत्रेयः। उषाः। त्रिष्टुप्।

द्युतद्यामानं बृहतीमृतेन ऋतावरीमरुणप्सुं विभातीम्।
देवीमुषसं स्वरावहन्तीं प्रति विप्रासो मतिभिर्जरन्ते ॥१॥

द्युतत्ऽयामानम्। बृहतीम्। ऋतेन।
ऋतऽवरीम्। अरुणऽप्सुम्। विऽभातीम्।
देवीम्। उषसम्। स्वः। आऽवहन्तीम्।
प्रति। विप्रासः। मतिऽभिः। जरन्ते ॥१॥

एषा जनं दर्शता बोधयन्ती सुगान्पथः कृण्वती यात्यग्रे।
बृहद्रथा बृहती विश्वमिन्वोषा ज्योतिर्यच्छत्यग्रे अह्नाम् ॥२॥

एषा। जनम्। दर्शता। बोधयन्ती।
सुऽगान्। पथः। कृण्वती। याति। अग्रे।
बृहत्ऽरथा। बृहती। विश्वम्ऽइन्वा।
उषाः। ज्योतिः। यच्छति। अग्रे। अह्नाम् ॥२॥

एषा गोभिररुणेभिर्युजानास्रेधन्ती रयिमप्रायु चक्रे ।
पथो रदन्ती सुविताय देवी पुरुष्टुता विश्ववारा वि भाति ॥३॥

एषा । गोभिः । अरुणेभिः । युजाना ।
अस्रेधन्ती । रयिम् । अप्रऽआयु । चक्रे ।
पथः । रदन्ती । सुविताय । देवी ।
पुरुऽस्तुता । विश्वऽवारा । वि । भाति ॥३॥

एषा व्येनी भवति द्विबर्हा आविष्कृण्वाना तन्वं पुरस्तात् ।
ऋतस्य पन्थामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥४॥

एषा । विऽएनी । भवति । द्विऽबर्हाः ।
आविःऽकृण्वाना । तन्वम् । पुरस्तात् ।
ऋतस्य । पन्थाम् । अनु एति । साधु ।
प्रजानतीऽइव । न दिशः । मिनाति ॥४॥

एषा शुभ्रा न तन्वो विदानोर्ध्वेव स्नाती दृशये नो अस्थात् ।
अप द्वेषो बाधमाना तमांस्युषा दिवो दुहिता ज्योतिषागात् ॥५॥

एषा । शुभ्रा । न । तन्वः । विदाना ।

ऊर्ध्वाऽइव । स्नाती । दृशये । नः । अस्थात् ।

अप । द्वेषः । बाधमाना । तमांसि ।

उषाः । दिवः । दुहिता । ज्योतिषा । आ । अगात् ॥५॥

एषा प्रतीची दुहिता दिवो नॄन्योषेव भद्रा नि रिणीते अप्सः ।

व्यूर्ण्वती दाशुषे वार्याणि पुनर्ज्योतिर्युवतिः पूर्वथाकः ॥६॥

एषा । प्रतीची । दुहिता । दिवः । नॄन् ।

योषाऽइव । भद्रा । नि । रिणीते । अप्सः ।

विऽऊर्ण्वती । दाशुषे । वार्याणि ।

पुनः । ज्योतिः । युवतिः । पूर्वऽथा । अकरित्यकः ॥६॥

॥ २९ ॥

६·५६

१—६ भरद्वाजो बार्हस्पत्यः । पूषा । १—५ गायत्री, ६ अनुष्टुप् ।

य एनमादिदेशति करम्भादिति पूषणम् ।

न तेन देव आदिशे ॥१॥

यः । एनम् । आऽदिदेशति । करम्भऽअत् । इति । पूषणम् ।

न । तेन । देवः । आऽदिशे ॥१॥

उत घा स रथीतमः सख्या सत्पतिर्युजा ।

इन्द्रो वृत्राणि जिघ्नते ॥२॥

उत । घ । सः । रथिऽतमः । सख्या । सत्ऽपतिः । युजा ।

इन्द्रः । वृत्राणि । जिघ्नते ॥२॥

उतादः परुषे गवि सूरश्चक्रं हिरण्ययम् ।

न्यैरयद्रथीतमः ॥३॥

उत । अदः । परुषे । गवि । सूरः । चक्रम् । हिरण्ययम् ॥

नि । ऐरयत् । रथिऽतमः ॥३॥

यदद्य त्वा पुरुष्टुत ब्रवाम दस्र मन्तुमः ।

तत्सु नो मन्म साधय ॥४॥

यत् । अद्य । त्वा । पुरुऽस्तुत । ब्रवाम । दस्र । मन्तुऽमः ।

तत् । सु । नः । मन्म । साधय ॥४॥

इमं च नो गवेषणं सातये सीषधो गणम् ।

आरात्पूषन्नसि श्रुतः ॥५॥

इमम् । च । नः । गोऽएषणम् । सातये । सीसधः । गणम् ।

आरात् । पूषन् । असि । श्रुतः ॥५॥

आ ते स्वस्तिमीमह आरेअघामुपावसुम् ।

अद्या च सर्वतातये श्वश्च सर्वतातये ॥६॥

आ । ते । स्वस्तिम् । ईमहे ।

आरेऽअघाम् । उपऽवसुम् ।

अद्य । च । सर्वऽतातये ।

श्वः । च । सर्वऽतातये ॥६॥

॥ ३० ॥

६·६१

१—१४ भरद्वाजो बार्हस्पत्यः । सरस्वती ।

१—३, १३ जगती ; ४—१२ गायत्री ; १४ त्रिष्टुप् ।

इयमददाद्रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे ।

या शश्वन्तमाचखादावसं पणिं ता ते दात्राणि तविषा सरस्वति ॥१॥

इयम् । अददात् । रभसम् । ऋणऽच्युतम् ।

दिवःऽदासम् । वध्रिऽअश्वाय । दाशुषे ।

या । शश्वन्तम् । आऽचखाद । अवसम् । पणिम् ।

ता । ते । दात्राणि । तविषा । सरस्वति ॥१॥

इयं शुष्मेभिर्बिसखाइवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः ।

पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः ॥२॥

इयम् । शुष्मेभिः । बिसखाःऽइव । अरुजत् ।

सानु । गिरीणाम् । तविषेभिः । ऊर्मिऽभिः ।

पारावतऽघ्नीम् । अवसे । सुवृक्तिऽभिः ।

सरस्वतीम् । आ । विवासेम । धीतिऽभिः ॥२॥

सरस्वति देवनिदो नि बर्हय प्रजां विश्वस्य बृसयस्य मायिनः ।

उत क्षितिभ्योऽवनीरविन्दो विषमेभ्यो अस्रवो वाजिनीवति ॥३॥

सरस्वति । देवऽनिदः । नि । बर्हय ।

प्रऽजाम् । विश्वस्य । बृसयस्य । मायिनः ।

उत । क्षितिऽभ्यः । अवनीः । अविन्दः ।

विषम् । एभ्यः । अस्रवः । वाजिनीऽवति ॥३॥

प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती ।

धीनामवित्र्यवतु ॥४॥

प्र । नः । देवी । सरस्वती । वाजेभिः । वाजिनीऽवती ।

धीनाम् । अवित्री । अवतु ॥४॥

यस्त्वा देवि सरस्वत्युपब्रूते धने हिते ।

इन्द्रं न वृत्रतूर्ये ॥५॥

यः । त्वा । देवि । सरस्वति । उपऽब्रूते । धने । हिते ।

इन्द्रम् । न । वृत्रऽतूर्ये ॥५॥

त्वं देवि सरस्वत्यवा वाजेषु वाजिनि ।

रदा पूषेव नः सनिम् ॥६॥

त्वम् । देवि । सरस्वति । अव । वाजेषु । वाजिनि ।

रद । पूषाऽइव । नः । सनिम् ॥६॥

उत स्या नः सरस्वती घोरा हिरण्यवर्तनिः ।

वृत्रघ्नी वष्टि सुष्टुतिम् ॥७॥

उत । स्या । नः । सरस्वती । घोरा । हिरण्यऽवर्तनिः ।

वृत्रऽघ्नी । वष्टि । सुऽस्तुतिम् ॥७॥

यस्या अनन्तो अह्रुतस्त्वेषश्चरिष्णुरर्णवः ।

अमश्चरति रोरुवत् ॥८॥

यस्याः । अनन्तः । अह्रुतः । त्वेषः । चरिष्णुः । अर्णवः ।

अमः । चरति । रोरुवत् ॥८॥

सा नो विश्वा अति द्विषः स्वसॄरन्या ऋतावरी ।

अतन्नहेव सूर्यः ॥९॥

सा । नः । विश्वाः । अति । द्विषः । स्वसॄः । अन्याः । ऋतऽवरी ।

अतन् । अहाऽइव । सूर्यः ॥९॥

उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा ।

सरस्वती स्तोम्या भूत् ॥१०॥

उत । नः । प्रिया । प्रियासु । सप्तऽस्वसा । सुऽजुष्टा ।

सरस्वती । स्तोम्या । भूत् ॥१०॥

आपप्रुषी पार्थिवान्युरु रजो अन्तरिक्षम् ।

सरस्वती निदस्पातु ॥११॥

आऽपप्रुषी । पार्थिवानि । उरु । रजः । अन्तरिक्षम् ।

सरस्वती । निदः । पातु ॥११॥

त्रिषधस्था सप्तधातुः पञ्च जाता वर्धयन्ती ।

वाजेवाजे हव्या भूत् ॥१२॥

त्रिऽसधस्था । सप्तऽधातुः । पञ्च । जाता । वर्धयन्ती ।

वाजेऽवाजे । हव्या । भूत् ॥१२॥

प्र या महिम्ना महिनासु चेकिते द्युम्नेभिरन्या अपसामपस्तमा ।

रथइव बृहती विभ्वने कृतोपस्तुत्या चिकितुषा सरस्वती ॥१३॥

प्र । या । महिम्ना । महिना । आसु । चेकिते ।

द्युम्नेभिः । अन्याः । अपसाम् । अपःऽतमा ।

रथःऽइव । बृहती । विऽभ्वने । कृता ।

उपऽस्तुत्या । चिकितुषा । सरस्वती ॥१३॥

सरस्वत्यभि नो नेषि वस्यो माप स्फरीः पयसा मा न आ धक् ।

जुषस्व नः सख्या वेश्या च मा त्वत्क्षेत्राण्यरणानि गन्म ॥१४॥

सरस्वति । अभि । नः । नेषि । वस्यः ।

मा । अप । स्फरीः । पयसा । मा । नः । आ । धक् ।

जुषस्व । नः । सख्या । वेश्या । च ।

मा । त्वत् । क्षेत्राणि । अरणानि । गन्म ॥१४॥

॥ ३१ ॥

६·६४

१—६ भरद्वाजो बार्हस्पत्यः । उषाः । त्रिष्टुप् ।

उदु श्रिय उषसो रोचमाना अस्थुरपां नोर्मयो रुशन्तः ।

कृणोति विश्वा सुपथा सुगान्यभूदु वस्वी दक्षिणा मघोनी ॥१॥

उत् । ऊँ इति । श्रिये । उषसः । रोचमानाः ।

अस्थुः । अपाम् । न । ऊर्मयः । रुशन्तः ।

कृणोति । विश्वा । सुऽपथा । सुऽगानि ।

अभूत । ऊँ इति । वस्वी । दक्षिणा । मघोनी ॥१॥

भद्रा ददृक्ष उर्विया वि भास्युत्ते शोचिर्भानवो द्यामपप्तन् ।

आविर्वक्षः कृणुषे शुम्भमानोषो देवि रोचमाना महोभिः ॥२॥

भद्रा । ददृक्षे । उर्विया । वि । भासि ।

उत् । ते । शोचिः । भानवः । द्याम् । अपप्तन् ।

आविः । वक्षः । कृणुषे । शुम्भमाना ।

उषः । देवि । रोचमाना । महःऽभिः ॥२॥

वहन्ति सीमरुणासो रुशन्तो गावः सुभगामुर्विया प्रथानाम् ।

अपेजते शूरो अस्तेव शत्रून्बाधते तमो अजिरो न वोळ्हा ॥३॥

वहन्ति । सीम् । अरुणासः । रुशन्तः ।

गावः । सुऽभगाम् । उर्विया । प्रथानाम् ।

अप । ईजते । शूरः । अस्ताऽइव । शत्रून् ।

बाधते । तमः । अजिरः । न । वोळ्हा ॥३॥

सुगोत ते सुपथा पर्वतेष्ववाते अपस्तरसि स्वभानो ।

सा न आ वह पृथुयामन्नृष्वे रयिं दिवो दुहितरिषयध्यै ॥४॥

सुऽगा । उत । ते । सुऽपथा । पर्वतेषु ।

अवाते । अपः । तरसि । स्वभानो इति स्वऽभानो ।

सा । नः । आ । वह । पृथुऽयामन् । ऋष्वे ।

रयिम् । दिवः । दुहितः । इषयध्यै ॥४॥

सा वह योक्षभिरवातोषो वरं वहसि जोषमनु ।

त्वं दिवो दुहितर्या ह देवी पूर्वहूतौ मंहना दर्शता भूः ॥५॥

सा । आ । वह । या । उक्षऽभिः । अवाता ।

उषः । वरम् । वहसि । जोषम् । अनु ।

त्वम् । दिवः । दुहितः । या । ह । देवी ।

पूर्वऽहूतौ । मंहना । दर्शता । भूः ॥५॥

उत्ते वयश्चिद्वसतेरपप्तन्नरश्च ये पितुभाजो व्युष्टौ ।

अमा सते वहसि भूरि वाममुषो देवि दाशुषे मर्त्याय ॥६॥

उत् । ते । वयः । चित् । वसतेः । अपप्तन् ।

नरः । च । ये । पितुऽभाजः । विऽउष्टौ ।

अमा । सते । वहसि । भूरि । वामम् ।

उषः । देवि । दाशुषे । मर्त्याय ॥६॥

## ॥ ३२ ॥

७·५०

१—४ वसिष्ठो मैत्रावरुणिः । १ मित्रावरुणौ, २ अग्निः, ३ विश्वेदेवाः, ४ नद्यः । १—३ जगती, ४ अतिजगती, शक्वरी वा ।

आ मां मित्रावरुणेह रक्षतं कुलाययद्विश्वयन्मा न आ गन् ।

अजकावं दुर्दृशीकं तिरो दधे मा मां पद्येन रपसा विदत्त्सरुः ॥१॥

आ । माम् । मित्रावरुणा । इह । रक्षतम् ।

कुलाययत् । विऽश्वयत् । मा । नः । आ । गन् ।

अजकाऽवम् । दुःऽदृशीकम् । तिरः । दधे ।

मा । माम् । पद्येन । रपसा । विदत् । त्सरुः ॥१॥

यद्विजामन्परुषि वन्दनं भुवदष्ठीवन्तौ परि कुल्फौ च देहत् ।

अग्निष्टच्छोचन्नप बाधतामितो मा मां पद्येन रपसा विदत्त्सरुः ॥२॥

यत् । विऽजामन् । परुषि । वन्दनम् । भुवत् ।

अष्ठीवन्तौ । परि । कुल्फौ । च । देहत् ।

अग्निः । तत् । शोचन् । अप । बाधताम् । इतः ।

मा । माम् । पद्येन । रपसा । विदत् । त्सरुः ॥२॥

यच्छल्मलौ भवति यन्नदीषु यदोषधीभ्यः परि जायते विषम् ।

विश्वे देवा निरितस्तत्सुवन्तु मा मां पद्येन रपसा विदत्त्सरुः ॥३॥

यत् । शल्मलौ । भवति । यत् । नदीषु ।

यत् । ओषधीभ्यः । परि । जायते । विषम् ।

विश्वे । देवाः । निः । इतः । तत् । सुवन्तु ।

मा । माम् । पद्येन । रपसा । विदत् । त्सरुः ॥३॥

याः प्रवतो निवत उद्वत उदन्वतीरनुदकाश्च याः ।

ता अस्मभ्यं पयसा पिन्वमानाः शिवा देवीरशिपदा भवन्तु

सर्वा नद्यो अशिमिदा भवन्तु ॥४॥

याः । प्रऽवतः । निऽवतः । उत्ऽवतः ।

उद्न्ऽवतीः । अनुद्काः । च । याः ।

ताः । अस्मभ्यम् । पयसा । पिन्वमानाः ।

शिवाः । देवीः । अशिपदाः । भवन्तु ।

सर्वाः । नद्यः । अशिमिदाः । भवन्तु ॥४॥

॥ ३३ ॥

७.८९

१—५ वसिष्ठो मैत्रावरुणिः । वरुणः । १—४ गायत्री ; ५ जगती ।

मो षु वरुण मृन्मयं गृहं राजन्नहं गमम् ।

मृळा सुक्षत्र मृळय ॥१॥

मो इति । सु । वरुण । मृत्ऽमयम् । गृहम् । राजन् । अहम् । गमम् ।

मृळ । सुऽक्षत्र । मृळय ॥१॥

यदेमि प्रस्फुरन्निव दृतिर्न ध्मातो अद्रिवः ।

मृळा सुक्षत्र मृळय ॥२॥

यत् । एमि । प्रस्फुरन्ऽइव । दृतिः । न । ध्मातः । अद्रिऽवः ।

मृळ । सुऽक्षत्र । मृळय ॥२॥

क्रत्वः समह दीनता प्रतीपं जगमा शुचे ।

मृळा सुक्षत्र मृळय ॥३॥

क्रत्वः । समह । दीनता । प्रतिऽईपम् । जगम । शुचे ।

मृळ । सुऽक्षत्र । मृळय ॥३॥

अपां मध्ये तस्थिवांसं तृष्णाविदज्जरितारम् ।

मृळा सुक्षत्र मृळय ॥४॥

अपाम् । मध्ये । तस्थिऽवांसम् । तृष्णा । अविदत् । जरितारम् ।

मृळ । सुऽक्षत्र । मृळय ॥४॥

यत्किञ्चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि ।

अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥५॥

यत् । किम् । च । इदम् । वरुण । दैव्ये । जने ।

अभिऽद्रोहम् । मनुष्याः । चरामसि ।

अचित्ती । यत् । तव । धर्म । युयोपिम ।

मा । नः । तस्मात् । एनसः । देव । रिरिषः ॥५॥

॥ ३४ ॥

८.५०

१—२० भर्गः प्रागाथः। अग्निः। प्रगाथः ( विषमा बृहती समा सतोबृहती )।

अग्न आ याह्यग्निभिर्होतारं त्वा वृणीमहे।

आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥१॥

अग्ने। आ। याहि। अग्निऽभिः।

होतारम्। त्वा। वृणीमहे।

आ। त्वाम्। अनक्तु। प्रऽयता। हविष्मती।

यजिष्ठम्। बर्हिः। आऽसदे ॥१॥

अच्छा हि त्वा सहसः सूनो अङ्गिरः स्रुचश्चरन्त्यध्वरे।

ऊर्जो नपातं घृतकेशमीमहेऽग्निं यज्ञेषु पूर्व्यम् ॥२॥

अच्छ। हि। त्वा। सहसः। सूनो इति। अङ्गिरः।

स्रुचः। चरन्ति। अध्वरे।

ऊर्जः। नपातम्। घृतऽकेशम्। ईमहे।

अग्निम्। यज्ञेषु। पूर्व्यम् ॥२॥

अग्ने कविर्वेधा असि होता पावक यक्ष्यः ।

मन्द्रो यजिष्ठो अध्वरेष्वीड्यो विप्रेभिः शुक्र मन्मभिः ॥३॥

अग्ने । कविः । वेधाः । असि ।

होता । पावक । यक्ष्यः ।

मन्द्रः । यजिष्ठः । अध्वरेषु । ईड्यः ।

विप्रेभिः । शुक्र । मन्मऽभिः ॥३॥

अद्रोघमा वहोशतो यविष्ठ्य देवाँ अजस्र वीतये ।

अभि प्रयांसि सुधिता वसो गहि मन्दस्व धीतिभिर्हितः ॥४॥

अद्रोघम् । आ । वह । उशतः । यविष्ठ्य ।

देवान् । अजस्र । वीतये ।

अभि । प्रयांसि । सुऽधिता । आ । वसो इति । गहि ।

मन्दस्व । धीतिऽभिः । हितः ॥४॥

त्वमित्सप्रथा अस्यग्ने त्रातर्ऋतस्कविः ।

त्वां विप्रासः समिधान दीदिव आ विवासन्ति वेधसः ॥५॥

त्वम् । इत् । सऽप्रथाः । असि ।

अग्ने । त्रातः । ऋतः । कविः ।

त्वाम् । विप्रासः । सम्ऽइधान । दीदिऽवः ।

आ । विवासन्ति । वेधसः ॥५॥

शोचा शोचिष्ठ दीदिहि विशे मयो रास्व स्तोत्रे महाँ असि ।

देवानां शर्मन्मम सन्तु सूरयः शत्रूषाहः स्वग्नयः ॥६॥

शोच । शोचिष्ठ । दीदिहि । विशे । मयः ।

रास्व । स्तोत्रे । महान् । असि ।

देवानाम् । शर्मन् । मम । सन्तु । सूरयः ।

शत्रुऽसाहः । सुऽअग्नयः ॥६॥

यथा चिद् वृद्धमतसमग्ने सञ्जूर्वसि क्षमि ।

एवादह मित्रमहो यो अस्मध्रुग्दुर्मन्मा कश्च वेनति ॥७॥

यथा । चित् । वृद्धम् । अतसम् ।

अग्ने । सम्ऽजूर्वसि । क्षमि ।

एव । दह । मित्रऽमहः । यः । अस्मऽध्रुक् ।
दुःऽमन्मा । कः । च । वेनति ॥७॥

मा नो मर्ताय रिपवे रक्षस्विने माघशंसाय रीरधः ।
अस्रेधद्भिस्तरणिभिर्यविष्ठ्य शिवेभिः पाहि पायुभिः ॥८॥

मा । नः । मर्ताय । रिपवे । रक्षस्विने ।
मा । अघऽशंसाय । रीरधः ।
अस्रेधत्ऽभिः । तरणिऽभिः । यविष्ठ्य ।
शिवेभिः । पाहि । पायुऽभिः ॥८॥

पाहि नो अग्न एकया पाह्युत द्वितीयया ।
पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो ॥९॥

पाहि । नः । अग्ने । एकया ।
पाहि । उत । द्वितीयया ।
पाहि । गीःऽभिः । तिसृऽभिः । ऊर्जाम् । पते ।
पाहि । चतसृऽभिः । वसो इति ॥९॥

पाहि विश्वस्माद्रक्षसो अराव्णः प्र स्म वाजेषु नोऽव ।

त्वामिद्धि नेदि ष्ठं देवतातय आपिं नक्षामहे वृधे ॥१०॥

पाहि । विश्वस्मात् । रक्षसः । अराव्णः ।

प्र । स्म । वाजेषु । नः । अव ।

त्वाम् । इत् । हि । नेदिष्ठम् । देवऽतातये ।

आपिम् । नक्षामहे । वृधे ॥१०॥

आ नो अग्ने वयोवृधं रयिं पावक शंस्यम् ।

रास्वा च न उपमाते पुरुस्पृहं सुनीती स्वयशस्तरम् ॥११॥

आ । नः । अग्ने । वयःऽवृधम् ।

रयिम् । पावक । शंस्यम् ।

रास्व । च । नः । उपऽमाते । पुरुऽस्पृहम् ।

सुऽनीती । स्वयशःऽतरम् ॥११॥

येन वंसाम पृतनासु शर्धतस्तरन्तो अर्य आदिशः ।

स त्वं नो वर्ध प्रयसा शचीवसो जिन्वा धियो वसुविदः ॥१२॥

येन । वंसाम । पृतनासु । शर्धतः ।

तरन्तः । अर्यः । आऽदिशः ।

सः । त्वम् । नः । वर्ध । प्रयसा । शचीवसो इति शचीऽवसो ।

जिन्व । धियः । वसुऽविदः ॥१२॥

शिशानो वृषभो यथाग्निः शृङ्गे दविध्वत् ।

तिग्मा अस्य हनवो न प्रतिधृषे सुजम्भः सहसो यहुः ॥१३॥

शिशानः । वृषभः । यथा ।

अग्निः । शृङ्गे इति । दविध्वत् ।

तिग्माः । अस्य । हनवः । न । प्रतिऽधृषे ।

सुऽजम्भः । सहसः । यहुः ॥१३॥

नहि ते अग्ने वृषभ प्रतिधृषे जम्भासो यद्वितिष्ठसे ।

स त्वं नो होतः सुहुतं हविष्कृधि वंस्वा नो वार्या पुरु ॥१४॥

नहि । ते । अग्ने । वृषभ । प्रतिऽधृषे ।

जम्भासः । यत् । विऽतिष्ठसे ।

सः । त्वम् । नः । होतरिति सुऽहुतम् । हविः । कृधि ।

वंस्व । नः । वार्या । पुरु ॥१४॥

शेषे वनेषु मात्रोः सं त्वा मर्तास इन्धते ।

अतन्द्रो हव्या वहसि हविष्कृत आदिद्देवेषु राजसि ॥१५॥

शेषे । वनेषु । मात्रोः ।

सम् । त्वा । मर्तासः । इन्धते ।

अतन्द्रः । हव्या । वहसि । हविःऽकृतः ।

आत् । इत् । देवेषु । राजसि ॥१५॥

सप्त होतारस्तमिदीळते त्वाग्ने सुत्यजमह्रयम् ।

भिनत्स्यद्रिं तपसा वि शोचिषा प्राग्ने तिष्ठ जनाँ अति ॥१६॥

सप्त । होतारः । तम् । इत् । ईळते । त्वा ।

अग्ने । सुऽत्यजम् । अह्रयम् ।

भिनत्सि । अद्रिम् । तपसा । वि । शोचिषा ।

प्र । अग्ने । तिष्ठ । जनान् । अति ॥१६॥

अग्निमग्निं वो अध्रिगुं हुवेम वृक्तबर्हिषः ।
अग्निं हितप्रयसः शश्वतीष्वा होतारं चर्षणीनाम् ॥१७॥

अग्निम्ऽअग्निम् । वः । अध्रिऽगुम् ।
हुवेम । वृक्तऽबर्हिषः ।
अग्निम् । हितऽप्रयसः । शश्वतीषु । आ ।
होतारम् । चर्षणीनाम् ॥१७॥

केतेन शर्मन्त्सचते सुषामण्यग्ने तुभ्यं चिकित्वना ।
इषण्यया नः पुरुरूपमा भर वाजं नेदिष्ठमूतये ॥१८॥

केतेन । शर्मन् । सचते । सुऽसामनि ।
अग्ने । तुभ्यम् । चिकित्वना ।
इषण्यया । नः । पुरुऽरूपम् । आ । भर ।
वाजम् । नेदिष्ठम् । ऊतये ॥१८॥

अग्ने जरितर्विश्पतिस्तेपानो देव रक्षसः ।
अप्रोषिवान्गृहपतिर्महाँ असि दिवस्पायुर्दुरोणयुः ॥१९॥

अग्ने । जरितः । विश्पतिः ।

तेपानः । देव । रक्षसः ।

अप्रोषिऽवान् । गृहऽपतिः । महान् । असि ।

दिवः । पायुः । दुरोणऽयुः ॥१९॥

मा नो रक्ष आ वेशीदाघृणीवसो मा यातुर्यातुमावताम् ।

परोगव्यूत्यनिरामप क्षुधमग्ने सेध रक्षस्विनः ॥२०॥

मा । नः । रक्षः । आ । वेशीत् । आघृणिवसो इत्याघृणिऽवसो ।

मा । यातुः । यातुऽमावताम् ।

परःऽगव्यूति । अनिराम् । अप । क्षुधम् ।

अग्ने । सेध । रक्षस्विनः ॥२१॥

॥ ३५ ॥

८.९१

१—७ अपाला आत्रेयी । इन्द्रः । १—२ पङ्क्तिः । ३—७ अनुष्टुप् ।

कन्या ३ वारवायती सोममपि स्रुताविदत्

अस्तं भरन्त्यब्रवीदिन्द्राय सुनवै त्वा शक्राय सुनवै त्वा ॥१॥

कन्या । वाः । अव॒ऽयती ।

सोम॑म् । अपि॑ । स्रु॒ता । अ॒वि॒द॒त् ।

अस्त॑म् । भर॑न्ती । अ॒ब्र॒वी॒त् ।

इन्द्रा॑य । सु॒न॒वै॒ । त्वा॒ । श॒क्राय॑ । सु॒न॒वै॒ । त्वा॒ ॥१॥

अ॒सौ य ए॑षि वी॒रको॑ गृ॒हंगृ॑हं वि॒चाक॑शत् ।

इ॒मं ज॑म्भसुतं पिब धा॒नाव॑न्तं क॑र॒म्भिण॑मपू॒पव॑न्तमु॒क्थिन॑म् ॥२॥

अ॒सौ । यः । एषि॑ । वी॒रकः॑ ।

गृ॒हम्ऽगृ॑हम् । वि॒ऽचाक॑शत् ।

इ॒दम् । ज॒म्भ॒ऽसु॒तम् । पि॒ब ।

धा॒ना॒ऽव॑न्तम् । क॒र॒म्भिण॑म् । अ॒पू॒प॒ऽव॑न्तम् । उ॒क्थिन॑म् ॥२॥

आ च॒न त्वा॑ चिकित्सा॒मोऽधि॑ च॒न त्वा॒ नेम॑सि ।

श॒नैरि॑व शन॒कैरि॑वेन्द्रा॒येन्दो॒ परि॑ स्रव ॥३॥

आ । च॒न । त्वा॒ । चि॒कि॒त्सा॒मः॒ ।

अधि॑ । च॒न । त्वा॒ । न । इ॒म॒सि॒ ।

शनैःऽइव । शनकैःऽइव ।

इन्द्राय । इन्दो इति । परि । स्रव ॥३॥

कुविच्छकत्कुवित्करत्कुविन्नो वस्यसस्करत् ।

कुवित्पतिद्विषो यतीरिन्द्रेण सङ्गमामहै ॥४॥

कुवित् । शकत् । कुवित् । करत् ।

कुवित् । नः । वस्यसः । करत् ।

कुवित् । पतिऽद्विषः । यतीः ।

इन्द्रेण । सम्ऽगमामहै ॥४॥

इमानि त्रीणि विष्टपा तानीन्द्र वि रोहय ।

शिरस्ततस्योर्वरामादिदं म उपोदरे ॥५॥

इमानि । त्रीणि । विष्टपा ।

तानि । इन्द्र । वि । रोहय ।

शिरः । ततस्य । उर्वराम् । आत् ।

इदम् । मे । उप । उदरे ॥५॥

असौ च या न उर्वरादिमां तन्वं१ मम ।
अथो ततस्य यच्छिरः सर्वा ता रोमशा कृधि ॥६॥

असौ । च । या । नः । उर्वरा ।
आत् । इमाम् । तन्वम् । मम ।
अथो इति । ततस्य । यत् । शिरः ।
सर्वा । ता । रोमशा । कृधि ॥६॥

खे रथस्य खेऽनसः खे युगस्य शतक्रतो ।
अपालामिन्द्र त्रिष्पूत्व्यकृणोः सूर्यत्वचम् ॥७॥

खे । रथस्य । खे । अनसः ।
खे । युगस्य । शतक्रतो इति शतऽक्रतो ।
अपालाम् । इन्द्र । त्रिः । पूत्वी ।
अकृणोः । सूर्यऽत्वचम् ॥७॥

॥ ३६ ॥

१०·७५

१—९ सिन्धुक्षित्प्रैयमेधः । नद्यः । जगती ।

प्र सु व आपो महिमानमुत्तमं कारुर्वोचाति सदने विवस्वतः ।

प्र सप्तसप्त त्रेधा हि चक्रमुः प्र सृत्वरीणामति सिन्धुरोजसा ॥१॥

प्र । सु । वः । आपः । महिमानम् । उत्ऽतमम् ।

कारुः । वोचाति । सदने । विवस्वतः ।

प्र । सप्तऽसप्त । त्रेधा । हि । चक्रमुः ।

प्र । सृत्वरीणाम् । अति । सिन्धुः । ओजसा ॥१॥

प्र तेऽरदद्वरुणो यातवे पथः सिन्धो यद्वाजाँ अभ्यद्रवस्त्वम् ।

भूम्या अधि प्रवता यासि सानुना यदेषामग्रं जगतामिरज्यसि ॥२॥

प्र । ते । अरदत् । वरुणः । यातवे । पथः ।

सिन्धो इति । यत् । वाजान् । अभि । अद्रवः । त्वम् ।

भूम्याः । अधि । प्रऽवता । यासि । सानुना ।

यत् । एषाम् । अग्रम् । जगताम् । इरज्यसि ॥२॥

दिवि स्वनो यतते भूम्योपर्यनन्तं शुष्ममुदियर्ति भानुना ।
अभ्रादिव प्र स्तनयन्ति वृष्टयः सिन्धुर्यदेति वृषभो न रोरुवत् ॥३॥

दिवि । स्वनः । यतते । भूम्या । उपरि ।
अनन्तम् । शुष्मम् । उत् । इयर्ति । भानुना ।
अभ्रात्ऽइव । प्र । स्तनयन्ति । वृष्टयः ।
सिन्धुः । यत् । एति । वृषभः । न । रोरुवत् ॥३॥

अभि त्वा सिन्धो शिशुमिन्न मातरो वाश्रा अर्षन्ति पयसेव धेनवः ।
राजेव युध्वा नयसि त्वमित्सिचौ यदासामग्रं प्रवतामिनक्षसि ॥४॥

अभि । त्वा । सिन्धो इति । शिशुम् । इत् । न । मातरः ।
वाश्राः । अर्षन्ति । पयसाऽइव । धेनवः ।
राजाऽइव । युध्वा । नयसि । त्वम् । इत् । सिचौ ।
यत् । आसाम् । अग्रम् । प्रऽवताम् । इनक्षसि ॥४॥

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥५॥

इमम् । मे । गङ्गे । यमुने । सरस्वति ।

शुतुद्रि । स्तोमम् । सचत । परुष्णि । आ ।

असिक्न्या । मरुत्ऽवृधे । वितस्तया ।

आर्जीकीये । शृणुहि । आ । सुऽसोमया ॥५॥

तृष्टामया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वेत्या त्या ।

त्वं सिन्धो कुभया गोमतीं क्रुमुं मेहत्न्वा सरथं याभिरीयसे ॥६॥

तृष्टऽअमया । प्रथमम् । यातवे । सऽजूः ।

सुऽसर्त्वा । रसया । श्वेत्या । त्या ।

त्वम् । सिन्धो इति । कुभया । गोऽमतीम् । क्रुमुम् ।

मेहत्न्वा । सऽरथम् । याभिः । ईयसे ॥६॥

ऋजीत्येनी रुशती महित्वा परि ज्रयांसि भरते रजांसि ।

अदब्धा सिन्धुरपसामपस्तमाश्वा न चित्रा वपुषीव दर्शता ॥७॥

ऋजीती । एनी । रुशती । महिऽत्वा ।

परि । ज्रयांसि । भरते । रजांसि ।

अदब्धा । सिन्धुः । अपसाम् । अपःऽतमा ।

अश्वा । न । चित्रा । वपुषीऽइव । दर्शता ॥७॥

स्वश्वा सिन्धुः सुरथा सुवासा हिरण्ययी सुकृता वाजिनीवती ।

ऊर्णावती युवतिः सीलमावत्युताधि वस्ते सुभगा मधुवृधम् ॥८॥

सुऽअश्वा । सिन्धुः । सुऽरथा । सुऽवासाः ।

हिरण्ययी । सुऽकृता । वाजिनीऽवती ।

ऊर्णाऽवती । युवतिः । सीलमाऽवती ।

उत । अधि । वस्ते । सुऽभगा । मधुऽवृधम् ॥८॥

सुखं रथं युयुजे सिन्धुरश्विनं तेन वाजं सनिषदस्मिन्नाजौ ।

महान्ह्यस्य महिमा पनस्यतेऽदब्धस्य स्वयशसो विरप्शिनः ॥९॥

सुऽखम् । रथम् । युयुजे । सिन्धुः । अश्विनम् ।

तेन । वाजम् । सनिषत् । अस्मिन् । आजौ ।

महान् । हि । अस्य । महिमा । पनस्यते ।

अदब्धस्य । स्वऽयशसः । विऽरप्शिनः ॥९॥

॥ ३७ ॥

१०.९५

१—१८। १,३,६, ८-१०,१२,१४,१७ पुरूरवा ऐल ऋषिः। उर्वशी देवता।
२,४,५,७,११,१३,१५-१६,१८ उर्वशी ऋषिका। पुरूरवा देवता। त्रिष्टुप्।

हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु।

न नौ मन्त्रा अनुदितास एते मयस्करन्परतरे चनाहन् ॥१॥

हये। जाये। मनसा। तिष्ठ। घोरे।

वचांसि। मिश्रा। कृणवावहै। नु।

न। नौ। मन्त्राः। अनुदितासः। एते।

मयः। करन्। परऽतरे। चन। अहन् ॥१॥

किमेता वाचा कृणवा तवाहं प्राक्रमिषमुषसामग्रियेव।

पुरूरवः पुनरस्तं परेहि दुरापना वातइवाहमस्मि ॥२॥

किम्। एता। वाचा। कृणव। तव। अहम्।

प्र। अक्रमिषम्। उषसाम्। अग्रियाऽइव।

पुरूरवः। पुनः। अस्तम्। परा। इहि।

दुःऽआपना। वातःऽइव। अहम्। अस्मि ॥२॥

इषुर्न श्रिय इषुधेरसना गोषाः शतसा न रंहिः ।
अवीरे क्रतौ वि दविद्युतन्नोरा न मायुं चितयन्त धुनयः ॥३॥

इषुः । न । श्रिये । इषुऽधेः । असना ।
गोऽसाः । शतऽसाः । न । रंहिः ।
अवीरे । क्रतौ । वि । दविद्युतत् । न ।
उरा । न । मायुम् । चितयन्त । धुनयः ॥३॥

सा वसु दधती श्वशुराय वय उषो यदि वष्ट्यन्तिगृहात् ।
अस्तं ननक्षे यस्मिञ्चाकन्दिवा नक्तं श्नथिता वैतसेन ॥४॥

सा । वसु । दधती । श्वशुराय । वयः ।
उषः । यदि । वष्टि । अन्तिऽगृहात् ।
अस्तम् । ननक्षे । यस्मिन् । चाकन् ।
दिवा । नक्तम् । श्नथिता । वैतसेन ॥४॥

त्रिः स्म माह्नः श्नथयो वैतसेनोत स्म मेऽव्यत्यै पृणासि ।
पुरूरवोऽनु ते केतमायं राजा मे वीर तन्व१स्तदासीः ॥५॥

त्रिः । स्म । मा । अह्नः । श्नथयः । वैतसेन ।

. उत । स्म । मे । अव्यत्यै । पृणासि ।

पुरूरवः । अनु । ते । केतम् । आयम् ।

राजा । मे । वीर । तन्वः । तत् । आसीः ॥५॥

या सुजूर्णिः श्रेणिः सुम्नआपिर्ह्रदेचक्षुर्न ग्रन्थिनी चरण्युः ।

ता अञ्जयोऽरुणयो न सस्रुः श्रिये गावो न धेनवोऽनवन्त ॥६॥

या । सुऽजूर्णिः । श्रेणिः । सुम्नेऽआपिः ।

ह्रदेऽचक्षुः । न । ग्रन्थिनी । चरण्युः ।

ताः । अञ्जयः । अरुणयः । न । सस्रुः ।

श्रिये । गावः । न । धेनवः । अनवन्त ॥६॥

समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्यः स्वगूर्ताः ।

महे यत्त्वा पुरूरवो रणायावर्धयन्दस्युहत्याय देवाः ॥७॥

सम् । अस्मिन् । जायमाने । आसत । ग्नाः ।

उत । ईम् । अवर्धन् । नद्यः । स्वऽगूर्ताः ।

महे । यत् । त्वा । पुरूरवः । रणाय ।

अवर्धयन् । दस्युऽहत्याय । देवाः ॥७॥

सचा यदासु जहतीष्वत्कममानुषीषु मानुषो निषेवे ।

अप स्म मत्तरसन्ती न भुज्युस्ता अत्रसन्रथस्पृशो नाश्वाः ॥८॥

सचा । यत् । आसु । जहतीषु । अत्कम् ।

अमानुषीषु । मानुषः । निऽसेवे ।

अप । स्म । मत् । तरसन्ती । न । भुज्युः ।

ताः । अत्रसन् । रथऽस्पृशः । न । अश्वाः ॥८॥

यदासु मर्तो अमृतासु निस्पृक् सं क्षोणीभिः क्रतुभिर्न पृङ्क्ते ।

ता आतयो न तन्वः शुम्भत स्वा अश्वासो न क्रीळयो दन्दशानाः ॥९॥

यत् । आसु । मर्तः । अमृतासु । निऽस्पृक् ।

सम् । क्षोणीभिः । क्रतुऽभिः । न । पृङ्क्ते ।

ताः । आतयः । न । तन्वः । शुम्भत । स्वाः ।

अश्वासः । न । क्रीळयः । दन्दशानाः ॥९॥

विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि ।
जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥१०॥

वि॒ऽद्युत् । न । या । पतन्ती । दविद्योत् ।
भरन्ती । मे । अप्या । काम्यानि ।
जनिष्टो इति । अपः । नर्यः । सुऽजातः ।
प्र । उर्वशी । तिरत । दीर्घम् । आयुः ॥१०॥

जज्ञिष इत्था गोपीथ्याय हि दधाथ तत्पुरूरवो म ओजः ।
अशासं त्वा विदुषी सस्मिन्नहन्न म आशृणोः किमभुग्वदासि ॥११॥

जज्ञिषे । इत्था । गोऽपीथ्याय । हि ।
दधाथ । तत् । पुरूरवः । मे । ओजः ।
अशासम् । त्वा । विदुषी । सस्मिन् । अहन् ।
न । मे । आ । अशृणोः । किम् । अभुक् । वदासि ॥११॥

कदा सूनुः पितरं जात इच्छाच्चक्रन्नाश्रु वर्तयद्विजानन् ।
को दम्पती समनसा वियूयोदध यदग्निः श्वशुरेषु दीदयत् ॥१२॥

कदा । सूनुः । पितरम् । जातः । इच्छात् ।

चक्रन् । न । अश्रु । वर्तयत् । विऽजानन् ।

कः । दम्पती इति दम्ऽपती । सऽमनसा । वि । यूयोत् ।

अध । यत् । अग्निः । श्वशुरेषु । दीदयत् ॥१२॥

प्रति ब्रवाणि वर्तयते अश्रु चक्रन्न क्रन्ददाध्ये शिवायै ।

प्रतत्ते हिनवा यत्ते अस्मे परेह्यस्तं नहि मूर मापः ॥१३॥

प्रति । ब्रवाणि । वर्तयते । अश्रु । चक्रन् ।

न । क्रन्दत् । आऽध्ये । शिवायै ।

प्र । तत् । ते । हिनव । यत् । ते । अस्मे इति ।

परा । इहि । अस्तम् । नहि । मूर । मा । आपः ॥१३॥

सुदेवो अद्य प्रपतेदनावृत्परावतं परमां गन्तवा उ ।

अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः ॥१४॥

सुऽदेवः । अद्य । प्रऽपतेत् । अनावृत् ।

पराऽवतम् । परमाम् । गन्तवै । ऊं इति ।

अध । शयीत । निःऽऋृतेः । उपऽस्थे ।

अध । एनम् । वृकाः । रभसासः । अद्युः ॥१४॥

पुरूरवो मा मृथा मा प्र पप्तो मा त्वा वृकासो अशिवास उ क्षन् ।

न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता ॥१५॥

पुरूरवः । मा । मृथाः । मा । प्र । पप्तः ।

मा । त्वा । वृकासः । अशिवासः । ऊं इति । क्षन् ।

न । वै । स्त्रैणानि । सख्यानि । सन्ति ।

सालावृकाणाम् । हृदयानि । एता ॥१५॥

यद्विरूपाचरं मर्त्येष्ववसं रात्रीः शरदश्चतस्रः ।

घृतस्य स्तोकं सकृदह्न आश्नां तादेवेदं तातृपाणा चरामि ॥१६॥

यत् । विऽरूपा । अचरम् । मर्त्येषु ।

अवसम् । रात्रीः । शरदः । चतस्रः ।

घृतस्य । स्तोकम् । सकृत् । अह्नः । आश्नाम् ।

तात् । एव । इदम् । ततृपाणा । चरामि ॥१६॥

अन्तरिक्षप्रां रजसो विमानीमुप शिक्षाम्युर्वशीं वसिष्ठः ।

उप त्वा रातिः सुकृतस्य तिष्ठान्नि वर्तस्व हृदयं तप्यते मे ॥१७॥

अन्तरिक्षऽप्राम् । रजसः । विऽमानीम् ।

उप । शिक्षामि । उर्वशीम् । वसिष्ठः ।

उप । त्वा । रातिः । सुऽकृतस्य । तिष्ठात् ।

नि । वर्तस्व । हृदयम् । तप्यते । मे ॥१७॥

इति त्वा देवा इम आहुरैळ यथेमेतद्भवसि मृत्युबन्धुः ।

प्रजा ते देवान्हविषा यजाति स्वर्ग उ त्वमपि मादयासे ॥१८॥

इति । त्वा । देवाः । इमे । आहुः । ऐळ ।

यथा । ईम् । एतत् । भवसि । मृत्युऽबन्धुः ।

प्रऽजा । ते । देवान् । हविषा । यजाति ।

स्वःऽगे । ऊँ इति । त्वम् । अपि । मादयासे ॥१८॥

॥ ३८ ॥

१०·१२८

१—८। कुशिकः सौभरः, रात्रिर्वा भारद्वाजी। रात्रिः। गायत्री।

रात्री व्यख्यदायती पुरुत्रा देव्य १ क्षभिः।

विश्वा अधि श्रियोऽधित ॥१॥

रात्री। वि। अख्यत्। आऽयती। पुरुऽत्रा। देवी। अक्षऽभिः।

विश्वाः। अधि। श्रियः। अधित ॥१॥

ओर्वप्रा अमर्त्या निवतो देव्यु १ द्वतः।

ज्योतिषा बाधते तमः ॥२॥

आ। उरु। अप्राः। अमर्त्याः। निऽवतः। देवी। उत्ऽवतः।

ज्योतिषा। बाधते। तमः ॥२॥

निरु स्वसारमस्कृतोषसं देव्यायती।

अपेदु हासते तमः ॥३॥

निः। ऊँ इति। स्वसारम्। अकृत। उषसम्। देवी। आऽयती।

अप। इत्। ऊँ इति। हासते। तमः ॥३॥

सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि ।

वृक्षे न वसतिं वयः ॥४॥

सा । नः । अद्य । यस्याः । वयम् । नि । ते । यामन् । अविक्ष्महि ।

वृक्षे । न । वसतिम् । वयः ॥४॥

नि ग्रामासो अविक्षत नि पद्वन्तो नि पक्षिणः ।

नि श्येनासश्चिदर्थिनः ॥५॥

नि । ग्रामासः । अविक्षत । नि । पत्ऽवन्तः । नि । पक्षिणः ।

नि । श्येनासः । चित् । अर्थिनः ॥५॥

यावया वृक्यं १ वृकं यवय स्तेनमूर्म्ये ।

अथा नः सुतरा भव ॥६॥

यवय । वृक्यम् । वृकम् । यवय । स्तेनम् । ऊर्म्ये ।

अथ । नः । सुऽतरा । भव ॥६॥

उप मा पेपिशत्तमः कृष्णं व्यक्तमस्थित ।

उप ऋणेव यातय ॥७॥

उप । मा । पेपिशत् । तमः । कृष्णम् । विऽअक्तम् । अस्थित ।

उषः । ऋणाऽइव । यातय ॥७॥

उप ते गाइवाकरं वृणीष्व दुहितर्दिवः ।

रात्रि स्तोमं न जिग्युषे ॥८॥

उप । ते । गाःऽइव । आ । अकरम् । वृणीष्व । दुहितः । दिवः ।

रात्रि । स्तोमम् । न जिग्युषे ॥८॥

॥ २९ ॥

१०·१२९

१—७। प्रजापतिः परमेष्ठी । भाववृत्तम् । त्रिष्टुप् ।

नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत् ।

किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् ॥१॥

न । असत् । आसीत् । नोइति । सत् । आसीत् । तदानीम् ।

न । आसीत् । रजः । नो इति । विऽओम । परः । यत् ।

किम् । आ । अवरीवरिति । कुह । कस्य । शर्मन् ।

अम्भः । किम् । आसीत् । गहनम् । गभीरम् ॥१॥

न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः ।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास ॥२॥

न । मृत्युः । आसीत् । अमृतम् । न । तर्हि ।
न । रात्र्याः । अह्नः । आसीत् । प्रऽकेतः ।
आनीत् । अवातम् । स्वधया । तत् । एकम् ।
तस्मात् । ह । अन्यत् । न । परः । किम् । चन । आस ॥२॥

तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम् ।
तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिना जायतैकम् ॥३॥

तमः । आसीत् । तमसा । गूळ्हम् । अग्रे ।
अप्रऽकेतम् । सलिलम् । सर्वम् । आः । इदम् ।
तुच्छ्येन । आभु । अपिऽहितम् । यत् । आसीत् ।
तपसः । तत् । महिना । अजायत । एकम् ॥३॥

कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् ।
सतो बन्धुमसति निरविन्दन्हृदि प्रतीष्या कवयो मनीषा ॥४॥

कामः । तत् । अग्रे । सम् । अवर्तत । अधि ।

मनसः । रेतः । प्रथमम् । यत् । आसीत् ।

सतः । बन्धुम् । असति । निः । अविन्दन् ।

हृदि । प्रतिऽइष्य । कवयः । मनीषा ॥४॥

तिरश्चीनो विततो रश्मिरेषामधः स्विदासी३दुपरि स्विदासी३त् ।

रेतोधा आसन्महिमान आसन्त्स्वधा अवस्तात्प्रयतिः परस्तात् ॥५॥

तिरश्चीनः । विऽततः । रश्मिः । एषाम् ।

अधः । स्वित् । आसी३त् । उपरि । स्वित् । आसी३त् ।

रेतःऽधाः । आसन् । महिमानः । आसन् ।

स्वधा । अवस्तात् । प्रऽयतिः । परस्तात् ॥५॥

को अद्धा वेद क इह प्र वोचत्कुत आजाता कुत इयं विसृष्टिः ।

अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव ॥६॥

कः । अद्धा । वेद । कः । इह । प्र । वोचत् ।

कुतः । आऽजाता । कुतः । इयम् । विऽसृष्टिः ।

अर्वाक् । देवाः । अस्य । विऽसर्जनेन ।

अथ । कः । वेद । यतः । आऽबभूव ॥६॥

इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न ।

यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद ॥७॥

इयम् । विऽसृष्टिः । यतः । आऽबभूव ।

यदि । वा । दधे । यदि । वा । न ।

यः । अस्य । अधिऽअक्षः । परमे । विऽओमन् ।

सः । अङ्ग । वेद । यदि । वा । न । वेद ॥७॥

## ॥ ४० ॥

### १०·१४५

१-६ इन्द्राणी । सपत्नीनाशनम्, ( उपनिषद् ) । १-५ अनुष्टुप्, ६ पङ्क्तिः ।

इमां खनाम्योषधिं वीरुधं बलवत्तमाम् ।

यया सपत्नीं बाधते यया संविन्दते पतिम् ॥१॥

इमाम् । खनामि । ओषधिम् ।

वीरुधम् । बलवत्ऽतमाम् ।

यया । स॒ऽपत्नी॑म् । बाध॑ते ।

यया । स॒म्ऽवि॒न्द॑ते । पति॑म् ॥१॥

उ॒त्ता॒नप॑र्णे सु॒भगे॒ देव॑जूते॒ सह॑स्वति ।

स॒पत्नीं॑ मे॒ परा॑ धम॒ पतिं॑ मे॒ केव॑लं कुरु ॥२॥

उ॒त्ता॒नऽप॑र्णे । सु॒ऽभगे॑ ।

देव॑ऽजूते । सह॑स्वति ।

स॒ऽपत्नी॑म् । मे॒ । परा॑ । ध॒म॒ ।

पति॑म् । मे॒ । केव॑लम् । कु॒रु॒ ॥२॥

उत्त॑रा॒हमु॑त्तर॒ उत्त॒रेदुत्त॑राभ्यः ।

अथा॑ स॒पत्नी॒ या ममाध॑रा॒ साध॑राभ्यः ॥३॥

उत्ऽत॑रा । अ॒हम् । उ॒त्ऽत॒रे॒ ।

उत्ऽत॑रा । इत् । उत्ऽत॑राभ्यः ।

अथ॑ । स॒ऽपत्नी॑ । या । मम॑ ।

अध॑रा । सा । अध॑राभ्यः ॥३॥

नह्यस्या नाम गृभ्णामि नो अस्मिन्रमते जने ।

परामेव परावतं सपत्नीं गमयामसि ॥४॥

नहि । अस्याः । नाम । गृभ्णामि ।

नो इति । अस्मिन् । रमते । जने ।

पराम् । एव । पराऽवतम् ।

सऽपत्नीम् । गमयामसि ॥४॥

अहमस्मि सहमानाथ त्वमसि सासहिः ।

उभे सहस्वती भूत्वी सपत्नीं मे सहावहै ॥५॥

अहम् । अस्मि । सहमाना ।

अथ । त्वम् । असि । ससहिः ।

उभे इति । सहस्वती इति । भूत्वी ।

सऽपत्नीम् । मे । सहावहै ॥५॥

उप तेऽधां सहमानामभि त्वाधां सहीयसा ।

मामनु प्र ते मनो वत्सं गौरिव धावतु पथा वारिव धावतु ॥६॥

उप । ते । अधाम् । सहमानाम् ।

अभि । त्वा । अधाम् । सहीयसा ।

माम् । अनु । प्र । ते । मनः ।

वत्सम् । गौःऽइव । धावतु । पथा । वाःऽइव । धावतु ॥६॥

॥ ४१ ॥

१०·१४६

१—६ देवमुनिरैरम्मदः । अरण्यानी । अनुष्टुप् ।

अरण्यान्यरण्यान्यसौ या प्रेव नश्यसि ।

कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दतीँ३ ॥१॥

अरण्यानि । अरण्यानि ।

असौ । या । प्रऽइव । नश्यसि ।

कथा । ग्रामम् । न । पृच्छसि ।

न । त्वा । भीःऽइव । विन्दति३ ॥१॥

वृषारवाय वदते यदुपावति चिच्चिकः ।

आघाटिभिरिव धावयन्नरण्यानिर्महीयते ॥२॥

१४१तमे पत्रे दशमपङ्क्तितः परस्तादयं ग्रन्थो विज्ञेयः

गामङ्गैष आ ह्वयति

दार्वङ्गैषो अपावधीत् ॥

वसन्नरण्यान्यां सायम्

अक्रुक्षदिति मन्यते ।।४।

गाम् । अङ्ग । एषः । आ । ह्वयति । दारु । अङ्ग । एषः । अप । अवधीत् ।

वसन् । अरण्यान्याम् । सायम् ।

अक्रुक्षत् । इति । मन्यते ।।४।।

वृषऽरवाय । वदते ।

यत् । उपऽअवति । चिच्चिकः ।

आघाटिभिःऽइव । धावयन् ।

अरण्यानिः । महीयते ॥३॥

उत गावइवादन्त्युत वेश्मेव दृश्यते ।

उतो अरण्यानिः सायं शकटीरिव सर्जति ॥४॥

उत । गावःऽइव । अदन्ति ।

उत । वेश्मऽइव । दृश्यते ।

उतोइति । अरण्यानिः । सायम् ।

शकटीःऽइव । सर्जति । ४॥

न वा अरण्यानिर्हन्त्यन्यश्चेन्नाभिगच्छति ।

स्वादोः फलस्य जग्ध्वाय यथाकामं नि पद्यते ॥५॥

न । वै । अरण्यानिः । हन्ति ।

अन्यः । चेत् । न । अभिऽगच्छति ।

स्वादोः । फलस्य । जग्ध्वाय ।
यथाऽकामम् । नि । पद्यते ॥५॥

आञ्जनगन्धिं सुरभिं बह्वन्नामकृषीवलाम् ।
प्राहं मृगाणां मातरमरण्यानिमशंसिषम् ॥६॥

आञ्जनऽगन्धिम् । सुरभिम् ।
बहुऽअन्नाम् । अकृषिऽवलाम् ।
प्र । अहम् । मृगाणाम् । मातरम् ।
अरण्यानिम् । अशंसिषम् ॥६॥

॥ ४२ ॥

१०·१५१

१-५ श्रद्धा कामायनी । श्रद्धा । अनुष्टुप् ।

श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः ।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ॥१॥

श्रद्धया । अग्निः । सम् । इध्यते ।
श्रद्धया । हूयते । हविः ।

श्रद्धाम् । भगस्य । मूर्द्धनि ।

वचसा । आ । वेदयामसि ॥१॥

प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः ।

प्रियं भोजेषु यज्वस्विदं म उदितं कृधि ॥२॥

प्रियम् । श्रद्धे । ददतः ।

प्रियम् । श्रद्धे । दिदासतः ।

प्रियम् । भोजेषु । यज्वऽसु ।

इदम् । मे । उदितम् । कृधि ॥२॥

यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे ।

एवं भोजेषु यज्वस्वस्माकमुदितं कृधि ॥३॥

यथा । देवाः । असुरेषु ।

श्रद्धाम् । उग्रेषु । चक्रिरे ।

एवम् । भोजेषु । यज्वऽसु ।

अस्माकम् । उदितम् । कृधि ॥३॥

श्रद्धां देवा यजमाना वायुगोपा उपासते।

श्रद्धां हृदय्य१ याकूत्या श्रद्धया विन्दते वसु ॥४॥

श्रद्धाम्। देवाः। यजमानाः।

वायुऽगोपाः। उप। आसते।

श्रद्धाम्। हृदय्यया। आऽकूत्या।

श्रद्धया। विन्दते। वसु ॥४॥

श्रद्धां प्रातर्हवामहे श्रद्धां मध्यन्दिनं परि।

श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः ॥५॥

श्रद्धाम्। प्रातः। हवामहे।

श्रद्धाम्। मध्यन्दिनम्। परि।

श्रद्धाम्। सूर्यस्य। निऽम्रुचि।

श्रद्धे। श्रत्। धापय। इह। नः ॥५॥

॥ ४३ ॥

१०.१७०

१—४ विभ्राट् सौर्यः । सूर्यः । १-३ जगती, ४ आस्तारपङ्क्तिः ।

विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविहुतम् ।
वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा वि राजति ॥१॥

विऽभ्राट् । बृहत् । पिबतु । सोम्यम् । मधु ।
आयुः । दधत् । यज्ञऽपतौ । अविहुतम ।
वातऽजूतः । यः । अभिऽरक्षति । त्मना ।
प्रऽजाः । पुपोष । पुरुऽधा । वि । राजति ॥१॥

विभ्राड् बृहत्सुभृतं वाजसातमं धर्मन्दिवो धरुणे सत्यमर्पितम् ।
अमित्रहा वृत्रहा दस्युहन्तमं ज्योतिर्जज्ञे असुरहा सपत्नहा ॥२॥

विऽभ्राट् । बृहत् । सुऽभृतम् । वाजऽसातमम् ।
धर्मन् । दिवः । धरुणे । सत्यम् । अर्पितम् ।
अमित्रऽहा । वृत्रऽहा । दस्युहन्ऽतमम् ।
ज्योतिः । जज्ञे । असुरऽहा । सपत्नऽहा ॥२॥

इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत् ।

विश्वभ्राड् भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतम् ॥३॥

इदम् । श्रेष्ठम् । ज्योतिषाम् । ज्योतिः । उत्ऽतमम् ।

विश्वऽजित् । धनऽजित् । उच्यते । बृहत् ।

विश्वऽभ्राट् । भ्राजः । महि । सूर्यः । दृशे ।

उरु । पप्रथे । सहः । ओजः । अच्युतम् ॥३॥

विभ्राजञ्ज्योतिषा स्व१रगच्छो रोचनं दिवः ।

येनेमा विश्वा भुवनान्याभृता विश्वकर्मणा विश्वदेव्यावता ॥४॥

विऽभ्राजन् । ज्योतिषा । स्वः ।

अगच्छः । रोचनम् । दिवः ।

येन । इमा । विश्वा । भुवनानि । आऽभृता ।

विश्वऽकर्मणा । विश्वदेव्यऽवता ॥४॥

|| ४४ ||

१०·१९१

१—४ संवनन आङ्गिरसः । १ अग्निः, २—४ संज्ञानम् । १, २, ४ अनुष्टुप्, ३ त्रिष्टुप् ।

संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ ।
इळस्पदे समिध्यसे स नो वसून्या भर ॥१॥

सम्ऽसम् । इत् । युवसे । वृषन् ।
अग्ने । विश्वानि । अर्यः । आ ।
इळः । पदे । सम् । इध्यसे ।
सः । नः । वसूनि । आ । भर ॥१॥

सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते ॥२॥

सम् । गच्छध्वम् । सम् । वदध्वम् ।
सम् । वः । मनांसि । जानताम् ।
देवाः । भागम् । यथा । पूर्वे ।
सम्ऽजानानाः । उपऽआसते ॥२॥

समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् ।

समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि ॥३॥

समानः । मन्त्रः । सम्ऽइतिः । समानी ।

समानम् । मनः । सह । चित्तम् । एषाम् ।

समानम् । मन्त्रम् । अभि । मन्त्रये । वः ।

समानेन । वः । हविषा । जुहोमि ॥३॥

समानी व आकूतिः समाना हृदयानि वः ।

समानमस्तु वो मनो यथा वः सुसहासति ॥४॥

समानी । वः । आऽकूतिः ।

समाना । हृदयानि । वः ।

समानम् । अस्तु । वः । मनः ।

यथा । वः । सुऽसह । असति ॥४॥

---

## २ । वाजसनेयिसंहिता

॥ १ ॥

३.६-८

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः ।

पितरं च प्रयन्त्स्वः ॥६॥

अन्तश्चरति रोचनास्य प्राणादपानती ।

व्यख्यन्महिषो दिवम् ॥७॥

त्रिंशद्धाम वि राजति वाक् पतङ्गाय धीयते ।

प्रति वस्तोरह द्युभिः ॥८॥

॥ २ ॥

५.२३

रक्षोहणं वलगहनं वैष्णवीमिदमहं तं वलगमुत्किरामि

यं मे निष्ट्यो यममात्यो नि चखानेदमहं तं वलगमुत्किरामि

यं मे समानो यमसमानो निचखानेदमहं तं वलगमुत्किरामि

यं मे सबन्धुर्यमसबन्धुर्निचखानेदमहं तं वलगमुत्किरामि

यं मे सजातो यमसजातो निचखानोत्कृत्यां किरामि ॥२३॥

॥ ३ ॥

१०.४

सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्म दत्त मान्दा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त वाशा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्रममुष्म दत्त शविष्ठा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शविष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त शक्करी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्करी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त जनभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापः स्वराज स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त। मधुमतीर्मधुमतीभिः पृच्यन्तां महि क्षत्रं क्षत्रियाय वन्वाना अनाधृष्टाः सीदत सहौजसो महि क्षत्रं क्षत्रियाय दधतीः ॥४॥

॥ ४ ॥

१०.२४

हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्।

नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥२४॥

॥ ५ ॥

११·६१

अदितिष्ट्वा देवी विश्वदेव्यावती पृथिव्याः सधस्थे अङ्गिरस्वत्खनत्ववट देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वद्दधतूखे धिषणास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वदभीन्धतामुखे वरूत्रीष्ट्वा देवी विश्वदेव्यावतीः पृथिव्याः सधस्थ अङ्गिरस्वच्छ्रपयन्तूखे ग्नास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वत्पचन्तूखे जनयस्त्वाच्छिन्नपत्रा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वत्पचन्तूखे ॥६१॥

॥ ६ ॥

१६·१-१६

नमस्ते रुद्र मन्यव उतो त इषवे नमः ।
बाहुभ्यामुत ते नमः ॥१॥

या ते रुद्र शिवा तनूरघोरापापकाशिनी ।
तया नस्तन्वा शन्तमया गिरिशन्ताभि चाकशीहि ॥२॥

यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।
शिवां गिरित्र तां कुरु मा हिꣳसीः पुरुषं जगत् ॥३॥

शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।

यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत् ॥४॥

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।

अहीꣳश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्योऽधराचीः परा सुव ॥५॥

असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः ।

ये चैनꣳ रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषाꣳ हेड ईमहे ॥६॥

असौ योऽवसर्पति नीलग्रीवो विलोहितः ।

उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्यः स दृष्टो मृडयाति नः ॥७॥

नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।

अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः ॥८॥

प्र मुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ।

याश्च ते हस्त इषवः परा ता भगवो वप ॥९॥

विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ २॥ उत ।

अनेशन्नस्य या इषव आभुरस्य निषङ्गधिः ॥१०॥

या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ।

तयास्मान्विश्वतस्त्वमयक्ष्मया परि भुज ॥११॥

परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः ।

अथो य इषुधिस्तवारे अस्मन्नि धेहि तम् ॥१२॥

अवतत्य धनुष्ट्वꣳ सहस्राक्ष शतेषुधे ।

निशीर्य शल्यानां मुखा शिवो नः सुमना भव ॥१३॥

नमस्त आयुधायानातताय धृष्णवे ।

उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥१४॥

मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् ।

मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः ॥१५॥

मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ।

मा नो वीरान् रुद्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥१६॥

॥ ७ ॥

१७·८०-८६

शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च ।

शुक्रश्च ऋतपाश्चात्यꣳहाः ॥८०॥

ईदृङ् चान्यादृङ् च सदृङ् च प्रतिसदृङ् ।

मितश्च संमितश्च सभराः ॥८१॥

ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च ।

धर्ता च विधर्ता च विधारयः ॥८२॥

ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च ।

अन्तिमित्रश्च दूरेअमित्रश्च गणः ॥८३॥

ईदृक्षास एतादृक्षास ऊ षु णः सदृक्षासः प्रतिसदृक्षास एतन ।

मितासश्च सम्मितासो नो अद्य सभरसो मरुतो यज्ञे अस्मिन् ॥८४॥

स्वतवाँश्च प्रघासी च सान्तपनश्च गृहमेधी च ।

क्रीडी च शाकी चोज्जेषी ॥८५॥

उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च ।

सासह्वाँश्चाभियुग्वा च विक्षिपः स्वाहा ॥८६॥

॥ ८ ॥

१९.१३-१९

दीक्षायै रूपꣳ शष्पाणि प्रायणीयस्य तोक्मानि ।

क्रयस्य रूपꣳ सोमस्य लाजाः सोमाꣳशवो मधु ॥१३॥

आतिथ्यरूपं मासरं महावीरस्य नग्नहुः ।

रूपमुपसदामेतत्तिस्रो रात्रीः सुरासुता ॥१४॥

सोमस्य रूपं क्रीतस्य परिस्रुत्परिषिच्यते ।

अश्विभ्यां दुग्धं भेषजमिन्द्रायैन्द्रꣳ सरस्वत्या ॥१५॥

आसन्दी रूपꣳ राजासन्द्यै वेद्यै कुम्भी सुराधानी ।

अन्तर उत्तरवेद्या रूपं कारोतरो भिषक् ॥१६॥

वेद्या वेदिः समाप्यते बर्हिषा बर्हिरिन्द्रियम् ।

यूपेन यूप आप्यते प्रणीतो अग्निरग्निना ॥१७॥

हविर्धानं यदश्विनाग्नीध्रं यत्सरस्वती ।

इन्द्रायैन्द्रꣳ सदस्कृतं पत्नीशालं गार्हपत्यः ॥१८॥

प्रैषेभिः प्रैषानाप्नोत्याप्रीभिराप्रीर्यज्ञस्य ।

प्रयाजेभिरनुयाजान्वषट्कारेभिराहुतीः ॥१९॥

॥ ९ ॥

२२.२२

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामेनिकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥२२॥

॥ १० ॥

२३.४५-४८

कः स्विदेकाकी चरति क उ स्विज्जायते पुनः ।
किꣳ स्विद्धिमस्य भेषजं किं वावपनं महत् ॥४५॥

सूर्य एकाकी चरति चन्द्रमा जायते पुनः ।
अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥४६॥

किꣳ स्वित्सूर्यसमं ज्योतिः किꣳ समुद्रसमꣳ सरः ।
किꣳ स्वित्पृथिव्यै वर्षीयः कस्य मात्रा न विद्यते ॥४७॥

ब्रह्म सूर्यसमं ज्योतिर्द्यौः समुद्रसमꣳ सरः ।
इन्द्रः पृथिव्यै वर्षीयान्गोस्तु मात्रा न विद्यते ॥४८॥

॥ ११ ॥

२४·१-६

अश्वस्तूपरो गोमृगस्ते प्राजापत्याः कृष्णग्रीव आग्नेयो रराटे पुरस्तात्सारस्वती मेष्यधस्ताद्धन्वोराश्विनावधोरामौ बाह्वोः सौमापौष्णꣳ श्यामो नाभ्याꣳ सौर्ययामौ श्वेतश्च कृष्णश्च पार्श्वयोस्त्वाष्ट्रौ लोमशसक्थौ सक्थ्योर्वायव्यः श्वेतः पुच्छ इन्द्राय स्वपस्याय वेहद्वैष्णवो वामनः ॥१॥

रोहितो धूम्ररोहितः कर्कन्धुरोहितस्ते सौम्या बभ्रुररुणबभ्रुः शुकबभ्रुस्ते वारुणाः शितिरन्ध्रोऽन्यतःशितिरन्ध्रः समन्तशितिरन्ध्रस्ते सावित्राः शितिबाहुरन्यतः शितिबाहुः समन्तशितिबाहुस्ते बार्हस्पत्याः पृषती क्षुद्रपृषती स्थूलपृषती ता मैत्रावरुण्यः ॥२॥

शुद्धवालः सर्वशुद्धवालो मणिवालस्त आश्विनाः श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णा यामा अवलिप्ता रौद्रा नभोरूपाः पार्जन्याः ॥३॥

पृश्निस्तिरश्चीनपृश्निरूर्ध्वपृश्निस्ते मारुताः फल्गूर्लोहितोर्णी पलक्षी ताः सारस्वत्यः प्लीहाकर्णः शुण्ठाकर्णोऽध्यालोहकर्णस्ते त्वाष्ट्राः कृष्णग्रीवः शितिकक्षोऽञ्जिसक्थस्त ऐन्द्राग्नाः कृष्णाञ्जिरल्पाञ्जिर्महाञ्जिस्त उषस्याः ॥४॥

शिल्पा वैश्वदेव्यो रोहिण्यस्त्र्यवयो वाचेऽविज्ञाता अदित्यै सरूपा धात्रे वत्सतर्यो देवानां पत्नीभ्यः ॥५॥

कृष्णग्रीवा आग्नेयाः शितिभ्रवो वसूनाᳯं रोहिता रुद्राणाᳯं श्वेता अवरोकिण आदित्यानां नभोरूपाः पार्जन्याः ॥६॥

॥ १२ ॥

२९.३८-४४

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे ।
अनाविद्धया तन्वा जय त्वᳯं स त्वा वर्मणो महिमा पिपर्तु ॥३८॥

धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम ।
धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥३९॥

वक्ष्यन्तीवेदागनीगन्ति कर्णं प्रियᳯं सखायं परिषस्वजाना ।
योषेव शिङ्क्ते वितताधि धन्वञ्ज्या इयं समने पारयन्ती ॥४०॥

ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे ।
अप शत्रून्विध्यताᳯं संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ॥४१॥

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य ।

इषुधिः संकाः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥४२॥

रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः ।

अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः ॥४३॥

तीव्रान्घोषान्कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः ।

अवक्रामन्तः प्रपदैरमित्रान् क्षिणन्ति शत्रूं १ ॥ रनपव्ययन्तः ॥४४॥

॥१३॥

३१·१७-२२

अद्भ्यः संभृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्त्तताग्रे ।

तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥१७॥

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।

तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥१८॥

प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते ।

तस्य योनिं परि पश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा ॥१९॥

यो देवेभ्य आतपति यो देवानां पुरोहितः ।

पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥२०॥

रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् ।

यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥२१॥

श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।

इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण ॥२२॥

॥१४॥

३४-१-६

यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ।

दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ॥१॥

येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।

यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥२॥

यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ।

यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥३॥

येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् ।

येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ॥४॥

यस्मिन्नृचः साम यजूँषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ।

यस्मिँश्चित्तँ सर्वमोतं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥५॥

सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव ।

हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु ॥६॥

## ३ । तैत्तिरीयसंहिता

॥ १ ॥

१.४.९.१

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदँ सुवर्विदं प्रतीचीनं वृजनं दोहसे गिराऽऽशुं जयन्तमनु यासु वर्धसे । उपयामगृहीतोऽसि मर्काय त्वैष ते योनिः प्रजाः पाहि ॥१॥

॥ २ ॥

१.५.९.१-७

अग्निहोत्रं जुहोति यदेव किञ्च यजमानस्य स्वं तस्यैव तद्रेतः सिञ्चति

प्रजनने प्रजननꣳ हि वा अग्निरथौषधीरन्तगता दहति तास्ततो भूयसीः प्रजायन्ते यत्सायं जुहोति रेत एव तत्सिञ्चति प्रैव प्रातस्तनेन जनयति तद्रेतः सिक्तं न त्वष्ट्राऽविकृतं प्रजायते यावच्छो वै रेतसः सिक्तस्य ॥१॥ त्वष्टा रूपाणि विकरोति तावच्छो वैतत्प्रजायत एष वै दैव्यस्त्वष्टा यो यजते बह्वीभिरुपतिष्ठते रेतस एव सिक्तस्य बहुशो रूपाणि विकरोति स प्रैव जायते श्वःश्वो भूयान्भवति य एवं विद्वानग्निमुपतिष्ठतेऽहर्देवानामासीद्रात्रिरसुराणां तेऽसुरा यद्देवानां वित्तं वेद्यमासीत्तेन सह ॥२॥ रात्रिं प्राविशन्ते देवा हीना अमन्यन्त तेऽपश्य-न्नाग्नेयी रात्रिराग्नेयाः पशव इममेवाग्निꣳ स्तवाम स नः स्तुतः पशून्पुन-र्दास्यतीति तेऽग्निमस्तुवन्त्स एभ्यः स्तुतो रात्रिया अध्यहरभि पशून्निरार्जत्ते देवाः पशून्वित्त्वा कामाꣴ अकुर्वत य एवं विद्वानग्निमुपतिष्ठते पशुमान्भवति ॥३॥ आदित्यो वा अस्माल्लोकादमुं लोकमैत्सोऽमुं लोकं गत्वा पुनरिमं लोक-मभ्यध्यायत्स इमं लोकमागत्य मृत्योरबिभेन्मृत्युसंयुत इव ह्ययं लोकः सोऽमन्यते-ममेवाग्निꣳ स्तवानि स मा स्तुतः सुवर्गं लोकं गमयिष्यतीति सोऽग्निमस्तौत्स एनꣴ स्तुतः सुवर्गं लोकमगमयद्यः ॥४॥ एवं विद्वानग्निमुपतिष्ठते सुवर्गमेव लोकमेति सर्वमायुरेत्यभि वा एषोऽग्नी आरोहति य एनावुपतिष्ठते यथा खलु

वै श्रेयानभ्यारूढः कामयते तथा करोति नक्तमुपतिष्ठते न प्रातः सꣳ हि नक्तं
व्रतानि सृज्यन्ते सह श्रेयाꣳश्च पापीयाꣳश्चासाते ज्योतिर्वा अग्निस्तमो
रात्रिर्यत् ॥५॥ नक्तमुपतिष्ठते ज्योतिषैव तमस्तरत्युपस्थेयो३ऽग्नी३र्नोपस्थेया३
इत्याहुर्मनुष्यायेन्न्वै योऽहरहराहृत्याथैनं याचति स इन्न्वै तमुपार्च्छत्यथ को
देवानहरहर्याचिष्यतीति तस्मान्नोपस्थेयोऽथो खल्वाहुराशिषे वै कं यजमानो यजत
इत्येषा खलु वै ॥६॥ आहिताग्नेराशीर्यदग्निमुपतिष्ठते तस्मादुपस्थेयः
प्रजापतिः पशूनसृजत ते सृष्टा अहोरात्रे प्राविशन्ताञ्छन्दोभिरन्वविन्दद्यच्छन्दोभि-
रुपतिष्ठते स्वमेव तदन्विच्छति न तत्र जाम्यस्तीत्याहुर्योऽहरह-
रुपतिष्ठत इति यो वा अग्निं प्रत्यङ्ङुपतिष्ठते प्रत्येनमोषति यः पराङ् विष्वङ्
प्रजया पशुभिरेति कवातिर्यङ्ङिवोपतिष्ठेत नैनं प्रत्योषति न विष्वङ् प्रजया
पशुभिरेति ॥७॥

॥ २ ॥

१·६·८·१-४

यो वै श्रद्धामनारभ्य यज्ञेन यजते नास्येष्टाय श्रद्दधतेऽपः प्रणयति श्रद्धा
वा आपः श्रद्धामेवाऽऽरभ्य यज्ञेन यजत उभयेऽस्य देवमनुष्या इष्टाय श्रद्दधते

तदाहुरति वा एता वर्त्रं नेदन्त्यति वाचं मनो वावैता नातिनेदन्तीति मनसा प्रणयतीयं
वै मनः ॥१॥ अनयैवैनाः प्रणयत्यस्कन्नहविर्भवति य एवं वेद यज्ञायुधानि
सम्भरति यज्ञो वै यज्ञायुधानि यज्ञमेव तत्सम्भरति यदेकमेकꣳ सम्भरेत्
पितृदेवत्यानि स्युर्यत्सह सर्वाणि मानुषाणि द्वे द्वे सम्भरति याज्यानुवाक्ययोरेव
रूपं करोत्यथो मिथुनमेव यो वै दश यज्ञायुधानि वेद मुखतोऽस्य यज्ञः कल्पते
स्फ्यः ॥२॥ च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या
चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि य
एवं वेद मुखतोऽस्य यज्ञः कल्पते यो वै देवेभ्यः प्रतिप्रोच्य यज्ञेन यजते
जुषन्तेऽस्य देवा हव्यꣳ हविर्निरुप्यमाणमभि मन्त्रयेताग्निꣳ होतारमिह तꣳ
हुव इति ॥३॥ देवेभ्य एव प्रतिप्रोच्य यज्ञेन यजते जुषन्तेऽस्य देवा हव्यमेष
वै यज्ञस्य ग्रहो गृहीत्वैव यज्ञेन यजते तदुदित्वा वाचं यच्छति यज्ञस्य
धृत्या अथो मनसा वै प्रजापतिर्यज्ञमतनुत मनसैव तद्यज्ञं तनुते रक्ष-
सामनन्ववचाराय यो वै यज्ञं योग आगते युनक्ति युङ्क्ते युञ्जानेषु कस्त्वा
युनक्ति स त्वा युनक्त्वित्याह प्रजापतिर्वै कः प्रजापतिनैवैनं युनक्ति युङ्क्ते
युञ्जानेषु ॥४॥

॥ ४ ॥

१.८.१८.१

सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति पुण्डरिस्रजां प्रयच्छति दशभिर्वत्सतरैः सोमं क्रीणाति दशपेयो भवति शतं ब्राह्मणाः पिबन्ति सप्तदशꣳ स्तोत्रं भवति प्राकाशावध्वर्यवे ददाति स्रजमुद्गात्रे रुक्मꣳ होत्रेऽश्वं प्रस्तोतृप्रतिहर्तृभ्यां द्वादश पष्ठौहीर्ब्रह्मणे वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छꣳसिने वाससी नेष्टापोतृभ्याꣳ स्थूरि यवाचितमच्छावाकायानड्वाहमग्नीध्रे भार्गवो होता भवति श्रायन्तीयं ब्रह्मसामं भवति वारवन्तीयमग्निष्टोमसामꣳ सारस्वतीरपो गृह्णाति ॥१॥

॥ ५ ॥

२.४.१.१-४

देवा मनुष्याः पितरस्तेऽन्यत आसन्नसुरा रक्षाꣳसि पिशाचास्तेऽन्यतस्तेषां देवानामुत यदल्पं लोहितमकुर्वन्तद्रक्षाꣳसि रात्रीभिरसुभ्नन्तान्त्सुब्धान्मृता-नभि व्यौच्छत्ते देवा अविदुर्यो वै नोऽयं म्रियते रक्षाꣳसि वा इमं घ्नन्तीति ते रक्षाꣳस्युपामन्त्रयन्त तान्यब्रुवन्वरं वृणामहै यत् ॥१॥ असुराञ्जयाम तन्नः सहासदिति ततो वै देवा असुरानजयन्तेऽसुराञ्जित्वा रक्षाꣳस्यपानुदन्त तानि रक्षाꣳस्यनृतमकर्तेति समन्तं देवान्पर्यविशन्ते देवा अग्नावनाथन्त तेऽग्नये

प्रवते पुरोडाशमष्टाकपालं निरवपन्नग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये प्रवते निरवपन्यान्येव पुरस्ताद्रक्षाꣳसि ॥२॥ आसन्तानि तेन प्राणुदन्त यदग्नये विबाधवते यान्येवाभितो रक्षाꣳस्यासन्तानि तेन व्यबाधन्त यदग्नये प्रतीकवते यान्येव पश्चाद्रक्षाꣳस्यासन्तानि तेनापानुदन्त ततो देवा अभवन्परासुरा यो भ्रातृव्यवान्त्स्यात्स स्पर्धमान एतयेष्ट्या यजेताग्नये प्रवते पुरोडाशमष्टाकपालं निर्वपेदग्नये विबाधवते ॥३॥ अग्नये प्रतीकवते यदग्नये प्रवते निर्वपति य एवास्माच्छ्रेयान्भ्रातृव्यस्तं तेन प्रणुदते यदग्नये विबाधवते य एवैनेन सदृङ् तं तेन विबाधते यदग्नये प्रतीकवते य एवास्मात्पापीयान्तं तेनाप नुदते प्र श्रेयाꣳसं भ्रातृव्यं नुदतेऽति सदृशं क्रामति नैनं पापीयानाप्नोति य एवं विद्वानेतयेष्ट्या यजते ॥४॥

॥ ६ ॥

२·४·१२·१-७

त्वष्टा हतपुत्रो वीन्द्रꣳ सोममाहरत्तस्मिन्निन्द्र उपहवमैच्छत तं नोपाह्वयत पुत्रं मेऽवधीरिति स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्तस्य यदत्यशिष्यत तत्त्वष्टाऽऽहवनीयमुप प्रावर्तयत्स्वाहेन्द्रशत्रुर्वर्धस्वेति स यावदूर्ध्वः पराविध्यति तावति

स्वयमेव व्यरमत यदि वा तावत्प्रवणम् ॥१॥ आसीद्यदि वा तावदध्यग्नेरासीत्स
सम्भवन्नग्नीषोमावभि समभवत्स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत
स इमाँल्लोकानवृणोद्यदिमाँल्लोकानवृणोत्तद्वृत्रस्य वृत्रत्वं तस्मादिन्द्रो-
ऽबिभेदपि त्वष्टा तस्मै त्वष्टा वज्रमसिञ्चत्तपो वै स वज्र आसी-
त्तमुद्यन्तुं नाशक्नोदथ वै तर्हि विष्णुः ॥२॥ अन्या देवताऽऽसीत्सोऽब्रवी-
द्विष्णवे हीदमा हरिष्यावो येनायमिदमिति स विष्णुस्त्रेधाऽऽत्मानं वि न्यधत्त
पृथिव्यां तृतीयमन्तरिक्षे तृतीयं दिवि तृतीयमभिपर्यावर्ताद्ध्यबिभेद्यत्पृथिव्यां
तृतीयमासीत्तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्र हारस्ति वा
इदम् ॥३॥ मयि वीर्यं तत्ते प्र दास्यामीति तदस्मै प्रायच्छत् तत्प्रत्यगृह्णादधा मेति
तद्विष्णवेऽति प्रायच्छत्तद्विष्णुः प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति यदन्तरिक्षे
तृतीयमासीत्तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्र हारस्ति
वा इदम् ॥४॥ मयि वीर्यं तत्ते प्रदास्यामीति तदस्मै प्रायच्छत्तत्प्रत्यगृह्णाद्द्विर्मा-
ऽधा इति तद्विष्णवेऽति प्रायच्छत्तद्विष्णुः प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति
यद्दिवि तृतीयमासीत्तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्र हा-
र्येनाहम् ॥५॥ इदमस्मि तत्ते प्र दास्यामीति त्वी३ इत्यब्रवीत्सन्धां तु सन्धा-

वहे त्वामेव प्र विशानीति यन्मां प्रविशेः किं मा भुञ्ज्या इत्यब्रवीत्त्वामेवेन्धीय तव भोगाय त्वां प्रविशेयमित्यब्रवीत्तं वृत्रः प्राविशदुदरं वै वृत्रः क्षुत्खलु वै मनुष्यस्य भ्रातृव्यो यः ॥६॥ एवं वेद हन्ति क्षुधं भ्रातृव्यं तदस्मै प्रायच्छत्त-त्प्रत्यगृह्णात्त्रिर्माऽधा इति तद्विष्णवेऽति प्रायच्छत्तद्विष्णुः प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति यत्त्रिः प्रायच्छत्त्रिः प्रत्यगृह्णात्तत्त्रिधातोस्त्रिधातुत्वं यद्विष्णुरन्व-तिष्ठत विष्णवेऽति प्रायच्छत्तस्मादैन्द्रावैष्णवꣳ हविर्भवति यद्वा इदं किञ्च तदस्मै तत्प्रायच्छदृचः सामानि यजूꣳषि सहस्रं वा अस्मै तत्प्रायच्छत्तस्मात्सहस्र-दक्षिणम् ॥७॥

॥ ७ ॥

२·५·१·२·७

विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत्स्वस्रीयोऽसुराणां तस्य त्रीणि शीर्षाण्यासन्त्सोमपानꣳ सुरापानमन्नादनꣳ स प्रत्यक्षं देवेभ्यो भागमवदत्परोक्षम-सुरेभ्यः सर्वस्मै वै प्रत्यक्षं भागं वदन्ति यस्मा एव परोक्षं वदन्ति तस्य भाग उदितस्तस्मादिन्द्रोऽबिभेदीदृङ् वै राष्ट्रं वि पर्यावर्तयतीति तस्य वज्रमादाय शीर्षाण्यच्छिनद्यत्सोमपानम् ॥१॥ आसीत्स कपिञ्जलोऽभवद्यत्सुरापानꣳ स

विन्दामहै काममाविजनितोः सं भवामेति तस्मादृत्वियात्स्त्रियः प्रजां विन्दन्ते काममाविजनितोः सं भवन्ति वारेवृत७ ह्यासां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्त्सा मलवद्वासा अभवत्तस्मान्मलवद्वाससा न संवदेत ॥५॥ न सहाऽऽसीत नास्या अन्नमद्याद् ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्यास्तेऽथो खल्वाहुरभ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं काममन्यदिति यां मलवद्वाससं सम्भवन्ति यस्ततो जायते सोऽभिशस्तो यामरण्ये तस्यै स्तेनो यां पराचीं तस्यै ह्रीतमुख्यप्रगल्भो या स्नाति तस्या अप्सुमारुको या ॥६॥ अभ्यङ्क्ते तस्यै दुश्चर्मा या प्रलिखते तस्यै खलतिरपमारी याऽऽङ्क्ते तस्यै काणो या दतो धावते तस्यै श्यावदन्या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्यै क्लीबो या रज्जु७ सृजति तस्या उद्बन्धुको या पर्णेन पिबति तस्या उन्मादुको या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथाय ॥७॥

॥८॥

३.१.४.१-४

प्रजापतेर्जायमानाः प्रजा जाताश्च या इमाः ।
तस्मै प्रति प्रवेदय चिकित्वा७ अनुमन्यताम् ॥

इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये ।

अनुमन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम् ॥

प्रजानन्तः प्रतिगृह्णन्ति पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तम् ।

सुवर्गं याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः ॥

येषामीशे (१) पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम् ।

निष्क्रीतोऽयं यज्ञियं भागमेतु रायस्पोषा यजमानस्य सन्तु ॥

ये बध्यमानमनु बध्यमाना अभ्यैक्षन्त मनसा चक्षुषा च ।

अग्निस्तांऽ अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया संविदानः ॥

य आरण्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः ।

वायुस्तांऽ अग्रे प्र मुमोक्तु देवः प्रजापतिः प्रजया संविदानः ॥

प्रमुञ्चमानाः (२) भुवनस्य रेतो गातुं धत्त यजमानाय देवाः ।

उपाकृतंऽ शशमानं यदस्थाज्जीवं देवानामप्येतु पाथः ॥

नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिः सह देवयानः ।

जीवं देवानामप्येतु पाथः सत्याः सन्तु यजमानस्य कामाः ॥

यत्पशुर्मायुमकृतोरो वा पद्भिराहते ।

अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥

शमितार उपेतन यज्ञम् (३) देवेभिरन्वितम् ।

पाशात्पशुं प्र मुञ्चत बन्धाद्यज्ञपतिं परि ॥

अदितिः पाशं प्र मुमोक्त्वेतं नमः पशुभ्यः पशुपतये करोमि ।

अरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रति मुञ्चामि पाशम् ॥

त्वामु ते दधिरे हव्यवाहꣳ शृतं कर्तारमुत यज्ञियं च ।

अग्ने सदक्षः सतनुर्हि भूत्वाऽथ हव्या जातवेदो जुषस्व ॥

जातवेदो वपया गच्छ देवान्त्वꣳ हि होता प्रथमो बभूथ ।

घृतेन त्वं तनुवो वर्धयस्व स्वाहाकृतꣳ हविरदन्तु देवाः ।

स्वाहा देवेभ्यो देवेभ्यः स्वाहा ॥४॥

॥ ९ ॥

४·३·११·१-५

इयमेव सा या प्रथमा व्यौच्छदन्तरस्यां चरति प्रविष्टा ।

वधूर्जजान नवगज्जनित्री त्रय एनां महिमानः सचन्ते ॥

छन्दस्वती उषसा पेपिशाने समानं योनिमनु सञ्चरन्ती ।
सूर्यपत्नी वि चरतः प्रजानती केतुं कृण्वाने अजरे भूरिरेतसा ॥
ऋतस्य पन्थामनु तिस्र आगुस्त्रयो घर्मासो अनु ज्योतिषाऽगुः ।
प्रजामेका रक्षत्यूर्जमेका (१) व्रतमेका रक्षति देवयूनाम् ॥
चतुष्टोमो अभवद्या तुरीया यज्ञस्य पक्षावृषयो भवन्ती ।
गायत्रीं त्रिष्टुभं जगतीमनुष्टुभं बृहदर्कं युञ्जानाः सुवराभरन्निदम् ॥
पञ्चभिर्धाता विदधाविदं यत्तासां स्वसॄरजनयत्पञ्च पञ्च ।
तासामु यन्ति प्रयवेण पञ्च नाना रूपाणि क्रतवो वसानाः ॥
त्रिꣳशत्स्वसार उपयन्ति निष्कृतꣳ समानं केतुं प्रतिमुञ्चमानाः (२) ।
ऋतूꣳस्तन्वते कवयः प्रजानतीर्मध्येछन्दसः परियन्ति भास्वती ॥
ज्योतिष्मती प्रति मुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि ।
वि पश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे ॥
एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् ।
तेन दस्यून्व्यसहन्त देवा हन्ताऽसुराणामभवच्छचीभिः ॥

अनानुजामनुजां मामकर्त सत्यं वदन्त्यन्विच्छ एतत् ।

भूयासम् (३) अस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्रयुक्त ॥

पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च ।

पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरभि लोकमेकम् (४) ॥

ऋतस्य गर्भः प्रथमा व्यूषुष्यपामेका महिमानं बिभर्ति ।

सूर्यस्यैका चरति निष्कृतेषु घर्मस्यैका सवितैकां नि यच्छति ॥

या प्रथमा व्यौच्छत्सा धेनुरभवद्यमे ।

सा नः पयस्वती धुक्ष्वोत्तरामुत्तराꣳ समाम् ॥

शुक्रर्षभा नभसा ज्योतिषाऽगाद्विश्वरूपा शबलीरग्निकेतुः ।

समानमर्थं स्वपस्यमाना बिभ्रती जरामजर उष आऽगाः ॥

ऋतूनां पत्नी प्रथमेयमाऽगादह्नां नेत्री जनित्री प्रजानाम् ।

एका सती बहुधोषो व्युच्छस्यजीर्णा त्वं जरयसि सर्वमन्यत् (५) ॥

॥ १० ॥

५·६·१·१-४

हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः ।

अग्निं या गर्भं दधिरे विरूपास्ता न आपः शꣳ स्योना भवन्तु ॥

यासाꣳ राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् ।

मधुश्चुतः शुचयो याः पावकास्ता न आपः शꣳ स्योना भवन्तु ॥

यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति ।

याः पृथिवीं पयसोन्दन्ति (१) शुक्रास्ता न आपः शꣳ स्योना भवन्तु ॥

शिवेन मा चक्षुषा पश्यतापः शिवया तनुवोपस्पृशत त्वचं मे ।

सर्वाꣳ अग्नीꣳरप्सुषदो हुवे वो मयि वर्चो बलमोजो नि धत्त ॥

यददः संप्रयतीरहावनदता हते ।

तस्मादा नद्यो नाम स्थ ता वो नामानि सिन्धवः ॥

यत्प्रेषिता वरुणेन ताः शीभꣳ समवल्गत (२) ।

तदाप्नोदिन्द्रो वो यतीस्तस्मादापो अनु स्थन ॥

अपकामꣳ स्यन्दमाना अवीवरत वो हिकम् ।

इन्द्रो वः शक्तिभिर्देवीस्तस्माद्वार्णाम वो हितम् ॥

एको देवो अप्यतिष्ठत्स्यन्दमाना यथावशम् ।

उदानिषुर्महीरिति तस्मादुदकमुच्यते ॥

आपो भद्रा घृतमिदाप आसुरग्नीषोमौ बिभ्रत्याप इत्ताः ।

तीव्रो रसो मधुपृचाम् (३) अरङ्गम आ मा प्राणेन सह वर्चसा गन् ॥

आदित्पश्याम्युत वा शृणोम्या मा घोषो गच्छति वाङ् न आसाम् ।

मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः ॥

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।

महे रणाय चक्षसे ॥

यो वः शिवतमो रसस्तस्य भाजयतेह नः ।

उशतीरिव मातरः ॥

तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।

आपो जनयथा च नः ।

दिवि श्रयस्वान्तरिक्षे यतस्व पृथिव्या संभव ब्रह्मवर्चसमसि ब्रह्मवर्च-

साय त्वा (४) ॥

॥११॥

५.७.११-२

यो वा अयथादेवतमग्निं चिनुत आ देवताभ्यो वृश्च्यते पापीयान्भवति

यो यथादेवतं न देवताभ्य आ वृश्च्यते वसीयान्भवत्याग्नेय्या गायत्रिया प्रथमां

चितिमभिमृशेत्त्रिष्टुभा द्वितीयां जगत्या तृतीयामनुष्टुभा चतुर्थीं पङ्क्त्या पञ्चमीं यथादेवतमेवाग्निं चिनुते न देवताभ्य आवृश्च्यते वसीयान्भवतीडायै वा एषा विभक्तिः पशव इडा पशुभिरेनम् ॥१॥ चिनुते यो वै प्रजापतये प्रतिप्रोच्याग्निं चिनोति नार्तिमार्च्छत्यश्वावभितस्तिष्ठेतां कृष्ण उत्तरतः श्वेतो दक्षिणतस्तावालभ्येष्टका उपदध्यादेतद्वै प्रजापते रूपं प्राजापत्योऽश्वः साक्षादेव प्रजापतये प्रतिप्रोच्याग्निं चिनोति नार्तिमार्च्छत्येतद्वा अह्नो रूपं यच्छ्वेतोऽश्वो रात्रियै कृष्ण एतदह्नः ॥२॥ रूपं यदिष्टका रात्रियै पुरीषमिष्टका उपधास्यञ्छ्वेतमश्वमभिमृशेत्पुरीषमुपधास्यन्कृष्णमहोरात्राभ्यामेवैनं चिनुते हिरण्यपात्रं मधोः पूर्णं ददाति मधव्योऽसानीति सौर्या चित्रवत्याऽवेक्षते चित्रमेव भवति मध्यन्दिनेऽश्वमव घ्रापयत्यसौ वा आदित्य इन्द्र एष प्रजापतिः प्राजापत्योऽश्वस्तमेव साक्षादृध्नोति ॥३॥

## ४ । मैत्रायणीयसंहिता

॥१॥

१.२.४

इयं ते शुक्रतनूरिदं वर्चस्तया सम्भव भ्राजं गच्छ जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा शुक्रमसि

चन्द्रमस्यमृतमसि वैश्वदेवमसि चिदसि मनासि धीरसि दक्षिणासि यज्ञियासि क्षत्रियास्यदितिरस्युभयतःशीर्ष्णी सा नः सुप्राची सुप्रतीची भव मित्रस्त्वा पदि बध्नातु पूषाऽध्वनः पात्विन्द्रायाध्यक्षायानु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः सा देवि देवमच्छेहीन्द्राय सोमꣳ रुद्रस्त्वावर्तयतु स्वस्ति सोमसखा पुनरेहि वस्व्यसि रुद्रास्यदितिरस्यादित्यासि चन्द्रासि रुद्रासि बृहस्पतिष्ट्वा सुम्ने रम्णातु रुद्रो वसुभिराचके पृथिव्यास्त्वा मूर्धन्नाजिघर्मि यज्ञिया इडायास्पदे घृतवति स्वाहा स्मे रमस्वा स्मे ते रायस्तव तव रायो मा रायस्पोषेण वि योष्म त्वष्ट्रीमन्तस्त्वा सपेम ॥४॥

॥२॥

१·४·१०

देवतानाꣳ वा एतदायतनꣳ यदाहवनीयो यदन्तराग्नी तत्पशूनां मनुष्याणां गार्हपत्यः पितृणामोदनपचनः सर्वा ह वा अस्य यक्ष्यमाणस्य देवता यज्ञमागच्छन्ति य एवꣳ वेद पूर्वश्चाग्निमपरश्च परिस्तरीतवा आह मनुष्याणां वै नवावसानं प्रियं नवावसानमेवाकर्मध्यत्वाय ग्नेर्जिह्वासि वाचो विसर्जनमिति पुरोडाश्यानावपति देवतानाꣳ वा एष ग्रहो देवता वा एतदग्रहीदेतद्ध स्म वा आहारुण औपवेशिरहुतासु वा अहमाहुतिषु देवता हव्यं गमयामि सꣳस्थितेन यज्ञेन सꣳस्थां गच्छानीति तद्य एवꣳ वेदाहुतास्वेवास्याहुतिषु देवता हव्यं गच्छति सꣳस्थितेन यज्ञेन सꣳस्थां गच्छत्यौलूखलाभ्याꣳ वै दृषदा हविष्कृदेहि ॥ इति देवा यज्ञाद्रक्षाꣳस्यपाघ्नत यदौलूखला उद्वादयन्ति दृषदौ समाघ्नन्ति ॥ हविष्कृदेहि ॥ इत्याह रक्षसामपहत्या अपः प्रणीय वाचꣳ यच्छति मनसा वै प्रजापतिर्यज्ञमतनु तौलूखलयोरुद्वदितोरध्वर्युश्च यजमानश्च वाचꣳ यच्छेतां

प्रजापतिरेव भूत्वा मनसा यज्ञं तन्वाते न सर्वाणि सह यज्ञायुधानि प्रहृत्यानि मानुषं तत्क्रियते नैकमेकं पितृदेवत्यं तद् द्वे द्वे सह प्रहृत्ये याज्यानुवाक्ययो रूपमुपवसत्युभयाꣳस्तेन पशूनवरुन्धे ग्राम्याꣳश्चारण्याꣳश्च यद्ग्राम्यस्य नाश्नाति तेन ग्राम्यानवरुन्धेऽथ यदारण्यस्याश्नाति तेनारण्यानथो इन्द्रियं वा आरण्यमिन्द्रियमेवात्मन्धत्ते न माषाणामश्नीयादयज्ञिया वै माषा न तस्य सायमश्नीयाद्यस्य प्रातर्यक्ष्यमाणः स्यादप्रतिजग्धेन वै देवा हव्येन वसीयोभूयमगच्छन्प्रतिजग्धेनासुराः पराभवꣳस्तदप्रतिजग्धेन वा एतद्धव्येन यजमानो वसीयोभूयं गच्छति परास्य भ्रातृव्यो भवति यो वै श्रद्धामनालभ्य यजते पापीयान्भवत्यापो वै श्रद्धा न वाचा गृह्यन्ते न यजुषाति वा एता वाचं नेदन्त्यतिवत्र्ये मनस्तु नाति नेदन्ति यद्यपो गृह्णीयादिमां तर्हि मनसा ध्यायेदियꣳ वा एतासां पात्रमनयवैना अग्रहीच्छ्रद्धामालभ्य यजते न पापीयान्भवति ॥१०॥

॥२॥

१·४·११

ब्रह्मवादिनो वदन्ति प्रेध्ममुक्षन्ति प्र हविरिध्मः प्रथम आहुतीनां कस्मादन्येषाꣳ हविषाꣳ याज्यानुवाक्याः सन्ति कस्मादिध्मस्य नेति ॥ अग्नये समिध्यमानायानुब्रूहि ॥ इति पुरोऽनुवाक्या सामिधेनी याज्योपवाको वषट्कारो यत्र वै यज्ञस्यातिरिक्तं क्रियते तद्यजमानस्यातिरिक्तमात्मञ्जायते यदनाप्तꣳ वि यज्ञश्छिद्यते क्षोधुको यजमानो भवति परिधानीयया सामिधेनीनामुत्तममिध्मस्य समर्धयत्यक्षोधुको यजमानो भवति नास्यातिरिक्तमात्मञ्जायते यो वै प्रजापतिꣳ सप्तदशꣳ यज्ञेऽन्वायत्तं वेद नास्य यज्ञो व्यथते प्रजापतौ यज्ञेन प्रतितिष्ठति ॥ ओ श्रावय ॥ इति चतुरक्षरम् ॥ अस्तु श्रौषट् ॥ इति

चतुरक्षरम् ॥ यज ॥ इति द्व्यक्षरम् ॥ ये यजामहे ॥ इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै प्रजापतिः सप्तदशो यज्ञेऽन्वायत्तो यद्यनुवाक्याया एति यदि याज्याया अतश्चेदेव नैति नास्य यज्ञो व्यथते प्रजापतौ यज्ञेन प्रतितिष्ठति न वै तद्विद्म यदि ब्राह्मणा वा स्मोऽब्राह्मणा वा यदि तस्य वा ऋषेः स्मोऽन्यस्य वा यस्य ब्रूमहे यस्य ह त्वेव ब्रुवाणो यजते तं तदिष्टमागच्छति नेतरमुपनमति तत्प्रवरे प्रव्रियमाणे ब्रूयात् ॥ देवाः पितरो देवा योऽस्मि स सन्यजे योऽस्मि स सन्करोमि शुनं म इष्टꣳ शुनꣳ शान्तꣳ शुनं कृतं भूयात् ॥ इति तत्र एव कश्च स सन्यजते तं तदिष्टमागच्छति नेतरमुपनमति ॥ यज्ञस्य त्वा प्रमयाभिमया परिमयोन्मया परिगृह्णामि ॥ इति गायत्री वै यज्ञस्य प्रमा त्रिष्टुबभिमा जगती परिमाऽनुष्टुबुन्मैतानि वै छन्दाꣳसि यज्ञꣳ वहन्ति तैरेवैनं परिगृह्णाति ॥११॥

॥४॥

१.५.७

ब्रह्मवादिनो वदन्ति कस्मात्सायमग्निमुपतिष्ठन्ते कस्मात्प्रातर्नेत्यसौ वा आदित्यः सायमासुवति तस्मात्सायमुपतिष्ठन्त एष प्रातः प्रसुवति तस्मात्प्रातर्नोपतिष्ठन्ते तस्मात्सायमहुतेऽग्निहोत्रेऽग्निहोत्रिणा नाशितव्यं तस्मादु प्रातरहुते नाशितव्यं तस्मात्सायमतिथये प्रत्येनसः पुण्यत्वात्तु प्रातर्ददति प्रातरवनेगेन प्रातरुपस्थेयोऽधिश्रित उन्नीयमाने वा हस्ता अवनेनिजीत तत्र विहव्यस्य चतस्र ऋचो वदेत्प्रातरवनेगो चतस्रः प्रातरवनेगेन वा अनाप्तमाप्नोत्यनवरुद्धमवरुन्धे तदनाप्तमेवैतेनाप्नोत्यनवरुद्धमवरुन्धेऽविभेद्वा एष उद्धृतस्तं देवाश्छन्दोभिः पर्यस्तृणंन्यदुपतिष्ठते छन्दोभिरेवैनं परिस्तृणात्युभयमस्मा अकर-

ग्नीषोमीयया पूर्वपक्षे उपस्थेयोऽग्नीषोमीयो वै पूर्वपक्षोऽपरपक्षायैवैनं परिददा-
त्यैन्द्राग्न्यापरपक्ष उपस्थेय ऐन्द्राग्नो वा अपरपक्षः पूर्वपक्षायैवैनं परिददाति
सर्वा ह वा एनं देवताः संप्रदायमनपेक्षं गोपायन्ति य एवꣳ विद्वानग्नि-
मुपतिष्ठते ॥७॥

॥५॥

३·७·३

इयꣳ वै कद्रूर्वाक्सुपर्णी छन्दाꣳसि सौपर्णानि गायत्री त्रिष्टुब्जगती सा
वै कद्रूः सुपर्णीमात्मानमजयत्साब्रवीत्सोममाहर तेनात्मानं निष्क्रीणीष्वेति सा
छन्दाꣳसि प्रैष्यदमुतः सोममाहरत तेन मा निष्क्रीणीतेति ततो जगत्युदपतत्सा
पशुभिश्चागच्छद्दीक्षया च तस्मात्पशव इति जगतीमाहुस्तस्माद्यदा पशून्विन्द-
तेऽथ दीक्षते ततस्त्रिष्टुबुदपतत्सा दक्षिणया चागच्छत्तपसा च तस्मात्त्रिष्टुभा
लोके दक्षिणा दीयन्ते तस्मादु मध्यन्दिने तपस्तपनीयमिति ततो गायत्र्यु-
दपतत्सा सोममाहरत्तमाह्रियमाणꣳ सामिगन्धर्वो विश्वावसुरामुष्णात्स तिस्रो
रात्रीरपहृतोऽवसत्तस्मात्तिस्रो रात्रीः क्रीतो वसति तेऽब्रुवन्पुनर्याचामहा इति
ते देवा अब्रुवन्स्त्रीकामा वै गन्धर्वा वाचमेव सम्भृत्य यथा योषिदनपेक्षेयतमेव
तया निष्क्रीणामेति तꣳ व निरक्रीणꣳस्तस्मादाहुर्वाग्वै सोमक्रयणी वाचꣳ वा
एतद्वा निष्क्रीणातीति तेऽब्रुवꣳस्त्वन्वृतीयामहा इति तामन्वार्तीयन्त तदनृतस्य
जन्म तस्य एवꣳ विद्वान्त्सत्यानृताꣳ वाचꣳ वदति न हैनं द्रुणाति तेऽब्रुवन्
विह्वयामहा इति ताꣳ व्यह्वयन्त गाथां देवा अगायन् ब्रह्म गन्धर्वा अवदꣳस्सा
देवानुपावर्तत तस्माद्विवाहे गाथा गीयते तस्माद्गायन्त्स्त्रियाः प्रियस्तस्य एवꣳ

विद्वान्गाथां गायन्हस्तं गृह्णाति सꣳ हि जीर्यतः सर्वमायुरितो नाति नीतस्त-
दाहुरा वै सा पुनरगच्छन्नैव किञ्चन सोमक्रयणीति ॥३॥

॥ ६ ॥

४.८.१

मनोर्वै पात्राण्यासꣳस्तेषाꣳ समाहन्यमानानाꣳ यावन्तोऽसुरा उपाश्रृण्वꣳ-
स्तावन्तस्तदहर्नाभवन्नथ वा एतौ तर्ह्यसुराणां ब्राह्मणा आस्तां तृष्टावरूत्री ता
अब्रुवꣳश्चिकित्सतं ना३ इति ता अब्रूतां मनो यज्वा वै श्रद्धादेवोऽसीमानि नौ
पात्राणि देहीति तानि वा आभ्यामददात्तान्यग्निना समक्षपयतां ताञ्ज्वाला-
नृषभः समलेट् तꣳ सा मेनिरन्वपद्यत तस्य रुवतो यावन्तोऽसुरा उपाश्रृण्वꣳ-
स्तावन्तस्तदहर्नाभवꣳस्ता अब्रूतां मनो यज्वा वै श्रद्धादेवोऽस्यनेन त्व ऋषभेण
याजयावेति तेन वा एनमयाजयतां तस्य श्रोणिमनवत्ताꣳ सुपर्ण उदमथ्नात्सा
मनाव्या उपस्थमापद्यत ताꣳ सा मेनिरन्वपद्यत तस्या वदन्त्या यावन्तोऽसुरा
उपाश्रृण्वꣳस्तावन्तस्तदहर्नाभवꣳस्ता अब्रूतां मनो यज्वा वै श्रद्धादेवोऽस्यनया
त्वा पत्न्या याजयावेति तां प्रोक्ष्य पर्यग्नि कृत्वेध्माबर्हिरच्छैताꣳ स इन्द्रोऽ-
वेदिमे वै ते असुरमाये मनुं पत्न्या व्यृधयत इति तमिन्द्रो ब्राह्मणो ब्रुवाण
उपैत्सोऽब्रवीन्मनो यज्वा वै श्रद्धादेवोऽसि याजयानि त्वा कतमस्त्वमसि
ब्राह्मणः ॥

किं ब्राह्मणस्य पितरं किमु पृच्छसि मातरम् ।
श्रुतं चेदस्मिन्वेद्यं स पिता स पितामहः ॥

केनेत्याभ्यां ब्राह्मणाभ्यामितो शेऽहं ब्राह्मणयोरिती शिपे हीत्यब्रवीदतिथिप-
तिर्वावातिथीनामीष्टा इति स द्वितीयाꣳ वेदिमुद्धन्तुमुपापद्यत ता इध्माबर्हि बिभ्रता

ऐतां ता अब्रूतां किमिदं करोषीतीमं मनुं याजयिष्यामीति केनेति युवाभ्यामिति ता अविन्तामिन्द्रो वावेति तौ न्यस्येध्मावर्हिः पलायेतां तौ यद्धावतां परस्तादेवेन्द्रः प्रत्यैत्। तौ वृशश्चैवापश्चाभवतां तद्वृशस्य चैवापस्य च जन्म स मनुरिन्द्रमब्रवीत्त्वं मे यज्ञꣳ स्थापय मा मे यज्ञो विकृष्टोऽभूदिति सोऽब्रवीद्वरं काम एतामालभ्याः स ते कामः समृध्यतामथोत्सृजेति ताꣳ वा उदसृजत्तदृद्ध्या एव पात्नीवतस्त्वाष्ट्रः त्वाष्ट्रो हि पशवोऽवाचीनं नाभ्याः कार्यꣳऽवाचीनꣳहि नाभ्याः स्त्रिया वीर्यं वद्धस्वल्विनाति वा एकादशिनी यज्ञꣳ यत्पात्नीवतः प्रत्युत्तब्ध्यै ॥१॥

## ५। सामवेदसंहिता

॥ १ ॥

छ. २·२·८·५ ; उ. १·१२

वामदेव ऋषिर्गायत्री छन्दो विश्वेदेवा देवताः।

१ २ ३ १ २र ३ १ ३ १र २ ३ १ २
ओ३म् कया नश्चित्र आ भुवदूती सदावृधः सखा।
१ ३ १ २ ३ १
कया शचिष्ठया वृता ॥१॥
१ २ ३ १ २र ३ १ २ ३ १ २
कस्त्वासत्यो मदानां मꣳहिष्ठो मत्सदन्धसः।
३१ २ ३१३ १२
दृढा चिदारुजे वसु ॥२॥
३ २र ३ १ २ ३ १ २ ३ १
अभीषुणः सखीनामविता जरितॄणाम्।
३ १ २ १ १ २
शतं भवास्यूतये ॥३॥
३ २ ५ ४ २ ४र ५ १ २ २१र २ १
ओ३म्। का५या। नश्चा३इत्रा३आभूवात्। ऊ। तीसदावृधः स।

खा । औ३होहाइ । कया२३ शचाइ । ष्ठ्यौहो३ । हुम्मा२ । वो२ते । हाइ ॥१॥

का५स्त्वा । सत्यो३मा३दानां । मा । ह्निष्ठोमासादंध । सा ।

औ३होहाइ । दृढा२३चिदा । रुजौहो३ । हुम्मा२ । वा२३५हाइ ॥२॥

आ ५ भी । षुणा३ः सा३खीनाम् । आ । विताजराइतॄ । णाम् ।

औ२३होहाइ । शता२३म्भवा । सियोहो३ । हुम्मा२ । ता२य३५ हाइ ॥३॥

## ६ । अथर्ववेदसंहिता

॥ १ ॥

१·१६

येऽमावास्यां३ रात्रिमुदस्थु व्रांजमत्रिणः ।

अग्निस्तुरीयो यातुहा सो अस्मभ्यमधि ब्रवत् ॥१॥

सीसायाध्याह वरुणः सीसायाग्निरुपावति ।

सीसं म इन्द्रः प्रायच्छत् तदङ्ग यातुचातनम् ॥२॥

इदं विष्कन्धं सहत इदं बाधते अत्त्रिणः ।

अनेन विश्वा ससहे या जातानि पिशाच्याः ॥३॥

यदि नो गां हंसि यद्यश्वं यदि पूरुषम् ।

तं त्वा सीसेन विध्यामो यथा नोसो अवीरहा ॥४॥

॥ २ ॥

१.३४

इयं वीरुन्मधुजाता मधुना त्वा खनामसि ।

मधोरधि प्रजातासि सा नो मधुमतस्कृधि ॥१॥

जिह्वाया अग्रे मधु मे जिह्वामूले मधूलकम् ।

ममेदह क्रतावसो मम चित्तमुपायसि ॥२॥

मधुमन्मे निक्रमणं मधुमन्मे परायणम् ।

वाचा वदामि मधुमद् भूयासं मधुसन्दृशः ॥३॥

मधोरस्मि मधुतरो मदुघान्मधुमत्तरः ।

मामित् किल त्वं वनाः शाखां मधुमतीमिव ॥४॥

परि त्वा परितत्नुनेक्षुणागामविद्विषे ।

यथा मां कामिन्यसो यथा मन्नापगा असः ॥५॥

॥ ३ ॥

२.३०

यथेदं भूम्या अधि तृणं वातो मथायति ।

एवा मथ्नामि ते मनो यथा मां कामिन्यसो यथा मन्नापगा असः ॥१॥

सं चेन्नयाथो अश्विना कामिना सं च वक्षथः ।

सं वां भगासो अग्मत सं चित्तानि समु व्रता ॥२॥

यत्सुपर्णा विवक्षवो अनमीवा विवक्षवः ।

तत्र मे गच्छताद्धवं शल्य इव कुल्मलं यथा ॥३॥

यदन्तरं तद् बाह्यं यद् बाह्यं तदन्तरम् ।

कन्यानां विश्वरूपाणां मनो गृभायौषधे ॥४॥

एयमगन् पतिकामा जनिकामोऽहमागमम् ।

अश्वः कनिक्रदद् यथा भगेनाहं सहागमम् ॥५॥

॥ ४ ॥ Varuna Suktam

४.१६

बृहन्नेषामधिष्ठाता अन्तिकादिव पश्यति ।

यस्तायन्मन्यते चरन्त्सर्वं देवा इदं विदुः ॥१॥

यस्तिष्ठति चरति यश्च वञ्चति यो निलायं चरति यः प्रतङ्कम् ।

द्वौ संनिषद्य यन्मन्त्रयेते राजा तद्वेद वरुणस्तृतीयः ॥२॥

उतेयं भूमिर्वरुणस्य राज्ञ उतासौ द्यौर्बृहती दूरेअन्ता ।
उतो समुद्रौ वरुणस्य कुक्षी उतास्मिन्नल्प उदके निलीनः ॥३॥

उतो द्यामति सर्पात्परस्तान्न समुच्यातै वरुणस्य राज्ञः ।
दिवः स्पशः प्रचरन्तीदमस्य सहस्राक्षा अति पश्यन्ति भूमिम् ॥४॥

सर्वं तद्राजा वरुणो विचष्टे यदन्तरा रोदसी यत् परस्तात् ।
सङ्ख्याता अस्य निमिषो जनानामक्षानिव श्वघ्नी निमिनोति तानि ॥५॥

ये ते पाशा वरुण सप्तसप्त त्रेधा तिष्ठन्ति विषिता रुशन्तः ॥
छिनन्तु सर्वे अनृतं वदन्तं यः सत्यवाद्यति तं सृजन्तु ॥६॥

शतेन पाशैरभि धेहि वरुणैनं मा ते मोच्यनृतवाङ् नृचक्षः ॥
आस्तां जाल्म उदरं श्रंशयित्वा कोश इवाबन्धः परिकृत्यमानः ॥७॥

यः समाम्यो३वरुणो यो व्याम्यो३ यः सन्देश्यो३ वरुणो यो विदेश्यः ॥
यो दैवो वरुणो यश्च मानुषः ॥८॥

तैस्त्वा सर्वैरभिष्यामि पाशैरसावामुष्यायणामुष्याः पुत्र ॥
तानु ते सर्वाननुसन्दिशामि ॥९॥

॥ ५ ॥

४.१७

ईशानां त्वा भेषजानामुज्जेष आरभामहे ॥

चक्रे सहस्रवीर्यं सर्वस्मा ओषधे त्वा ॥१॥

सत्यजितं शपथयावनीं सहमानां पुनःसराम् ॥

सर्वाः समह्वयोषधीरितो नः पारयादिति ॥२॥

या शशाप शपनेन याघं मूरमादधे ॥

या रसस्य हरणाय जातमारेभे तोकमत्तु सा ॥३॥

यां ते चक्रुरामे पात्रे यां चक्रुर्नीललोहिते ॥

आमे मांसे कृत्यां यां चक्रुस्तया कृत्याकृतो जहि ॥४॥

दौःष्वप्न्यं दौर्जीवित्यं रक्षो अभ्वमराय्यः ॥

दुर्णाम्नीः सर्वा दुर्वाचस्ता अस्मन्नाशयामसि ॥५॥

क्षुधामारं तृष्णामारमगोतामनपत्यताम् ॥

अपामार्ग त्वया वयं सर्वं तदप मृज्महे ॥६॥

तृष्णामारं क्षुधामारमथो अक्षपराजयम् ॥

अपामार्ग त्वया वयं सर्वं तदप मृज्महे ॥७॥

अपामार्ग ओषधीनां सर्वासामेक इद्वशी ।

तेन ते मृज्म आस्थितमथ त्वमगदश्चर ॥८॥

॥ ६ ॥

५·२२

अग्निस्तक्मानमप बाधतामितः सोमो ग्रावा वरुणः पूतदक्षाः ।

वेदिर्बर्हिः समिधः शोशुचाना अप द्वेषांस्यमुया भवन्तु ॥१॥

अयं यो विश्वान्हरितान् कृणोष्युच्छोचयन्नग्निरिवाभि दुन्वन् ।

अधा हि तक्मन्नरसो हि भूया अधा न्य१ङ्ङधराङ् वा परेहि ॥२॥

यः परुषः पौरुषेयो१ऽवध्वंस इवारुणः ।

तक्मानं विश्वधावीर्याधराञ्चं परा सुव ॥३॥

अधराञ्चं प्र हिणोमि नमः कृत्वा तक्मने ।

शकम्भरस्य मुष्टिहा पुनरेतु महावृषान् ॥४॥

ओको अस्य मूजवन्त ओको अस्य महावृषाः ।

यावज्जातस्तक्मंस्तावानसि बल्हिकेषु न्योचरः ॥५॥

तक्मन् व्याल वि गद व्यङ्ग भूरि यावय ।

दासीं निष्टक्वरीमिच्छ तां वज्रेण समर्पय ॥६॥

तक्मन्मूजवतो गच्छ बल्हिकान्वा परस्तराम् ।

शूद्रामिच्छ प्रफर्व्य १ तां तक्मन्वीव धूनुहि ॥७॥

महावृषान् मूजवतो बन्ध्वद्धि परेत्य ।

प्रैतानि तक्मने ब्रूमो अन्यक्षेत्राणि वा इमा ॥८॥

अन्यक्षेत्रे न रमसे वशी सन्मृडयासि नः ।

अभूदु प्रार्थस्तक्मा स गमिष्यति बल्हिकान् ॥९॥

यत्त्वं शीतोऽथो रूरः सह कासावेपयः ।

भीमास्ते तक्मन् हेतयस्ताभिः स्म परि वृङ्धि नः ॥१०॥

मा स्मैतान्त्सखीन् कुरुथा बलासं कासमुद्युगम् ।

मा स्मातोऽर्वाङैः पुनस्तत् त्वा तक्मन्नुप ब्रुवे ॥११॥

तक्मन्भ्रात्रा बलासेन स्वस्रा कासिकया सह ।

पाप्मा भ्रातृव्येण सह गच्छामुमरणं जनम् ॥१२॥

तृतीयकं वितृतीयं सदन्दिमुत शारदम् ।

तक्मानं शीतं रूरं ग्रैष्मं नाशय वार्षिकम् ॥१३॥

गन्धारिभ्यो मूजवद्भ्योऽङ्गेभ्यो मगधेभ्यः ।

प्रैष्यञ्जनमिव शेवधिं तक्मानं परि दद्मसि ॥१४॥

॥ ७ ॥

५·२३

ओते मे द्यावापृथिवी ओता देवी सरस्वती ।

ओतौ म इन्द्रश्चाग्निश्च क्रिमिं जम्भयतामिति ॥१॥

अस्येन्द्र कुमारस्य क्रिमीन्धनपते जहि ।

हता विश्वा अरातय उग्रेण वचसा मम ॥२॥

यो अक्ष्यौ परिसर्पति यो नासे परिसर्पति ।

दतां यो मध्यं गच्छति तं क्रिमिं जम्भयामसि ॥३॥

सरूपौ द्वौ विरूपौ द्वौ कृष्णौ द्वौ रोहितौ द्वौ ।

बभ्रुश्च बभ्रुकर्णश्च गृध्रः काकश्च ते हताः ॥४॥

ये क्रिमयः शितिकक्षा ये कृष्णाः शितिबाहवः ।

ये के च विश्वरूपास्तान् क्रिमीञ्जम्भयामसि ॥५॥

उत्पुरस्तात्सूर्य एति विश्वदृष्टो अदृष्टहा ।

दृष्टांश्च घ्नन्नदृष्टांश्च सर्वांश्च प्रमृणन् क्रिमीन् ॥६॥

येवाषासः कष्कषास एजत्काः शिपवित्नुकाः ।

दृष्टश्च हन्यतां क्रिमिरुतादृष्टश्च हन्यताम् ॥७॥

हतो येवाषः क्रिमीणां हतो नदनिमोत ।

सर्वान्नि मष्मषाकरं दृषदा खल्वाँ इव ॥८॥

त्रिशीर्षाणं त्रिककुदं क्रिमिं सारङ्गमर्जुनम् ।

शृणाम्यस्य पृष्टीरपि वृश्चामि यच्छिरः ॥९॥

अत्रिवद् वः क्रिमयो हन्मि कण्ववज्जमदग्निवत् ।

अगस्त्यस्य ब्रह्मणा सं पिनष्म्यहं क्रिमीन् ॥१०॥

हतो राजा क्रिमीणामुतैषां स्थपतिर्हतः ।

हतो हतमाता क्रिमिर्हतभ्राता हतस्वसा ॥११॥

हतासो अस्य वेशसो हतासः परिवेशसः ।

अथो ये क्षुल्लका इव सर्वे ते क्रिमयो हताः ॥१२॥

सर्वेषां च क्रिमीणां सर्वासां च क्रिमीणाम् ।

भिनद्म्यश्मना शिरो दहाम्यग्निना मुखम् ॥१३॥

॥ ८ ॥

६·३२

अन्तर्दावे जुहुता स्वे३तद्यातुधानक्षयणं घृतेन ।

आराद्रक्षांसि प्रति दह त्वमग्ने न नो गृहाणामुप तीतपासि ॥१॥

रुद्रो वो ग्रीवा अशरैत्पिशाचाः पृष्टीर्वोऽपि शृणातु यातुधानाः ।

वीरुद्वो विश्वतोवीर्या यमेन समजीगमत् ॥२॥

अभयं मित्रावरुणाविहास्तु नोऽर्चिषाऽत्त्रिणो नुदतं प्रतीचः ।

मा ज्ञातारं मा प्रतिष्ठां विदन्त मिथो विघ्नाना उपयन्तु मृत्युम् ॥३॥

॥ ९ ॥

९.१२.१-१०

प्रजापतिश्च परमेष्ठी च शृङ्गे इन्द्रः शिरो अग्निर्ललाटं यमः कृकाटम् ॥१॥

सोमो राजा मस्तिष्को द्यौरुत्तरहनुः पृथिव्यधरहनुः ॥२॥

विद्युज्जिह्वा मरुतो दन्ता रेवतीर्ग्रीवाः कृत्तिकाः स्कन्धा घर्मो वहः ॥३॥

विश्वं वायुः स्वर्गो लोकः कृष्णद्रं विधरणी निवेष्यः ॥४॥

श्येनः क्रोडोऽन्तरिक्षं पाजस्यं १ बृहस्पतिः ककुद्बृहतीः कीकसाः ॥५॥

देवानां पत्नीः पृष्टय उपसदः पर्शवः ॥६॥

मित्रश्च वरुणश्चांसौ त्वष्टा चार्यमा च दोषणी महादेवो बाहू ॥७॥

इन्द्राणी भसद् वायुः पुच्छं पवमानो बालाः ॥८॥

ब्रह्म च क्षत्रं च श्रोणी बलमूरू ॥९॥

धाता च सविता चाष्ठीवन्तौ जङ्घा गन्धर्वा

अप्सरसः कुष्ठिका अदितिः शफाः ॥१०॥

## ॥ १० ॥

### १०·७·१-१०

कस्मिन्नङ्गे तपो अस्याधि तिष्ठति कस्मिन्नङ्ग ऋतमस्याध्याहितम् ।

क्व व्रतं क्व श्रद्धास्य तिष्ठति कस्मिन्नङ्गे सत्यमस्य प्रतिष्ठितम् ॥१॥

कस्मादङ्गाद्दीप्यते अग्निरस्य कस्मादङ्गात्पवते मातरिश्वा ।

कस्मादङ्गाद्वि मिमीतेऽधि चन्द्रमा महः स्कम्भस्य मिमानो अङ्गम् ॥२॥

कस्मिन्नङ्गे तिष्ठति भूमिरस्य कस्मिन्नङ्गे तिष्ठत्यन्तरिक्षम् ।

कस्मिन्नङ्गे तिष्ठत्याहिता द्यौः कस्मिन्नङ्गे तिष्ठत्युत्तरं दिवः ॥३॥

क१ प्रेप्सन् दीप्यत ऊर्ध्वो अग्निः क१ प्रेप्सन् पवते मातरिश्वा ।

यत्र प्रेप्सन्तीरभियन्त्यावृतः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥४॥

क्वार्धमासाः क्व यन्ति मासाः संवत्सरेण सह संविदानाः ।

यत्र यन्त्यृतवो यत्रार्तवाः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥५॥

क१ प्रेप्सन्ती युवती विरूपे अहोरात्रे द्रवतः संविदाने ।

यत्र प्रेप्सन्तीरभि यन्त्यापः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥६॥

यस्मिन्त्स्तब्ध्वा प्रजापतिर्लोकान्त्सर्वाँ अधारयत् ।

स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥७॥

यत्परममवमं यच्च मध्यमं प्रजापतिः ससृजे विश्वरूपम् ।

कियता स्कम्भः प्र विवेश तत्र यन्न प्राविशत् कियत्तद् बभूव ॥८॥

कियता स्कम्भः प्र विवेश भूतं कियद्भविष्यदन्वाशयेऽस्य ।

एकं यदङ्गमकृणोत् सहस्रधा कियता स्कम्भः प्र विवेश तत्र ॥९॥

यत्र लोकांश्च कोशांश्चापो ब्रह्म जना विदुः ।

असच्च यत्र सच्चान्तः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥१०॥

॥ ११ ॥

१५·२·१-१४

स उदतिष्ठत्स प्राचीं दिशमनु व्यचलत् ॥१॥

तं बृहच्च रथन्तरं चादित्याश्च विश्वे च देवा अनुव्यचलन् ॥२॥

बृहते च वै स रथन्तराय चादित्येभ्यश्च विश्वेभ्यश्च

देवेभ्य आ वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥३॥

बृहतश्च वै स रथन्तरस्य चादित्यानां च विश्वेषां च

देवानां प्रियं धाम भवति तस्य प्राच्यां दिशि ॥४॥

श्रद्धा पुंश्चली मित्रो मागधो विज्ञानं वासोऽहरुष्णीषं

रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥५॥

भूतं च भविष्यच्च परिष्कन्दौ मनो विपथम् ॥६॥

मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः ॥७॥

कीर्त्तिश्च यशश्च पुरःसरावैनं कीर्त्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥८॥

स उदतिष्ठत् स दक्षिणां दिशमनु व्य॑चलत् ॥९॥

तं यज्ञायज्ञियं च वामदेव्यं च यज्ञश्च यजमानश्च पशवश्चानुव्य॑चलन् ॥१०॥

यज्ञायज्ञियाय च वै स वामदेव्याय च यज्ञाय च यजमानाय

च पशुभ्यश्चा वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥११॥

यज्ञायज्ञियस्य च वै स वामदेव्यस्य च यज्ञस्य च यजमानस्य

च पशूनां च प्रियं धाम भवति तस्य दक्षिणायां दिशि ॥१२॥

उषाः पुंश्चली मन्त्रो मागधो विज्ञानं वासोऽहरुष्णीषं

रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥१३॥

अमावास्या च पौर्णमासी च परिष्कन्दौ मनो विपथम् ॥

मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः ।

कीर्तिश्च यशश्च पुरस्सरावैनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥१४॥

॥ १२ ॥ कालसूक्तम्

१९.५३.१-१०

कालो अश्वो वहति सप्तरश्मिः सहस्राक्षो अजरो भूरिरेताः ।

तमा रोहन्ति कवयो विपश्चितस्तस्य चक्रा भुवनानि विश्वा ॥१॥

सप्त चक्रान्वहति काल एष सप्तास्य नाभीरमृतं न्वक्षः ।

स इमा विश्वा भुवनान्यञ्जत् कालः स ईयते प्रथमो नु देवः ॥२॥

पूर्णः कुम्भोऽधि काल आहितस्तं वै पश्यामो बहुधा नु सन्तः ।

स इमा विश्वा भुवनानि प्रत्यङ् कालं तमाहुः परमे व्योमन् ॥३॥

स एव सं भुवनान्या भरत् स एव सं भुवनानि पर्यैत् ।

पिता सन्नभवत्पुत्र एषां तस्माद्वै नान्यत्परमस्ति तेजः ॥४॥

कालोऽमूं दिवमजनयत्काल इमाः पृथिवीरुत ।

काले ह भूतं भव्यं चेषितं ह वि तिष्ठते ॥५॥

कालो भूतिमसृजत काले तपति सूर्यः ।

काले ह विश्वा भूतानि काले चक्षुर्वि पश्यति ॥६॥

काले मनः काले प्राणः काले नाम समाहितम् ।

कालेन सर्वा नन्दन्त्यागतेन प्रजा इमाः ॥७॥

काले तपः काले ज्येष्ठं काले ब्रह्म समाहितम् ।

कालो ह सर्वस्येश्वरो यः पितासीत्प्रजापतेः ॥८॥

तेनेषितं तेन जातं तदु तस्मिन्प्रतिष्ठितम् ।

कालो ह ब्रह्म भूत्वा बिभर्ति परमेष्ठिनम् ॥९॥

कालः प्रजा असृजत कालो अग्रे प्रजापतिम् ।

स्वयम्भूः कश्यपः कालात् तपः कालादजायत ॥१०॥

॥ १३ ॥

२०· १२७· १-३

इदं जना उप श्रुत नराशंसस्तविष्यते ।

षष्टिं सहस्रा नवतिं च कौरम आ रुशमेषु दद्महे ॥१॥

उष्ट्रा यस्य प्रवाहणो वधूमन्तो द्विर्दश ।

वर्ष्मा रथस्य नि जिहीडते दिव ईषमाणा उपस्पृशः ॥२॥

एष इषाय मामहे शतं निष्कान् दश स्रजः ।

त्रीणि शतान्यर्वतां सहस्रा दश गोनाम् ॥३॥

## ७। वाररुचो निरुक्तसमुच्चयः

दैव्याः शमितार आरभध्वम् उत मनुष्याः । उप नयत मेध्या दुरः । आशासाना मेधपतिभ्यां मेधम् । प्रास्मा अग्निं भरत । स्तृणीत बर्हिः । अन्वेनं माता मन्यताम् । अनु पिता । अनु भ्राता सगर्भ्यः । अनु सखा सयूथ्यः । उदीचीनाँ अस्य पदो निधत्तात् । सूर्यं चक्षुर्गमयतात् । वातं प्राणमन्ववसृजतात् । दिशः श्रोत्रम् । अन्तरिक्षमसुम् । पृथिवीं शरीरम् । एकधास्य त्वचमाच्छ्यतात् । पुरा नाभ्या अपिशसो वपामुत्खिदतात् । अन्तरेवोष्माणं वारयतात् । श्येनमस्य वक्षः कृणुतात् । प्रशसा बाहू । शला दोषणी । कश्यपेवांसा । अच्छिद्रे श्रोणी । कवषोरू । स्रेकपर्णाष्ठीवन्ता । षड्विंशतिरस्य वङ्क्रयः । ता अनुष्ठ्योच्च्यावयतात् । गात्रं गात्रमस्यानूनं कृणुतात् । ऊवध्यगोहं पार्थिवं खनतात् । अस्ना रक्षस्संसृजतात् । वनिष्ठुमस्य मा राविष्टोरूकं मन्यमानाः । नेद्वस्तोके तनये रविता रवच्छमितारः । अध्रिगो शमीध्वम् । सुशमि शमीध्वम् । शमीध्वमध्रिगो ॥१॥ तै० ४-१३-४ ।

एवा पु ब्रवाणि तेऽग्न इत्थेतरा गिरः ।

एभिर्वर्धास इन्दुभिः ॥२॥ ऋ० स० ६-१६-१६

नकिरिन्द्र त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन् ।

नकिरेवा यथा त्वम् ॥३॥ ऋ० स० ४-३०-१ ।

मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य ।

नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥४॥

ऋ० स० १०-११७-६ ।

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।

अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥५॥

ऋ० स० १-१६४-४१ ।

तच्चक्षुर्देवहितं शुक्रमुच्चरत् ।

पश्येम शरदः शतं जीवेम शरदः शतम् ॥६॥

ऋ० स० ७-६-१६ ।

बभ्रुरेको विषुणः सूनरो युवाञ्ज्यङ्क्ते हिरण्ययम् ।

योनिमेक आ ससाद द्योतनोऽन्तर्देवेषु मेधिरः ॥७॥

ऋ० स० ८-१६-१ ।

अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सं जयामि शश्वतः ।

मां हवन्ते पितरं न जन्तवोऽहं दाशुषे वि भजामि भोजनम् ॥८॥

ऋ० स० १०-४८-१ ।

पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि यत्र भुवनस्य नाभिः ।

पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम ॥९॥

ऋ० स० १-१६४-३४ ।

इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः ।

अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम ॥१०॥

ऋ० स० १-१६४-३५ ।

इदमापः प्र वहत यत्किञ्च दुरितं मयि ।

यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥११॥

ऋ० स० १०-६-८ ।

इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।

शिक्षा णो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥१२॥

ऋ० स० ७-३२-२६ ।

यदिन्द्राहं यथा त्वमीशीय वस्व एक इत् ।

स्तोता मे गोषखा स्यात् ॥१३॥

ऋ० स० ८-१४-१ ।

सुदेवो अद्य प्रपतेदनावृत्परावतं परमां गन्तवा उ ।

अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः ॥१४॥

ऋ० स० १०-९५-१४ ।

यत्ते यमं वैवस्वतं मनो जगाम दूरकम् ।

तत्त आ वर्तयामसीह क्षयाय जीवसे ॥१५॥

ऋ० स० १०-५८-१ ।

प्रयाजान्मे अनुयाजांश्च केवलानूर्जस्वन्तं हविषो दत्त भागम् ।

घृतञ्चापां पुरुषं चोषधीनामग्नेश्च दीर्घमायुरस्तु देवाः ॥१६॥

ऋ० स० १०-५१-८ ।

तव प्रयाजा अनुयाजाश्च केवल ऊर्जस्वन्तो हविषः सन्तु भागाः ।

तवाग्ने यज्ञोऽयमस्तु सर्वस्तुभ्यं नमन्तां प्रदिशश्चतस्रः ॥१७॥

ऋ० स० १०-५१-९ ।

ओ चित्सखायं सख्यावबृत्यां तिरः पुरू चिदर्णवं जगन्वान् ।

पितुर्नपातमा दधीत वेधा अधि क्षमि प्रतरं दीध्यानः ॥१८॥

ऋ० स० १०-१०-१ ।

सोमं राजानमवसेऽग्निं गीर्भिर्हवामहे ।

आदित्यान्विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥१९॥

ऋ० स० १०-१४१-३ ।

भोजायाश्वं सम्मृजन्त्याशुं भोजायास्ते कन्या३ शुम्भमाना ।

भोजस्येदं पुष्करिणीव वेश्म परिष्कृतं देवमानेव चित्रम् ॥२०॥

ऋ० स० १०-१०७-१०

अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य ।

अधा स वीरैर्दशभिर्वि यूया यो मा मोघं यातुधानेत्याह ॥२१॥

ऋ० सं० ७-१०४-१५ ।

प्रति चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम् ।

रक्षोभ्यो वधमस्यतमशनिं यातुमद्भ्यः ॥२२॥

ऋ० सं० ७-१०४-२५ ।

इह मद एव मघवन्निन्द्र ते श्वः ॥२३॥

न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः ॥

आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास ॥२४॥

ऋ०सं०१०-१२९-२ ।

एता अश्वा आप्लवन्ते प्रतीपं प्रातिसत्वनम् ॥

तासामेका हरिक्निका हरिक्निके किमिच्छसि ॥२५॥

अ०सं० २०-१२९-१ ।

किमयमिदमाह ॥२६॥

आ०श्रौ०सू० ८-३-३ ।

कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम ॥

को नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरञ्च ॥२७॥

ऋ० सं० १-२४-१ ।

किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् ॥

आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन्रन्धया नः ॥३०॥

ऋ० सं० ३-५३-१४ ।

यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव ॥

तमा हरामि निर्ऋतेरुपस्थादस्पार्षमेनं शतशारदाय ॥३१॥

ऋ० सं० १०-१६१-२ ।

---

# संयोजनम्

## १६९तमप्रश्नारम्भे

कलविङ्को यदन्नादनꣳ स तित्तिरिस्तस्याञ्जलिना ब्रह्महत्यामुपागृह्णात्ताꣳ संवत्सरमबिभस्तं भूतान्यभ्यक्रोशन्ब्रह्महन्निति स पृथिवीमुपासीददस्यै ब्रह्महत्याय तृतीयं प्रतिगृहाणेति साब्रवीद्वरं वृणै खातात्पराभविष्यन्ती मन्ये ततो मा परा भूवमिति पुरा ते ॥२॥ संवत्सरादपिरोहादित्यब्रवीत्तस्मात्पुरा संवत्सरात्पृथिव्यै खातमपि रोहति वारेवृतꣳ ह्यस्यै तृतीयं ब्रह्महत्यायै प्रत्यगृह्णात्तत्स्वकृतमिरिणमभवत्तस्मादाहिताग्निः श्रद्धादेवः स्वकृत इरिणे नावस्येद्ब्रह्महत्यायै ह्येष वर्णः स वनस्पतीनुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णीतेति तेऽब्रुवन्वरं वृणामहै वृक्णात् ॥३॥ परा भविष्यन्तो मन्यामहे ततो मा परा भूमेत्याव्रश्चनाद्वो भूयाꣳस उत्तिष्ठानित्यब्रवीत्तस्मादाव्रश्चनाद् वृक्षाणां भूयाꣳस उत्तिष्ठन्ति वारे वृतꣳ ह्येषां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्स निर्यासोऽभवत्तस्मान्निर्यासस्य नाश्यं ब्रह्महत्यायै ह्येष वर्णोऽथो खलु य एव लोहितो यो वाऽऽव्रश्चनान्निर्येषति तस्य नाश्यम् ॥४॥ काममन्यस्य स स्त्रीषꣳसादमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णीतेति ता अब्रुवन्वरं वृणामहा ऋत्वियात्प्रजां

# संशोधनम्

| अशुद्धम् | शुद्धम् | पत्रम् | पङ्क्तिः |
|---|---|---|---|
| ज्यष्ठ्याय | ज्यैष्ठ्याय | १५ | ४ |
| रकिणः | रर्किणः | १६ | १० |
| न्यवता | न्यर्वता | २२ | १५ |
| त्वादातम् | त्वाऽदातम् | ३० | ७ |
| र्दवहूतिभि | देवहूतिभिः | ३७ | ११ |
| रथ | रथे | ३८ | ५ |
| अनर्वं | अनर्वम् | ७४ | १२ |
| मातृ | मार | ७८ | १ |
| अस्रे धाद्ध | अस्रे धद्धि | १११ | ४ |
| नेदिठं | नेदिष्ठम् | ११२ | २ |
| च्छक कु | च्छकत्कु- | ११८ | ३ |
| ग्वदास | ग्वदासि | १२८ | ८ |
| ममुष्म | ममुष्मै | १४० | ४ |
| चनॅ | चैनॅ | १५२ | ६ |
| वेहद्वृष्णावो | वेहद्वैष्णावो | १५७ | ६ |
| धात | धाते | १५८ | १ |
| शग्या | शम्या | १६४ | ८ |

| अशुद्धम् | शुद्धम् | पत्रम् | पङ्क्तिः |
|---|---|---|---|
| ।<br>स्थापा | ।<br>स्थापा | १६५ | १५ |
| ।<br>तस्य | ।<br>तस्यैं | १६६ | १० |
| ओ३म् | ३ २<br>ओऽ२म् | १८२ | १६ |
| ५ ४<br>नश्वाऽ३ | ४<br>नश्वाऽ३ | १८२ | १६ |
| १<br>स । | १<br>सा ॥ | १८२ | १६ |
| ख्वा | १<br>ख्वा | १८३ | १ |
| ३<br>३मा३ | २<br>३मा३ | १८३ | २ |
| १<br>वा२तें | १<br>वाऽ२तौंऽ३५ | १८३ | १ |
| र र<br>औ३होहाइ | २ रर<br>औऽ३होहाइ | १८३ | १ |
| १ र र २<br>ओ३होहाइ | २ र २<br>औऽ३होहाइ | १८३ | ५ |

---

# १। ऋक्संहिता-भाष्यम्

॥ १ ॥

१-१

स चाग्निमीळ इत्यारभ्य यथा वः सुसहासतीत्यन्तोऽष्टकाण्डैर्दशमण्डलैश्चतुःषष्ट्यध्यायैः पञ्चाशीत्यनुवाकैरीषदधिकसहस्रसूक्तैरीषदधिकद्विसहस्रवर्गैरीषदधिकाभिर्दशसहस्रसंख्याकाभिर्ऋग्भिश्चोपेतः। तस्य च ग्रन्थस्य कृत्स्नस्याप्याम्नातक्रमेणैव सामान्यविनियोगो ब्रह्मयज्ञजपादौ पूर्वमेवाभिहितः। विशेषविनियोगस्तु तत्तत्क्रतौ सूत्रकारेण प्रदर्शितः। स च त्रिविधः। सूक्तविनियोगस्तृचादिविनियोग एकैकस्या ऋचो विनियोगश्चेति। तत्राग्निमीळ इति सूक्तं प्रातरनुवाक आग्नेये क्रतौ विनियुक्तम्। स विनियोग आश्वलायनेन चतुर्थाध्यायस्य त्रयोदशखण्डे सूत्रितः। अग्ना नो अग्न इति षळग्निमीळेऽग्नि दूतमिति। तत्र हीनपादग्रहणात्सूक्तनिश्चयः। सूक्तं सूक्तादौ हीने पादे (आ० श्रौ० १-१) इति परिभाषितत्वात्। तस्मिन्सूक्ते प्रथमाया ऋचो द्वितीयस्यां पवमानेष्टौ स्विष्टकृतो याज्यात्वेन विनियोगः। स च द्वितीयाध्यायस्य प्रथमखण्डे सूत्रितः। साह्वान्विश्वा अभियुजोऽग्निमीळे पुरोहितमिति संयाज्ये (आ० श्रौ० २-१) इति। तत्र कृत्स्नपादग्रहणादृगित्यवगम्यते। ऋचं पादग्रहणे (आ० श्रौ० १-१) इति परिभाषितत्वात्। तथा संयाज्ये इत्युक्ते सौविष्टकृती प्रतीयाद् (आ० श्रौ० १-१) इति परिभाषितत्वात्स्विष्टकृत्सम्बन्धनिश्चयः। तत्रापि द्वितीयमन्त्रत्वेनोदाहृतत्वाद्याज्यात्वम्। यद्यपि साह्वानित्यनया पुरोऽनुवाक्ययैव देवताया अनुस्मरणरूपः संस्कारः सिद्धस्तथापि याज्यानुवाक्ययोः समुच्चयो द्वादशेऽध्याये चतुर्थपादे मीमांसितः। पुरोऽनुवाक्यया याज्या विकल्प्या वा समुच्चिता। विकल्प्यान्यतरेणैव देवतायाः प्रकाशनात्॥ पुरेवाद्यः समाख्यानाद् वचनाच्च समुच्चयः॥ देवताप्रकाशनकार्यस्यैकत्वाद्युग्मयोर्यथा विकल्पस्तथैकयुग्मगतयोरेतयोरिति चेन्मैवम्। पुरोऽनुवाक्येति समाख्याया उत्तरकालीनयाज्यामन्तरेणानुपपत्तेः। किञ्च पुरोऽनुवाक्यामनूच्य याज्यया जुहोतीति प्रत्यक्षवचनेन देवतोपलक्षणहविःप्रदानकार्यं भेदोक्तिपुरस्सरं साहित्यं विधीयते। तस्मात्समुच्चय इति।

एतच्चाग्निमित्यादिसूक्तं नवर्चम्। (अग्नि नव मधुच्छन्दा वैश्वामित्र इत्यनुक्रमणिकायामुक्तत्वात्। विश्वामित्रपुत्रो मधुच्छन्दोनामकस्तस्य सूक्तस्य द्रष्टृत्वात्तदीय ऋषिः।) ऋष गतावित्ति धातुः। सर्वधातुभ्य इन् (उ० ४-११९) इतीन्। इगुपधात्कित् (उ० ४-२-७)। वेदप्राप्त्यर्थं तपोऽनुतिष्ठतः पुरुषान्स्वयंभूर्वेदपुरुषः प्राप्नोत्। तथा च श्रूयते। अजान्ह वै पृश्नींस्तपस्यमानान्ब्रह्म स्वयम्भ्वभ्यानर्षत्त ऋषयोऽभवन्निति (तै० आ० २-९)। तथातीन्द्रियस्य वेदस्य परमेश्वरानुग्रहेण प्रथमतो दर्शनादृषित्वमित्यभिप्रेत्य स्मर्यते। युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा॥ इति। ऋष्यादिज्ञानाभावे प्रत्यवायः स्मर्यते। अविदित्वा ऋषिं छन्दो दैवतं योगमेव च। योऽध्यापयेज्जपेद्वाऽपि पापीयाञ्जायते तु सः॥ ऋषिच्छन्दोदैवतानि

ब्राह्मणार्थं स्वराद्यपि । अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते ॥ इति । वेदनविधिश्च स्मर्यते स्वरो वर्णोऽक्षरं मात्रा विनियोगोऽर्थ एव च । मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे ॥ इति । अग्निमित्यादिसूक्तस्य च्छन्दोऽनुक्रमणिकायां यद्यप्यत्र नोक्तं तथापि परिभाषायामेवमुक्तम् । आदौ गायत्रं प्राग्घिरण्यस्तूपाद्" ( अनु० १२-१४ ) इति । हिरण्यस्तूप ऋषिर्येषां मन्त्राणां वक्ष्यते ततः प्राचीनेषु मन्त्रेषु सामान्येन गायत्रं छन्द इत्यर्थः । पुरुषस्य पापसम्बन्धं वारयितुमाच्छादकत्वाच्छन्द इत्युच्यते । तच्चारण्यकाण्डे समाम्नायते । ( ऐ० आ० २-५ ) छादयन्ति ह वा एनं छन्दांसि पापात्कर्मण इति । अथवा चीयमानाग्निसन्तापस्याच्छादकत्वाच्छन्दः । तच्च तैत्तिरीया ( तै० स० ५-६-६-१ ) आमनन्ति । प्रजापतिरग्निमचिनुत । स क्षुरपविर्भूत्वातिष्ठत् । तं देवा बिभ्यतो नोपायन् । ते छन्दोभिरात्मानं छादयित्वोपायन् । तच्छन्दसां छन्दस्त्वमिति । यद्वाऽपमृत्युं वारयितुमाच्छादयतीति च्छन्दः । तदपि छान्दोग्योपनिषद्याम्नातम् ( छा० उ० १-४-२ ) देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशंस्ते छन्दोभिरात्मानमाच्छादयन्यदेभिराच्छादयंस्तच्छन्दसां छन्दस्त्वमिति । तथा द्योतनार्थदीव्यतिधातुनिमित्तो देवशब्द इत्येतदाम्नायते । "दिवा वै नोऽभूदिति तद्देवानां देवत्वम्" (तै० ब्रा० २-२-९-६) इति । अतो दीप्यतीति देवः । मन्त्रेण द्योत्यत इत्यर्थः । अस्मिन्सूक्ते स्तूयमानत्वादग्निर्देवः । तथा चानुक्रमणिकायामुक्तम्-मण्डलादिष्वाग्नेयमैन्द्राद् ( अनु० १२-१२ ) इति । तस्य सूक्तस्य प्रथमामृचं भगवान् वेदपुरुष आह ।

अग्निनामकं देवमीळे । स्तौमि । ईड स्तुतौ इति धातुः । डकारस्य ळकारो बह्वृचाध्येतृसंप्रदायप्राप्तः । तथा च पठ्यते । अज्मध्यस्थडकारस्य ळकारं बह्वृचा जगुः । अज्मध्यस्थढकारस्य ळ्हकारं वै यथाक्रमम् । इति । मन्त्रस्य होत्रा प्रयोज्यत्वात् अहं होता स्तौमीति लभ्यते । कीदृशमग्निम् । यज्ञस्य पुरोहितम् । यथा राज्ञः पुरोहितस्तदभीष्टं सम्पादयति तथाग्निरपि यज्ञस्यापेक्षितं होमं संपादयति । यद्वा यज्ञस्य सम्बन्धिनि पूर्वभागे आहवनीयरूपेणावस्थितम् । पुनः कीदृशम् । देवं दानादिगुणयुक्तम् । पुनः कीदृशम् । होतारमृत्विजम् । देवानां यज्ञे होतृनामक ऋत्विगग्निरेव । तथा च श्रूयते (ऐ० ब्रा० ३-१४) । अग्निर्वै देवानां होतेति । पुनरपि कीदृशम् । रत्नधातमम् । यागफलरूपाणां रत्नानामतिशयेन धारयितारम् । पोषयितारं वा । अत्राग्निशब्दस्य यास्को बहुधा निर्वचनं दर्शयति ( नि० ७-१४ ) । अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मादग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गं नयति सन्नममानोऽक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिरितादक्ताद्दग्धाद्वा नीतात्स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परस्तस्यैषा भवत्यग्निमीळ इति । अस्यायमर्थः । सामान्येन सर्वदेवतानां लक्षणस्याभिहितत्वादनन्तरं यतः प्रतिपदं विशेषेण वक्तव्यत्वमाकाङ्क्षितमतोऽनुक्रमेण वक्ष्यामः । तत्र पृथिवीलोके स्थितोऽग्निः प्रथमं व्याख्यायते । कस्मात्प्रवृत्तिनिमित्तादग्निशब्देन देवताभिधीयत इति प्रश्नस्याग्रणीरित्यादिकमुत्तरम् । देवसेनामग्रं स्वयं नयतीत्यग्रणीः । इदमेकमग्निशब्दस्य प्रवृत्तिनिमित्तम् । तथा च ब्राह्मणान्तरम् । अग्निर्वै देवानां सेनानीरिति । एतदेवाभिप्रेत्य बह्वृचा मन्त्रब्राह्मणे आमनन्ति । अग्निर्मुखं प्रथमो देवतानामिति मन्त्रः ( ऐ० ब्रा० १-४ ) । अग्निर्वै देवानामवम इति ब्राह्मणम् ( ऐ० ब्रा० १-१ ) । तथा तैत्ति-

रीयाश्चामनन्ति (तै० ब्रा० २-४-३-३)। अग्निरग्रे प्रथमो देवतानामिति मन्त्रः। अग्निरवमो देवतानामिति च। वाजसनेयिनस्त्वेवमामनन्ति। स वा एषोऽग्रे देवतानामजायत तस्मादग्निर्नामेति। यज्ञेष्वग्निहोत्रेष्टिपशुसोमरूपेष्वग्रं पूर्वदिग्वर्त्याहवनीयदेशं प्रति गार्हपत्यात्प्रणीयत इति द्वितीयं प्रवृत्तिनिमित्तम्। सन्नममानः सम्यक् स्वयमेव प्रह्वीभवन्नङ्गं स्वकीयशरीरं नयति काष्ठदाहे हविष्पाके च प्रेरयतीति तृतीयं प्रवृत्तिनिमित्तम्। स्थूलष्ठीवनामकस्य महर्षेः पुत्रो निरुक्तकारः कश्चिदक्नोपन इत्यग्निशब्दं निर्वक्ति। तत्र न क्नोपयतीत्युक्तं न स्नेहयति किन्तु काष्ठादिकं रूक्षयतीत्युक्तं भवति। शाकपूणिनामको निरुक्तकारो धातुत्रयादग्निशब्दनिष्पत्तिं मन्यते। इत इण् गताविति धातुः। अक्तोऽञ्जू व्यक्तिम्रक्षणकान्तिगतिष्विति धातुः। दग्धो दह भस्मीकरण इति धातुः। नीतो णीञ् प्रापण इति धातुः। अग्निशब्दो ह्यकारगकारनिशब्दानपेक्षमाण एतिधातोरुत्पन्नादयनशब्दादकारमादत्ते। अनक्तिधातुगतस्य ककारस्य गकारादेशं कृत्वा तमादत्ते। यद्वा दहतिधातुनिष्पन्नाद्दग्धशब्दाद्गकारमादत्ते। नीरिति नयतिधातुः। स च ह्रस्वो भूत्वा परो भवति। ततो धातुत्रयं मिलित्वाग्निशब्दो भवति। यज्ञभूमिं गत्वा स्वकीयमङ्गं नयति काष्ठदाहे हविष्पाके च प्रेरयतीति समुदायार्थः। तस्याग्निशब्दार्थस्य देवताविशेषस्य प्राधान्येन स्तुतिदर्शनार्थमग्निमीळ इत्यृग् भवतीति। तामेतामृचं यास्क एवं व्याख्यातवान्। अग्निमीळेऽग्निं याचामीळिरध्येषणाकर्मा पूजाकर्मा वा पुरोहितो व्याख्यातो यज्ञस्य देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देवः सा देवता होतारं ह्वातारं जुहोतेर्होतेत्यौर्णवाभः। रत्नधातमं रमणीयानां धनानां दातृतमम् (नि० ७-१५) इति। अस्यायमर्थः। ईडतिधातोः स्तुत्यर्थत्वं प्रसिद्धम्। धातूनामनेकार्थत्वमितिन्यायमाश्रित्य याच्ञाध्येषणापूजा अप्यत्रोचितत्वात्तदर्थतया व्याख्याताः। पुरोहितशब्दो द्वितीयेऽध्याये (नि० २-१२) यद्देवापिः शन्तनवे पुरोहित इत्येतामृचमुदाहृत्य पुर एनं दधतीति व्याख्यातः। तैत्तिरीयाश्च पौरोहित्ये स्पर्धमानस्य पश्वनुष्ठानं विधाय तत्फलत्वेन पुर एनं दधत इत्यामनन्ति (तै० सं० २-१-२-६)। देवशब्दो दानदीपनद्योतनानामन्यतममर्थमाचष्टे। यज्ञस्य दाता दीपयिता द्योतयितायमग्निरित्युक्तं भवति। दीपनद्योतनयोरर्थैकत्वेऽप्यस्ति धातुभेदः। यद्यप्यग्निः पृथिवीस्थानस्तथापि देवान्प्रति हविर्वहनाय द्युस्थानो भवति। देवशब्ददेवताशब्दयोः पर्यायत्वान्मन्त्रप्रतिपाद्या काचिदग्निव्यतिरिक्ता देवता नान्वेषणीया। होतृशब्दस्य ह्वयतिधातोरुत्पन्नत्वेन देवानामाह्वातारमिति। और्णवाभनामकस्तु मुनिर्जुहोतिधातोरुत्पन्नो होतृशब्द इति मन्यते। अग्नेश्च होतृत्वं होमाधिकरणत्वेन द्रष्टव्यम्। रत्नशब्दो द्वितीयाध्याये (निघ० २-१०) मघमित्यादिष्वष्टाविंशतौ धननामसु पठितः। रमणीयत्वाद्रत्नत्वम्। दधातिधातुरत्र दानार्थवाचीति। तदिदं निरुक्तकारस्य यास्कस्य मन्त्रव्याख्यानम्। अथ व्याकरणप्रक्रियोच्यते। अगिधातोर्गत्यर्थाद् अङ्गेर्नलोपश्च (उ० ४-५१) इत्यौणादिकसूत्रेण निप्रत्ययः। इदित्वान्नुमागमेन प्राप्तस्य नकारस्य लोपश्च भवति। अङ्गति स्वर्गं गच्छति हविर्नेतुमित्यग्निः। तत्र धातोः (पा० ६-१-१६२) इत्यकार उदात्तः। आद्युदात्तश्च (पा० ३-१-३) इति प्रत्ययगत इकारोऽप्युदात्तः। अनुदात्तं पदमेकवर्जम् (पा० ३-१-१२५) इति द्वयोरन्यतरमुदात्तमवशेष्येतरस्यानुदात्तत्वं प्राप्तम्। तत्र धातुस्वरे प्रथमतोऽवस्थिते सति पश्चादुपदिश्यमानः

प्रत्ययस्वरोऽवशिष्यते। सति शिष्टः स्वरो बलीयान् ( पा० वा० ६-१-१५२) इति हि न्यायः। ततोऽन्तोदात्तमग्निप्रातिपदिकम्। अनुदात्तौ सुप्पितौ (पा० ३-१-४) इत्यमित्येतद्द्वितीयैकवचनमनुदात्तम्। तस्यामि पूर्वः ( पा० ६-१-१०७ ) इति यत्पूर्वरूपं तदुदात्तम्। एकादेश उदात्तेनोदात्तः (पा० ८-२-५) इति सूत्रितत्वात्। अग्निशब्दो धातुजन्मेतिमतेनेयं प्रक्रिया सर्वापि द्रष्टव्या। मतद्वयं यास्केन प्रदर्शितम्। नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च। न सर्वाणीति गार्ग्यो वैयाकरणानां चैके ( नि० १-१२ ) इति। गार्ग्यस्य मतेऽग्निशब्दस्याखण्डप्रातिपदिकत्वात्फिषोऽन्त उदात्तः ( फि० १-१ ) इत्यन्तोदात्तत्वम्। पूर्वोक्तेष्वग्रणीरित्यादिनिर्वचनेषु प्रकृतिप्रत्ययाद्यशेषप्रक्रिया यथोचितं कल्पनीया। एतदेवाभिप्रेत्य यास्क आह। अथ निर्वचनं तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां तथा तानि निर्ब्रूयात्। अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येनाविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयान्न त्वेव न निर्ब्रूयात् ( नि० २-१ ) इति। अस्यायमर्थः। तत्तन्निर्वचनीयपदसमूहमध्ये येष्वग्न्यादिपदेषु पूर्वोक्तरीत्या स्वरसंस्कारौ समर्थौ व्याकरणसिद्धौ स्याताम्। स्वर उदात्तादिः। संस्कारो निप्रत्ययादिः। किञ्च तौ स्वरसंस्कारौ प्रादेशिकेन गुणेनान्वितौ स्याताम्। शब्दस्यैकदेशः पूर्वोक्तोऽगिधातुः प्रदेशः। तत्र भवो गुणो गतिरूपोऽर्थः। तेनान्वितौ। तान्यग्न्यादीनि पदानि तथा व्याकरणानुसारेण निर्ब्रूयात्। तच्च निर्वचनमस्माभिः प्रदर्शितम्। अथ पूर्वोक्तवैलक्षण्येन कश्चित्स्वेन विवक्षितोऽर्थो नान्वितस्तस्मिञ्छब्देऽनुगतो न भवेत्। तस्यैव व्याख्यानमप्रादेशिके विकार इति। अग्रनयनादिरूपः क्रियाविशेषो विकारः। स च प्रदेशेनाग्निशब्दैकदेशेनात्र नाभिधीयत इत्यप्रादेशिकः। एवं सति यः पुमानर्थनित्यः स्वविवक्षितेऽर्थे नियतो निर्बन्धवान्। ब्राह्मणानुसारेण वा देवतान्तरविशेषणत्वेन योजयितुं वा सनिर्बन्धः। तदानीं स पुमान् केनचिद्वृत्तिसामान्येन स्वविवक्षितमर्थं परीक्षेत। तस्मिञ्छब्दे योजयेत्। वृत्तिः क्रिया। तद्रूपेण सामान्यं सादृश्यम्। अस्माभिश्चाग्रनयनादिरूपं क्रियात्वसामान्यमुपजीव्याग्रणीत्वाद्यर्थो योजितः। तदिदं यास्काभिमतं निर्वचनम्। स्थौलाष्ठीविरक्षरसाम्यान्निर्वक्ति। अक्नोपनशब्दस्यादौ निषेधार्थकमकाररूपमक्षरं विद्यते। अग्निशब्दस्याप्यादावकारोऽस्ति। तदिदमक्षरसाम्यम्। शाकपूणिस्तु वर्णसाम्यान्निब्रूते। दग्धशब्दाग्निशब्दयोर्गकारवर्णेन साम्यम्। सर्वथापि निर्वचनं न त्याज्यमिति। ईळ इत्येतत्पदं कृत्स्नमप्यनुदात्तम्। तिङ्ङतिङः ( पा० ८-१-२८) इति अतिङन्तादग्निशब्दात्परस्येळ इत्यस्य तिङन्तस्य निघातविधानात्। पदद्वयसंहिताकाले ळीकारस्य धातुगतस्योदात्तादनुदात्तस्य स्वरितः ( पा० ८-४-६६ ) इति स्वरितत्वम्। तस्मादूर्ध्वभाविन एकारस्य तिङ्प्रत्ययस्वरूपस्य स्वरितात्संहितायामनुदात्तानाम् ( पा० १-२-३९ ) इत्यैकश्रुत्यं प्रचयनामकं भवति। पुरःशब्दोऽन्तोदात्तः। अयं पुरोभवः ( तै० सं० ४-३-२ ) इत्यत्र तथैवाम्नातत्वात्। पूर्वाधरावराणामसि पुरधवश्चैषाम् ( पा० ५-३-३९ ) इति पूर्वशब्दादसिप्रत्ययः पुरादेशश्च। ततोऽत्र प्रत्ययस्वरः। धाञो निष्ठायां दधातेर्हिः ( पा० ७-४-४२ ) इति ह्यादेशे सति प्रत्ययस्वरेणान्तोदात्तो हितशब्दः। तत्र समासान्तोदात्तत्वे प्राप्ते तदपवादत्वेन तत्पुरुषे तुल्यार्थ० (पा० ६-२-२) इत्यादिना अव्ययपूर्वपदप्रकृतिस्वरत्वम्। यद्वा पुरोऽव्ययम् (पा० १-४-६७) इति गतिसञ्ज्ञायां गतिरनन्तरः ( पा० ६-२-४९ ) इति पूर्वपदप्रकृतिस्वरत्वम्। तत ओकार

उदात्तः। अवशिष्टानामनुदात्तस्वरितप्रचयाः पूर्ववद्द्रष्टव्याः। आद्याक्षरस्य संहितायां प्रचयप्राप्तौ उदात्तस्वरितपरस्य सन्नतरः (पा० १-२-४०) इत्यतिनीचोऽनुदात्तः। यद्यपि पदकाले हितशब्दान्तर्गतस्यैकारस्य स्वरितत्वं दुर्लभमुदात्तपरत्वाभावात्। मात्रा ह्रस्वस्तावद्वग्रहान्तरमिति (प्रा० १-३-१) प्रातिशाख्येऽवसानविधानात्। अतएव तैत्तिरीया अनुदात्तमेवाधीयते। तथापि यथा सन्धीयमानानामनेकीभवतां स्वरः। उपदिष्टस्तथा विद्यादक्षराणामवग्रहे (प्रा० ३-३-५)। इति प्रातिशाख्येऽतिदेशादिष्टसिद्धिः। यजयाच० (पा० ३-३-९०) इत्यादिना यजतेर्नङ्प्रत्यये सत्यन्तोदात्तो यज्ञशब्दः। विभक्तेः सुप्स्वरेणानुदात्तत्वे सति पश्चात्स्वरितत्वम्। देवशब्दः पचाद्यजन्तः। स च फिट्स्वरेण प्रत्ययस्वरेण चित्स्वरेण वान्तोदात्तः। ऋत्विक्शब्द ऋतौ यजतीति विग्रहे ऋत्विग्दधृक० (पा० ३-२-५९) इति निपातितः। गतिकारकोपपदात्कृत् (पा० ६-२-१३९) इति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। विभक्तिस्वरः पूर्ववत्। होतृशब्दस्तृन्प्रत्ययान्तः। नित्स्वरेणाद्युदात्तः। स्वरितप्रचयौ पूर्ववत्। रत्नशब्दो नब्विषयस्यानिसन्तस्य (फि० २-३) इत्याद्युदात्तः। तथाचाम्नायते रत्नं धातेति। रत्नानि दधातीति विग्रहः। समासत्वादन्तोदात्तो रत्नधाशब्दः। यद्वा कृदुत्तरपदप्रकृतिस्वरः। तमप्प्रत्ययस्य पित्स्वरेणानुदात्तत्वे सति स्वरितप्रचितौ। संहितायामाद्यक्षरस्य प्रचयो द्वितीयाक्षरस्य सन्नतरत्वम्। वेदावतार आद्याया ऋचोऽर्थश्च प्रपञ्चितः। विज्ञातं वेदगाम्भीर्यमथ सङ्क्षिप्य वर्ण्यते ॥१॥

आग्नेयसूक्तस्य द्वितीयामृचमाह। अयमग्निः पूर्वेभिः पुरातनैर्भृग्वङ्गिरःप्रभृतिभिर्ऋषिभिरीड्यः स्तुत्यो नूतनैस्तैदानीन्तनैरस्माभिरपि स्तुत्यः। सोऽग्निः स्तुतः सन्निह यज्ञे देवान्हविर्भुज आ वक्षति। वह प्रापण इति धातुः। आवहत्वित्यर्थः। पूर्वेभिरित्यत्र बहुलं छन्दसि (पा० ७-१-१०) इति भिस ऐसादेशाभावः। पुर्व पर्व मर्व पूरणे इति धातुः। पूर्वतिधातोरन्प्रत्यय औणादिकः। इन्प्रत्ययान्त ऋषिशब्द ऋष्यन्धक० (पा० ४-१-११४) इति निपातनाल्लघूपधगुणाभावः। किल्प्रत्ययो वात्र ज्ञेयः। तौ शब्दौ नित्स्वरेणाद्युदात्तौ। ईड्यशब्दस्य ण्यत्प्रत्ययान्तत्वात् तित्स्वरितम् (पा० ६-१-१८५) इति स्वरिते शेषानुदात्तत्वे च प्राप्ते तदपवादत्वेनेडवन्द० (पा० ६-१-२१४) इत्यादिना आद्युदात्तत्वम्। नवस्य नू त्नप्तनप्खाश्च (पा० वा ५-४-३०) इति वार्तिकेन नवस्य नू इत्यादेशस्तनन्प्रत्ययश्च महावार्तिके विहितः। ततो नित्स्वरेणाद्युदात्तः। अवशिष्टस्वरा अग्न्यादिषु नूतनान्तेषु पूर्ववदुन्नेयाः। उतशब्दो यद्यपि विकल्पार्थे प्रसिद्धस्तथापि निपातत्वेनानेकार्थत्वादौचित्येनात्र समुच्चयार्थो द्रष्टव्यः। उच्चावचेष्वर्थेषु निपतन्तीति निपातत्वम्। तर्हि निपाता आद्युदात्ताः (फि० ४-१२) इत्युकारस्योदात्तः प्राप्त इति चेन्न। प्रातःशब्दवन्तोदात्तत्वात्। यथा प्रातःशब्दोऽन्तोदात्तत्वेन स्वरादिषु पठितः एवमुतशब्दस्यापि पाठो द्रष्टव्यः। स्वरादेराकृतिगणत्वात्। यद्वा एवमादीनामन्तः (फि० ४-१४) इत्यन्तोदात्तः। स इत्यत्र फिट्स्वरः। देवशब्दः पूर्ववत्। देवानित्यस्य नकारस्य संहितायां दीर्घादटि० (पा० ८-३-९) इति रुत्वम्। अत्रानुनासिकः० (पा० ८-३-२) इत्यनुवृत्तौ

आतोऽटि नित्यम् ( पा० ८-३-३ ) इत्याकारः सानुनासिकः। भोभगो० ( पा० ८-३-१७ ) इति रोर्यकारः। स च लोपः शाकल्यस्य ( पा० ८-३-१९ ) इति लुप्यते। तस्यासिद्धत्वान्न पुनः सन्धिकार्यम्। आङो निपातत्वादाद्युदात्तत्वम्। इदमो ह्प्रत्यये सति निष्पन्नत्वाद् इहशब्दे प्रत्ययस्वरः। वहतिधातोर्लोडर्थे छान्दसो लृट्। तत्र स्यप्रत्ययगतस्य यकारस्य लोपोऽपि छान्दसः। यद्वा लेटि सिब्बहुलम्० ( पा० ३-१-३४ ) इति सिप्प्रत्ययः। लेटोऽडाटौ ( पा० ३-४-९४ ) इत्यडागमश्च। ततो वक्षतीति सम्पद्यते। तस्य तिङन्तत्वान्निघातः। संहितास्वराः पूर्ववत् ॥२॥

(आधाने तृतीयेष्टौ प्रथमाज्यभागस्यानुवाक्या सूक्तगता तृतीया।) तां तृतीयामृच-माह। योऽयं होत्रा स्तुत्योऽग्निस्तेनाग्निना निमित्तभूतेन यजमानो रयिं धनमश्नवत्। प्राप्नोति। कीदृशं रयिम्। दिवेदिवे पोषमेव। प्रतिदिनं पुष्यमाणतया वर्द्धमानमेव। नतु कदाचिदपि क्षीयमाणम्। यशसम्। दानादिना यशोयुक्तम्। वीरवत्तमम्। अतिशयेन पुत्रभृत्यादिवीरपुरुषोपेतम्। सति हि धने पुरुषाः सम्पद्यन्ते। रयिशब्दो मघमित्यादि-धननामसु ( निघ० २-१० ) पठितः। तत्र फिट्स्वरः। अश्नोतेर्धातोर्लेटि व्यत्ययेन तिप्। इतश्च लोपः० ( पा० ३-४-९७ ) इतीकारलोपः। लेटोऽडाटौ ( पा० ३-४-९४ ) इत्यडागम। ततोऽश्नव-दिति भवति। तस्य निघातः। घञन्तत्वात् पोषशब्द आद्युदात्तः। एवशब्दस्य निपातत्वेऽप्येवमादीनामन्त ( फि० ४-१४ ) इत्यन्तोदात्तत्वम्। वकारान्ताद्दिवशब्दात्परस्याः सप्तम्याः सुपां सुलुक्० ( पा० ७-१-३९ ) इत्यादिना शेभावे सति सावेकाचः० ( पा० ६-१-१६८ ) इत्यादिना ऊडिदंपदादि० ( पा० ६-१-१७१ ) इत्यादिना वा तस्योदात्तत्वम्। नित्यवीप्सयोः ( पा० ८-१-४ ) इति द्विर्भावे सत्युत्तरभागस्यानुदात्तं च ( पा० ८-१-३ ) इत्यनुदात्तत्वम्। यशोऽस्यास्तीति विग्रहे मत्वर्थ आदिभ्योऽच् ( पा० ५-२-१२७ ) इत्यच्प्रत्ययः। चित्स्वरं व्यत्ययेन बाधित्वा मध्योदात्तत्वम्। फिट्स्वरेणान्तोदात्ताद्वीरशब्दादुत्तरयोर्मतुप्तमपोः पित्त्वादनुदात्तत्वम्। ह्रस्वनुड्भ्याम्० ( पा० ६-१-१७६ ) इति तु न। सावयवर्णान्तत्वात्। न गोश्वन् ( पा० ६-१-१८२ ) इति प्रतिषेधः ॥३॥

अभिप्लवषडहस्य मध्यवर्तिषूक्थ्येषु तृतीयसवने मैत्रावरुणस्याग्ने यं यज्ञमित्यादिको वर्कल्पिकोऽनुरूपस्तृचः। एतच्च सप्तमाध्याये एह्यषु इत्यादिखण्डे सूत्रितम्। अग्निं वो वृधन्त-मग्ने यं यज्ञमध्वरम् ( आ० ७-८ ) इति। तस्मिंस्तृचे या प्रथमा सा सूक्ते चतुर्थी। तामेतां चतुर्थीमृचमाह। हे अग्ने त्वं यज्ञं विश्वतः सर्वासु दिक्षु परिभूः परितः प्राप्तवानसि। स इत्। स एव यज्ञो देवेषु तृप्तिं प्रगोतुं स्वर्गं गच्छति। प्राच्यादिचतुर्दिगन्तेष्वाहवनीयमार्जालीय-गार्हपत्याग्नीध्रीयस्थानेष्वग्निरस्ति। परिशब्देन होत्रियादिधिष्ण्यव्याप्तिर्विवक्षिता। कीदृशं यज्ञम्। अध्वरम्। हिंसारहितम्। न ह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्ति। अग्निशब्दस्य पाष्ठिकमामन्त्रिताद्युदात्तत्वम्। न विद्यते ध्वरोऽस्येति बहुव्रीहौ नञ्सुभ्याम् ( पा० ६-२-१७२ ) इत्यन्तोदात्तत्वम्। विश्वत इत्यत्र तसिलः प्रत्ययस्वरत्वं बाधित्वा पूर्ववर्णस्य लिति ( पा० ६-१-१९३ ) इत्युदात्त-त्वम्। परिभूरित्यत्राव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते तदपवादत्वेन कृदुत्तरपदप्रकृति-

स्वरत्वम्। अग्नीति तिङन्तस्य यद्वृत्तान्नित्यम् (पा० ८-१-६६) इति निघाताभावः ॥४॥

पञ्चमीमृचमाह। अयमग्निर्देवोऽन्यैर्देवैर्हविर्भोजिभिः सहागमत्। अस्मिन्यज्ञे समागच्छतु। कीदृशोऽग्निः। होता। होमनिष्पादकः। कविक्रतुः। कविशब्दोऽत्र क्रान्तवचनो न तु मेधाविनाम। क्रतुः प्रज्ञानस्य कर्मणो वा नाम। ततः क्रान्तप्रज्ञः क्रान्तकर्मा वा। सत्यः। अनृतरहितः। फलमवश्यं प्रयच्छतीत्यर्थः। चित्रश्रवस्तमः। श्रूयत इति श्रवः कीर्तिः। अतिशयेन विविधकीर्तियुक्तः। कविक्रतुश्चित्रश्रवस्तम इत्यत्रोभयत्र बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरत्वम्। सत्सु साधुः सत्यः। सत्यादशपथे (पा० ५-४-६६) इत्यत्रान्तोदात्तो हरदत्तेन निपातितः। लोडन्तस्य गच्छत्वितिशब्दस्य च्छन्दत्वाभाव उकारलोपश्छान्दसः। ततो रूपं गमदिति भवति। स्पष्टमन्यत् ॥५॥

प्रथमाष्टकस्य प्रथमाध्याये प्रथमो वर्गः।

आग्नेयसूक्ते षष्ठीमृचमाह। अङ्गेत्यभिमुखीकरणार्थो निपातः। अङ्गाग्ने हे अग्ने त्वं दाशुषे हविर्दत्तवते यजमानाय तत्प्रीत्यर्थं यद्भद्रं वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि तद्भद्रं तवेत्। तवैव। सुखहेतुरिति शेषः। हे अङ्गिरोऽग्ने। एतच्च सत्यं न त्वत्र विसंवादोऽस्ति। यजमानस्य वित्तादिसम्पत्तौ सत्यामुत्तरक्रत्वनुष्ठानेनाग्नेरेव सुखं भवति। भद्रशब्दार्थं शाट्यायनिनः समामनन्ति। यद्वै पुरुषस्य वित्तं तद्भद्रं गृहा भद्रं प्रजा भद्रं पशवो भद्रमिति। अङ्गशब्दस्य निपातत्वेऽपि अभ्यादित्वादन्तोदात्तत्वम्। दाश्वान्साह्वान्० (पा० ६-१-१२) इति सूत्रेण दाशृ दाने इति धातोः क्वसुप्रत्ययो निपातितः। तत्र प्रत्ययस्वरः। आमन्त्रितस्याग्निशब्दस्य पदात्परत्वेनाष्टमिकानुदात्तत्वं न शङ्कनीयम्। ०अपादादौ (पा० ८-१-१८) इति पर्युदस्तत्वात्। ततः षाष्ठिकमाद्युदात्तत्वमेव। भद्रशब्दस्य नब्विषयत्वेन आद्युदात्तत्वप्रसक्तावपि भदि कल्याणे इति धातोरुपरि रक्प्रत्ययेन निपातनादन्तोदात्तत्वम्। अस्मिन्वाक्ये यच्छब्दप्रयोगान्निपातयद्यद्धिहन्त० (पा० ८-१-३०) इति निघाते प्रतिषिद्धे स्यप्रत्ययस्वरेण सतिशिष्टेन करिष्यसिशब्द उपान्त्योदात्तः। तवेत्यत्र युष्मदस्मदोर्ङसि (पा० ६-१-२११) इत्याद्युदात्तत्वम्। अङ्गिरा अङ्गाराः (नि० ३-१७) इति यास्कः। ऐतरेयिणोऽपि प्रजापतिदुहितृध्यानोपाख्याने समामनन्ति (ऐ० ब्रा० ३-३४) येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्निति। तस्मादङ्गिरोनामकमुनिकारणत्वादङ्गाररूपस्याग्नेरङ्गिरस्त्वम्। अत्र पदात्परत्वेनाष्टमिकानुदात्तत्वम् ॥६॥

अग्नीषोमप्रणयने उप त्वाग्ने इत्यादिकोऽनुवचनीयस्तृचः। एतच्च ब्राह्मणे (ऐ० ब्रा० १-३०) समाम्नातम् उप त्वाग्ने दिवेदिव उपप्रियं पनिप्नतमिति तिस्रश्च काम्बान्वाहेति। तस्मिंस्तृचे या प्रथमा सा सूक्ते सप्तमी। तामेतां सप्तमीमृचमाह। हे अग्ने वयमनुष्ठातारो दिवेदिवे प्रतिदिनं दोषावस्ता रात्रावहनि च धिया बुद्ध्या नमो भरन्तो नमस्कारं सम्पादयन्त उप समीपे त्वेमसि। त्वामागच्छामः। उपशब्दस्य निपातस्वरः। त्वामौ द्वितीयायाः (पा० ८-१-२३) इति युष्मच्छब्दस्यानुदात्तस्त्वादेशः। दोषाशब्दो रात्रिवाची। वस्तरित्यहर्वाची। द्वन्द्वसमासे कार्तकौजपादित्वादाद्युदात्तः। सावेकाचः० (पा० ६-१-१६८) इति धियो विभक्तिरुदात्ता। नम इति निपातः। भरन्त इत्यत्र शपः पित्त्वाच्छतु-

लसार्वधातुकत्वाच्चानुदात्तत्वे सति धातुस्वरः शिष्यते। इमसीत्यत्रेदन्तो मसिः ( पा० ७-१-४६ ) इत्यादेशो निघातश्च ॥७॥

अष्टमीमृचमाह। पूर्वमन्त्रे त्वामुपेम इत्यग्निमुद्दिश्योक्तम्। कीदृशं त्वाम्। राजन्तं दीप्यमानम्। अध्वराणां राक्षसकृतहिंसारहितानां यज्ञानां गोपां रक्षकम्। ऋतस्य सत्यस्यावश्यंभाविनः कर्मफलस्य दीदिवि पौनःपुन्येन भृशं वा द्योतकम्। आहुत्याधारमग्निं दृष्ट्वा शास्त्रप्रसिद्धं कर्मफलं स्मर्यते। स्वे दमे स्वकीये गृहे यज्ञशालायां हविर्भिर्वर्धमानम्। राजन्तं वर्धमानमित्यत्रोभयत्र पूर्ववद्धातुस्वरः शिष्यते। दीदिविशब्दस्याभ्यस्तानामादिः ( पा० ६-१-१८९ ) इत्याद्युदात्तत्वम्। दमशब्दो वृषादित्वादाद्युदात्तः ॥८॥

नवमीमृचमाह। हे अग्ने स त्वं नोऽस्मदर्थं सूपायनः शोभनप्राप्तियुक्तो भव। तथा नोऽस्माकं स्वस्तये विनाशराहित्यार्थं सचस्व समवेतो भव। तत्रोभयत्र दृष्टान्तः। यथा सूनवे पुत्रार्थं पिता सुप्रापः प्रायेण समवेतो भवति तद्वत्। अस्मच्छब्दादेशस्य न इत्येतस्यानुदात्तं सर्वम्० ( पा० ८-१-१८ ) इत्यनुदात्तम्। चादयोऽनुदात्ताः ( फि० ४-१६ ) इतीवशब्दोऽनुदात्तः। इवेन नित्यसमासः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् ( पा० वा० २-१-४ ) इति समस्तः पितेवशब्दो मध्योदात्तः। शोभनमुपायनं यस्येति बहुव्रीहौ नञ्सुभ्याम् ( पा० ६-२-१७२ ) इत्यन्तोदात्तत्वम्। सचस्वेत्यत्र पदात्परत्वं नास्तीति न निघातः। लसार्वधातुकानुदात्तत्वे सति धातुस्वरावशेषः ॥९॥

इति प्रथमस्य प्रथमे द्वितीयो वर्गः।

॥ २ ॥

१.२

अग्निमीळे इत्यादिसूक्तमग्निष्टोमस्य प्रातरनुवाके यथा विनियुक्तं तथा वायवा याहीत्याद्यस्तृचाः प्रउगशस्त्रे विनियुक्ताः। तत्रेदं चिन्त्यते। शस्त्रं किं देवतास्मरणरूपं संस्कारकर्म किं वाऽदृष्टफलं प्रधानकर्मेत्यत्र पूर्वपक्षं जैमिनिः सूत्रयामास ( पू० मी० २-१-१३-२६ )॥ स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ॥१॥ आज्यैः स्तुवते पृष्ठैः स्तुवते प्रउगं शंसति निष्केवल्यं शंसतीति श्रूयते। तत्र स्तुतिः शंसनं च गुणिनिष्ठगुणाभिधानम्। इन्द्रस्य नु वीर्याणि प्रवोचमित्यत्र ( ऋ० १-३२-१ ) दृष्टत्वात्। एवं सति याज्यान्यायेन गुणिन्या देवताया अभिधायकत्वेन स्तुतशस्त्रयोः संस्काररूपत्वमभ्युपेयम्। याज्यायास्तद्रूपत्वं दशमाध्यायस्य चतुर्थपादे दृष्टार्थलाभेन निर्णीतम्। तद्वदत्रापि। तुशब्दः प्रधानकर्मत्वं व्यावर्तयति॥ सिद्धान्ती तं पक्षं दूषयति। अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वाद् इति ॥२॥ तुशब्देन संस्कारत्वं वारयति। संस्कारपक्षे प्रयोजनवशेन मन्त्रः स्वस्थानादपकृष्येत। कुतः। मन्त्रगतं देवतावाचकं यदिन्द्रादि नामास्ति तच्चोदनया मन्त्ररूपया प्रतिपाद्यस्य देवतारूपस्यार्थस्य गुणभूतम्। तस्माद्यत्र प्रधानभूतदेवताऽस्ति तत्र गुणभूतो मन्त्रो नेतव्यः। तद्यथा। माहेन्द्रग्रहस्य संनिधावभित्वा शूर ( ऋ० ७-३२-२२ ) इत्ययं प्रगाथ आम्नातः। स चेन्द्रं प्रकाशयति न तु महेन्द्रम्। ततो यत्रेन्द्रं

कर्म तत्रायं प्रगाथोऽपकर्षणीयः। तथा सति क्रमसन्निधी बाध्येयाताम् ॥ तदेतत्सिद्धान्तिनाभिहितं दूषणं पूर्वपक्षी समाधत्ते।

वशावद्वा गुणार्थं स्यादिति ॥३॥ वाशब्दः प्रगाथस्यान्यत्र नयनं वारयति। मन्त्रे यदेतदिन्द्रशब्दाभिधानं तदेतन्महत्त्वगुणोपलक्षणार्थं स्यात्। यथा सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामालभेत (तै० सं० ३-४-३-२) इत्यत्राजावशाशब्देन चोदिते कर्मणि छागशब्देन केवलेन युक्ता निगमा वशात्वगुणमप्युपलक्षयन्ति तद्वत्। तस्मान्महत्त्वगुणयुक्ते चोदिते कर्मणि निर्गुणेनेन्द्रशब्देनाभिधानमविरुद्धम्। लोकेऽपि महाराजे केवलराजशब्दप्रयोगमपि पश्यामः॥ तदेतत्समाधानं सिद्धान्ती दूषयति।

न श्रुतिसमवायित्वादिति ॥४॥ यदुक्तं वशान्यायेन राजन्यायेन वास्य ग्रहस्येन्द्रो देवता युज्यत इति। तन्न। देवतात्वस्य तद्धितश्रुतिसमवायित्वात्। माहेन्द्रो ग्रह इत्यत्र सास्य देवता (पा० ४-२-२४) इत्यस्मिन्नर्थे महेन्द्राद् घाणौ च (पा० ४-२-२९) इति महेन्द्रशब्दादणप्रत्ययो विहितः। तस्मान्महेन्द्र एव देवता न त्विन्द्रः॥ विपक्षे बाधकमाह।

गुणश्चानर्थक इति ॥५॥ यदीन्द्रो देवता स्यात्तदानीमैन्द्रो ग्रह इत्येतावतैवार्थावगतौ माहेन्द्र इति महत्त्वगुणोऽनर्थकः स्यात्। चकारः पूर्वहेतुना समुच्चयार्थः॥ हेत्वन्तरमाह।

तथा याज्यापुरोरुचोरिति ॥६॥ इन्द्रमहेन्द्रयोर्देवतयोर्भेदे यथा महत्त्वगुणः सार्थकस्तथा याज्यापुरोऽनुवाक्ययोर्भेदोऽप्यस्मिन्नेव पक्ष उपपद्यते। एन्द्र सानसिम् (आ० श्रौ० १-६) इत्यादिके इन्द्रस्य याज्यापुरोऽनुवाक्ये। महाँ इन्द्रो य ओजसा (आ० श्रौ० १-६) इत्यादिके महेन्द्रस्य॥ पूर्वपक्षिणोक्ते वशादृष्टान्ते वैषम्यमाह।

वशायामर्थसमवायादिति ॥७॥ या वशा विधिवाक्ये श्रुता तस्या एव निगमेषु छागशब्देन व्यवहारो न विरुद्धः। छागत्वलक्षणस्यार्थस्य वशायां समवेतत्वात्। तच्च प्रत्यक्षेणोपलभ्यते। इन्द्रमहेन्द्रयोस्तु भेद उपपादितः। तस्माद्विषमो दृष्टान्तः। एवं संस्कारपक्षे प्रगाथस्येन्द्रकर्मण्यपकर्षप्रसङ्गात्तद्वारयितुं स्तोत्रशस्त्रयोः प्रधानकर्मत्वमिति सिद्धान्तिनो मतम्॥ पुनरपि पूर्वपक्षी तदेतन्मतं निराचष्टे।

यत्रेति वार्थवत्त्वात् स्यादिति ॥८॥ वाशब्दः सिद्धान्तिमतव्यावृत्त्यर्थः। यत्रेन्द्रं कर्म तत्र प्रगाथो नेतव्य इत्ययमेव पक्षः स्यात्। कुतः। अर्थवत्त्वात्। ऐन्द्रो मन्त्र इन्द्रं प्रकाशयितुं समर्थ इत्यर्थवान् स्यात्। महेन्द्रं तु प्रकाशयितुमसमर्थत्वादानर्थक्यं प्रगाथस्य प्रसज्येत। तस्माद्देवताप्रकाशनरूपसंस्कारकर्मत्वमेव स्तोत्रशस्त्रयोर्युक्तमिति स्थितः पूर्वपक्षः॥ अथ सिद्धान्तमाह।

अपि वा श्रुतिसंयोगात् प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्यातामिति ॥९॥ अपि वेत्यनेन संस्कारकर्मत्वं व्यावर्त्यते। स्तौतिधातुः शंसतिधातुश्चेत्येतावुभावपि स्वप्रकरण एव कस्याश्चित्क्रियाया उत्पत्तिं विदध्याताम्। कुतः। श्रुतिसंयोगात्। तयोर्धात्वोर्वाच्योऽर्थः श्रुतिरित्युच्यते। तत्संयोगः प्रधानकर्मत्वे सिध्यति। तथाहि गुणिनमुपसर्जनीकृत्य तन्निष्ठानां गुणानां प्राधान्येन कथनं स्तुतिः। यो देवदत्तः स चतुर्वेदाभिज्ञ इत्युक्ते सर्वे जनाः स्तुतिमवगच्छन्ति। गुणस्योपसर्जनत्वे तु न स्तुतिः प्रतीयते। यश्चतुर्वेदाभिज्ञस्तमाकारयेत्युक्ते स्तुति

न मन्यन्ते किन्त्वाह्वानप्राधान्यमेव कुर्वन्ते। एवं मन्त्रेष्वपि या देवता सेयमीदृशैर्गुणैरुपेतेति गुणप्राधान्यविवक्षायां मुख्यः स्तौतिधात्वर्थो विधीयते। त्वत्पक्षे तु येयमीदृग्गुणयुक्ता सेयं देवतेति देवतास्मरणस्य प्राधान्यादियं स्तुतिर्न स्यात्। ततः श्रुतिवशादेते प्रधानकर्मणी। तथा सति देवताप्रकाशने तात्पर्याभावादैन्द्रोऽपि प्रगाथः स्वप्रकरणगते माहेन्द्रकर्मण्येवावतिष्ठते। यदि देवतास्मरणरूपं दृष्टं प्रयोजनं न लभ्यते तर्ह्यदृष्टमस्तु॥ प्रधानकर्मत्वे हेत्वन्तरमाह।

शब्दपृथक्त्वाच्चेति॥१०॥ द्वादशाग्निष्टोमस्य स्तोत्राणि द्वादश शस्त्राणीत्यत्र द्वादशशब्देन स्तोत्राणां पृथक्त्वमवगम्यते। देवताप्रकाशनपक्षे सर्वैरपि मन्त्रसङ्घैः कृतस्य प्रकाशनस्यैकत्वेन द्वादशत्वसङ्ख्या न स्यात्। प्रधानकर्मणां त्वाज्यस्तोत्रपृष्ठस्तोत्रादिनामकानां भिन्नत्वाद्द्वादशत्वसङ्ख्योपपद्यते। एवं शस्त्रवाक्येऽपि योज्यम्॥ विपक्षे बाधकमाह।

अनर्थकं च तद्वचनमिति॥११॥ अग्निष्टुति श्रूयते आग्नेया ग्रहा भवन्तीति। तत्रैव पुनरप्यन्यदुच्यते। आग्नेयीषु स्तुवते। आग्नेयीः शंसतीति। त्वत्पक्षे तद्वचनमनर्थकं स्यात्। चोदकप्राप्तेषु स्तोत्रशस्त्रमन्त्रेष्वाग्नेयग्रहानुसारेण देवतापदस्योहे सत्याग्नेयत्वसिद्धेः। प्रधानकर्मत्वपक्षे तु देवताप्रकाशनरूपत्वाभावेनोहाभावादाग्नेयमन्त्रान्तरविधिवचनमर्थवद्भवति॥ पुनरपि हेत्वन्तरमाह।

अन्यश्चार्थः प्रतीयत इति॥१२॥ सम्बद्धे वै स्तोत्रशस्त्रे इति ह्याम्नानम्। सम्बन्धश्च द्वयोर्भवति न त्वेकस्य। तस्मात् स्तोत्रशस्त्रयोरर्थभेदः प्रतीयते। स च संस्कारपक्षे न सम्भवति। देवताप्रकाशनरूपस्यार्थस्यैकत्वात्। प्रधानकर्मत्वपक्षे तु स्तोत्रकर्म शस्त्रकर्म चेत्यर्थभेद उपपद्यते। यद्यपि ष्टुञ् स्तुतौ शंसु स्तुतौ इत्येकार्थौ धातू तथापि प्रतिगीतमन्त्रसाध्यं स्तोत्रम्। अप्रतिगीतमन्त्रसाध्यं शस्त्रमिति तयोर्विवेकः॥ हेत्वन्तरमाह।

अभिधानञ्च कर्मवदिति॥१३॥ यथा प्रधानकर्माग्निहोत्रं जुहोतीति द्वितीयासंयोगेनाभिहितं तथा प्रउगं शंसतीत्यभिधीयते। अतस्तत्सादृश्यात् प्रधानकर्मत्वम्॥ हेत्वन्तरमाह।

फलनिर्वृत्तेश्चेति॥१४॥ स्तुतस्य स्तुतमसि ( तै० सं० ३-२-७-१ ) इति स्तोत्रानुमन्त्रणमाम्नाय वाक्यशेषे स्तोत्रफलमेवमाम्नातम्। इन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषमिति ( तै० सं० ३-२-७-२ )। न तु देवताप्रयुक्तं फलमाम्नातम्। अतो न देवतासंस्कारः। किन्तु प्रधानकर्मैवेति स्थितम्। अनेन निर्णयेन फलं विकृतिषूहाभावः। संस्कारपक्षे तु यस्यां विकृतौ देवतान्तरमस्ति तत्र तद्वाचकं पदमूहनीयं स्यात्। तन्मा भूदिति प्रधानकर्मत्वमुक्तम्। एतच्च दशमाध्याये सूत्रितम्। ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् ( जै० १०-४-४९ ) इति। अत्र संग्रहश्लोकौ—

प्रउगं शंसतीत्यादौ गुणत्वोत प्रधानता।
दृष्टा देवस्मृतिस्तेन गुणता स्तोत्रशस्त्रयोः॥
स्मृत्यर्थत्वे स्तौतिशंस्योर्धात्वोः श्रौतार्थबाधनम्।
तेनादृष्टमुपेत्यापि प्राधान्यं श्रुतये मतम्॥ इति। जै० न्या० २-१-५।

अग्निष्टोमे सुत्यादिने सूर्योदयात् पूर्वं प्रेषितो होता प्रातरनुवाकमनुब्रूयात्। एतच्चैतरेयब्राह्मणे प्रपञ्चितम्। देवेभ्यः प्रातर्यावभ्यो होतरनुब्रूहीत्याहाध्वर्युः० ( ऐ० ब्रा० २-१५ ) इत्यादि

ब्राह्मणम् । तस्मिंश्च प्रातरनुवाकेऽग्निमीळ इत्यादि सूक्तमन्तर्भूतम् । तच्च व्याख्यातम् । प्रातःसवने वैश्वदेवग्रहणादूर्ध्वं प्रउगशस्त्रं होत्रा शंसनीयम् । तच्च शस्त्रं वायवायाहीत्यादिसप्ततृचात्मकम् । एतच्च ब्राह्मणे ग्रहोक्थम्० ( ऐ० ब्रा० ३-१ ) इत्यादिखण्डे प्रपञ्चितम् । तथा पञ्चमाध्याये स्तोत्रमग्र शस्त्राद्० ( आ० श्रौ० ५-१० ) इतिखण्डे सूत्रितञ्च । अत्रेयमनुक्रमणिका । वायो वायव्यैन्द्रवायव-मैत्रावरुणास्तृचाः, अश्विना द्वादशाश्विनैन्द्रवैश्वदेवसारस्वतास्तृचाः सप्तैताः प्रउगदेवताः (अनु० १·१) इति । अस्यायमर्थः । वायवायाहीत्यादिकं नवर्चं सूक्तम् । अग्नि नवेत्यतो नवशब्दानुवृत्तेः । तत्राद्यस्तृचो वायुदेवताकः । द्वितीय इन्द्रवायुदेवताकः । तृतीयो मित्रावरुणदेवताकः । अश्विनेत्या-दिकं द्वादशर्चं सूक्तम् । तत्राद्यस्तृच आश्विनः । द्वितीय ऐन्द्रः । तृतीयो वैश्वदेवः । चतुर्थः सारस्वतः । तेषु तृचेषु प्रतिपाद्या वाय्वादयः सरस्वत्यन्ताः सप्तसङ्ख्याकाः प्रउगशस्त्रस्य देवता इति । मधुच्छन्दसोऽनुवर्तनात् स एवर्षिः । तथैवानुवृत्त्या गायत्रं छन्दः । वायव्ये तृचे प्रथमा ग्रहस्यैन्द्र-वायवस्यैका पुरोऽनुवाक्या । एतच्च ब्राह्मणे समाम्नातम् । वायव्या पूर्वा पुरोऽनुवाक्यैन्द्र-वायव्युत्तरा ( ऐ० ब्रा० २-२६ ) इति । तथा सूत्रितञ्च । वायवा याहि दर्शतेन्द्रवायू इमे सुता इत्यनु-वाक्ये ( आ० श्रौ० ५-५ ) इति ।

॥ २ ॥

१·२

वायव्ये तृचे प्रथमामृचमाह । हे दर्शत दर्शनीय वायो कर्मण्येतस्मिन्नायाहि आगच्छ । त्वदर्थमिमे सोमा अरंकृताः । अभिषवादिसंस्कारोऽलङ्कारः । तेषाम् । तान् सोमान् । यद्वा तेषामेकदेशमित्यध्याहारः । पाहि । स्वकीयं भागं पिबेत्यर्थः । तत्पानार्थं हवमस्मदीयमाह्वानं श्रुधि शृणु । अत्र यास्कः । वायवायाहि दर्शनीयेमे सोमा अरंकृता अलङ्कृतास्तेषां पिब शृणु नो ह्वानम् । (नि० १०-२) इति । दर्शतेत्यत्र भृमृदृशि० (उ० ३-११०) इत्यादिसूत्रेण अतच्प्रत्यय औणादिकः । चित्त्वादन्तोदात्तस्यामन्त्रितानुदात्तत्वम् । अर्तिस्तुसु० ( उ० १-१४५ ) इत्यादिना मन्प्रत्ययान्तस्य सोमशब्दस्य निस्स्वरः । अलमित्यत्र छान्दसो रेफादेशः । अरङ्कृतशब्दे समासान्तोदात्तत्वं बाधित्वाऽव्ययपूर्वपदप्रकृतिस्वरप्राप्तौ भूषणेऽलम् ( पा० १-४-६४ ) इत्यलं-शब्दस्य गतिसंज्ञायां गतिकारक० ( पा० ६-२-१३९ ) इत्यादिना कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तदपवादत्वेन गतिरनन्तरः ( पा० ६-२-४९ ) इति पूर्वपदप्रकृतिस्वरत्वम् । निपातत्वादलंशब्द आद्युदात्तः । पाहीत्यत्र पिबादेशाभावश्छान्दसः । श्रुधीत्यत्र श्रुशृणुपृ० (पा० ६-४-१०२) इत्यादिना हेर्धिभावः । तिङन्तादुत्तरस्य निघातो नास्ति । सेर्ह्यपिच्च ( पा० ३-४-८७ ) इति पित्त्वनिषेधादनुदात्ते निवारिते प्रत्ययस्वरः । हवमित्यत्र ह्वयतिधातोर्बहुलं छन्दसि ( पा० ६-१-३४ ) इति सम्प्रसारणे सत्युकारान्तत्वादृदोरप् ( पा० ३-३-५७ ) इत्यप्प्रत्ययः । तस्य

त्रित्वादनुदात्ते सति धातुस्वरः शिष्यते। संहितायां श्रुधीत्यस्यान्येषामपि दृश्यते ( पा० ६-३-१३७ ) इति दीर्घः ॥१॥

द्वितीयामृचमाह। हे वायो जरितार स्तोतार ऋत्विग्यजमानास्त्वामच्छ त्वामभिलक्ष्योक्थेभिराज्यप्रउगादिशस्त्रैर्जरन्ते। स्तुवन्ति। कीदृशाः। सुतसोमाः। अभिषुतेन सोमेनोपेताः। अहर्विदः। अहःशब्द एकेनाह्ना निष्पाद्येऽग्निष्टोमादिक्रतौ वैदिकव्यवहारेण प्रसिद्धः। क्रत्वभिज्ञा इत्यर्थः। अर्चतिगायतीत्यादिषु चतुश्चत्वारिंशत्स्वर्चतिकर्मसु धातुषु जरते ह्वयति ( निघ० ३-१४ ) इति पठितम्। स्तुतेरप्यर्चनाविशेषत्वादौचित्येनात्र स्तुत्यर्थो जरतिधातुः। अच्छशब्दस्य संहितायां निपातस्य च ( पा० ६-३-१३६ ) इति दीर्घः। सुतसोमा इत्यत्र बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरः। अहर्विद इत्यत्र समासस्वरं बाधित्वा तत्पुरुषे तुल्यार्थ० ( पा० ६-२-२ ) इत्यादिना द्वितीयापूर्वपदप्रकृतिस्वरे प्राप्ते तदपवादत्वेन गतिकारकोपपदात्कृत् ( पा० ६-२-१३९ ) इति कृदुत्तरपदप्रकृतिस्वरः ॥२॥

तृतीयामृचमाह। हे वायो तव धेना वाक् सोमपीतये सोमपानार्थं दाशुषे दाश्वांसं दत्तवन्तं यजमानं जिगाति। गच्छति। हे यजमान त्वया दत्तं सोमं पास्यामीत्येवं वायुर्ब्रूत इत्यर्थः। कीदृशी धेना। प्रपृञ्चती। प्रकर्षेण सोमसम्पर्कं कुर्वती। सोमगुणं वर्णयन्तीत्यर्थः। उरूची। उरून् बहून् यजमानान् गच्छन्ती। ये ये सोमयाजिनस्तान् सर्वान्वर्णयन्तीत्यर्थः। प्रपृञ्चतीत्यत्र शतुरनुमो० (पा० ६-१-१७३) इति ङीबुदात्तः। श्लोको धारेत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु गणो धेना ग्नाः (निघ० १-११) इति पठितम्। वर्ततेऽयत इत्यादिषु द्वाविंशाधिकशतसङ्ख्येषु गतिकर्मसु गाति जिगाति ( निघ० २-१४ ) इति पठितम्। दाशुष इत्यत्र गत्यर्थकर्मणि० ( पा० २-३-१२ ) इति चतुर्थी। उरूचीत्यत्र गौरादित्वेन ङीषि कृते प्रत्ययस्वरः। सोमपीतय इत्यत्र बहुव्रीहित्वाभावेऽपि व्यत्ययेन पूर्वपदप्रकृतिस्वरः ॥३॥

ऐन्द्रवायवे तृचे प्रथमामृचमाह। एतस्या ऋच ऐन्द्रवायवग्रहे द्वितीयपुरोऽनुवाक्यारूपेण विशेषविनियोगः पूर्वमेवोक्तः। हे इन्द्रवायू भवदर्थमिमे सोमाः सुताः। अभिषुताः। तस्माद्युवां प्रयोभिरन्नैरस्मभ्यं दातव्यैः सहोपागतम्। अस्मत्समीपं प्रत्यागच्छतम्। हि यस्मादिन्दवः सोमा वां युवामुशन्ति। कामयन्ते। तस्मादागमनमुचितम्। इन्द्रवायूशब्दस्यामन्त्रितायुदात्तत्वम्। प्रीणयन्ति भोक्तॄनिति प्रयांस्यन्नानि। प्रीञ्धातोरन्तर्भावितण्यर्थादसुन्प्रत्यये सति नित्स्वरः। गमिधातोर्लोण्मध्यमपुरुषद्विवचने बहुलं छन्दसि ( पा० २-४-७३ ) इति शपो लुकि सत्यनुदात्तोपदेश० ( पा० ६-४-३७ ) इत्यादिना मकारलोपः। ततो गतमिति भवति। उन्दी क्लेदन इति धातोरुन्देरिच्चादेः ( उ० १-१२ ) इत्युन्प्रत्ययः। आद्यक्षरस्येकारादेशः। तत इन्दुशब्दस्य नित्स्वरः। सोमरसस्य द्रवत्वात् क्लेदनं सम्भवति। युष्मच्छब्दादेशस्य वामित्येतस्यानुदात्तं सर्वमपादादौ ( पा० ८-१-१८ ) इत्यनुदात्तः। उशन्तीत्यस्य निघाते हि च ( पा० ८-१-३४ ) इति सूत्रेण प्रतिषिद्धे सति प्रत्ययस्वरः। हिशब्दस्य निपातस्वरः ॥४॥

द्वितीयामृचमाह। अत्र चकारेणान्यः समुच्चीयते। सन्निहितत्वाद्वायुरेव। हे वायो त्वमिन्द्रश्च युवामुभौ सुतानामभिषुतान्सोमान् चेतथः। जानीथः। यद्वा। अभिषुतानां सोमानां विशेषमित्यध्याहारः। कीदृशौ युवाम्। वाजिनीवसू। वाजिनीशब्दो यद्यप्युषोनामसु पठि-

स्तथाप्यत्रासम्भवान्न गृह्यते। वाजोऽन्नम्। तद्यस्यां हविःसन्ततावस्ति सा वाजिनी। तस्यां वसत इति तौ वाजिनीवसू। आमन्त्रितत्वादनुदात्तः। तौ तथाविधौ युवां द्रवत्क्षिप्रमुप समीप आयातम्। आगच्छतम्। षड्विंशतिसङ्ख्याकेषु क्षिप्रनामसु नु मक्षु द्रवत् (निघ० २-१५) इति पठितम्। तत्र फिट्स्वरः ॥५॥

प्रथमस्य प्रथमे तृतीयो वर्गः।

ऐन्द्रवायवे तृचे तृतीयामृचमाह। हे वायो त्वमिन्द्रश्च सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य निष्कृतं संस्कृतं संस्कर्तारं वा सोममुपायातम्। आगच्छतम्। नरा हे नरौ पुरुषौ पौरुषेण सामर्थ्येनोपेतौ। युवयोरागतयोश्च सतोर्धियाऽमुना कर्मणा मक्षु त्वरया संस्कारः सम्पत्स्यते। इत्था सत्यम्। वायो इत्यस्यामन्त्रितस्य च (पा० ६-१-१९८) इति षाष्ठिकमाद्युदात्तत्वम्। इन्द्रशब्द ऋज्रेन्द्र॰ (उ० २-२१) इत्यादिना रन्प्रत्ययान्तत्वेन निपातितो ञ्नित्यादिर्नित्यम् (पा० ६-१-१९७) इत्याद्युदात्तः। चशब्दश्चादयोऽनुदात्ताः (फि० ४-१६) इत्यनुदात्तः। सुन्वत इत्यत्र शतुरनुमो नद्यजादी (पा० ६-१-१७३) इति विभक्तेरुदात्तत्वम्। निरित्येष समित्येतस्य स्थाने (नि० १२-७) इति यास्कः कृतशब्द आदिकर्मणि क्तः। संस्कर्तुं प्रवृत्त इत्यर्थः। कुगति-प्रादयः (पा० २-२-१८) इति समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते थाथघञ्क्ताजबित्रकाणाम् (पा० ६-२-१४४) इत्यन्तोदात्तः। गतिरनन्तरः (पा० ६-२-४९) इति तु निस उदात्तत्वं न भवति। तद्धि कर्मणि क्ते विहितम्। निष्करोतीति निष्कृदिति क्विबन्तव्याख्याने तु गतिकार-कोपपदात्कृत् (पा० ६-२-१३९) इत्युकार उदात्तः स्यात्। धिया। सावेकाचस्तृतीयादिः॰ (पा० ६-१-१६८) इति विभक्तिरुदात्ता। नरा। सुपां सुलुक्॰ (पा० ७-१-३९) इत्यादिना सम्बोधन-द्विवचनस्य डादेशः। पदात्परत्वादामन्त्रितस्य च (पा० ८-१-१९) इत्याष्टमिको निघातः ॥६॥

मित्रं हुव इति मैत्रावरुणस्तृचो गवामयन आरम्भणीये चतुर्विंशेऽहनि प्रातःसवने मैत्रा-वरुणस्य स्तोत्रियः। तत्रैवाभिप्लवषडहेऽपि विनियुक्तः। तथा चाश्वलायनेन चतुर्विंशे होताजनि-ष्टेत्यादिखण्डे मित्रं वयं हवामहे मित्रं हुवे पूतदक्षम् (आ० श्रौ० ७-२) इत्यादि सूत्रितम्। तथा-ऽभिप्लवपृष्ठ्याहानीति खण्डे परिशिष्टानावापानुद्धृत्य मित्रं वयं हवामहे मित्रं हुवे पूतदक्षम् (आ० श्रौ० ७-५) इति च।

तस्य मैत्रावरुणतृचस्य प्रथमामृचमाह। अहमस्मिन् कर्मणि हविःप्रदानाय पूतदक्षं पवित्र-बलं मित्रं हुवे। तथा रिशादसं रिशानां हिंसकानामदसमत्तारं वरुणं हुवे। आह्वयामि। कीदृशौ मित्रावरुणौ। घृतमुदकमञ्चति भूमिं प्रापयति या धीर्वर्षणकर्म तां घृताचीं धियं साधन्ता साधयन्तौ कुर्वन्तौ। मित्रशब्दः पुँल्लिङ्गः प्रातिपदिकस्वरेणान्तोदात्तः। हुव इति ह्वयतेर्बहुलं छन्दसि (पा० २-४-७३) इति शपो लुकि ह्वः सम्प्रसारणम् (पा० ६-१-३२) इत्युनुवृत्तौ बहुलं छन्दसि (पा० ६-१-३४) इति सम्प्रसारणे उवङादेशः। तिङ्ङतिङः (पा० ८-१-२८) इति निघातः। पूतशब्दः प्रत्ययस्वरेणान्तोदात्तः। बहुव्रीहौ पूर्व-पदप्रकृतिस्वरत्वम्। वरुणशब्दः कृवृदारिभ्य उनन् (उ० ३-५३) इत्युनन्प्रत्ययान्तो नित्त्वादाद्युदात्तः। रिशन्ति हिंसन्तीति रिशाः शत्रवः। इगुपधज्ञाप्रीकिरः कः (पा० ३-१-१३५) इति कः। प्रत्ययस्वरेणोदात्तः। तानत्तीति रिशादाः। तम्। सर्वधातुभ्योऽसुन् (उ० ४-१९०)

इत्यसुन्प्रत्ययः। नित्स्वरेणोत्तरपदमाद्युदात्तम्। कृदुत्तरपदप्रकृतिस्वरेण स एवावशिष्यते। शेषनिघाते सत्येकादेश उदात्तेनोदात्तः ( पा० ८-२-५ ) इति सवर्णदीर्घोऽप्युदात्त एव। धीरित्यापः (निघ० २-१) इत्यादिषड्विंशतौ कर्मनामसु पठितः। प्रातिपदिकस्वरेणोदात्तः। घृतमञ्चतीति घृताची। ऋत्विग्दधृक्० ( पा० ३-२-५९ ) इत्यादिना क्विन्यनिदिताम्० ( पा० ६-४-२४ ) इति नकारलोपः। अञ्चतेश्चोपसङ्ख्यानम् ( पा० वा० ४-१-६ ) इति ङीप्। अचः ( पा० ६-४-१३८ ) इत्यकारलोपे चौ (पा० ६-३-१३८) इति दीर्घत्वम्। घृतशब्दे नब्विषयस्यानिसन्तस्य ( फि० २-३ ) इत्याद्युदात्तं बाधित्वा घृतादीनां च ( फि० १-२२ ) इत्यन्तोदात्तः। समासस्य ( पा० ६-१-२२३ ) इत्यन्तोदात्तस्यापवादकं तत्पुरुषे तुल्यार्थ० ( पा० ६-२-२ ) इति पूर्वपदप्रकृतिस्वरं बाधित्वा गतिकारकोपपदात्कृत् ( पा० ६-२-१३९ ) इति कृदुत्तरपदप्रकृतिस्वरेणोदात्तस्य धात्वकारस्य लोपे सत्यनुदात्तस्य च यत्रोदात्तलोपः ( पा० ६-१-१६१ ) इति ङीप उदात्तत्वे प्राप्ते चौ ( पा० ६-१-१२२ ) इति पूर्वपदान्तोदात्तत्वम्। साधन्ता। राध साध संसिद्धावित्यस्मादन्तर्भावितण्यर्थाल्लटः शत्रादेशे श्नं बाधित्वा व्यत्ययेन शप्। अदुपदेशत्वादुपरि शतृप्रत्ययस्य लसार्वधातुकानुदात्तत्वम्। द्वितीयाद्विवचनस्य शपश्चानुदात्तौ सुप्पितौ ( पा० ३-१-४ ) इत्यनुदात्तत्वे धातोः ( पा० ६-१-१६२ ) इति धातुस्वर एव शिष्यते। सुपां सुलुक्० ( पा० ७-१-३९ ) इत्यादिना विभक्तेराकारः ॥७॥

द्वितीयामृचमाह। हे मित्रावरुणौ युवां क्रतुं प्रवर्त्तमानमिमं सोमयागमाशाथे। आनशाथे। व्याप्तवन्तौ। केन निमित्तेन। ऋतेन। अवश्यंभावितया सत्येन फलेन। अस्मभ्यं फलं दातुमित्यर्थः। कीदृशौ युवाम्। ऋतावृधौ। ऋतमित्युदकनाम ( नि० २-२५ ), सत्यं वा यज्ञं वा ( नि० ४-१९ ) इति यास्कः। उदकादीनामन्यतमस्य वर्द्धयितारौ। अत एव ऋतस्पृशा। उदकादीन् स्पृशन्तौ। कीदृशं क्रतुम्। बृहन्तम्। अङ्गैश्चोपाङ्गैश्चातिप्रौढम्। ऋतशब्दो घृतादित्वादन्तोदात्तः। मित्रावरुणावित्यत्र मित्रश्च वरुणश्चेति मित्रावरुणौ। देवताद्वन्द्वे च (पा० ६-३-२६) इति पूर्वपदस्यानङादेशः। ऋतस्य वर्द्धयितारावित्यर्थेऽन्तर्भावितण्यर्थाद्वृधेः क्विप्। अन्येषामपि दृश्यते ( पा० ६-३-१३७ ) इति पूर्वपदस्य दीर्घः। ऋतस्पृशा। सुपां सुलुक्० ( पा० ७-१-३९ ) इति डादेशः। मित्रावरुणावित्यात्रामन्त्रितत्रयस्य स्वस्वपूर्वपदात्परत्वादामन्त्रितस्य च (पा० ८-१-१९ ) इत्याष्टमिको निघातः। ननु ऋतेनेत्येतस्य सुबामन्त्रिते पराङ्गवत्स्वरे (पा० २-१-२ ) इति पराङ्गवद्भावेनामन्त्रितानुप्रवेशात्पादादित्वेन पदादपरत्वेन वाऽष्टमिकनिघाताभावादामन्त्रितस्य च ( पा० ६-१-१९८ ) इत्याद्युदात्तेन भवितव्यमिति चेत्। न। पराङ्गवद्भावस्य सुबामन्त्रिताश्रयत्वेन पदविधित्वात् समर्थः पदविधिः (पा० २-१-१) इति नियमात्। इह च ऋतेन मित्रावरुणावित्यनयोराशाथे इत्याख्यातेनैवान्वयेन परस्परमसामर्थ्यात्। यत्र पुनः परस्परान्वयेन सामर्थ्यं तत्र पराङ्गवद्भावात्पादादेराद्युदात्तत्वं भवत्येव। मरुतां पितस्तदहं गृणामि ( तै० स० ३-३-९-१ ) इति यथा। म्रुयोरुतिः ( उ० १-९४ ) इत्युतिप्रत्ययान्तत्वेन पृश्निये वै पयसो मरुतो जाताः (तै० स० २-२-११-४) इत्यादावन्तोदात्तोऽपि हि मरुच्छब्दो मरुतां पितः ( तै० स० ३-३-८-१ ) इत्यत्र सामर्थ्यात्पराङ्गवद्भावादेवाद्युदात्तो जातः। प्रकृते त्वृतेनेत्यस्यासामर्थ्यादेव न पराङ्गवद्भाव इति। ऋतावृधावित्यत्र द्वितीयामन्त्रितस्य निघाते कर्त्तव्ये आमन्त्रितं पूर्वमविद्यमानवत् ( पा० ८-१-७२ ) इति प्रथमामन्त्रितेनाविद्यमानवद्भवितव्यमिति चेत्। भवतु। अत एव तस्याप्यव्यवधायकत्वा-

ऋतेनेति प्रथमपदात्परत्वेनैव द्वितीयामन्त्रितं निहनिष्यते। यथा इमं मे गङ्गे यमुने ( ऋ० सं० १०-७५-५ ) इत्यादौ गङ्गेशब्दस्याविद्यमानवद्भावेऽपि तस्याव्यवधायकत्वादेव मे इत्येतदेव पदमुपजीव्य यमुनेशब्दस्य निघातः। किञ्च प्रकृते मित्रावरुणावित्यामन्त्रितं सामान्यवचनम्। तस्य विशेषणतया विशेषवचनमृतावृधाविति। अतो नामन्त्रिते समानाधिकरणे सामान्यवचनम् ( पा० ८-१-७३ ) इति पूर्वस्याविद्यमानवद्भावप्रतिषेधादपि निरन्तरायो द्वितीयस्य निघातः। नन्वेवमपि ०अपादादौ ( पा० ८-१-१८ ) इत्यनुवृत्तेर्ऋतावृधावित्यस्य द्वितीयपादादित्वान्न भवितव्यं निघातेन। अत एव हीमं मे गङ्गे यमुने ( ऋ० सं० १०-७५-५ ) इत्यत्र शुतुद्रिपदस्य पदात्परस्यामन्त्रितस्यापि पादादित्वादेवानिघातादाद्युदात्तत्वं जातम्। तद्वदत्रापि भवितव्यं वक्तव्यो वा विशेष इति। उच्यते। मित्रावरुणौपदस्य सुबामन्त्रिते० ( पा० २-१-२ ) इति पराङ्गवद्भावेन परानुप्रवेशादेव ऋतावृधावित्यस्य न पादादित्वम्। शुतुद्रिपदमपि तद्वदेवमेव पूर्वस्य सरस्वतिपदस्य पराङ्गवद्भावेन न पादादिरिति निहन्येतेति चेत्। पराङ्गवद्भावस्तावत्सुबन्तमामन्त्रितं चाश्रित्य प्रवृत्तः पदविधिः। अतस्तयोः सत्येव परस्परान्वये पराङ्गवद्भावेन भवितव्यम्। समर्थः पदविधिः ( पा० २-१-१ ) इति नियमात्। शुतुद्रिसरस्वतिपदयोश्च न परस्परेणान्वयः किन्तु सचतेत्यनेनेत्यसामर्थ्यान्न पराङ्गवद्भावः। प्रकृते तु मित्रावरुणावृतावृधाविति द्वयोरपि सामानाधिकरण्येन परस्परान्वयादस्ति सामर्थ्यमिति भवितव्यं पराङ्गवद्भावेन। यथा मरुतां पितः (तै० सं० ( २-३-६-१ ) इत्यत्रेति विशेषः। नन्वत एव तर्हि मित्रावरुणौपदस्य पराङ्गवद्भावेन पादादित्वाद् ०अपादादाविति ( पा० ८-१-१८ ) पर्युदासादामन्त्रितनिघातो न स्यादिति चेन्न। पूर्वं सुबन्तं परञ्चामन्त्रितमाश्रित्य यः स्वरः प्रवर्तते तत्र सुबामन्त्रिते० ( पा० २-१-२ ) इति पराङ्गवद्भावः। भवति चैवंविध ऋतावृधौपदनिघात इति तत्र पूर्वस्य पराङ्गवद्भावेनापादादित्वात्स प्रवर्तते। मित्रावरुणौपदनिघातस्तु पूर्वमेव पदमुपजीवति न परमामन्त्रितमिति न पराङ्गवद्भावः। ननु पराङ्गवद्भाववन्निघातोऽपि पदविधिरिति ऋतेनेत्यनेनासामर्थ्यात्ततः पदात्परस्य मित्रावरुणौपदस्य न स्यादिति चेत् न समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः ( पा० वा० २-१-१ ) इति निघाते पदविधावपि समानवाक्यत्वमेव पर्याप्तं न पराङ्गवद्भाववत्परस्परान्वयोऽपीत्यलम्। क्रतुम्। कृञः कतुः ( उ० १-७७ )। प्रत्ययस्वरेणाद्युदात्तः। आशाथे। आनशाथे। छन्दसि लुङ्लङ्लिटः ( पा० ३-४-६ ) इति वर्तमाने लिट्। नुडभावश्छान्दसः ॥८॥

तृतीयामृचमाह। मित्रावरुणावेतौ देवौ नोऽस्माकं दक्षं बलमपसं कर्म च दधाते पोषयतः। कीदृशौ। कवी। मेधाविनौ। तुविजातौ। बहूनामुपकारकतया समुत्पन्नौ। उरुक्षया। बहुनिवासौ विप्रो धीर इत्यादिषु चतुर्विंशतिसङ्ख्याकेषु मेधाविनामसु कविर्मनीषी ( निघ० ३-१५ ) इति पठितम्। उरुतुवीत्येतौ शब्दौ द्वादशसु बहुनामसु पठितौ ( निघ० ३-१ )। ओजः पाज इत्यादिष्वष्टाविंशतिसङ्ख्याकेषु बलनामसु दक्षो वीळु (निघ० २-९) इति पठितम्। अपसशब्दः षड्विंशतिसङ्ख्याकेषु कर्मनामसु पठितः ( निघ० २-१ )। मित्रावरुणा। मित्रशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। वरुणशब्दो नित्स्वरेणाद्युदात्तः। द्वन्द्वे देवताद्वन्द्वे च ( पा० ६-२-१४१ ) इत्युभाववशिष्येते। तुविजातौ। बहूनामुपकारकतया तत्सम्बन्धित्वेन जाताविति षष्ठीसमासे समासान्तोदात्तत्वम्। चतुर्थीसमासे हि क्ते च ( पा० ६-२-४५ ) इति पूर्वपदप्रकृतिस्वरः स्यात्।

उरूणां बहूनां क्षयावुरुक्षयौ। क्षि निवासगत्योरिति धातोः क्षियन्त्यस्मिन्निति क्षयः। अधिकरणे एरच् (पा० ३-३-५६) इत्यच्प्रत्ययान्तस्य चितः (पा० ६-१-१६३) इत्यन्तोदात्तत्वे प्राप्ते क्षयो निवासे (पा० ६-१-२०१) इत्याद्युदात्तत्वं विहितम्। समासे तु समासस्य (पा० ६-१ २२३) इत्यन्तोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेण प्राप्तमुत्तरपदाद्युदात्तत्वं यद्यपि थाथादिस्वरेणान्तोदात्तेन बाध्यते तथापि परादिश्छन्दसि बहुलम् (पा० ६-२-१९९) इत्युत्तरपदाद्युदात्तत्वं द्रष्टव्यम्। दक्षम्। दक्षतेरुत्साहकर्मणो घञ्। ञित्त्वादाद्युदात्तः। आप्यते फलमनेनेत्यपः कर्म। आपः कर्माख्यायां ह्रस्वो नुट् च (उ० ४-१०७) इत्यसुन्नन्तस्यापसस्पारे इत्यादौ नित्त्वादाद्युदात्तस्याप्यपसशब्दस्यात्र व्यत्ययेन प्रत्ययाद्युदात्तत्वम् ॥९॥

प्रथमस्य प्रथमे चतुर्थो वर्गः।

॥ ३ ॥

१·३

आश्विनस्तृचः प्रातरनुवाकस्याश्विने क्रतौ विनियुक्तः। तथा च सूत्रितम्। अथाश्विन एषो उषाः प्रातर्युजेति चतस्रोऽश्विना यज्वरीरिषः (आ० श्रौ० ४-१५) इति।

तत्र प्रथमामृचमाह। हे अश्विनौ युवामिषो हविर्लक्षणान्यन्नानि चनस्यतम्। इच्छतम्। भुञ्जाथामित्यर्थः। यद्यपि चनःशब्दोऽन्नवाची तथापीष इत्यनेन सह नास्ति पुनरुक्तिदोषः। इच्छामुपलक्षयितुं प्रवृत्तत्वात्। वक्तव्यमुवाच। समूलकाषं कषतीत्यादौ यथा पुनरुक्त्यभावस्तद्वत्। कीदृशीरिषः। यज्वरीः। यागनिष्पादिकाः। कीदृशावश्विनौ। द्रवत्पाणी। हविर्ग्रहणाय द्रवद्भ्यां धावद्भ्यां पाणिभ्यामुपेतौ। शुभस्पती। शोभनस्य कर्मणः पालकौ। पुरुभुजा। विस्तीर्णभुजौ बहुभोजिनौ वा। अश्विना। आमन्त्रितस्य च (पा० ६-१-१९८) इति षाष्ठिकमाद्युदात्तत्वम्। यज्वरीः। यागकरणानामप्यन्नानामसिद्धिनत्तीतिवत्स्वव्यापारे कर्तृत्वविवक्षया सुयजोर्ङ्वनिप् (पा० ३-२-१०३) इति ङ्वनिप्प्रत्ययः। वनो र च (पा० ४-१-७) इति ङीप्। तत्सन्नियोगेन रेफादेशः। प्रत्ययद्वयस्यानुदात्तौ सुप्पितौ (पा० ३-१-४) इत्यनुदात्तत्वाद्धातुस्वर एवाव-शिष्यते। इषःशब्दे शसोऽनुदात्तत्वात्प्रातिपदिकस्वर एव शिष्यते। द्रवन्तौ धावन्तौ पाणी ययोस्तयोः सम्बोधनं द्रवत्पाणी इति। तस्यामन्त्रिताद्युदात्तत्वं न पुनराष्टमिको निघातः। ०अपादादौ (पा० ८-१-१८) इति प्रतिषेधात्। इव इति पूर्वपदस्य सुबामन्त्रिते० (पा० २.१-२) इति पराङ्गवद्भावेन मित्रावरुणावृतावृधाविितिवदपादादित्वमिति चेत्। न। तत्र सामानाधिकरण्येन परस्परान्वयात्। इह त्विषो द्रवत्पाणी इत्यनयोः सरस्वतिशु-तुद्रिपद्वदसामर्थ्येन प्रयुक्तत्वात्। शुभ इति शुभ शुम्भ दीप्तावित्यस्य सम्पदादित्वाद्भावे क्विबन्तस्य षष्ठ्येकवचनम्। षष्ठ्याः पतिपुत्र० (पा० ८-३-५३) इति विसर्जनीयस्य सत्वम्। तस्य पती इत्यामन्त्रिते परतः पराङ्गवद्भावादामन्त्रिताद्युदात्तत्वम्। न पुनराष्टमिको निघातः। तस्मिन्कर्तव्ये द्रवत्पाणी इति पूर्वस्यामन्त्रितस्यामन्त्रितं पूर्वमविद्यमानवत् (पा० ८-१-७२) इत्यविद्यमानवद्भावेन पादादित्वात् ०अपादादौ (पा० ८-१ १८) इति प्रतिषेधात्। ननु मित्रावरुणा-वृतावृधाविितिवदामन्त्रिते समानाधिकरणे० (पा० ८-१-७३) इत्यविद्यमानवद्भावप्रतिषेधेन भवित-

व्यमिति चेत्। न। मित्रावरुणौपदं हि सामान्यवचनमिति युक्तस्तस्याविद्यमानवत्त्वप्रतिषेधः। द्रविणपाणीपदं तु न तथेति वैषम्यात्। पुरुभुजौ। पुरू विस्तीर्णौ भुजौ ययोस्तौ। आमन्त्रिताद्युदात्तत्वम्। सुपां सुलुक्० (पा० ७-१-३९) इति डादेशः। पुरु बहु भुञ्जाते इति वा। चनस्यतमित्यत्र चायेरन्ने ह्रस्वश्च (उ० ४-२०२) इति चायृ पूजानिशामनयोरित्यस्यासुन्प्रत्यय आकारस्य ह्रस्वे चानुकृष्टे नुडागमे च लोपो व्योर्वलि (पा० ६-१-६६) इति यकारलोपे चनश्शब्दोऽन्ननामसु पठितः। तदात्मन इच्छतीति सुप आत्मनः क्यच् (पा० ३-१-८)। सनाद्यन्ताः० (पा० ३-१-३२) इति धातुत्वाल्लोण्मध्यमद्विवचनम्। क्यचः प्रत्ययस्वरेणोदात्तत्वम्। शपैकादेशे कृत एकादेश उदात्तेनोदात्तः (पा० ८-२-५) इत्युदात्तः। उपर्याख्यातस्य लसार्वधातुकानुदात्तत्वे स्वरितत्वम्। न च तिङ्ङतिङः (पा० ८-१ २८) इति निघातः। पूर्वस्यामन्त्रितस्याविद्यमानवद्भावेन पदादपरत्वात्पादादित्वाद्वा तदप्राप्तेः ॥१॥

द्वितीयामृचमाह। अश्विना हे अश्विनौ युवां गिरोऽस्मदीयाः स्तुतीर्धिया‌दरयुक्तया बुद्धया वनतम्। सम्भजतम्। स्वीकुरुतम्। कीदृशावश्विनौ। पुरुदंससा। बहुकर्माणौ। षड्विंशतिसङ्ख्याकेषु कर्मनामसु दंसः (निघ० २-१) इति पठितम्। नरा। नेतारौ। धिष्ण्या। धाष्टर्य-युक्तौ। बुद्धिमन्तौ वा। कीदृश्या धिया। शवीरया। गतियुक्तया। अप्रतिहतप्रसरयेत्यर्थः। अश्विनेत्याद्यामन्त्रितचतुष्टयस्य पाष्ठिकमामन्त्रिताद्युदात्तत्वम्। पादादित्वान्नाष्टमिको निघातः। पुरुदंससेत्यपि हि पादादिरेव। आमन्त्रितं पूर्वमविद्यमानवत् (पा० ८-१-७२) इति पूर्वस्याविद्यमानवत्त्वात्। नामन्त्रिते समानाधिकरणे० (पा० ८-१-७३) इति पूर्वस्य सामान्यवचनत्वेनास्य विशेषवचनत्वेन नाविद्यमानवत्त्वमिति चेत्। न। अश्विशब्दवत्पुरुदंसश्शब्दस्याप्यश्विनोरेव रूढ्या प्रयुज्यमानतया सामान्यशब्दत्वात्। सामान्यवचनं नाविद्यमानवदित्युक्तेऽर्थात्परस्य विशेषवचनत्वावगमात्। उभयोः सामान्यवचनत्वे पर्यायत्वेन पौनरुक्त्यात्सहाप्रयोग इति चेन्न। गुणविशेषसंकीर्तनवत्प्रसिद्धानेकनामविशेषसम्बन्धसंकीर्तनस्यापि स्तुत्युपयोगेन सप्रयोजनत्वान्निष्प्रयोजनपुनर्वचनस्यैव पुनरुक्तत्वात्। अश्विपुरुदंसश्शब्दयोरेकार्थवृत्तित्वेऽपि पर्यायत्वादेव प्रवृत्तिनिमित्तभेदाभावेनासामानाधिकरण्यादपि नाविद्यमानवत्त्वप्रतिषेधः। भिन्नप्रवृत्तिनिमित्तानामेव ह्यं कस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्। अश्विशब्दस्याश्वसम्बन्धो निमित्तं पुरुदंसश्शब्दस्य तु बहुकर्मसम्बन्ध इति प्रवृत्तिनिमित्तभेद इति चेत्। न। तद्धि द्वयं व्युत्पत्तिनिमित्तमात्रं न प्रवृत्तिनिमित्तम्। व्युत्पत्तिनिमित्तभेदमात्रेणापि सामानाधिकरण्याभिधाने वृक्षमहीरुहशब्दयोरपि तथात्वप्रसङ्गः। अत एव हीळे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुति एतानि ते अघ्न्ये नामानि (तै० स० ७-१-६-८) इत्यत्र सहस्रतमीप्रशंसोपयोगित्वेनेडादिशब्दानामेतानि ते अघ्न्ये नामानीति वचनेन पर्यायाणामप्यनेकविशिष्टनामसम्बन्धनिबन्धनस्तुत्यर्थत्वेनैव सहप्रयोगः। स्तुत्युपयोगेनैव व्युत्पत्तिनिमित्तभेदविवक्षायामपि पर्यायत्वेनासामानाधिकरण्यादेव नामन्त्रिते० (पा० ८-१-७३) इति निषेधाभावादामन्त्रितं पूर्वमविद्यमानवत् (पा० ८-१-७२) इति पूर्वस्याविद्यमानवत्त्वात्सर्वेषां पाष्ठिकमाद्युदात्तत्वम्। तद्वत्प्रकृतेऽपि। कृशॄपॄकटिपटिशौटिभ्य ईरन् (उ० ४-३०) इत्यत ईरन्नित्यनुवृत्तौ बहुलवचनादन्यत्रापीत्यनेन शु श्रु गताविति धातोरीरन्प्रत्यये कृते सति नित्स्वाच्छवीरयाशब्द आद्युदात्तः। धियेत्यत्र सावेकाचः० (पा० ६-१-१६८) इति विभक्तिरुदात्ता।

वनतमित्यत्र शपः पित्त्वाल्लोगमश्चमद्विवचनस्य लसार्वधातुकत्वाच्च वन षण सम्भक्ताविति धातुदात्तत्वमेव शिष्यते। न च तिङ्ङतिङः (पा० ८-१-२८) इति निघातः। पूर्वस्यामन्त्रितस्याविद्यमानवत्त्वेन पादादित्वात्। गिरः। सुपोऽनुदात्तत्वे प्रातिपदिकस्वरः शिष्यते ॥२॥

तृतीयामृचमाह। अत्राश्विनेत्यनुवर्तते। हे अश्विनावायातमस्मिन्कर्मण्यागच्छतम्। किमर्थमिति तदुच्यते। सुता युष्मदर्थं सोमा अभिषुताः। तान् स्वीकर्तुमिति शेषः। कीदृशावश्विनौ। दस्रा। शत्रूणामुपक्षपयितारौ। यद्वा देववैद्यत्वेन रोगाणामुपक्षपयितारौ। अश्विनौ वै देवानां भिषजौ श्रुतेः ( तै० स० २-३-११-२। ऐ० ब्रा० १-१८ ) इति। नासत्या। असत्यमनृतभाषणम्। तद्रहितौ। अत्र यास्कः। सत्यावेव नासत्यावित्यौर्णवाभः। सत्यस्य प्रणेतारावित्याग्रयणः ( नि० ६-१३ ) इति। रुद्रवर्तनी। रुद्रशब्दस्य रोदनं प्रवृत्तिनिमित्तम्। यदरोदीत्तद्रुद्रस्य रुद्रत्वम् तैत्तिरीयाः ( तै० स० १-५-१-१ ) इति। तद्यद्रोदयन्ति तस्माद्रुद्रा इति वाजसनेयिनः। रुद्राणां शत्रुरोदनकारिणां शूरभटानां वर्तनिर्मार्गो धाटीरूपो ययोस्तौ रुद्रवर्तनी। यथा शूरा धाटीमुखेन शत्रून् रोदयन्ति तद्वद्देतावित्यर्थः। युवाकव इत्यभिषुतानां सोमानां विशेषणम्। वसतीवरीभिरेकधनाभिश्चाद्भिर्मिश्रिता इत्यर्थः। वृक्तबर्हिषः। वृक्तानि मूलैर्वर्जितानि बर्हींष्यास्तरणरूपाणि येषां सोमानां ते वृक्तबर्हिषः। यद्वा भरता इत्यादिष्वष्टस्वृत्विङ्नामसु वृक्तबर्हिषः ( निघ० ३-१८ ) इति। तदानीं तृतीयार्थे प्रथमा। ऋत्विग्भिरभिषुता इत्यन्वयः। दस्रा। आमन्त्रितस्य च ( पा० ६-१-१९८ ) इत्याद्युदात्तः। युवाकवः। यु मिश्रणे। युवन्ति मिश्रीभवन्ति वसतीवरीप्रभृतिभिः श्रयणद्रव्यैरिति युवाकवः। कटिकुषादिष्वगणितस्यापि यौतेर्बहुलग्रहणात् काकुप्रत्ययः। तस्य कित्त्वेन गुणाभावादुवङादेशः। प्रत्ययस्वरेणाकार उदात्तः। न विद्यतेऽसत्यमनयोरिति नासत्यौ। नभ्राण्नपान्नवेदानासत्या० ( पा० ६-३-७५ ) इत्यादिना प्रकृतिवद्भावान्नञो नलोपाभावः। पादादित्वेन निघाताभावादामन्त्रिताद्युदात्तत्वम्। वृक्तबर्हिषः। वृक्तं मूलैर्वर्जितं बर्हिरास्तीर्णं येषां ते वृक्तबर्हिषः। पूर्वपदप्रकृतिस्वरेण क्तप्रत्ययस्वर एव शिष्यते। आ इत्यत्रोपसर्गाश्चाभिवर्जम् ( फि० ४-१३ ) इत्युदात्तः। रुद्रवर्तनी। आमन्त्रितस्य च ( पा० ८-१-१९ ) इत्यामन्त्रितनिघातः ॥३॥

ऐन्द्रे तृचे प्रथमामृचमाह। चित्रभानो चित्रदीप्ते हे इन्द्रास्मिन् कर्मण्यायाहि। आगच्छ। सुता अभिषुता इमे सोमास्त्वायवस्त्वां कामयमाना वर्तन्ते। अण्वीभिः। अण्व इत्यादिषु द्वाविंशतिसङ्ख्याकेष्वङ्गुलिनामस्वण्व्यः ( निघ० २-५ ) इति पठितम्। ऋत्विजामङ्गुलिभिः सुता इत्यन्वयः। किञ्च एते सोमास्तना नित्यं पूतासः पूताः शुद्धाः। दशापवित्रेण शोधितत्वात्। इन्द्रशब्दं यास्को बहुधा निर्वक्ति (नि० १०-८) इन्द्र इरां दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयतीति वेरां धारयतीति वेन्दवे द्रवतीति वेन्दौ रमत इति वेन्धे भूतानीति वा तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायत इदंकरणादित्याग्रयण इदंदर्शनादित्यौपमन्यव इन्दतेर्वैश्वर्यकर्मण इन्दञ्छत्रूणां दारयिता वा द्रावयिता वादरयिता च यज्वनाम् इति। अस्यायमर्थः। दॄ विदारणे इति धातुः। इरामन्नमुद्दिश्य तन्निष्पादकजलसिद्ध्यर्थं दृणाति मेघं विदीर्णं करोतीतीन्द्रः। डुदाञ् दाने इति धातुः। इरामन्नं वृष्टिनिष्पादनेन ददातीतीन्द्रः। धाञ् पोषणार्थः। इरामन्नं तृप्तिकारणं सस्यं दधाति जलप्रदानेन पुष्णातीतीन्द्रः। इरामुत्पादयितुं कर्षकमुखेन भूमिं

विदारयतीतीन्द्रः। पूर्वोक्तपोषणमुखेनेरां धारयति विनाशराहित्येन स्थापयतीतीन्द्रः। इन्दुः सोमवल्लीरसः। तदर्थं यागभूमौ द्रवति धावतीतीन्द्रः। इन्दौ यथोक्ते सोमे रमते क्रीडतीतीन्द्रः। ञिइन्धी दीप्ताविति धातुः। भूतानि प्राणिदेहान् इन्धे जीवचैतन्यरूपेणान्तः प्रविश्य दीपयतीतीन्द्रः। एतदेवाभिप्रेत्य वाजसनेयिन आमनन्ति। इन्धो ह वै नामैषः। योऽयं दक्षिणेऽक्षन्पुरुषः। तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ( बृ० उ० ४-२-२ ) इति। तथदित्यादिकं ब्राह्मणान्तरवाक्यम्। तत्रेन्द्रविषये निर्वचनमुच्यत इति शेषः। यद्यस्मात्कारणादेनं परमात्मरूपमिन्द्रं देवं प्राणवाक्चक्षुरादीन्द्रियैः प्राणापानादिवायुभिश्च सहितं समैन्धन्। उपासका ध्यानेन सम्यक् प्रकाशितवन्तः। तत्तस्मात्कारणादिन्द्रनाम सम्पन्नम्। अस्मिन्पक्ष इध्यते दीप्यते इति कर्मणि व्युत्पत्तिः। आग्रयणनामको मुनिरिदंकरणादिन्द्र इति निर्वचनं मन्यते। इन्द्रो हि परमात्मरूपेणेदं जगत्करोति। औपमन्यवनामको मुनिरिदंदर्शनादिन्द्र इति निर्वचनमाह। इदमित्यापरोक्ष्यमुच्यते। विवेकेन हि परमात्मानमापरोक्ष्येण पश्यति। एतदेवाभिप्रेत्यारण्यकाण्डे समाम्नायते। स एतमेव पुरुषं ब्रह्म ततमपश्यदिदमदर्शमितीं। तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः ( ऐ० आ० २-४-३ ) इति। इदि परमैश्वर्ये इति धातुः। स्वमायया जगद्रूपत्वं परमैश्वर्यम्। तद्योगादिन्द्रः। अनेनाभिप्रायेण श्रूयते। इन्द्रो मायाभिः पुरुरूपः ( ऋ० स० ६-४७-१८ ) इति। इनशब्दस्येश्वरवाचकस्याकारलोपे सति नकारान्तमिन्निति पदं भवति। दृ भये इति धातुः। स च परमेश्वरः शत्रूणां दारयिता भीषयितेतीन्द्रः। द्रु गताविति धातुः। शत्रूणां द्रावयिता पलायनं प्रापयितेतीन्द्रः। यज्वनां यागानुष्ठायिनामादरयिता भयस्य परिहर्ता। एवमेतानि निर्वचनानि द्रष्टव्यानीति। इन्द्रेत्यत्रामन्त्रिताद्युदात्तत्वम्। आ इत्यत्र निपातत्वेनाद्युदात्तः। चित्रभानो। पदात्परत्वादामन्त्रितनिघातः। त्वामिच्छतीत्यर्थे युष्मच्छब्दात्सुप आत्मनः क्यच् (पा० ३-१-८) प्रत्ययोत्तरपदयोश्च ( पा० ७-२-९८ ) इति मपर्यन्तस्य त्वादेशः। क्याच्छन्दसि (पा० ३-२-१७०) इति क्यजन्तादुप्रत्ययः। त्वयव इति प्राप्तौ युष्मदस्मदोरनादेशे ( पा० ७-२-८६ ) इत्यविभक्तावपि हलादौ व्यत्ययेनात्वम्। उकारः प्रत्ययस्वरेणाद्युदात्तः। अणुशब्दः सौक्ष्म्यवाचकः। तद्योगात्प्रकृतेऽङ्गुलिषु वर्तते। वोतो गुणवचनात् ( पा० ४-१-४४ ) इति ङीषि प्राप्ते व्यत्ययेन ङीन्। नित्त्वादाद्युदात्तः। तनेत्ययं निपातो नित्यमित्यर्थे। निपातत्वादाद्युदात्तः। पूतासः। आज्जसेरसुक् ( पा० ७-१-५० ) इत्यसुक् ॥४॥

द्वितीयामृचमाह। इन्द्र त्वमायाह्यस्मिन्कर्मण्यागच्छ। किमर्थम्। वाघत ऋत्विजो ब्रह्माणि वेदरूपाणि स्तोत्राण्युपैतुम्। कीदृशस्त्वम्। धियाऽस्मदीयया प्रज्ञयेषितः प्राप्तः। अस्मद्भक्त्या प्रेरित इत्यर्थः। विप्रजूतः। यथा यजमानभक्त्या प्रेरितस्तथाऽन्यैरपि विप्रैर्मेधाविभिर्ऋत्विग्भिः प्रेरितः। कीदृशस्य वाघतः। सुतावतः। अभिषुतसोमयुक्तस्य। केत इत्यादिष्वेकादशसु प्रज्ञानामसु धीः (निघ० ३-९) इति पठितम्। चतुर्विंशतिसङ्ख्याकेषु मेधाविनामसु विप्रो धीरः ( निघ० ३-१५) इति पठितम्। भरता इत्यादिष्वष्टस्वृत्विङ्नामसु वाघतः (निघ० ३-१८) इति पठितम्। इषित इत्यत्रेष गतावित्यस्मान्निष्ठायामिडागमः। आगमा अनुदात्ताः ( पा० वा०)

३-१-३ ) इतीटोऽनुदात्तत्वात् क्तस्वरः शिष्यते । विप्रजूतः । डुवप् बीजतन्तुसन्ताने इति धातो-र्ऋज्रेन्द्राग्रवज्रविप्र० (उ० २-२७) इत्यादिना रन्प्रत्ययान्तो विप्रशब्दो निपातितः । निपातनादुपधाया इकारो लघूपधगुणाभावश्च । नित्त्वादाद्युदात्तः । तैर्जूतः प्राप्तः । जू इति सौत्रो धातुर्गत्यर्थः । श्र्युकः किति ( पा० ७-४-११ ) इतीट्प्रतिषेधः । तृतीया कर्मणि ( पा० ६-२-४८ ) इति पूर्वपद-प्रकृतिस्वरत्वम् । सुतावतः । छान्दसं दीर्घत्वम् । मतुपोऽनुदात्तत्वात्क्तप्रत्ययस्य स्वर एव शिष्यते । वाघतः । नब्विषयस्यानिसन्तस्य ( फि० २-३ ) इत्याद्युदात्तः । वाघच्छब्द ऋत्विङ्नामसु पठितः । प्रातिपदिकस्वरः ॥५॥

तृतीयामृचमाह । हरिशब्द इन्द्रसम्बन्धिनोरश्वयोर्नामधेयम् । हरी इन्द्रस्य रोहितोऽग्नेः ( निघ० १-१५ ) इति तदीयाश्वनामत्वेन पठितत्वात् । हे हरिवः । अश्वयुक्तेन्द्र । त्वं ब्रह्माण्युपेतु-मायाहि । कीदृशस्त्वम् । तूतुजानः । त्वरमाणः । आगत्य चास्मिन्सुते सोमाभिषवयुक्ते कर्मणि नोऽस्मदीयं चनोऽन्नं हविर्लक्षणं दधिष्व । धारय । स्वीकुर्वित्यर्थः । तूतुजानः । तुजेर्लिटि लिटः कानज्वा ( पा० ३-२-१०६ ) इति कानजादेशः । तुजादीनां दीर्घोऽभ्यासस्य ( पा०६-१-७ ) इत्यभ्यासस्य दीर्घत्वम् । अभ्यस्तानामादिः ( पा०६-१-१८९ ) इत्याद्युदात्तत्वम् । हरिव इत्यत्र हरयोऽस्य सन्तीति मतुपि छन्दसीरः ( पा० ८-२-१५ ) इति मकारस्य वत्वम् । सम्बुद्धावुगिदचाम्० ( पा० ७-१-७० ) इति नुम् । संयोगान्तलोपः । नकारस्य मतुवसोरु सम्बुद्धौ छन्दसि ( पा० ८-३-१ ) इति रुत्वम् । आष्टमिको निघातः । ब्रह्माणीत्यस्य हरिव इत्यनेना-सामर्थ्यात्समर्थः पदविधिः ( पा० २-१-१ ) इति नियमात्सुबामन्त्रितपराङ्गवद्भावाभावेनामन्त्रित-निघाताभावादाद्युदात्तत्वे सत्युपेत्यकारस्य स्वरितः । दधिष्वेत्यत्र दधातेर्लोटि थास् । थासः से ( पा० ३-४-८० ) सवाभ्यां वामौ ( पा० ३-४-९१ ) इत्येकारस्य वादेशः । छन्दस्युभयथा ( पा० ३-४-११७ ) इति सार्वधातुकार्धधातुकसंज्ञयोः सत्योः सार्वधातुकत्वेन शपि श्लौ च द्विर्भावः । आर्धधातुकत्वेनेडागमश्च । आतो लोप इटि च ( पा० ६ ४-६४ ) इत्याकारलोपः । चनः । चायेरन्ने ह्रस्वश्च ( उ० ४-२०७ ) इत्यसुन्नन्तः । चकारान्नुडागमे यलोपः ॥६॥

इति प्रथमस्य प्रथमे पञ्चमो वर्गः ।

वैश्वदेवतृचे प्रथमामृचमाह । हे विश्वे देवास एतन्नामका देवविशेषाः । दाशुषो हविर्दत्तवतो यजमानस्य सुतमभिषुतं सोमं प्रत्यागत । आगच्छत । ते च देवा ओमासो रक्षकाः । चर्षणी-धृतो मनुष्याणां धारकाः । दाश्वांसः फलस्य दातारः । मनुष्या इत्यादिषु पञ्चविंशतिसङ्ख्या-केषु मनुष्यनामसु चर्षणिशब्दः पठितः ( निघ० २-३ ) । अश्विनावित्यादिष्वेकत्रिंशत्सङ्ख्याकेषु देवविशेषनामसु विश्वेदेवाः साध्या ( निघ० ५-६ ) इति पठितम् । एतामृचं यास्क एवं व्याख्यात-वान् । अवितारो वावनीया वा मनुष्यधृतः सर्व च देवा इहागच्छत दत्तवन्तो दत्तवतः सुतमिति । तदेतदेकमेव वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते यत्तु किञ्चिद् बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते यदेव विश्वलिङ्गमिति शाकपूणिः ( नि० १२-४० ) इति । अत्र विश्वशब्दः सर्वशब्दपर्याय इति यास्कस्य मतम् । देवविशेषस्यैवासाधारणं लिङ्गमिति शाकपूणेर्मतम् । अवन्तीत्योमासो देवाः । मन्नित्यनुवृत्तावविसिविसिशुषिभ्यः किन्त् ( उ० १-१४६ ) इति मन्प्रत्ययः । ज्वरत्वरस्रिव्य-विमवामुपधायाश्च ( पा० ६-४-२० ) इत्यूठ् । मनः कित्त्वेऽपि बाहुलकाद्गुणः । आज्जसेरसुक्

( पा० ७-१-५० ) इति जसेरसुगागमः। आमन्त्रिताद्युदात्तत्वम्। चर्षणयो मनुष्यास्तान्वृष्टिदानादिना धारयन्तीति चर्षणीधृतो देवाः। पूर्वस्यामन्त्रितस्य सामान्यवचनस्य विभाषितं विशेषवचने बहुवचनम् ( पा० ८-१-७४ ) इत्यविद्यमानवत्त्वप्रतिषेधात्पादादित्वेन निघातः। नन्वत एव विद्यमानवत्त्वात्सुबामन्त्रिते० ( पा० २-१-२ ) इति पराङ्गवत्त्वेनैकपदीभावात्पदात्परत्वेन कथं निघात इति चेन्न। तत्करणं स्वाश्रयमपि यथा स्यादिति वचनात्पदभेदप्रयुक्तस्य निघातस्याप्युपपत्तेः। ऐकपद्ये ऽप्याद्युदात्तत्वे ऽनुदात्तं पदमेकवर्जम् ( पा० ६-१-१५८ ) इति सुतरामेव निघातो भविष्यति। इत्थमेव तर्हि द्रवत्पाणी शुभस्पती इत्यत्रापि पराङ्गत्वेनैकपद्यादुत्तरस्य शेषनिघातप्रसङ्ग इति चेन्न। तत्र पराङ्गवद्भावस्य परेणामन्त्रितं पूर्वमविद्यमानवत् ( पा० ८-१-७२ ) इत्यविद्यमानवद्भावेन बाधितत्वात्। इह पुनर्विभाषितं विशेषवचने बहुवचनम् ( पा० ८-१-७४ ) इत्याविद्यमानवत्त्वस्य निषेधात् पूर्वस्याप्यामन्त्रितस्य विद्यमानवत्त्वात्पराङ्गत्वं स्वीकृतमिति वैषम्यम्। विश्वे। पादादित्वादाद्युदात्तः। गणदेवतावचनश्चात्र विश्वशब्दो न सर्वपर्याय इति विशेष्यपरतया सामान्यवचनत्वादोमास इत्यनेन न सामानाधिकरण्यम्। सामानाधिकरण्ये हि पूर्वस्य पदस्य पराङ्गवद्भावे सति मित्रावरुणावृतावृधावित्यादाविवात्राप्यामन्त्रिताद्युदात्तता न स्यात्। विश्वे इत्यस्य विशेषणं देवास इति। दीव्यन्तीति देवाः प्रकाशवन्तः। नन्ववयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति रूढ एवार्थो देवशब्दस्य ग्राह्यो न यौगिकः। यौगिकत्वे हि अवयवार्थानुसन्धानव्यवधानेन प्रतिपत्तिर्विलम्बिता स्यात्। समुदायप्रसिद्धौ तु न विलम्ब इति चेत्। न। समुदायप्रसिद्धौ हि देवशब्दस्य सामान्यपरतया विशेषवचनत्वाभावाद्विभाषितं विशेषवचने बहुवचनम् ( पा० ८-१-७४ ) इत्यनेनानिषिद्धत्वाद्विश्वे इत्यस्याविद्यमानत्वेन शुभस्पती इति पदवद्देवा इत्यस्यापि आद्युदात्तत्वं स्यात्। स्वरानुसारेण च रूढित्यागेनापि देवशब्दस्य योगस्वीकारो युक्त एव। आगत। आगच्छत। बहुलं छन्दसि ( पा० २-४-७३ ) इति शपो लुकि सत्यनुदात्तोपदेश० ( पा० ६-४-३७ ) इत्यादिना मकारलोपः। आङः पदात्परत्वान्निघातः। दाश्वांसः। दाशृ दाने इत्यस्य क्वसौ दाश्वान्साह्वान्मीढ्वांश्च ( पा० ६-१-१२ ) इति निपातनात् क्रादिनियमप्राप्त इडागमो द्विर्वचनं च न भवति। प्रत्ययस्वरेण क्वसोरुदात्तत्वम्। दाशुष इत्यत्र वसोः संप्रसारणम् ( पा० ६-४-१३१ ) इति सम्प्रसारणम्। संप्रसारणाच्च ( पा० ६-१-१०८ ) इति पूर्वरूपत्वम्। शासिवसिघसीनां च ( पा० ८-३-६० ) इति षत्वम् ॥७॥

द्वितीयामृचमाह। विश्वे देवास एतन्नामकगणरूपा देवविशेषाः। सुतं सोममागन्त। आगच्छन्तु। कीदृशाः। अप्तुरः। तत्तत्काले वृष्टिप्रदा इत्यर्थः। तूर्णयः। त्वरायुक्ताः। यजमानमनुग्रहीतुमालस्यरहिता इत्यर्थः। विश्वेषां देवानां सोमं प्रत्यागमने उस्रा इत्यादिर्दृष्टान्तः। उस्राः सूर्यरश्मयः स्वसराण्यहानि प्रत्यालस्यरहिता यथा समागच्छन्ति तद्वत्। खेदय इत्यादिषु पञ्चदशसु रश्मिनामसु उस्रा वसवः ( निघ० १-५ ) इति पठितम्। वस्तोरित्यादिषु द्वादशस्वहर्नामसु स्वसराणि घ्रंसो घर्मः ( निघ० १-९ ) इति पठितम्। तच्च पदं यास्केन व्याख्यातम्। स्वसराण्यहानि भवन्ति स्वयंसारीण्यपि वा स्वरादित्यो भवति स एनानि सारयति। उस्रा इव स्वसराणीत्यपि निगमो भवति ( नि० ५-४ ) इति। देवासः। पचाद्यजन्तत्वेन्त्वादन्तोदात्तः। अप्तुरः। तुर स्वरणे। श्लुविकरणी। तुतुरति त्वरयन्तीत्यर्थे क्विप् च ( पा० ३-२-७६ ) इति क्विप्। गतिकार-

कोपपदात्कृत (पा० ६-२-१३९) इत्युत्तरपदप्रकृतिस्वरत्वम्। आगन्त। आगच्छन्त्वित्यर्थ व्यत्ययेन मध्यमपुरुषबहुवचनम्। बहुलं छन्दसि (पा० २-४-७३) इति शपो लुक्। तस्य तप्तनप्तनथ-नाश्च (पा० ७-१-४५) इति तबादेशे ० अपिद् (पा० १ २-४) इति प्रतिषेधादङित्त्वादनुनासिकलोपा-भावः। तिङ्ङतिङः (पा० ८ १-२८ इति निघातः। ञित्वरा सम्भ्रमे इति धातोस्त्वरन्त इति तूर्णयः। निरित्यनुवृत्तौ वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ( उ० ४-५२ ) इति नित्। नित्त्वादाद्यु-दात्तः। उस्राइवेत्यत्रेवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वञ्च ( पा० वा० २-१-४) इति समासे पूर्वपदप्रकृतिस्वरत्वं नित्यम्। 'सरतीति सरः सूर्यः। पचाद्यच्। स्वः सरो येषां तानि स्व-सराण्यहानि। बहुव्रीहौ प्रकृत्या पूर्वपदम् (पा० ६-२-१) इति स्वसरशब्द आद्युदात्तः ॥८॥

तृतीयामृचमाह। विश्वे देवास एतन्नामका देवविशेषा मेधं हविर्यज्ञसम्बद्धं जुषन्त। सेवन्ताम्। कीदृशाः। अस्रिधः। क्षयरहिताः शोषरहिता वा। एहिमायासः। सर्वतो व्याप्त प्रज्ञाः। यद्वा सौचीकमग्निमप्सु प्रविष्टमेहि मा यासीरिति यदवोचन् तदनुकरणहेतुकोऽयं विश्वेषां देवानां व्यपदेश एहिमायास इति। अद्रुहः। द्रोहरहिताः। वह्नयो वोढारः। धनानां प्रापयितारः। अस्रिधः। स्रिधेः क्षयार्थस्य शोषणार्थस्य वा संपदादिभ्यो भावे क्विपि नञा बहुव्रीहिः। पूर्वपदप्रकृतिस्वरं बाधित्वा नञ्सुभ्याम् ( पा० ६-२-१७२ ) इत्युत्तरपदान्तोदात्तत्वम्। एहि-मायासः। ईह चेष्टायाम्। आ समन्तादीहत इत्येहिः। ०इन् ( उ० ४-११९ ) इति सर्वधातु-साधारण इन्प्रत्ययो नित्त्वादाद्युदात्तः। एहिर्माया प्रज्ञा येषामिति बहुव्रीहौ पूर्वपदप्रकृति-स्वरत्वम्। अथवा आङ उदात्तादुत्तरस्येहीति लोण्मध्यमैकवचनस्य तिङ्ङतिङः ( पा० ८-१-२८) इति निघात एकादेश उदात्तेनोदात्तः (पा० ८-२-५) इत्येकार उदात्तः। एहीत्येतत्पदयुक्तं मा यासीरित्यत्र मायेत्यक्षरद्वयं येषां त एहिमायासः। पूर्वपदप्रकृतिस्वरः। अद्रुहः। द्रुह जिघांसायाम्। सम्पदादित्वाद्भावे क्विपि बहुव्रीहौ नञ्सुभ्याम् ( पा० ६-१-१७२ ) इत्युत्तरपदान्तो-दात्तत्वम्। मेधम्। मेधृ संगमे च। मेध्यते देवैः संगम्यत इति मेधं हविः। कर्मणि घञ्। ञित्त्वादाद्युदात्तः। जुषन्त सेवन्तामित्यर्थे छन्दसि लुङ्लङ्लिटः ( पा० ३-४-६ ) इति धातु-सम्बन्धे लङ्। यत उक्तरूपा विश्वे देवा अतो जुषन्तेति दृह्यादिधात्वर्थैः सम्बन्धात्। बहुलं छन्दस्यमाङ्योगेऽपि ( पा० ६-४-७५ ) इत्यडागमाभावः। वह्नयः। निरित्यनुवृत्तौ वहिश्रि० (उ० ४-५२) इत्यादिना विहितस्य निप्रत्ययस्य नित्त्वादाद्युदात्तत्वम् ॥९॥

सारस्वते तृचे या प्रथमा सान्वारम्भणीयेष्टौ सरस्वत्याः पुरोऽनुवाक्या। तथा दर्शपूर्ण-मासावारप्स्यमान इत्यस्मिन्खण्डे पावका नः सरस्वती पावीरवी कन्या चित्रायुः ( आ० श्रौ० २-८ ) इति सूत्रितम्। तामेतामृचमाह।

सरस्वती देवी वाजेभिर्हविर्लक्षणैरन्नैर्निमित्तभूतैः। यद्वा यजमानेभ्यो दातव्यैरन्नैर्निमित्तभूतैर्नो-ऽस्मदीयं यज्ञं वष्टु कामयताम्। कामयित्वा च निर्वहत्वित्यर्थः। तथाचारण्यकाण्डे श्रुत्यैवं व्याख्यातम्। यज्ञं वष्टु इति यदाह यज्ञं वहत्वित्येव तदाह ( ऐ० आ० १-१-४ इति )। कीदृशी सरस्वती पावका शोधयित्री। वाजिनीवती। अन्नवत्क्रियावती। धियावसुः। कर्मप्राप्यधननिमित्त-भूता। वाग्देवतायास्तथाविधं धननिमित्तत्वमरण्यकाण्डे श्रुत्या व्याख्यातम्। यज्ञं वष्टु धियावसु-रिति। वाग्वै धियावसुः (ऐ० आ० १-१-४) इति। श्येनः सोम इत्यादिषु पञ्चत्रिंशत्संख्याकेषु देवता-

विशेषवाचिषु पदेषु सरमा सरस्वती (निघ० ५-५) इति पठितम्। एतामृचं यास्क एवं व्याचष्टे। पावका नः सरस्वत्यन्नैरन्नवती यज्ञं वष्टु धियावसुः कर्मवसुः (नि० ११-२६) इति। पवनं पावः शुद्धिस्तं कायतीति पावका। कै गै रै शब्दे। आतोऽनुपसर्गे कः (पा० ३-२-३)। कृदुत्तरपदप्रकृतिस्वरत्वेनान्तोदात्तत्वम्। यद्वा। पुनातीत्यर्थे ण्वुलि प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः (पा० ७-३-४४) इतीत्वस्याभावोऽन्तोदात्तत्वं च छान्दसं द्रष्टव्यम्। सरशब्दः सर्तेरसुन्नन्तत्वादाद्युदात्तः। मतुब्ङीपोः पित्त्वादन्तोदात्तत्वम्। वाजेभिः। वाजशब्दो वृषादित्वादाद्युदात्तः। स ह्याकृतिगणः। वाजोऽन्नमास्त्विति वाजिन्यः क्रियाः। अत इनिठनौ (पा० ५-२-११५) इतीनिप्रत्ययः। ताः क्रिया यस्याः सन्ति सा सरस्वती वाजिनीवती। छन्दसीरः (पा० ८-२-१५) इति मतुपो वत्वम्। मतुब्ङीपोः पित्त्वेनानुदात्तत्वादिनेः प्रत्ययस्याद्युदात्तत्वमेव शिष्यते। यज्ञम्। यजयाच० (पा० ३-३-९०) इत्यादिना नङ्प्रत्ययस्वरेणान्तोदात्तः। वष्टु। वश कान्तौ। कान्तिरभिलाषः। अदिप्रभृतिभ्यः शपः (पा० २-४-७२) इति शपो लुक्। निघातः। धियावसुः। धिया कर्मणा वसु यस्याः सकाशाद्भवति सा धियावसुः। साबेकाचः० (पा० ६-१-१६८) इति विभक्तिरुदात्ता। बहुव्रीहौ प्रकृत्या पूर्वपदम् (पा० ६-२-१) इति विभक्तिस्वर एव शिष्यते। छान्दसस्तृतीयाया अलुक्॥१०॥

द्वितीयामृचमाह। या सरस्वती सेयमिमं यज्ञं दधे। धारितवती। कीदृशी। सूनृतानां प्रियाणां सत्यवाक्यानां चोदयित्री प्रेरयित्री। सुमतीनां शोभनबुद्धियुक्तानामनुष्ठातॄणां चेतन्ती। तदीयमनुष्ठेयं ज्ञापयन्ती। चोदयित्री। चुद प्रेरणे। णयन्तात्तृच्। चित्त्वादन्तोदात्तः। ऋन्नेभ्यो ङीप् (पा० ४-१-५) इति ङीप्। तस्योदात्तयणो हल्पूर्वात् (पा० ६-१-१७४) इत्युदात्तत्वम्। सूनृतानाम्। ऊन परिहाणे इत्यतः क्विप् च (पा० ३-२-७६) इति क्विपि सुतरामूनयत्यप्रियमिति सून् इति प्रियमुच्यते। तच्च तदृतं सत्यञ्चेति सूनृतम्। परादिश्छन्दसि बहुलम् (पा० ६-२-१९९) इत्युत्तरपदान्तोदात्तत्वम्। चेतन्ती। चिती सञ्ज्ञाने। अत्र शपो ङीपश्च पित्त्वादनुदात्तत्वम्। शतुश्चादुपदेशाल्लसार्वधातुकस्वरेणानुदात्तत्वम्। धात्वन्तस्वर एव शिष्यते। सुमतिशब्दस्य मतुपि ह्रस्वनुड्भ्यां मतुप् इत्यतः (पा० ६-१-१७६) इति विभक्तेरुदात्तत्वम्॥११॥

तृतीयामृचमाह। द्विविधा हि सरस्वती विग्रहवद्देवता नदीरूपा च। तत्र पूर्वाभ्यामृग्भ्यां विग्रहवती देवता प्रतिपादिता। अनया तु नदीरूपा प्रतिपाद्यते। तादृशी सरस्वती केतुना कर्मणा प्रवाहरूपेण महो अर्णः प्रभूतमुदकं प्रचेतयति। प्रकर्षेण ज्ञापयति। किञ्च। स्वकीयेन देवतारूपेण विश्वा धियः सर्वाण्यनुष्ठातृप्रज्ञानानि विराजति। विशेषेण दीपयति। अनुष्ठानविषयबुद्धीः सर्वदोत्पादयतीत्यर्थः। (सरस्वत्या द्विरूपत्वं यास्को दर्शयति। तत्र सरस्वतीत्येतस्य नदीवद्देवतावच्च निगमा भवन्ति (नि० २-२३) इति। एकशतसङ्ख्याकेषूदकनामस्वर्णः क्षोदः (निघ० १-१२) इति पठितम्। एतामृचं यास्को व्याचष्टे। महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्मणा प्रज्ञया चेमानि च सर्वाणि प्रज्ञानान्यभिविराजति (नि० ११-२७) इति।) महो अर्णः। महदिति तकारस्य व्यत्ययेन सकारः। तस्य रुत्वोत्वगुणाः। प्रातिपदिकस्वरेणान्तोदात्तः। एङः पदान्तादति (पा० ६-१-१०९) इति पूर्वरूपे प्राप्ते प्रकृत्यान्तः पादमव्यपरे (पा० ६-१-११५) इति प्रकृतिभावः। अर्णइत्यर्णः। उदके नुट् च (उ० ४-१९८) इत्यसुन्प्रत्ययो नुडागमश्च।

केतुना। प्रातिपदिकस्वरेणान्तोदात्तः। विश्वाः। विश्वशब्दः क्वन्प्रत्ययान्त आद्युदात्तः ॥१२॥

इति प्रथमस्य प्रथमे षष्ठो वर्गः ॥

॥ ४ ॥

१·४

प्रथमे मण्डले द्वितीयानुवाके चत्वारि सूक्तानि। सुरूपेत्यादिकं दशर्चं प्रथमं सूक्तम्। सुरूपकृत्नुं दश ( अनु० १-१ ) इत्यनुक्रान्तत्वात्। पूर्ववन्मधुच्छन्दसो गायत्रस्य चानुवृत्तेस्त एवर्षिच्छन्दसी। इन्द्रं पृच्छेति चतुर्थ्यामृचि लिङ्गदर्शनादिन्द्रो देवता। अभिप्लवषडहे ब्राह्मणाच्छंसिनः प्रातःसवने स्तोमवृद्धावावापार्थानि सुरूपकृत्नुमित्यादीनि षट् सूक्तानि। सूत्रितश्चाभिप्लवपृष्ठ्याहानीति खण्डे ब्राह्मणाच्छंसिनः सुरूपकृत्नुमूतय इति षट् सूक्तानि ( आ० श्रौ० ७-५ ) इति। आद्यानि त्रीणि सूक्तानि महाव्रते निष्केवल्य औष्णिहतृचाशीतौ शस्तव्यानि। उक्तं च शौनकेन सुरूपकृत्नुमूतय इति त्रीण्येन्द्र सानसिं रयिमिति सूक्ते ( ऐ० आ० ५-२-५ ) इति। (चतुर्विंशेऽहनि माध्यन्दिने सवने ब्राह्मणाच्छंसिनः सुरूपकृत्नुमूतय इति वैकल्पिकः स्तोत्रियस्तृचः।) होत्रकाणामिति खण्डे मंदेमंदे हि नो ददिः सुरूपकृत्नुमूतये (आ० श्रौ० ७-४) इति सूत्रितत्वात्। अग्निष्टोमे वैश्वदेवशस्त्रे सुरूपकृत्नुमूतय इति धाय्या। सुरूपकृत्नुमूतये तन्तुं तन्वन् रयम् (आ० श्रौ० ५-१८) इति सूत्रितत्वात्।

तामेतां सूक्तगतां प्रथमामृचमाह। सुरूपकृत्नुं शोभनरूपोपेतस्य कर्मणः कर्तारमिन्द्रमूतयेऽस्मद्रक्षार्थं द्यविद्यवि प्रतिदिनं जुहूमसि। आह्वयामः। आह्वाने दृष्टान्तः। गोदुहे गोधुगर्थं सुदुघामिव सुष्ठु दोग्ध्रीं गामिव। यथा लोके गोर्दोग्धा तदर्थं तस्याभिमुख्येन दोहनीयां गामाह्वयति तद्वत्। वस्तोरित्यादिषु द्वादशस्वहर्नामसु द्यविद्यवि ( निघ० १-९ ) इति पठितम्। सुरूपकृत्नुम्। करोतीति कृत्नुः। कृहनिभ्यां क्त्नुः ( उ० ३-३० ) कित्त्वाद्गुणाभावः। तकारोपजनश्छान्दसः। समासान्तोदात्तः। ऊतये। अवतेर्धातोः ०उदात्तः (पा० ३-३९७) इत्यनुवृत्तावूतियूतिजूतिसातिहेतिकीर्तयश्च ( पा० ३-३-९७ ) इति क्तिन्नुदात्तो निपातितः। सुदुघाम्। सुष्ठु दुग्धे इति सुदुघा। दुहः कब्घश्च (पा० ३-२-७०) इति कप्प्रत्ययो हकारस्य च घकारः। कित्त्वाद्गुणाभावः। कपः पित्त्वादनुदात्तत्वे धातुस्वरेणोकार उदात्तः। सुशब्देन गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव स्वरः। इवेन समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वञ्च (पा० वा० २-४-७१ ) इतीवसमासे स एव। गां दोग्धीति गोधुक्। सत्सूद्विष० ( पा० ३-२-६१ ) इत्यादिना क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वम्। जुहूमसि। ह्वयतेर्लडुत्तमपुरुषबहुवचने बहुलं छन्दसि (पा० २-४-७६) इति शपः श्लुः। अभ्यस्तस्य च ( पा० ६-१-३३ ) इत्यभ्यस्तकारणस्य ह्वयतेः प्रागेव द्विर्वचनात्सम्प्रसारणम्। सम्प्रसारणाच्च ( पा० ६-१-१०८ ) इति परपूर्वत्वम्। हलः ( पा० ६-४-२ ) इति दीर्घः। ततः श्लौ ( पा० ६-१-१० ) इति द्विर्वचनम्। अभ्यासस्य ह्रस्वः। चुत्वजश्त्वे। इदन्तो मसिः ( पा० ७-१-४६ ) इतीकारागमः। प्रत्ययस्वरेण मकारस्योदात्तत्वम्। द्यविद्यवि। द्योशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। नित्यवीप्सयोः ( पा० ८-१-४ ) इति द्विर्भावः। तस्य परमाम्रेडितम् ( पा० ८-१-२ )। अनुदात्तं च ( पा० ८-१-३ ) इति द्वितीयस्यानुदात्तत्वम् ॥१॥

द्वितीयामृचमाह। हे सोमपाः सोमस्य पातरिन्द्र सोमं पातुं नोऽस्मदीयानि सवना त्रीणि सवनानि प्रत्युप समीप आगहि। आगच्छ। आगत्य च सोमं पिब। रेवतो धनवतस्तव मदो हर्षो गोदा इत्। गोप्रद एव। त्वयि हृष्टे सति अस्माभिर्गावो लभ्यन्त इत्यर्थः। उप। निपातत्वादाद्युदात्तः। सवना। सूयते सोम एष्विति सवनानि। अधिकरणे ल्युट्। सुपो डादेशष्टि-लोपश्च। लिति ( पा० ६-१-१९३ ) इति प्रत्ययात्पूर्वस्याकारस्योदात्तत्त्वम्। गहि। गमेर्बहुलं छन्दसि ( पा० २-४-७३ ) इति शपो लुक्। हेर्ङित्त्वादनुदात्तोपदेश० ( पा० ६-४-३७ ) इत्यादिना मकारलोपः। अतो हेः ( पा० ६-४-१०५ ) इत्याभाच्छास्त्रीये लुकि कर्तव्येऽसिद्धवदत्राभात् ( पा० ६-४-२२ ) इत्याभाच्छास्त्रीयो मकारलोपोऽसिद्धवद्भवति। सोमपाः। आमन्त्रितस्य च ( पा० ८-१-१९ ) इति निघातः। तस्याविद्यमानवत्त्वेऽपि पूर्वपित्रया तिङ्ङतिङः ( पा० ८-१-२८ ) इति पिबेत्यस्य निघातः। न च पूर्वस्यापि पराङ्गवद्भावेनाविद्यमानवत्त्वम्। असामर्थ्येन तदभावात्। गां ददातीति गोदाः। क्विप् च ( पा० ३-२-७६ ) इति क्विपं परमपि सरूपं बाधित्वा प्रतिपद-विधित्वादातो मनिन्क्वनिब्वनिपश्च ( पा० ३-२-७४ ) इति विच्। क्विपि हि घुमास्था० ( पा० ६-४-६६ ) इत्यादिना धातोराकारस्येत्वं स्यात्। रेवान्। रयिर्धनमस्यास्तीति मतुप्। ह्रस्वनुड्भ्यां मतुप् ( पा० ६-१-१७६ ) इति मतुबुदात्तः। छन्दसीरः ( पा० ८-२-१५ ) इति वत्वन्। रयेर्मतौ बहुलं छन्दसि ( पा० वा० ६-१-३७ ) इति सम्प्रसारणपरपूर्वत्वे गुणश्च। मदः। मदोऽनुपसर्गे ( पा० ३-३-६७ ) इत्यप् पित्त्वादनुदात्तः ॥२॥

तृतीयामृचमाह। अथ सोमपानानन्तरं हे इन्द्र ते तवान्तमानामन्तिकतमानामतिशयेन समीपवर्तिनां सुमतीनां शोभनमतियुक्तानां शोभनप्रज्ञानां पुरुषाणां मध्ये स्थित्वा विद्याम वयं त्वां जानीयाम। यद्वा सुमतीनां शोभनबुद्धीनां कर्मानुष्ठानविषयाणां लाभार्थमित्य-ध्याहारः। बुद्धिलाभाय त्वां स्मरेमेत्यर्थः। त्वमपि नोऽति मा ख्यः। अस्मानतिक्रम्यान्येषां त्वत्स्वरूपं मा प्रकथय। किन्त्वागत्यास्मानेवागच्छ। अथेति निपात आद्युदात्तः। निपातस्य च ( पा० ६-३-१३६ ) इति दीर्घत्वम्। अन्तमानाम्। अतिशयेनान्तिका इत्यतिशायने तमप्। तमे तादेश्च० ( पा० वा० ६-४-१४९ ) इति तादिलोपः। अन्तोऽस्यास्तीत्यन्तिकः समीपः। अत इनिठनौ ( पा० ५-२-११५ ) इति ठन्। नित्त्वादाद्युदात्तः। दूरोत्कर्षस्या-वसानं नास्ति। सामीप्योत्कर्षस्य पुनर्यो यस्य समीपः स एव तस्यान्त इत्यन्तवत्त्वात्समीप-मन्तिकमुच्यते। विद्याम। वेत्तेर्लिङि यासुट् परस्मैपदेषूदात्तो ङिच्च ( पा० ३-४-१०३ ) इति यासुडुदात्तः। पादादित्वान्निङ्ङतिङः ( पा० ८-१-२८ ) इति न निघातः। सुमतीनाम्। मतिशब्दे क्तिन्नन्तेऽपि मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ( पा० ३-३-९६ ) इतीकार उदात्तः। शोभना मतिर्येषां ते सुमतय इति बहुव्रीहौ पूर्वपदप्रकृतिस्वरापवादेन नञ्सुभ्याम् ( पा० ६-२-१७२ ) इत्युत्तरपदान्तोदात्तः। शोभना मतयः सुमतय इति कर्मधारयेऽप्यव्ययपूर्वपदप्रकृतिस्वरापवाद-कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वेव। अतो मतुपि ह्रस्वादन्तोदात्ताच्च सुमतिशब्दात्परस्य नामो नामन्यतरस्याम् ( पा० ६-१-१७७ ) इत्युदात्तत्वम्। ख्यः। ख्या प्रकथने। इत्यस्य लुङि सिप्यस्यतिवक्तिख्यातिभ्योऽङ् ( पा० ३-१-५२ ) इति च्लेरङादेशः। आतो लोप इटि च ( पा० ६-४-६४ ) इत्याकारलोपः। इतश्च० ( पा० ३-४-१०० ) इतीकारलोपः। रुत्वविसर्गौ। न

माङ्योगे ( पा० ६-४-७४ ) इत्यडभावः। गहि। गमेर्बहुलं छन्दसि ( पा० २-४-७३ ) इति शपो लुकि हेर्ङित्त्वादनुदात्तोपदेश० ( पा० ६-४-३७ ) इति मकारलोपस्यासिद्धवदत्राभाद् ( पा० ६-४-२२ ) इत्यसिद्धत्वादतो हेः ( पा० ६-४-१०५ ) इति लुङ् न भवति ॥३॥

चतुर्थीमृचमाह। अत्र यजमानं प्रति होता ब्रूते। हे यजमान त्वमिन्द्रं परेहि। इन्द्रस्य समीपे गच्छ। गत्वा च विपश्चितं मेधाविनं होतारं मां पृच्छ असौ होता सम्यक् स्तुतवान्न वेत्येवं प्रश्नं कुरु। य इन्द्रस्ते तव यजमानस्य सखिभ्य ऋत्विग्भ्यो वरं श्रेष्ठं धनं पुत्रादिकमा समन्तात्प्रयच्छतीति शेषः। तादृशमिन्द्रमिति पूर्वत्रान्वयः। पुनरपि कीदृशम्। विप्रम्। मेधाविनम्। अस्तृतम्। अहिंसितम्। विप्रः ( निघ० ३-५ ) इत्यादिषु चतुर्विंशतिसङ्ख्याकेषु मेधाविनामसु विप्रविपश्चिच्छब्दौ पठितौ। विप्रम्। वृषादित्वादाद्युदात्तः। अस्तृतम्। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। इन्द्रशब्द ऋज्रेन्द्राग्र० ( उ० २-२१ ) इत्यादिना रन्। नित्त्वादाद्युदात्तः। सखिभ्यः। समाने ख्यः स चोदात्तः ( उ ४-१३८ ) इति समाने उपपदे ख्यातेरिण् डिद्० ( उ० ४-१३३ ) इत्यनुवृत्तेस्तस्य डित्त्वाट्टिलोपश्च। तत्सन्नियोगेन यलोपः। उपपदस्योदात्तत्वम्। समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु ( पा० ६-३-८४ ) इति सभावः। अतः सखिशब्द आद्युदात्तः। व्रियत इति वरः। ग्रहवृदृनिश्चिगमश्च। ( पा० ३-३-५८ ) इत्यप्। तस्य पित्त्वाद्धातुस्वर एव ॥४॥

पञ्चमीमृचमाह। नोऽस्माकं सम्बन्धिनः। ऋत्विज इति शेषः। ते ब्रुवन्तु। इन्द्रं स्तुवन्तु। उत। अपि च। हे निदो निन्दितारः पुरुषा निरारत। इतो देशान्निर्गच्छत। अन्यतश्चित्। अन्यस्मादपि देशान्निर्गच्छत। कीदृशा ऋत्विजः। इन्द्रे दुवः परिचर्यां दधानाः। कुर्वाणाः। इच्छब्दोऽवधारणे। सर्वदा परिचर्यां कुर्वन्त एव तिष्ठन्त्वित्यर्थः। निन्दन्तीति निदः। णिदि कुत्सायाम्। क्विपि नुमभावश्छान्दसः। सुपोऽनुदात्तत्वाद्धातुस्वरः। आमन्त्रितत्वेऽपि वाक्यान्तरत्वेन स्ववाक्यगतपदादपरत्वान्न निघात इत्याद्युदात्तत्वमेव। अन्यतः। लिति ( पा० ६-१-१९३ ) प्रत्ययपूर्वस्योदात्तत्वम्। चिदित्यपिशब्दार्थे। तेन न केवलमितः, इतो निर्गत्यान्यतोऽपि निर्गच्छतेति गम्यते। स एष धात्वर्थयोः सम्बन्ध आरतेति लुङा द्योत्यते। स हि धातुसम्बन्धाधिकारे विधीयते। आरत। अर्तेश्छन्दसि लुङ्लङ्लिटः ( पा० ३-४-६ ) इति लोडर्थे लुङ्। मध्यमबहुवचनस्य तादेशः। सर्तिशास्त्यर्तिभ्यश्च ( पा० ३-१-५६ ) इति च्लेरङादेशः। ऋदृशोऽङि गुणः ( पा० ७-४-१६ ) इति गुणः। आडागमः। दधानाः। शानचश्चित्त्वात्प्राप्तमन्तोदात्तत्वं बाधित्वा परत्वादभ्यस्तानामादिः ( पा० ६-१-१८९ ) इत्याद्युदात्तत्वम्। दुवः परिचर्या। इरज्यतीत्यादिषु दुवस्यति ( निघ० ३-१५ ) इति पाठात्। नब्विषयस्यानिसन्तस्य ( फि० २-३ ) इत्याद्युदात्तः ॥५॥

इति प्रथमस्य प्रथमे सप्तमो वर्गः ॥

सुरूपेति सूक्ते षष्ठीमृचमाह। हे दस्म शत्रूणामुपक्षपयितरिन्द्र त्वदनुग्रहादरिस्त शत्रवोऽपि नोऽस्मान् सुभगान् शोभनधनोपेतान्वोचेयुः। उच्यासुः। कृष्टयो मनुष्या अस्मन्मित्रभूता वदन्तीति किमु वक्तव्यमिति शेषः। ततो धनसम्पन्ना वयमिन्द्रस्य शर्मणीन्द्रप्रसादलब्धे सुखे स्यामेत्। भवेमैव। मघमित्यादिष्वष्टाविंशतिसङ्ख्याकेषु धननामसु रयिः क्षत्रं भगः (निघ० २-१०) इति पठितम्। मनुष्या इत्यादिषु पञ्चविंशतिसङ्ख्याकेषु मनुष्यनामसु कृष्टयः (निघ० २-३) इति पठितम्। उत। एवमादीनामन्तः (फि० ४-१३) इत्यन्तोदात्तः। सुभगान्। भगशब्दस्य क्रत्वादिषु पाठान्नञ्सुभ्याम् (पा० ६-२-१७२) इत्युत्तरपदान्तोदात्तत्वं बाधित्वा क्रत्वादयश्च (६-२-११८) इत्युत्तरपदाद्युदात्तत्वम्। संहितायां दीर्घादटि समानपादे (पा० ८-३-९) इति नकारस्य रुत्वम्। भोभगो० (पा० ८-३-१७) इति यत्वम्। लोपः शाकल्यस्य (पा० ८-३-१९) इति यलोपः। तस्यासिद्धत्वान्न पुनः सन्धिकार्यम्। आतोऽटि नित्यम् (पा० ८-३-३) इत्याकारस्यानुनासिकता। अरिः। वचनव्यत्ययः। अच इः (उ० ४-१४०) इतीप्रत्ययान्तः प्रत्ययस्वरेणान्तोदात्तः। वोचेयुः। उच्यासुः। वच परिभाषणे इत्यस्मादाशीर्लिङि झेर्जुसादेशे लिङ्याशिष्यङ् (पा० ३-१-८६) इत्यङ्प्रत्यये वच उम् (पा० ७-४-२०) इत्युमागमः। गुणः। यासुट् परस्मैपदेषु० (पा० ३-४-१००) इति यासुट्। किदाशिषि (पा० ३-४-१०४) इति यासुटः कित्त्वम्। छन्दस्युभयथा (पा० ३-४-११७) इति लिङादेशस्य सार्वधातुकत्वाल्लिङः सलोपोऽनन्त्यस्य (पा० ७-२-७९) इति सकारलोपः। अतो येयः (पा० ६-२-८०)। आद्गुणः (पा० ६-१-८७) अङोऽदुपदेशत्वाल्लसार्वधातुकस्वरेण लिङोऽनुदात्तत्वम्। अङ्प्रत्ययस्वर एव शिष्यते। तेन सहेकारस्य गुण एकादेश उदात्तेनोदात्तः (पा० ७-२-५) इत्युदात्तः। दस्म। दसु उपक्षये इत्यस्मादन्तर्भावितण्यर्थादिषियुधीन्धिदसिश्याधूसूभ्यो मक् (उ० १-१४२)। पदात्परत्वादामन्त्रितनिघातः। कृष्टयः। क्तिच्क्तौ च सञ्ज्ञायाम् (पा० ३-३-१७४) इति क्तिचि मनुष्यनामत्वाच्चितः (पा० ६-१-१६३) इत्यन्तोदात्तः। स्याम। अस भुवि। श्नसोरल्लोपः (पा० ६-४-१११)। यासुट उदात्तत्वम्। पादादित्वादनिघातः। शर्मणि। शॄ हिंसायाम्। शृणाति हिनस्ति दुःखमिति शर्म। अन्येभ्योऽपि दृश्यन्ते (पा० ३-२-७५) इति मनिन्। नेड्वशि कृति (पा० ७-२-८) इतीट्प्रतिषेधः। नित्त्वादाद्युदात्वम् ॥६॥

सप्तमीमृचमाह। ईमिति निपात इदंशब्दार्थे वर्तते। हे यजमान। आशवे कृत्स्नसोमयागव्याप्तायेन्द्राय। ईमाभर। इमं सोममाहर। कीदृशं सोमम्। आशुम्। सवनत्रयव्याप्तम्। यज्ञश्रियम्। यज्ञस्य सम्पद्रूपम्। नृमादनम्। नृणामृत्विग्यजमानानां हर्षहेतुम्। पतयत्। पतयन्तम्। कर्माणि प्राप्नुवन्तम्। मन्दयत्सखम्। य इन्द्रो मन्दयति यजमानान्हर्षयति तस्मिन्निन्द्रे सखिभूतोऽयं सोमः। तत्प्रीतिहेतुत्वात्तृप्तिहेतुत्वाद्वा। आशुम्। कृवापाजिमिस्वदिसाध्यशूभ्य उण् (उ० १-१) इत्युण्। प्रत्ययस्वरः। आशवे। पूर्ववत्। यज्ञश्रियम्। समासस्य (पा० ६-१-२२३) इत्यन्तोदात्तः। माद्यन्तेऽनेनेति मादनः। करणाधिकरणयोश्च (पा० ३-३-११७) इति ल्युट्। तस्य लित्त्वात्पूर्व आकार उदात्तः। गतिकारकोपपदात्कृद् (पा० ६-२-१३९) इति स एव शिष्यते। पतयत्। पतेरदन्तस्य चौरादिको

णिच्। अतो लोपः (पा० ६-४-४८)। तस्य स्थानिवत्त्वादुपधाया वृद्ध्यभावः। लटः शत्रादेशः। तस्य छन्दस्युभयथा (पा० ३-४-११७) इत्यार्धधातुकत्वेन शबभावाद् ०अदुपदेशाद्० (पा० ६-१-१८६) इति निघाताभावेन प्रत्ययाद्युदात्तत्वमेव भवति। आर्द्धधातुकत्वेऽपि सर्वे विधयश्छन्दसि विकल्प्यन्ते (पा० प० ३५) इति णेरनिटि (पा० ६-४-५१) इति णिलोपाभावः। सुपां सुलुक्० (पा० ७-१-३९) इति अमो लुक्। न लुमता० (पा० १-१-६६) इति प्रत्ययलक्षणनिषेधादुगिदचाम्० (पा० ७-१-७०) इति न नुम्। एवं मन्दयच्छब्दोऽन्तोदात्तः। मन्दयतीन्द्रे सखा। सप्तमी० (पा० २-१-४०) इति योगविभागात्समासः। तत्पुरुषे तुल्यार्थ० (पा० ६-२-२) इति सप्तमीपूर्वपदप्रकृतिस्वरत्वम् ॥७॥

अष्टमीमृचमाह। हे शतक्रतो बहुकर्मयुक्तेन्द्र त्वमस्य सोमस्य सम्बन्धिनमंशं पीत्वा वृत्राणां वृत्रनामकासुरप्रमुखानां शत्रूणां घनोऽभवः। हन्ताभूः। ततो वाजेषु सङ्ग्रामेषु वाजिनं सङ्ग्रामवन्तं स्वभक्तं प्रावः। प्रकर्षेण रक्षितवानसि। अस्येतीदंशब्देन प्रयोगसमये पुरोदेशस्थः सोमो निर्दिश्यते न तु पूर्वप्रकृतः सोमः परामृश्यते। अतोऽनन्वादेशान्नात्रेदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ (पा० २.४.३२) इत्यशादेशः। अतो न सर्वानुदात्तत्वम्। किन्तु त्यदाद्यत्वे हलि लोपेऽकारः प्रातिपदिकस्वरेणोदात्त इत्यन्तोदात्ताद्० (पा० ६-१-१६६) इत्यनुवृत्तावूडिदंपदाद्यप्पुम्रैद्युभ्यः (पा० ६-१-१७१) इति विभक्तिरुदात्ता। पीत्वा। पिबतेः क्त्वाप्रत्यये घुमास्था० (पा० ६-४-६६) इत्यादिनेत्वम्। प्रत्ययस्वरेणोदात्तः। असामर्थ्यान्न परामन्त्रिताङ्गवद्भावः। घनः। मूर्तौ घनः (पा० ३-३-७७) इति हन्तेर्धातोः काठिन्येऽप्प्रत्ययः। तदस्यास्तीत्यर्शआदित्वादजन्तः। चित्त्वादन्तोदात्तः। वाजेषु। वृषादित्वादाद्युदात्तः। वाजिनम्। इनिप्रत्ययस्वरः ॥८॥

नवमीमृचमाह। हे शतक्रतो बहुकर्मयुक्त यद्वा बहुप्रज्ञानयुक्तेन्द्र धनानां सातये सम्भजनार्थं वाजेषु युद्धेषु वाजिनं बलवन्तं त्वा पूर्वमन्त्रोक्तगुणयुक्तं त्वां वाजयामः। अन्नवन्तं कुर्मः। रण इत्यादिषु षट्चत्वारिंशत्सङ्ग्रामनामसु पौंस्ये महाधने वाजेऽज्म (निघ० २.१३) इति पठितम्। अष्टाविंशतिसङ्ख्याकेषु अन्ननामस्वन्धो वाजः पाजः (निघ० २-७) इति पठितम्। उरु तुवीत्यादिषु द्वादशसु बहुनामसु शतं सहस्रम् (निघ० ३-१) इति पठितम्। अपोऽप्न इत्यादिषु षड्विंशतिसङ्ख्याकेषु कर्मनामसु शक्म क्रतुः (निघ० २-१) इति पठितम्। केतुः केत इत्यादिष्वेकादशसु प्रज्ञानामसु क्रतुरसुः (निघ० २-९) इति पठितम्। त्वा। अनुदात्तं सर्वम्० (पा० ८-१-१८) इत्यनुवृत्तौ त्वामौ द्वितीयायाः (पा० ८-१-२३) इति त्वादेशः। वाजेषु। वज व्रज गतौ। वाजयति गमयति शरीरनिर्वाहमनेनेति वाजो बलमन्नं वा। णयन्तात्करणे घञ्। तत्र ञित्स्वरस्यापवादे कर्षात्वतः (पा० ६-१-१५९) इत्यन्तोदात्तत्वे प्राप्ते तस्याप्यपवादेन वृषादीनां च (पा० ६-१-१०३) इत्याद्युदात्तत्वम्। वाजयामः। वाजोऽस्यास्तीति वाजवान्। तं कुर्म इत्यर्थे तत्करोति तदाचष्टे (पा० ग० ३-१-२५) इति णिच्। इष्ठवण्णौ प्रातिपदिकस्य (पा० ग० ३-१-२५) इति तस्मिन्परत इष्ठवद्भावाद्विन्मतोर्लुक् (पा० ५-३-६५) इति मतुपो लुक्। टेः (पा० ६-४-१५५) इत्यकारलोपः। णिचश्चित्त्वादन्तोदात्तत्वम्। शपः पित्त्वेनानुदात्तत्वम्। लसार्वधातुकस्वरेणाख्यातस्याप्यनुदात्तत्वम्। पादादित्वात्तिङ्ङतिङः (पा० ८.१-२८) इति न

निघातः। शतक्रतो। आमन्त्रितनिघातः। धनानाम्। नब्विषयस्यानिसन्तस्य (फि० २-३) इत्याद्युदात्तः। सातये। ०उदात्तः (पा० ३-३-९६) इत्यनुवृत्तावूतियूतिजूतिसातिहेतिकीर्तयश्च (पा० ३-३-९७) इति क्तिन्नुदात्तः ॥९॥

दशमीमृचमाह। य इन्द्रो रायो धनस्यावनी रक्षकः स्वामी वा तस्मा इन्द्राय गायत। हे ऋत्विजस्तत्प्रीत्यर्थं स्तुतिं कुरुत। कीदृश इन्द्रः। महान्। गुणैरधिकः। सुपारः। सुष्ठु कर्मणः पूरयिता। सुन्वतो यजमानस्य सखा सखिवत्प्रियः। रायः। ऊडिदंपदाद्यप्पुम्रैद्युभ्यः (पा० ६-१-१७१) इति विभक्तेरुदात्तत्वम्। अवनिः। अव रक्षणगतिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादहनभाववृद्धिषु च। इत्यस्मादर्तिसृधृधम्यम्यश्यवितॄभ्योऽनिः (उ० २-१०२) इत्यनिः। प्रत्ययाद्युदात्तत्वम्। सुपारः। पॄ पालनपूरणयोरित्यस्माण्णिजन्तात्कर्तरि० (पा० ३-१-६८) इत्यनुवृत्तौ पचाद्यच्। चितः (पा० ६-१-१६३) इत्यन्तोदात्तः। सुन्वतः। शतुरनुमो नद्यजादी (पा० ६-१-१७३) इति विभक्तिरुदात्ता। सखा। समाने ख्यः स चोदात्तः (उ० ४-१३८) इतीण्प्रत्ययः। तत्सन्नियोगेन यलोपः। सशब्दस्य चोदात्तः। डित्त्वाट्टिलोपः। तस्मै। ०अदिः (उ० १-१३५) इत्यनुवृत्तौ त्यजितनियजिभ्यो डित् (उ० १-१३७) इति तनोतेरदिप्रत्ययः। डित्त्वाट्टिलोपे प्रत्ययस्वरेण तच्छब्द उदात्तः। त्यदाद्यत्वम्। एकादेश उदात्तेनोदात्तः (पा० ६-२-५) इत्युदात्तः। सावेकाचस्तृतीयादिर्विभक्तिः (पा० ६-१-१६८) इति विभक्तेरुदात्तत्वप्राप्तौ प्रथमैकवचनेऽवर्णान्तत्वान्न गोश्वन्साववर्ण० (पा० ६-१-१८२) इति निषेधः। इन्द्राय। इन्द्रशब्दो रन्प्रत्ययान्तो निपातितः। नित्त्वादाद्युदात्तः। कर्मणा यमभिप्रैति स सम्प्रदानम् (पा० १-४-३२) इत्यत्र क्रियाग्रहणं कर्तव्यम् (पा० वा० १-४-३२) इति वचनाद्दानक्रियया प्राप्यत्वात्सम्प्रदानत्वेन चतुर्थी ॥१०॥

इति प्रथमस्य प्रथमेऽष्टमो वर्गः।

॥ ५ ॥

१.५

आ त्वेति द्वितीयं सूक्तं दशर्चम्। सुरूपकृत्नुं दशेत्यनुवृत्तावातु युञ्जन्ति (अनु० १-१) इत्येवमनुक्रान्तत्वात्। ऋषिच्छन्दोदेवताविनियोगाः पूर्ववत्। विशेषविनियोगस्तु अतिरात्रे तृतीयपर्याये मैत्रावरुणशस्त्रे स्तोत्रियोऽयं तृचः। अतिरात्रे पर्यायाणामिति खण्डे आ त्वेता निषीदत (आ० श्रौ० ६-४) इत्युक्तत्वात्।

तत्र प्रथमामृचमाह। तुशब्दः क्षिप्रार्थो निपातः। द्वाभ्यामाङ्भ्यामन्वेतुमितशब्दोऽभ्यसनीयः। हे सखाय ऋत्विजस्तु क्षिप्रमस्मिन्कर्मणि एतेतागच्छतागच्छत। आदरार्थोऽभ्यासः। आगत्य च निषीदत। उपविशत। उपविश्य चेन्द्रमभिप्रगायत। सर्वतः प्रकर्षेण स्तुत। कीदृशाः सखायः। स्तोमवाहसः। त्रिवृत्पञ्चदशादिस्तोमानस्मिन्कर्मणि वहन्ति प्रापयन्ति। आ। निपातत्वादाद्युदात्तः। इत। इण् गतौ। द्व्यचोऽतस्तिङः (पा० ६-३-१३५) इति संहितायां

दीर्घत्वम्। नि। निपातत्वादाद्युदात्तः। सीदत। पाघ्राध्मास्थाम्नादाण्दृश्यर्ति० ( पा० ७-३-७८ ) इत्यादिना सदेः सीदादेशः। सदेरप्रतेः ( पा० ८-३-६६ ) इति संहितायां षत्वम्। अभि। उपसर्गाश्चाभिवर्जम् ( फि० ४-२१ ) इति वचनात्प्रातिपदिकान्तोदात्तत्वम्। स्तोमवाहसः। अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् ( उ० १-१४५ ) इति स्तौतेर्मन्प्रत्ययान्तः स्तोमशब्दो नित्त्वादाद्युदात्तः। स्तोमं वहन्तीति स्तोमवाहसः। वहिहधाञ्भ्यश्छन्दसि ( उ० ४-२२२ ) इत्यसुन् प्रत्ययः। तत्र ०णित् ( उ० ४-२१९ ) इत्यनुवृत्तेरत उपधायाः ( पा० ७-२-११६ ) इत्युपधाया वृद्धिः। कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वञ्च ( उ० ४-२२८ ) इत्यौणादिकसूत्रात्समास आद्युदात्तः ॥१॥

द्वितीयामृचमाह। सखायोऽभिप्रगायतेति पदद्वयमत्रानुवर्तते। हे सखाय ऋत्विजः सचा यूयं सर्वैः सह। यद्वा सचा परस्परसमवायेन सुतेऽभिषुते सोमे प्रवृत्ते सतीन्द्रमभिप्रगायत। कीदृशमिन्द्रम्। पुरूतमम्। पुरून्बहून् शत्रून्तमयति ग्लपयतीति पुरुतमः। पुरूणां बहूनां वार्याणां वरणीयानां धनानामीशानं स्वामिनम्। पुरूतमम्। तमु ग्लाने इति धातोरन्तर्भावितण्यर्थात्पचाद्यचि चित्त्वादन्तोदात्तेऽपि कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा परादिश्छन्दसि बहुलम् ( पा० ६-२-१९९ ) इत्युत्तरपदाद्युदात्तत्वम्। पुरूणाम्। पॄ पालनपूरणयोरित्यस्मात् कुः० ( उ० १-२२ ) इत्यनुवृत्तौ पॄभिदिव्यधिगृधिधृषिहृशिभ्यः ( उ० १-२३ ) इति कुप्रत्ययः। कित्त्वाद्गुणनिषेधः। उदोष्ठ्यपूर्वस्य ( पा० ७-१-१०२ ) इत्युकारः। उरण् रपरः ( पा० १-१-५१ )। प्रत्ययस्वरेणान्तोदात्तः पुरुशब्दः। अतो मतुपि ह्रस्वादन्तोदात्तात्पुरुशब्दात्परस्य नामो नामन्यतरस्याम् ( पा० ६-१-१७७ ) इत्यन्तोदात्तत्वम्। ईशानम्। ईश ऐश्वर्ये इति धातोरनुदात्तेत्त्वात्परस्य शानचो लसार्वधातुकानुदात्तत्वम्। वार्याणाम्। वृङ् सम्भक्तावित्यस्माद्दहलोर्ण्यत् ( पा० ३-१-१२४ )। ण्यद्विधौ हि वृञ एव ग्रहणं न तु वृङः। तित्स्वरितम् ( पा० ८-१-१८५ ) इति प्रत्ययस्वरितत्वं बाधित्वा ईडवन्दवृशंसदुहां ण्यतः ( पा० ६-१-२१४ ) इति ण्यदन्तस्याद्युदात्तत्वम्। यतोऽनावः ( पा० ६-१-२१३ ) इत्यत्र तु ण्यतो ग्रहणं न भवति तस्य द्व्यनुबन्धकत्वात्। एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य इति नियमात्। सचा। षच समवाये। धात्वादेः षः सः ( पा० ६-१-६४ )। संपदादिभ्यो भावे ०क्विप् (पा० वा ३-३-९४) इति क्विप्। तृतीयैकवचनम्। धातुस्वरेणाद्युदात्तः। सर्वे विधयश्छन्दसि विकल्प्यन्ते ( पा० वा० ३५ ) इति न्यायेन सावेकाचः० ( पा० ६-१-१६८ ) इति सूत्रं न प्रवर्तते। सचेत्यस्य निपातत्वपक्षे स्पष्टमाद्युदात्तत्वम् ॥२॥

तृतीयामृचमाह। घशब्दोऽवधारणार्थो निपातः। सर्वैस्तच्छब्दैः सम्बध्यते। सघ स एवेन्द्रः पूर्वमन्त्रोक्तगुणविशिष्टो नोऽस्माकं योगे पूर्वमप्राप्तस्य पुरुषार्थस्य सम्बन्ध आभुवत्। आभवतु। पुरुषार्थं साधयत्वित्यर्थः। स एव राये धनार्थमाभुवत्। आभवतु। स एव पुरन्ध्यां योषित्याभुवत्। यद्वा बहुविधायां बुद्धावाभुवत्। पुरन्धिर्बहुधीः ( नि० ६-१२ ) इति यास्कः। स एव वाजेभिर्दैयैरन्नैः सह नोऽस्मानागमत्। आगच्छतु। घ। चादयोऽनुदात्ताः ( फि० ४-३३ ) इत्यनुदात्तः। संहितायामृचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ( पा० ६-३-१३३ ) इति दीर्घः। योगे। घञो ञित्त्वादाद्युदात्तत्वम्। भुवत्। भूयात्। भवतेराशीर्लिङि परतो लिङ्याशिष्यङ् ( पा० ३-१-८६ ) इत्यङ् प्रत्ययः। तत्र ङित्त्वेन गुणाभावादुवङादेशः। अङ् याविषि

याडागम् न भवत्यनित्यमागमशासनम् ( पा० प० ९४ ) इति वचनात्। तिङ्ङतिङः ( पा० ८.१-२८ ) इति निघातः। ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ( पा० ६-१-१७१ ) इति राय इत्येतस्य विभक्तेरुदात्तत्वम्। पुरन्ध्याम्। पुरन्धिः पुरुधीः। पृषोदरादित्वादुकारस्यामादेश ईकारस्य ह्रस्वश्च। आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसङ्ख्यानम् ( पा० वा० ६-२-९१ ) इत्याद्युदात्तत्वम्। अथवा पुरं शरीरं धीयतेऽस्यामिति कर्मण्यधिकरणे च ( पा० ३-३-९३ ) इति किप्रत्ययः। अलुक् छान्दसः। नब्विषयस्यानिसन्तस्य ( फि० ४-३ ) इति पुरशब्द आद्युदात्तः। दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम्। गमत्। गमेर्लेटस्तिप्। इतश्च लोपः परस्मैपदेषु ( पा० ३-४-९७ ) इतीकारलोपः। बहुलं छन्दसि ( पा० २-४-७३ ) इति शपो लुक्। लेटोऽडाटौ ( पा० ३-४-९४ ) इत्यडागमः। आगमा अनुदात्ता इति तस्यानुदात्तत्वे धातुस्वर एव शिष्यते। वाजेभिः। वृषादित्वादाद्युदात्तः ॥३॥

चतुर्थीमृचमाह। समत्सु युद्धेषु यस्येन्द्रस्य संस्थे रथे युक्तौ हरी द्वावश्वौ शत्रवो न वृण्वते। न सम्भजन्ते। रथमश्वौ च दृष्ट्वा पलायन्त इत्यर्थः। तस्मा इन्द्राय तत्सन्तोषार्थं हे ऋत्विजो गायत। स्तुतिं कुरुत। रण इत्यादिषु षट्चत्वारिंशत्संग्रामनामसु समत्सु समरणे ( निघ० २-१७ ) इति पठितम्। संस्थे। सम्यक् तिष्ठतीति संस्थो रथः। आतश्चोपसर्गे ( पा० ३-१-१३६ ) इति कप्रत्ययः। कृदुत्तरपदप्रकृतिस्वरत्वम्। वृण्वते। प्रत्ययस्वरेणाकार उदात्तः। सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः ( पा० वा० ६-१-१५८ )। तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातो न भवति। यद्वृत्तान्नित्यम् ( पा० ८-१-६६ ) इति प्रतिषेधात्। पञ्चमीनिर्देशेऽप्यत्र व्यवहितेऽपि कार्यमिष्यते। हरतो रथमिति हरी। अश्वौ। ०इन् ( उ० ४-११९ ) इत्यनुवृत्तौ हृपिषिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च ( उ० ४-१२० ) इतीन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम्। समत्सु। संपूर्वाद्दसेः क्विप्। शत्रवः। शतिः सौत्रो धातुर्हिंसार्थः। श्यतिभ्यां क्रुन् ( उ० ४-१०६ )। नित्त्वादाद्युदात्तत्वम्। तस्मै। सावेकाचः० ( पा० ६-१-१६८ ) इति विभक्त्युदात्तस्य न गोश्वन्साववर्ण० ( पा० ६-१-१८२ ) इति प्रतिषेधात्प्रातिपदिकस्वर एव ॥४॥

पञ्चमीमृचमाह। इमे सोमासोऽस्मिन्कर्मणि संपादिताः सोमाः सुतपाव्नेऽभिषुतस्य सोमस्य पानकर्त्रे। षष्ठ्यर्थे चतुर्थी। तस्य पातुर्वीतये भक्षणार्थं यन्ति। तमेव प्राप्नुवन्ति। कीदृशाः सोमाः। सुताः। अभिषुताः। शुचयः। दशापवित्रेण शोधितत्वाच्छुद्धाः। दध्याशिरः। अवनीयमानं दधि आशीर्दोषघातकं येषां सोमानां ते दध्याशिरः। सुतपाव्ने। सुतं पिबतीति सुतपावा। वनिपः पित्त्वाद्धातुस्वर एव शिष्यते। समासे द्वितीयापूर्वपदप्रकृतिस्वरत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरत्वम्। शुचयः। शुच दीप्तौ। ०इन् ( उ० ४-११९ ) इत्यनुवृत्ताविगुपधात्कित् ( उ० ४ १२१ ) इतीनः कित्त्वाल्लघूपधगुणाभावः। नित्त्वादाद्युदात्तत्वम्। वीतये। वी गतिव्याप्तिप्रजनकान्त्यसनखादनेष्वित्यस्मान्मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ( पा० ३-३-९६ ) इति क्तिन्नुदात्तः। सोमासः। षुञ् अभिषवे। अर्तिस्तुसुहुसृधृक्षि० ( उ० १-१४५ ) इत्यादिना मन्। नित्त्वादाद्युदात्तः। आज्जसेरसुक् ( पा० ७-१-५० ) इत्यसुगागमः। दध्याशिरः। दधाति पुष्णातीति दधि। डुधाञ् धारणपोषणयोः। आदृगमहनजनः किकिनौ लिट् च ( पा० ३-२-१७१ ) इति किन्। लिड्वद्भावाद् द्विर्भावः। कित्त्वादाकारलोपः। नित्त्वा-

दाद्युदात्तत्वम्। श्रृ हिंसायाम्। आश्रृणाति आहिनस्ति सोमेऽवनीयमानं सत्सोमस्य स्वाभाविकं रसमृजीषत्वप्रयुक्तं नीरसं दोषं वेत्याशीः। क्विप्यत इद्धातोः ( पा० ७-१-१०० ) इतीत्वं रपरत्वञ्च। दध्येवाशीर्येषां सोमानां ते दध्याशिरः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥५॥

इति प्रथमस्य प्रथमे नवमो वर्गः।

आत्वेति सूक्तस्य षष्ठीमृचमाह। सुक्रतो शोभनकर्मन् शोभनप्रज्ञ वा हे इन्द्र त्वं सुतस्याभिषुतस्य सोमस्य पीतये पानार्थं ज्यैष्ठ्याय देवेषु ज्येष्ठत्वार्थं च सद्यस्तस्मिन्नेव क्षणे वृद्धोऽजायथाः। अभिवृद्धोत्साहेन युक्तोऽभूः। पीतये। पा पाने इत्यस्मात्स्थागापापचो भावे ( पा० ३-३-९५ ) इति क्तिन्। घुमास्था० ( पा० ६-४-६६ ) इत्यादिनेत्वम्। तस्य नित्त्वेऽपि व्यत्ययेन प्रत्ययोदात्तत्वम्। उत्तरसूत्रगतमुदात्तपदमत्रापि वा योजनीयम्। सद्यः। सद्यः-परुत्परारि० ( पा० ५-३-२२ ) इति सूत्रेण समानेऽहनीत्यर्थे समानस्य सभावो द्यश्च प्रत्ययो निपात्यते। प्रत्ययस्वरेणोदात्तः। वृद्धः। वृधु वृद्धौ। उदितो वा ( पा० ७-२-५६ ) इति क्त्वाप्रत्यय इटो विकल्पितत्वाद्यस्य विभाषा ( पा० ७-२-१५ ) इति निष्ठायामिट्प्रतिषेधः। प्रत्ययस्वरेणोदात्तः। ज्यैष्ठ्याय। ज्येष्ठस्य भावो ज्यैष्ठ्यम्। गुणवचनब्राह्मणादिभ्यः कर्मणि च ( पा० ५-१-१२४ ) इति ष्यञ्। ञित्त्वादाद्युदात्तः ॥६॥

सप्तमीमृचमाह। हे इन्द्र त्वां सोमासः सोमा आविशन्तु। आभिमुख्येन प्रविशन्तु। कीदृशाः सोमाः। आशवः। सवनत्रये प्रकृतिविकृत्योर्वा व्याप्तिमन्तः। कीदृशेन्द्र। गिर्वणः। गीर्भिः स्तुतिभिः सम्भजनीय देवविशेष। गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति ( नि० ६-१४ ) इति यास्कः। तथाविध हे इन्द्र ते तुभ्यं प्रचेतसे प्रकृष्टज्ञानाय शं सुखरूपाः सोमाः सन्तु। गिर्वणः। गृणन्तीति गिरः स्तुतयः। गॄ शब्दे। क्विपि ॠत इद्धातोः ( पा० ७-१-१०० ) इतीत्वं रपरत्वञ्च। गीर्भिर्वन्यते सेव्यत इति गिर्वणाः। वन षण सम्भक्तौ। संभक्तिः सेवा। सर्वधातुभ्योऽसुन् ( उ० ४-१९० ) इत्यसुन्प्रत्ययः। प्रचेतसे। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥७॥

अष्टमीमृचमाह। हे शतक्रतो बहुकर्मन्बहुप्रज्ञ वेन्द्र त्वां स्तोमाः सामगानां स्तोत्राण्यवीवृधन्। वर्धितवन्ति। तथा बह्वृचानामुक्था शस्त्राणि त्वामवीवृधन्। यस्मात्पूर्वमेवमासीत्तस्मादिदानीमपि नोऽस्माकं गिरः स्तुतयस्त्वां वर्धन्तु। वर्धयन्तु। अतिवृद्धं कुर्वन्तु। स्तोमाः। मनोनिस्वदाद्युदात्तः। अवीवृधन्। वृधु वृद्धौ। णयन्ताल्लुङि चङि उर्ऋत् ( पा० ७-४-७ ) इति वृधेरुपधाया ऋकारस्य ऋकारविधानादन्तरङ्गोऽपि गुणो बाध्यते। द्विर्भावहलादिःशेषसन्वद्भावेत्वदीर्घत्वाडागमाः। उक्था। उक्थानि। पातॄतुदिवचिरिचिसिचिभ्यस्थक् ( उ० २-७ ) इति थक्प्रत्ययः। तस्य कित्त्वात्सम्प्रसारणम्। शेश्छन्दसि बहुलम् ( पा० ६-१-७० ) इति शिलोपो नलोपश्च। प्रत्ययस्वरेणान्तोदात्तः। असामर्थ्यादामन्त्रितपरस्यापि न पराङ्गवद्भाव इति नाद्युदात्तत्वम्। वर्धन्तु। अन्तर्भावितण्यर्थाद्वृधेर्व्यत्ययेन परस्मैपदम् ॥८॥

नवमीमृचमाह। इन्द्र इमं वाजं सोमरूपमन्नं सनेत्। सम्भजेत्। कीदृश इन्द्रः। अक्षितोतिः। अहिंसितरक्षणः। कदाचिदपि रक्षां न विमुञ्चतीत्यर्थः। कीदृशं वाजम्। सहस्रिणम्। प्रकृतौ विकृतौ च प्रवर्तमानत्वेन सहस्रसङ्ख्यायुक्तम्। यस्मिन्वाजे विश्वानि

सर्वाणि पौंस्या पुंस्त्वानि बलानि वर्तन्ते। तादृशं वाजमिति पूर्वत्रान्वयः। अज्ञितोतिः। ननु क्षि क्षय इत्ययं धातुरकर्मकः। तस्य च कर्माभावादधिकरणे भावे कर्तरि वा क्तप्रत्ययेन भवितव्यम्। तदिह यदि कर्तर्यधिकरणे वा स्यात्तदा तयोरर्थयोर्ण्यत्प्रत्ययस्याविधानात्क्षियः० (पा० ६-४-५९) इत्यनुवृत्तौ निष्ठायामण्यदर्थे (पा० ६-४-६०) इति दीर्घेण भवितव्यम्। तथाच क्षियो दीर्घात् (पा० ८-२-४६) इति निष्ठानत्वेऽक्षीणेति स्यात् न त्वक्षितेति। अथ नपुंसके भावे क्तः (पा० ३-३-११४) इति भावपरः क्षितशब्दो गृह्यते तदा तस्य ण्यदर्थत्वेन० अण्यदर्थे (पा० ६-४-६०) इति निषेधाद्दीर्घनत्वयोरभावात्क्षितमिति सिद्ध्यति। तदा तु नञ्तत्पुरुषः प्रकृतेन नान्वेतीति न विद्यते क्षितमत्रेति बहुव्रीहिणैव भवितव्यम्। तथाच नञ्सुभ्याम् (पा० ६-२-१७२) इत्युत्तरपदान्तोदात्तत्वं स्यात्। पुनरुक्तिशब्देन बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एव स्वरस्तिष्ठेदित्यभिमतमाद्युदात्तत्वं न सिध्येत्। इति। सत्यम्। अत एवात्र क्षिधातुरन्तर्भावितण्यर्थो गृह्यते तेन सकर्मकत्वात्कर्मण्येषा निष्ठा। ततश्च० अण्यदर्थे (पा० ६-४-६०) इति निषेधाद्दीर्घो निष्ठानत्वं च न भविष्यतः। तथाच नञ्तत्पुरुषे न क्षिताक्षिता-क्षयितेत्यर्थः। तत्र चाव्ययपूर्वपदप्रकृतिस्वरत्वेन नञ उदात्तत्वम्। पुनरुक्तिशब्देन बहुव्रीहौ स एव स्वरः स्थास्यतीति न कोऽपि दोषः। रि क्षि चिरि जिरि दाश दृ जिघांसायामिति क्षियोते-र्हिंसार्थस्य वा कर्मणि निष्ठा। तथाचाहिंसितोतिरित्यर्थ उक्तक्रमेण स्वरः सिद्ध्यतीति न दोषः। सनेत्। वन षण सम्भक्तौ। भौवादिकः। वाजम्। वृषादित्वादाद्युदात्तः। इन्द्रः। रनो नित्त्वादाद्युदात्तः। सहस्रिणम्। सहस्रमस्यास्ति। अत इनिठनौ (पा० ५-२-११५)। प्रत्ययस्वरः। विश्वानि। विशेः कनि नित्त्वादाद्युदात्तता। पुंसः कर्माणि पौंस्यानि। ब्राह्मणादे-राकृतिगणत्वाद् गुणवचनब्राह्मणादिभ्यः कर्मणि च (पा० ५-१-१२४) इति ष्यञ्। ञित्त्वा-दाद्युदात्तः। प्रथमाबहुवचनस्य सुपां सुलुक्० (पा० ७-१-३९) इत्यादिना डादेशः। ननु स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् (पा० ४-१-८७) इत्यनेन धान्यानां भवने क्षेत्रे खञ् (पा० ५-२-१) इत्येतत्पर्यन्तेष्वपत्याद्यर्थेषु नञ्स्नञोर्विधानाद्यथा पुंसोऽपत्यं पौंस्नः पुंस आगतः पौंस्न इत्यादिवत्पुंसो भावः कर्म वेत्यस्मिन्नप्यर्थे ष्यञं बाधित्वा पौंस्नानीत्येव भवितव्यं कथमुच्यते पौंस्यानीति। उच्यते। आ च त्वात् (पा० ५-१-१२०) इति सूत्रे त्वादित्यवधि-निर्देशाद् ब्रह्मणस्त्वः (पा० ५-१-१३६) इत्येतत्पर्यन्तैरिमनिजादिभिः प्रत्ययैः सह त्वतलोः समावेशः। एवं तत्रैव चशब्दान्नञ्स्नञोरपि ष्यञादिभिः समावेश एव, न बाध्यबाधक-भावः ॥६॥

दशमीमृचमाह। हे गिर्वण इन्द्र मर्ता विरोधिनो मनुष्या नोऽस्मदीयानां तनूनां शरीराणां माभिद्रुहन्। अभितो द्रोहं मा कुर्युः। ईशानः समर्थस्त्वं वधं वैरिभिः सम्पाद्यमानं यवय। अस्मत्तः पृथक्कुरु। मनुष्या इत्यादिषु पञ्चविंशतिसङ्ख्याकेषु मनुष्यनामसु मर्ता व्राताः (निघ० २-३) इति पठितम्। मर्ताः। असिहसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् (उ० ३-८५) इति तन्। नित्त्वा-दाद्युदात्तः। अभि। एवमादीनामन्तः (फि० ४-१३)। द्रुहन्। द्रुह जिघांसायाम्। लिङर्थे लेट् (पा० ३-४-७) इति प्रार्थनायां लेट्। तस्य झिः। झोऽन्तः (पा० ७-१-३)। इतश्च लोपः परस्मैपदेषु (पा० ३-४-९७) इतीकारलोपः। शपो लुक्। सार्वधातुकमपित् (पा०

१-२-४ ) इति तिङो ङित्वाल्लघूपधगुणाभावः। तनूनाम्। असामर्थ्यान्न पराङ्गवद्भावः। इन्द्र गिर्वणः। गतम्। ईशानः। धातोरनुदात्तेत्त्वाच्छपो लुकि लसार्वधातुकानुदात्तत्वे धातुस्वर एव शिष्यते। यवय। यौतेर्णिचि संज्ञापूर्वको विधिरनित्यः ( पा० प० ८९ ) इति वृद्धिर्न क्रियते। अथवा यौतीति यवः। पचाद्यच्। यवं करोतीत्यर्थे तत्करोति तदाचष्टे ( पा० ग० ३-१-२१ ) इति णिच्। इष्ठवद्भावाट्टिलोपः। तस्य स्थानिवद्भावाद् वृद्ध्यभावः। वधम्। हनश्च वधः ( पा० ३-३-७६ ) इति भावेऽप्। तत्सन्नियोगशिष्टः स्थानिवद्भावेनान्तोदात्तो वधादेशः। उदात्तनिवृत्ति-स्वरेणाप उदात्तत्वम् ॥१०॥

इति प्रथमस्य प्रथमे दशमो वर्गः।

॥६॥

१·६

सरूपेत्यादिषु षट्सु सूक्तेषु तृतीयस्य युञ्जतीति सूक्तस्य मन्त्रसङ्ख्यार्षिच्छन्दोदेवतानि विनियोगश्चेत्येते पूर्ववदवगन्तव्याः। दशर्चे तस्मिन्सूक्त आयास्तिस्रोऽन्तिमा चेत्येताश्चतस्र ऐन्द्र्यः। आदहेत्येतां चतुर्थीमारभ्य षडृचो मारुत्यः। तासु मध्ये वीळु चिदिन्द्र गोत्येते द्वे ऋचौ मारुत्यौ सत्यावैन्द्र्यावपि भवतः। तदेतत्सर्वमनुक्रमणिकायामुक्तम्। सरूपकृत्नु दशैन्द्र-मा तु युञ्जन्त्यादहेत्येताः षण्मारुत्यो वीळुचिदिन्द्र गोत्यैन्द्र्यौ च ( अनु० १-१ ) इति। एतस्मि-न्सूक्ते युञ्जन्तीत्यसौ तृचस्तृतीये रात्रिपर्याये ब्राह्मणाच्छंसिनोऽनुरूपः। तथा चातिरात्रे पर्याया-णामिति खण्डे योगेयोगे तवस्तरं युञ्जन्ति ब्रध्नमरुषम् ( आ० ६-४ ) इति सूत्रितम्।

तत्र प्रथमामृचमाह। इन्द्रो हि परमैश्वर्ययुक्तः। परमैश्वर्यं चाग्निवाय्वादित्यनक्षत्ररूपेणा-वस्थानादुपपद्यते। ब्रध्नमादित्यरूपेणावस्थितम्। अरुषम्। हिंसकरहिताग्निरूपेणावस्थितम्। चरन्तम्। वायुरूपेण सर्वतः प्रसरन्तम्। इन्द्रं परि तस्थुषः परितोऽवस्थिता लोकत्रयवर्तिनः प्राणिनो युञ्जन्ति। स्वकीये कर्मणि देवतात्वेन सम्बद्धं कुर्वन्ति। तस्यैवेन्द्रस्य मूर्तिविशेष-भूता रोचना नक्षत्राणि दिवि द्युलोके रोचन्ते। प्रकाशन्ते। अस्य मन्त्रस्योक्तार्थपरत्वं ब्राह्मणान्तरे व्याख्यातम्। युञ्जन्ति ब्रध्नमित्याह। असौ वा आदित्यो ब्रध्नः। आदित्य-मेवास्मै युनक्ति। अरुषमित्याह। अग्निर्वा अरुषः। अग्निमेवास्मै युनक्ति। चरन्तमित्याह। वायुर्वै चरन्। वायुमेवास्मै युनक्ति। परि तस्थुष इत्याह। इमे वै लोकाः परितस्थुषः। इमानेव लोकानस्मै युनक्ति। रोचन्ते रोचना दिवीत्याह। नक्षत्राणि वै रोचना दिवि। नक्षत्राण्येवास्मै रोचयन्तीति। पञ्चविंशतिसङ्ख्याकेषु महन्नामसु महो ब्रध्नः ( निघ० ३-३ ) इति पठितम्। आदित्यस्यापि महत्त्वादेव ब्रध्नत्वम्। युञ्जन्ति। श्नन्तेः प्रत्ययस्वरेणायुदात्तत्वम्। ब्रध्नम्।

प्रातिपदिकान्तोदात्तः। अरुषम्। रुष रिष हिंसार्थौ। रोषन्तीति रुषा हिंसकाः। इगुपधज्ञाप्रीकिरः कः (पा० ३-१-१३५) इति कः। प्रत्ययस्वरेणोदात्तः। न सन्ति रुषा यस्यासावरुषः। नञ सुभ्याम्। (पा० ६-२-१७२) इत्युत्तरपदान्तोदात्तत्वम्। अमि पूर्वः (पा० ६-१-१०७) इति पूर्वरूपस्य एकादेश उदात्तेनोदात्तः (पा० ८-२-५) इत्युदात्तत्वम्। चरन्तम्। शपः पित्त्वादनुदात्तत्वम्। शतुश्च लसार्वधातुकस्वरेण। धातुस्वर एव शिष्यते। तस्थुषः। तिष्ठतेर्लिटः क्वसुरादेशः। वस्वेकाजाद्घसाम् (पा० ७-२-६७) इतीटमन्तरङ्गमपि बाधित्वा सम्प्रसारणं सम्प्रसारणाश्रयं च बलीयः (पा० प० १२७) इति शसि परतो भस्याद्वसोः सम्प्रसारणम्। परपूर्वत्वम्। शासिवसिघसीनां च (पा० ८-३-६०) इति षत्वम्। वसोः प्रत्ययस्वरेणोदात्तत्वम्। रोचन्ते। तिङो लसार्वधातुकानुदात्तत्वम्। शपः पित्त्वादनुदात्तत्वम्। धातुस्वर एव। रोचना। अनुदात्तेतश्च हलादेः। (पा० ३-२-१४९) इति युच्। युवोरनाकौ (पा० ७-१-१) इत्यनादेशः। चितः (पा० ६-१-१६३) इत्यन्तोदात्तत्वम्। ऊडिदम्० (पा० ६-१-१७१) इत्यादिना विभक्तेरुदात्तत्वम् ॥१॥

द्वितीयामृचमाह। अस्य ब्रध्नादिशब्दप्रतिपाद्यस्यादित्यादिमूर्तिभिस्तत्र तत्रावस्थितस्येन्द्रस्य रथे हरी एतन्नामानौ द्वावश्वौ सारथयो युञ्जन्ति। इन्द्रसम्बन्धिनोरश्वयोर्हरिनामत्वं हरी इन्द्रस्य रोहितोऽग्नेः (निघ० १-१६) इति पठितत्वात्। कीदृशौ हरी। काम्या। कामयितव्यौ। विपक्षसा। विविधे पक्षसी रथस्य पार्श्वौ ययोरश्वयोस्तौ विपक्षसौ। रथस्य द्वयोः पार्श्वयोर्योजिताविल्यर्थः। शोणा रक्तवर्णौ। धृष्णू। प्रगल्भौ। नृवाहसा। नृणामिन्द्रतत्सारथिप्रमुखानां पुरुषाणां वोढारौ। अस्य। ब्रध्नमित्युक्तस्य परामर्शादिदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ (पा० २-४-३२) इत्यश्। शित्त्वात्सर्वादेशोऽनुदात्तः। विभक्तिरनुदात्तैवेति सर्वानुदात्तत्वम्। काम्या। कमु कान्तौ। कमेर्णिङ् (पा० ३-१-३०)। कामयतेरचो यत् (पा० ३-१-९७)। तित्स्वरितापवादत्वेन यतोऽनावः। (पा० ६-१-२१३) इत्याद्युदात्तत्वम्। सुपां सुलुक्० (पा० ७-१-३९) इति द्विवचनस्य डादेशः। हरतो रथमिति हरी। हृपिषि० (उ० ४-१२०) इत्यादिना इन्। नित्त्वादाद्युदात्तः। विपक्षसा। पचिवचिभ्यां सुट् च (उ० ४-२१९) इति पचेरसुन्। सुडागमः। विभिन्ने पक्षसी पार्श्वौ ययोस्तौ। विशब्दो निपातत्वादुदात्तः। पूर्वपदप्रकृतिस्वरेण स एव शिष्यते। द्विवचनस्य डादेशः। रथे। रमन्तेऽस्मिन्निति रथः। रमु क्रीडायाम्। हनिकुषिनीरमिकाशिभ्यः क्थन् (उ० २-२) इति क्थन्। कित्त्वादनुदात्तोपदेश० (पा० ६-४-३७) इत्यादिना मकारलोपः। नित्स्वरेणाद्युदात्तः। शोणा। शोणृ वर्णगत्योः। गमनकरणत्वात्करणे घञ्। ञित्त्वादाद्युदात्तः। सुपां सुलुक्० (पा० ७-१-३९) इति डादेशः। धृष्णू। ञिधृषा प्रागल्भ्ये। त्रसिगृधिधृषिक्षिपेः क्नुः (पा० ३-२-१४०)। कित्त्वाद्गुणाभावः। प्रत्ययस्वरः। नृवाहसा। नॄन् वहत इति वहेर्वहिहाधाञ्भ्यश्छन्दसि (उ० ४-२२२) इत्यसुन् ०णित् (उ० ४-११९) इत्यनुवृत्तेर्वृद्धिः। नित्त्वादाद्युदात्तः। कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते ॥२॥

तृतीयामृचमाह। हे मर्या मनुष्या इदमाश्चर्यं पश्यतेत्यध्याहारः। किमाश्चर्यमिति तदुच्यते। आदित्यरूपोऽयमिन्द्र उषद्भिर्दाहकै रश्मिभिः प्रतिदिनमुषःकालैर्वा सम्भूयाजायथाः। उदपद्यत। अथवा सूर्यस्यैवास्तमये मरणमुपचर्य व्यत्ययेन बहुवचनं कृत्वा सम्बोधनं क्रियते। हे मर्य

प्रतिदिनं त्वमजायथा इति योज्यम्। किं कुर्वन्। अकेतवे। रात्रौ निद्राभिभूतत्वेन प्रज्ञानरहिताय प्राणिने केतुं कृण्वन् प्रातः प्रज्ञानं कुर्वन्। अपेशसे। रात्रावन्धकारावृतत्वेनानभिव्यक्तत्वाद्रूपरहिताय पदार्थाय प्रातरन्धकारनिवारणेन पेशो रूपमभिव्यज्यमानं कुर्वन्। पेश इति रूपनाम पिंशतेः ( नि० ८-११ ) इति यास्कः। अकेतवेऽपेशसे इति चतुर्थ्यौ षष्ठ्यर्थे द्रष्टव्यौ। केतुम्। प्रातिपदिकस्वरः। कृण्वन्। कृवि हिंसाकरणयोश्च। लटः शत्रादेशः। इदितो नुम् धातोः ( पा० ७-१-५८) इति नुमागमः। कर्तरि शपि प्राप्ते धिन्विकृण्व्योर च (पा० ३-१-८०) इत्युप्रत्ययः तत्सन्नियोगेन वकारस्य चाकारः। अतो लोपः ( पा० ६-४-४८ ) इत्यकारलोपः। तस्य स्थानिवद्भावात्पूर्वस्य लघूपधगुणो न भवति। अकारस्य प्रत्ययस्वरेणोदात्तत्वम्। अकेतवे। बहुव्रीहौ नञ्सुभ्याम् ( पा० ६-२-१७२ ) इत्युत्तरपदान्तोदात्तत्वम्। पेशः। नब्विषयस्यानिसन्तस्य ( फि० २-३ ) इत्याद्युदात्तः। मर्याः। छन्दसि निष्टर्क्य० ( पा० ३-१-१२३ ) इत्यादौ म्रियतेर्निपातः। आमन्त्रितनिघातः। असामर्थ्यात्पूर्वस्य न पराङ्गवद्भावः। अपेशसे। नञ्सुभ्याम् (पा० ६-२-१७२) इत्युत्तरपदान्तोदात्तत्वम्। सम्। निपात आद्युदात्तः। उषद्भिः। उष प्लुष दाहे। ज्वलद्भी रश्मिभिः। लटः शत्रादेशे शपि प्राप्ते व्यत्ययेन शः। सार्वधातुकमपित् (पा० १-२-४) इति तस्य ङित्त्वाल्लघूपधगुणो न भवति। शस्य प्रत्ययस्वरेणोदात्तत्वम्। उपरि शतुरदुपदेशाल्लसार्वधातुकानुदात्तत्वम्। एकादेश उदात्तेनोदात्तः ( पा० ८-२-५ )। अजायथाः। अजायतेत्यर्थे पुरुषव्यत्यये निघातः॥३॥

चतुर्थीमृचमाह। अत्रास्ति विशेषविनियोगः। चतुर्विंशेऽहनि प्रातःसवने ब्राह्मणाच्छंसिशस्त्र आदह स्वधामन्विति द्वे ऋचौ, इन्द्रेण सं हि दृक्षस इत्येका। अयं तृचः षळहस्तोत्रियसञ्ज्ञकः। तथाच सूत्रितं चतुर्विंशे होताजनिष्टेति स्वाइ इन्द्रेण सं हि दृक्षस आदह स्वधामन्वित्येका द्वे च (आ० श्रौ० ७-२ ) इति। यद्यप्येतत्सूक्तमैन्द्रं तथाप्यादहेत्यादिषु षट्सु मरुतो वर्ण्यन्ते। प्रायेणैन्द्रं मरुतः (अनु० परि० १-२) इत्यनुक्रमणिकायामुक्तत्वात्। आदित्ययमानन्तर्यार्थे निपातः। अहेत्यवधारणार्थः। आदह वर्षर्तोरनन्तरमेव। स्वधामनु। इतः परं जनिष्यमाणमन्नमुदकं वाऽनुलक्ष्य मरुतो देवा गर्भत्वमेरिरे। मेघमध्ये जलस्य गर्भाकारं प्रेरितवन्तः। जलस्य कर्तारं पर्जन्यं प्रेरितवन्तः। प्रतिसंवत्सरमेवं कुर्वन्तीति दर्शयितुं पुनःशब्दः प्रयुक्तः। कीदृशो मरुतः। यज्ञियं यज्ञार्हं नाम दधानाः। धारयन्तः। सप्तसु गणेषु मरुतामीदृङ् चान्यादृङ् चेत्यादीनि यज्ञयोग्यानि नामान्यन्यत्राम्नातानि। अन्ध इत्यादिष्वष्टाविंशतिसङ्ख्याकेष्वन्ननामसु स्वः स्वधा ( निघ० २-७ ) इति पठितम्। अर्णः इत्यादिष्वेकशतसङ्ख्याकेषूदकनामसु तेजः स्वधा अक्षरम् ( निघ० १-१२ ) इति पठितम्। आत्। अह। निपातावाद्युदात्तौ। स्वधा। स्वं लोकं दधातीति पुष्णातीति स्वधा। आतोऽनुपसर्गे कः ( पा० ३-२-३ )। कृदुत्तरपदप्रकृतिस्वरत्वम्। अनुपुनःशब्दौ निपातावाद्युदात्तौ। गर्भस्य भावो गर्भत्वम्। प्रत्ययस्वरः। एरिरे। अन्तर्भावितण्यर्थादीर गतावित्यस्मादनुदात्तेतः परस्य लिटो झस्येरेच्। चित्त्वादन्तोदात्तः। सह सुपा ( पा० २-१-४ ) इत्यत्र सुपेति योगविभागादाङा सह तिङः समासेऽपि समासस्य ( पा० ६-१-२२३ ) इत्यन्तोदात्तत्वम्। इजादेश्च गुरुमतोऽनृच्छः ( पा० ३-१-३६ ) इत्याम् न भवति मन्त्रत्वात्। अहशब्दयोगान्निघाताभावः। तुपश्यपश्यताहैः पूजायाम् ( पा० ८-१-३९ ) इति निर्देशात्। दधानाः। शानचश्चित्त्वादन्तोदात्तत्वे

प्राप्ते ऽभ्यस्तानामादिः (पा० ६-१-१८९) इत्याद्युदात्तत्वम्। यज्ञमर्हति यज्ञियम्। यज्ञर्त्विग्भ्यां घखञौ (पा० ५-१-७१) इति घप्रत्ययः। आयनेयीनीयियः फढखच्छघां प्रत्ययादीनाम् (पा० ७-१-२) इतीयादेशः। प्रत्ययस्वरेणेकार उदात्तः ॥४॥

पञ्चमीमृचमाह। अस्ति किञ्चिदुपाख्यानम्। पणिभिर्देवलोकाद्गावोऽपहृता अन्धकारे प्रक्षिप्ताः। ताश्चेन्द्रो मरुद्भिः सहाजयदिति। एतच्चानुक्रमणिकायां सूत्रितम्। पणिभिरसुरैर्निगूळ्हा गा अन्वेष्टुं सरमां देवशुनीमिन्द्रेण प्रहितामयुग्भिः पणयो मित्रीयन्तः प्रोचुः (अनु० ८-५-१) इति। मन्त्रान्तरे च दृष्टान्ततया सूचितम्। निरुद्धा आपः पणिनेव गावः (ऋ० सं० १-३२-११) इति। तदेतदुपाख्यानमभिप्रेत्योच्यते। हे इन्द्र वीळु चित्। दृढमपि दुर्गमस्थानमारुजत्नुभिर्भञ्जद्भिर्वह्निभिर्वोढृभिरन्यत्र नेतुं समर्थैर्मरुद्भिः सहितस्त्वं गुहाचित् गुहायामपि स्थापिता उस्रिया गा अन्वविन्दः। अन्विष्य लब्धवानसि। ओजः पाज इत्यादिष्वष्टाविंशतिसङ्ख्याकेषु बलनामसु दक्षो वीळु च्यौत्नम् (निघ० २-९) इति पठितम्। नवसङ्ख्याकेषु गोनामस्वघ्न्योस्रोस्रिया (निघ० १-१) इति पठितम्। वीळु। प्रातिपदिकस्वरः। चित्। चादिरनुदात्तः। आरुजत्नुभिः। रुजो भङ्गे इति धातोरौणादिकः कत्नुच् प्रत्ययः। कित्त्वाद्गुणाभावः। चित्त्वादन्तोदात्तत्वम्। समासे कृदुत्तरपदप्रकृतिस्वरत्वम्। गुहा। सप्तम्या डादेशः। यामादीनां च (फि० २-१५) इत्याद्युदात्तः। वह्निभिः। वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् (उ० ४-५२) इति वहेर्निप्रत्ययः। नित्त्वादाद्युदात्तः। अविन्दः। शे मुचादीनाम् (पा० ७-१-५९) इति नुमागमः। लुङ्लङ्लृङ्क्ष्वडुदात्तः (पा० ६-४-७१)। वसन्तीत्युस्रियाः। वसेः कर्तरि रियक् प्रत्ययः। षत्वाभावश्च बाहुलकादूहनीयः। उक्तं हि। यत्र पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यमिति। इकारः प्रत्ययस्वरेणोदात्तः ॥५॥

इति प्रथमस्य प्रथमे एकादशो वर्गः।

युञ्जन्तीति सूक्ते षष्ठीमृचमाह। देवयन्तो मरुत्सञ्ज्ञकान्देवानिच्छन्तो गिरः स्तोतार ऋत्विजो महां प्रौढं मरुद्गणमच्छ प्राप्तुमनूषत। स्तुतवन्तः। कीदृशं मरुद्गणम्। विदद्वसुम्। वेदयद्भिः स्वमहिमप्रख्यापकैर्वसुभिर्धनैर्युक्तम्। श्रुतम्। विख्यातम्। मरुद्गणस्य दृष्टान्तः। यथा मतिम्। मातारमिन्द्रं यथा स्तुवन्ति तथेत्यर्थः। देवयन्तः। देवानात्मन इच्छन्तः। सुप आत्मनः क्यच् (पा० ३-१-८)। क्यचि च (पा० ७-४-३३) इतीत्वम्, अकृत्सार्वधातुकयोर्दीर्घः (पा० ७-४-२५) इति दीर्घत्वं च न भवतः। न च्छन्दस्यपुत्रस्य (पा० ७-४-३५) इत्यनेन क्यचि यत्प्राप्तमीत्वं दीर्घत्वं वा तस्य सर्वस्य प्रतिषेधात्। यद्यपीत्वमेव प्रकृतं तथापि व्यवहितस्यापि दीर्घत्वस्य स प्रतिषेध इति विज्ञायते। अश्वायन्त इत्यादावश्वाघस्यात् (पा० ७-४-३७) इत्यात्वविधानादिति ह्युक्तम्। क्यजन्ताच्छतृप्रत्ययः। क्यचश्चित्त्वाचितः (पा० ६-१-१६३) इत्यन्तोदात्तत्वम्। शपः पित्त्वेन शतुश्च लसार्वधातुकस्वरेणानुदात्तत्व एकादेश उदात्तेनोदात्तः (पा० ८-२-५) इत्युदात्तः। यथा। प्रकारवचने थाल् (पा० ५-३-२३)। लिति (पा० ६-१-१९३) इति

प्रत्ययात्पूर्वस्योदात्तत्वम्। मतिम्। मन्त्रे वृषेषपचमन० ( पा० ३-३-९६ ) इत्यादिना क्तिन्नुदात्तः। मतिशब्दो ज्ञानपरोऽप्युपचाराज्ज्ञातरीन्द्रे वर्तते। अथवा पदान्तरेण विशेष्यानुपादानादिन्द्रस्यैषा सञ्ज्ञा। ततश्च क्तिच्क्तौ च सञ्ज्ञायाम् ( पा० ३-३-१७४ ) इति मन्यतेः कर्तरि क्तिच्। तस्योपदेशेऽनुदात्तत्वादिट्प्रतिषेधः। चित्त्वादन्तोदात्तत्वम्। अच्छ। अध्याहृतगच्छत्यर्थयोगादच्छ गत्यर्थवदेषु ( पा० १-४ ६९ ) इति गतिसञ्ज्ञया निपातसञ्ज्ञाया अपि समावेशान्निपाता आद्युदात्ताः ( फि० ४-१२ ) इत्याद्युदात्तत्वम्। विदद्वसुम्। विद ज्ञाने इत्यस्मादन्तर्भावितण्यर्थाच्छतृप्रत्यये विदन्त्यौदार्यातिशयवत्तया ज्ञापयन्ति वसूनि धनानि यं स विदद्वसुः। विदेः शतृप्रत्ययेऽदिप्रभृतिभ्यः शपः ( पा० २-४-७२ ) इति शपो लुकि प्रत्ययस्वरेण शतुरुदात्तत्वम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते। गृणन्ति स्तुवन्तीति गिरः। गृणातेः। क्विप्यॄत इद्धातोः ( पा० ७-१-१०० ) इतीत्वं रपरत्वम्। महाम्। महान्तम्। नकारतकारयोर्लोपश्छान्दसः। प्रातिपदिकस्वरेणोदात्तत्वम्। अनूषत। णु स्तुतौ। व्यत्ययेनात्मनेपदम्। लुङि झस्यादादेशः। सिचि कुटादित्वेन ङित्त्वाद्गुणाभावः। इडभाव उकारदीर्घत्वं च छान्दसम्। निघातः। श्रुतम्। प्रत्ययस्वरः ॥६॥

सप्तमीमृचमाह। हे मरुद्गण। त्वमिन्द्रेण सञ्जग्मानः सङ्गच्छमानः सन्दृक्षसे हि। सम्यक्पश्येथाः खलु। अवश्यमस्माभिर्द्रष्टव्य इत्यर्थः। कीदृशेनेन्द्रेण। अविभ्युषा। भीतिरहितेन। कीदृशाविन्द्रमरुद्गणौ। मन्दू। नित्यप्रमुदितौ। समानवर्चसा। तुल्यदीप्ती। पुरा कदाचिद्वृत्रवधदशायामिन्द्रस्य सखायः सर्वे देवा वृत्रश्वासेनापसारिताः। तदानीमिन्द्रस्य वृत्रसम्बन्धिसकलसेनाजयार्थं मरुद्भिः सङ्गमोऽभूत्। सोऽयमर्थो वृत्रस्य त्वाश्वसथाद् (ऋ० सं० ८-८५-७) इति मन्त्रे सङ्गृहीतः। इन्द्रो वै वृत्रं हनिष्यन् ( ऐ० ब्रा० १२-८ ) इति ब्राह्मणे प्रपञ्चितश्च। इन्द्रशब्दः परमैश्वर्यवन्तं मरुद्गणं वाऽभिधत्ते। तदानीमिन्द्रस्य सम्बोधनं बहिरेवाध्याहर्तव्यम्। तथाचेयमृग्यास्केन व्याख्याता। इन्द्रेण हि सन्दृश्यसे सङ्गच्छमानोऽबिभ्युषा गणेन मन्दू मदिष्णू युवां स्थोऽपि वा मन्दुना तेनेति स्यात्समानवर्चसेत्येतेन व्याख्यातम् ( नि० ४-१२ ) इति। सन्दृक्षसे। संपश्येथाः। दृशेश्चेति वक्तव्यम् ( पा० वा० १-३-२९ ) इत्यात्मनेपदम्। दृशेर्लिङर्थे लेट् ( पा० ३-४-७ ) इति प्रार्थनायां लेट्। थासः से ( पा० ३-४-८० )। लेटोऽडाटौ ( पा० ३-४-९४ ) इत्यडागमः। सिब्बहुलं लेटि ( पा० ३-१-३४ ) इति सिप्। सञ्ज्ञापूर्वको विधिरनित्यः (पा० प० ८० ) इति गुणाभावः। व्रश्चादिना षत्वम्। षढोः कः सि ( पा० ८-२-४१ ) इति कत्वम्। आदेशप्रत्यययोः ( पा० ८-३-५९ ) इति सिपः षत्वम्। बहुलग्रहणात्सिपः परस्ताच्छबपि भवति। सिपा व्यवधानात्पत्यादेशो न भवति। शपः पित्त्वादनुदात्तत्वम्। उत्तरस्य लसार्वधातुकानुदात्तत्वम्। धातुस्वर एव शिष्यते। हिशब्दप्रयोगात्तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातो न भवति। हि च ( पा० ८-१-३४ ) इति प्रतिषेधात्। सञ्जग्मानः। गमेः संपूर्वाच्छन्दसि लुङ्लङ्लिटः ( पा० ३-४-६ ) इति वर्तमाने लिट्। समो गम्यृच्छिभ्याम् ( पा० १-३ २९ ) इत्यात्मनेपदविधानाल्लिटः कानजादेशः। द्विर्भावः। हलादिः शेषः। अभ्यासस्य चुत्वम्। गमहन० ( पा० ६-४-९८ ) इत्युपधालोपः। कानचश्चित्त्वादन्तोदात्तत्वम्। गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम्। अविभ्युषा। ञिभी भये। पूर्ववल्लिट्। शेषात्कर्तरि परस्मैपदम् ( पा०

१ ३ ७८ ) इति परस्मैपदम्। कसुश्च ( पा० ३-२-१०७ ) इति लिटः क्वसुरादेशः। तस्य किस्वाद्गुणाभावः। द्विर्भावः। अभ्यासस्य ह्रस्वजश्त्वे। क्रादिनियमात्प्राप्त इडेकाजा-द्घसाम् ( पा० ७-२-६७ ) इति नियमान्निवर्तते। नञ्समासे तृतीयैकवचने भत्वाद्वसोः सम्प्र-सारणम् ( पा० ६-४-१३१ ) इति वकारोकारः। संप्रसारणाच्च ( पा० ६-१-१०८ ) इति पूर्व-रूपत्वम्। शासिवसिघसीनाञ्च ( ८-३-६० ) इति षत्वम्। इणकादेशं बाधित्वेरनेकाचोऽसंयोग-पूर्वस्य ( पा० ६-४-८२ ) इति यणादेशः। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। पूर्वेण सह संहितायां मकारस्यैङः पदान्तादति ( पा० ६-१-१०९ ) इति पूर्वरूपत्वे प्राप्ते प्रकृत्यान्तः पादमव्यपरे पा० ६-१-११५ ) इति प्रकृतिभावः। मन्द्। मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। इदितो नुम् धातोः ( पा० ७-१-५८ ) इति नुमागमः। कुः ( उ० १-२२ ) इत्यनुवृत्तौ खण्डाङ्कुपीयुनीलगुलिगु ( उ० १-३७ ) इत्यत्राविभक्तिकनिर्देशाद्धन्तेर्हिंगुरितिवद्धात्वन्तरादपि कुरित्युक्तम्। प्रत्यय-स्वरेणान्तोदात्तः। द्विवचनमौ। प्रथमयोः पूर्वसवर्णः ( पा० ६-१-१०२ )। तृतीयैकवचने च सुपां सुलुक्० ( पा० ७-१-३९ ) इत्यादिना पूर्वसवर्णदीर्घत्वम्। समानवर्चसा। समानं वर्चो ययोरिति वा यस्येति वा बहुव्रीहिः। द्विवचने सुपां सुलुक् ( पा० ७-१-३९ ) इत्यादिनाकारादेशः। समानपदस्य प्रातिपदिकान्तत्वम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण तदेव शिष्यते ॥७॥

अष्टमीमृचमाह। मखः प्रवर्तमानोऽयं यज्ञोऽनवद्यैर्दोषरहितैरभिद्युभिर्द्युलोकमभिगतैः काम्यैः फलप्रदत्वेन कामयितव्यैर्गणैर्मरुत्समूहैः सहितमिन्द्रस्येन्द्रं सहस्वद् बलोपेतं यथा भवति तथार्चति। पूजयति। अयं यज्ञो मरुत इन्द्रं चातिशयेन प्रीणयतीत्यर्थः। यज्ञ इत्यादिषु पञ्चदशसु यज्ञनामसु मखो विष्णुः ( निघ० ३-१७ ) इति पठितम्। चतुश्चत्वारिंशत्सङ्ख्याकेष्वर्चतिकर्म-स्वर्चति गायतीति ( निघ० ३-१४ ) पठितम्। न विद्यतेऽवद्यं येषां तेऽनवद्याः। नञ्सुभ्याम् ( पा० ६-२-१७२ ) इत्युत्तरपदान्तोदात्तत्वम्। अभिगता द्यौर्यैस्तेऽभिद्यवः। तैरभिद्युभिः। अभिशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण स एव शिष्यते। मखः। प्रातिपदिकस्वरः। सहो बलमस्मिन्नर्चने समस्तीति सहस्वत्। तसौ मत्वर्थे ( पा० १-४-१९ ) इति भसञ्ज्ञया पदसञ्ज्ञाया बाधितत्वात्सकारस्य रुत्वाभावः। मादुपधायाश्च मतोर्वोऽय-वादिभ्यः ( पा० ८-२-९ ) इति वा झयः ( पा० ८-२-१० ) इति वा मतुपो मस्य वत्वम्। सहश्शब्दो नब्विषयस्यानिसन्तस्य ( फि० २-३ ) इत्याद्युदात्तः। मतुपः पित्त्वात्स एव शिष्यते। काम्यैः। कमेर्णिङ् ( पा० ३-१-३० )। अत उपधायाः ( पा० ७-२-११६ ) इति वृद्धिः। जनी जॄष् क्नसुरञ्जोऽमन्ताश्च ( धा० पा० १९-६३-६७ ) इत्यमन्तत्वेन प्राप्तस्य मित्त्वस्य न कम्य-मिचमाम् ( धा० पा० १९-६९ ) इति प्रतिषेधात्। मितां ह्रस्वः ( पा० ६-४-९२ ) इत्युपधा-ह्रस्वत्वं न भवति। णयन्तादचो यत् ( पा० ३-१-९७ )। णिलोपः। तित्स्वरितम् ( पा० ६-१-१८५ ) इति प्राप्ते यतोऽनावः ( पा० ६-१-२१३ ) इत्याद्युदात्तत्वम् ॥८॥

नवमीमृचमाह। हे परिज्मन् परितो व्यापिन्मरुद्गण। अतोऽस्मान्मरुद्गणस्थानादन्त-रिक्षादागहि। अस्मिन्कर्मण्यागच्छ। दिवो वा। द्युलोकाद्वा समागच्छ। रोचनादधि। दीप्यमानादादित्यमण्डलाद्वा समागच्छ। अस्मदीयकर्मकाले यत्र यत्र तिष्ठसि ततः सर्वस्मादा-गच्छेत्यर्थः। किमर्थमागमनमिति तदुच्यते। अस्मिन्कर्मणि वर्तमान ऋत्विग्गिरः स्तुतीः

समृञ्जते। सम्यक् प्रसाधयति। ऋञ्जतिः प्रसाधनकर्मेति यास्कः। एताः स्तुतीः श्रोतुमागच्छेत्यर्थः। यद्यप्यृत्विजा मन्त्रस्य प्रयुज्यमानत्वादृञ्जतिधातोरुत्तमपुरुषेण भवितव्यम्। तथापि परोक्षकृतत्वेन निर्देशात्प्रथमपुरुषप्रयोगः। परोक्षकृतलक्षणं च यास्क आह। तास्त्रिविधा ऋचः परोक्षकृता आध्यात्मिक्यश्च। तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य (नि० ७-१) इति। अतः। पञ्चम्यास्तसिल् (पा० ५-३-७)। एतदोऽश्। शित्त्वात्सर्वादेशः। लिति (पा० ६-१ १९३) इति प्रत्ययात्पूर्वस्योदात्तत्वम्। परिज्मन्। अज गतिक्षेपणयोः। अन्येभ्योऽपि दृश्यन्ते (पा० ३-२-७५) इति मनिन्। अकारलोपश्छान्दसः। आमन्त्रितनिघातः। गहि। गमेर्बहुलं छन्दसि (पा० २-४-७३) इति शपो लुक्। हेर्ङित्त्वादनुदात्तोपदेश० (पा० ६-४-३७) इत्यादिना मलोपः। अतो हेः (पा० ६-४-१०५) इति हिलोपो न भवति। तस्मिन्कर्तव्येऽसिद्धवदत्राभात् (पा० ६-४-२२) इतिमलोपस्यासिद्धत्वेनानकारान्तत्वात्। दिवः। ऊडिदम्० (पा० ६-१-१७१) इत्यादिना विभक्तेरुदात्तत्वम्। वा। वाद्योऽनुदात्ताः (फि० ४-१५) इत्यनुदात्तः। रोचनात्। रुच दीप्तौ। अनुदात्तेतश्च हलादेः (पा० ३-२-१४९) इति युच्। युवोरनाकौ (पा० ७ १-१) इत्यनादेशः। चित्दित्यन्तोदात्तः। अधि। अधिपरी अनर्थकौ (पा० १-४-९३) इति कर्मप्रवचनीयत्वेन सह निपातसञ्ज्ञायाः समानेशान्निपाता आद्युदात्ताः (फि० ४-१२) इत्याद्युदात्तः। अस्मिन्। परिज्मन्नित्यादिष्टस्यैवान्वादेशादिदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ (पा० २-४-३२) इत्यशनुदात्तः। शित्त्वात्सर्वादेशः। विभक्तिरनुदात्तौ सुप्पितौ (पा० ३-१-४) इत्यनुदात्तेति सर्वानुदात्तत्वम्। ऋञ्जते। ऋजिभृजी भर्जने। समित्युपसर्गयोगात्प्रसाधने वर्तते। निघातः। गिरः। प्रातिपदिकस्वरः ॥६॥

दशमीमृचमाह। इन्द्रं देवं प्रति सातिं धनदानमीमहे। आधिक्येन याचामहे। कस्माल्लोकादिति तदुच्यते। इतोऽस्माभिर्दृश्यमानात्पार्थिवात्पृथ्वीलोकाद्वा। दिवो वा। द्युलोकाद्वा। महो महतः प्रौढाद्रजसो वा। पद्यादीनां रञ्जकादन्तरिक्षलोकाद्वा। अयमिन्द्रो यतः कुतश्चिदानीयास्मभ्यं धनं प्रयच्छत्वित्यर्थः। सप्तदशसु याच्ञाकर्मसु ईमहे यामि (निघ० ३-१९) इति पठितम्। इतः। इदंशब्दात्पञ्चम्यास्तसिल् (पा० ५-३-७)। इदम इश् (पा० ५-३-३) इतीश्। शित्त्वात्सर्वादेशः। अत्रोडिदम्० (पा० ६-१-१७१) इत्यस्यावकाशः। आभ्यामेभिः। लिति (पा० ६-१-१९३) इत्यस्यावकाशः। पचनं पाचकः। उभावपि नित्यौ। तत्र परत्वाद्विप्रतिषेधे परं कार्यम् (पा० १-४-२) इति लिति (पा० ६-१-१९३) इतीकारस्योदात्तत्वम्। पञ्चात्तसेः प्राग्दिशो विभक्तिः (पा० ५-३-१) इति विभक्तिसञ्ज्ञकत्वादूडिदम्० (पा० ६-१-१७१) इत्यादिनाऽसर्वनामस्थानविभक्तेरुच्यमानमुदात्तत्वं भवति। सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव (पा० प० ४०) इत्यूडिदम्० (पा० ६-१-१७२) इत्यस्य पुनरप्रवृत्तिरेवेति चेत्। न। लक्ष्यानुरोधेन पुनः प्रसङ्गविज्ञानञ्च (पा० प० ३९) इति स्वीकारात्। नन्वेवं स्तव इत्यादावपि परेण लित्स्वरेण बाधितमपि सावेकाचः० (पा० ६-१-१७१) इति तसिल उदात्तत्वं स्यादिति चेन्न। यत्तच्छब्दयोः सावयवान्तत्वे न गोश्वन्साववर्ण० (पा० ६-१-१८२) इति निषेधात्। नचपुनःप्रसङ्गविज्ञानं च (पा० प० ३९) इत्येतत्सार्वत्रिकं लक्ष्यानुरोधेन क्वचिदेव तदाश्रयणादिति। सातिम्। षणु दाने। धात्वादेःषः सः (पा०

६-१-६४ )। भावे क्तिन्। जनसनखनां सञ्झलोः ( पा० ६-४-४२ ) इति नकारस्यात्वम्। तितुत्रतथसिसुसरकसेषु च ( पा० ७-२-९ ) इति निषेधादिण् न भवति। नित्स्वरे प्राप्ते ०उदात्तः ( पा० ३-३-९६ ) इत्यनुवृत्तावूतियूतिजूतिसातिहेतिकीर्तयश्च ( पा० ३-३-९७ ) इति निपातनादन्तोदात्तत्वम्। ईमहे। ईङ् गतौ। श्यनोऽपि बहुलं छन्दसि ( पा० २-४-७३ ) इति लुक्। अस्य धातोर्ङित्त्वात्तास्यनुदात्तेन्ङिद्दुपदेशात्० ( पा० ६-१-१८६ ) इति लसार्वधातुकस्यानुदात्तत्वे धातुस्वर एव शिष्यते। न च तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातः। चवायोगे प्रथमा ( पा० ८-१-५९ ) इति निषेधात्। उत्तरवाक्ययोरपि हिशब्दवाशब्दयोगादन्यथा वाक्यापरिपूर्ते-स्तिङ्विभक्तेरवश्यमध्याहारात्तदपेक्षया प्रथमा तिङ्विभक्तिरिति। दिवः। ऊडिदम्० ( पा० ६-१-१७१ ) इत्यादिना विभक्तेरुदात्तत्वम्। पार्थिवात्। प्रथ प्रख्याने। प्रथत इति पृथिवी। प्रथेः षिवन्संप्रसारणं च ( उ० १-१४९ ) इति षिवन्प्रत्ययः। षिद्गौरादिभ्यश्च ( पा० ४-१-४१ ) इति ङीष्। प्रत्ययस्वरेणोदात्तः। शेषनिघातेनानुदात्तादिः पृथिवीशब्दः। पृथिव्या विकार इत्यर्थे ओरञ् ( पा० ४-२-१३९ ) इत्यनुवृत्तावनुदात्तादेश्च ( पा० ४-३-१४० ) इत्यञ्। यस्येति च ( पा० ५-४-१४८ ) इतीकारलोपः। तद्धितेष्वचामादेः ( पा० ७-२-११७ ) इत्यादिवृद्धी रस्वरत्वम्। ञ्नित्यादिर्नित्यम् ( पा० ६-१-१९७ ) इत्याद्युदात्तः। अधि। निपातत्वादाद्युदात्तः। इन्द्रम्। रन्प्रत्ययान्त आद्युदात्तः। महः। महत इत्यस्याकारतकारयोर्लोपश्छान्दसः। सावेकाचः० ( पा० ६-१-१६८ ) इति विभक्तेरुदात्तत्वम्। रजसः। नब्विषयस्यानिसन्तस्य ( फि० २-३ ) इत्याद्युदात्तत्वम् ॥१०॥

इति प्रथमस्य प्रथमे द्वादशो वर्गः।

॥७॥

१·७

इन्द्रमित्यादिकं दशर्चं यत्सूक्तं तत्सुरूपकृत्नुमित्यादिषु चतुर्थम्। ऋषिच्छन्दोदेवताविनियोगाश्च पूर्ववत्। विशेषविनियोगस्तूच्यते। महाव्रते निष्केवल्यशस्त्र इन्द्रमिद्गाथिन इति सूक्तम्। तथा च पञ्चमारण्यके सूत्रितम्। शिरो गायत्रमिन्द्रमिद्गाथिनः ( ऐ० आ० ५ ) इति। तथा चतुर्विंशेऽहनि ब्राह्मणाच्छंसिनः शस्त्र इन्द्रमिद्गाथिन इति षळहस्तोत्रियस्तृचः। चतुर्विंशे होताजनिष्टेत्युपक्रम्या याहि सुषुमा हि त इन्द्रमिद्गाथिनो बृहद् ( आ० ७-२ ) इति सूत्रितत्वात्। अतिरात्रे प्रथमे पर्यायेऽच्छावाकशस्त्रेऽयमेव तृचोऽनुरूपः। सूत्रितं च। इन्द्राय मद्वने सुतमिन्द्रमिद्गाथिनो बृहत् ( आ० श्रौ० ६-४ ) इति।

तत्र प्रथमामृचमाह। गाथिनो गीयमानसामयुक्ता उद्गातार इन्द्रमिदिन्द्रमेव बृहत्। त्वामिद्धि हवामहे इत्यस्यामृच्युत्पन्नेन बृहन्नामकेन साम्नानूषत। स्तुतवन्तः। अर्किणोऽर्चनहेतुमन्त्रोपेता होतारोऽर्केभिरर्कैः प्रपैर्मन्त्रैरिन्द्रमेवानूषत। ये त्ववशिष्टा अध्वर्यवस्ते वाणीर्वाणीभिर्वाग्भिर्यजूरूपाभिरिन्द्रमेवानूषत। अर्कशब्दस्य मन्त्रपरत्वं यास्केनोक्तम्। अर्को मन्त्रो भवति यदनेनार्चन्ति ( नि० ५-४ ) इति। श्लोक इत्यादिषु सप्तपञ्चाशत्सङ्ख्याकेषु वाङ्नामसु वाणी

वाणी ( निघ० १-११ ) इति पठितम्। गाथिनः। उषिकुषिगार्तिभ्यस्थन् ( उ० २-४ ) इति गायतेः स्थन्प्रत्ययः। नित्त्वादाद्युदात्तः। गाथा एषां सन्तीति गाथिनः। व्रीह्यादिभ्यश्च ( पा० ५-२-११६ ) इतीनिः। प्रत्ययस्वरेणेकार उदात्तः। सच सति शिष्टः। बृहत्। बृहता। तृतीयैकवचनस्य सुपां सुलुक्० ( पा० ७-१-३९ ) इति लुक्। पृषद्बृहन्महज्जगच्छतृवच्च ( उ० २-८५ ) इत्यन्तोदात्तो निपातितः। अर्केभिः। अर्च पूजायाम्। अर्च्यन्त एभिरित्यर्का मन्त्राः। पुंसि सञ्ज्ञायां घः प्रायेण ( पा० ३-३-११८ ) इति घः। चजोः कुघिण्ण्यतोः ( पा० ७-३-५२ ) इति कुत्वम्। प्रत्ययस्वरेणान्तोदात्तः। बहुलं छन्दसि ( पा० ७-१-१० ) इति भिस ऐसादेशो न भवति। अर्काः स्तुतिसाधनभूता मन्त्रा एषां सन्तीत्यर्किणः। वाणीः। वृषादीनां च ( पा० ६-१-२०३ ) इत्याद्युदात्तः। दीर्घाज्जसि च ( पा० ६-१-१०५ ) इति पूर्वसवर्णदीर्घनिषेधस्य वा छन्दसि ( पा० ६-१-१०६ ) इति विकल्पितत्वाद्दीर्घत्वम्। तृतीयार्थे प्रथमा। अनूषत। णु स्तुतौ। णो नः ( पा० ६-१-६५ ) इति नत्वम्। लुङि व्यत्ययेनात्मनेपदम्। झस्याददेशः। सिच इडभाव उकारस्य दीर्घत्वं च छान्दसम्। धातोः कुटादित्वात्सिचो ङित्त्वेन गुणाभावः ॥१॥

द्वितीयामृचमाह। इन्द्र इदिन्द्र एव हर्योर्हरिनामकयोरश्वयोः सचा सह युगपदा संमिश्लः सर्वतः सम्यग्मिश्रयिता। कीदृशोर्हर्योः। वचोयुजा। इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः। सुशिक्षितयोरित्यर्थः। अयमिन्द्रो वज्री वज्रयुक्तः। हिरण्ययः। हिरण्यमयः। सर्वाभरणभूषित इत्यर्थः। हर्योः। हरत इति हरी। इन्। नित्त्वादाद्युदात्तः। सचा सहेत्युक्तम्। सम्मिश्लः। मिश्रणं मिश्रः। मिश्रयतेर्घञ्। सम्यग् मिश्रो यस्यासौ सम्मिश्रः। लत्वं छान्दसम्। सम्यग् मिश्रयितेत्यर्थः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। वचोयुजा। वचसा युज्येते इति वचोयुजौ। तयोः। षष्ठीद्विवचनस्य सुपां सुलुक्० ( पा० ७-१-३९ ) इत्याकारादेशः। युजशब्दो धातुस्वरेणान्तोदात्तः। कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। वज्री। वज्रमस्यास्ति। अत इनिठनौ ( पा० ५-२-११५ )। प्रत्ययस्वरः। हिरण्ययः। ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि ( पा० ६-४-१७५ ) इति हिरण्मयशब्दस्य मकारलोपो निपात्यते। अकारः प्रत्ययस्वरेणोदात्तः। पूर्वेणानुदात्तेन सहैकादेश एकादेश उदात्तेनोदात्तः ( पा० ८-२-५ ) इत्युदात्तः ॥२॥

तृतीयामृचमाह। अयमिन्द्रो दीर्घाय प्रौढाय निरन्तराय चक्षसे दर्शनाय दिवि द्युलोके सूर्यमारोहयत्। पुरा वृत्रासुरेण जगति यदापातितं तमस्तन्निवारणेन प्राणिनां दृष्टिसिद्ध्यर्थमादित्यं द्युलोके स्थापितवानित्यर्थः। स च सूर्यो गोभिः स्वकीयरश्मिभिरद्रिं पर्वतप्रमुखं सर्वं जगद्व्यैरयत्। विशेषेण दर्शनार्थं प्रेरितवान्। प्रकाशितवानित्यर्थः। अथवा। इन्द्र एव गोभिर्जलनिमित्तभूतैरद्रिं मेघं व्यैरयत्। विशेषेण प्रेरितवान्। पञ्चदशसङ्ख्याकेषु रश्मिनामसु खेदयः किरणा गावः ( निघ० १-५ ) इति पठितम्। त्रिंशत्सङ्ख्याकेषु मेघनामसु अद्रिर्ग्रावा ( निघ० १-१० ) इति पठितम्। दीर्घाय। प्रातिपदिकस्वरेणान्तोदात्तः। चक्षसे। चक्षेः सर्वधातुभ्योऽसुन् ( उ० ४-१९० ) इत्यसुन्। बहुलग्रहणात्ख्याञादेशाभावः। नित्त्वादाद्युदात्तः। सूर्यम्। सुवति प्रेरयतीति सूर्यः। षू प्रेरणे। धात्वादेः षः सः ( पा० ६-१-६४ ) राजसूयसूर्य० ( पा० ३-१-११४ ) इत्यादिना क्यप्प्रत्ययस्तस्य रुडागमश्च निपात्यते। क्यपः

कित्त्वाद्गुणाभावः। पित्त्वादनुदात्तत्वम्। धातुस्वर एव शिष्यते। रोहयत्। रुहेर्ण्यन्ताल्लङि-बहुलं छन्दस्यमाङ्योगेऽपि (पा० ६-४-७५) इत्यडभावो निघातश्च। दिवि। ऊडिदम्० (पा० ६-१-१७१) इत्यादिना विभक्तेरुदात्तत्वम्। अद्रिम। अदिशदिभूशुभिभ्यः क्रिन् (उ० ४-६६) इति क्रिन् प्रत्ययः। अदन्ति पशवस्तृणादिकमत्रेत्यद्रिः। नित्त्वादाद्युदात्तत्वम्। ऐरयत्। ईर गतौ। ण्यन्ताल्लङ्। निघातः ॥३॥

चतुर्थीमृचमाह। हे इन्द्र। उग्रः शत्रुभिरप्रधृष्यस्त्वमुग्राभिरप्रधृष्याभिरूतिभिरस्मद्विषय-रक्षाभिर्वाजेषु युद्धेषु नोऽस्मानव। रक्ष। तथा सहस्रप्रधनेषु च। सहस्रसङ्ख्याकगजाश्वादि-लाभयुक्तेषु महायुद्धेष्वपि रक्ष। वाजेषु। वृषादीनां च (पा० ६-१-२०३) इत्याद्युदात्तत्वम्। नोऽव। नसः सकारस्य रुत्वोत्वगुणेषु प्रकृत्यान्तः पादम्० (पा० ६-१-११५) इति प्रकृतिभावो न भवति। ०अव्यपरे (पा० ६-१-११५) इति निषेधात्। अव रक्षणे। तिङ्ङतिङः (पा० ८-१-२८) इति निघातः। यद्यपि सहस्रप्रधनेष्ववेत्यध्याहृतां क्रियामपेक्ष्य प्रथमायाः श्रूयमाणाया अवेति क्रियायाश्चवायोगे प्रथमा (पा० ८-१-५९) इति निघातनिषेधः प्राप्तः। तथापि वाजे-ष्वित्यत्र चकारस्य लुप्तत्वाच्चादिलोपे विभाषा (पा० ८-१-६३) इति निषेधस्य विकल्पितत्वादत्र निघातः प्रवर्तते। सहस्रशब्दः कर्दमादीनाञ्च (फि० ३-१०) इति मध्योदात्तः। सहस्रप्रधनेषु। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। उच समवाये। चस्य गः। ऋज्रेन्द्र० (उ० २-२१) इति रन्। व्यत्ययेनान्तोदात्तः। ऊतिभिः। ऊतियूति० (पा० ३-३-९७) इत्यादिना क्तिन्नुदात्तः ॥४॥

पञ्चमीमृचमाह। वयमनुष्ठातारो महाधने प्रभूतधननिमित्तमिन्द्रं हवामहे आह्वयामः। अर्भेऽर्भके स्वल्पेऽपि धने निमित्तभूते सतीन्द्रं हवामहे। कीदृशमिन्द्रम्। युजम्। सहकारिणं समाहितं वा। वृत्रेषु शत्रुषु धनलाभविरोधिषु प्राप्तेषु तन्निवारणाय वज्रिणं वज्रोपेतम्। महा-धनशब्दो यद्यपि सङ्ग्रामनामसु पठितस्तथापि महाधनवचनोऽत्र। सङ्ग्रामेऽर्थे बहुव्रीहित्वे सत्यन्तोदात्तत्वासिद्धेर्नात्र तद्गृहीतम्। महाधने। महच्च तद्धनञ्चेति समासे समासस्य (पा० ६-१-२२३) इत्यन्तोदात्तः। अर्भे। अर्तिगृभ्यां भन् (उ० ३-१५०)। नित्त्वादाद्युदात्तः। हवामहे। ह्वेञ् स्पर्द्धायां शब्दे च। ञित्त्वात्कर्त्रभिप्राये आत्मनेपदम्। लटः स्थाने महिङ्। टित आत्मनेपदानाम्० (पा० ३-४-७९) इति टेरेत्वम्। कर्तरि शप्। ह्वः सम्प्रसारणम् (पा० ६-१-३२) इत्यनुवृत्तौ बहुलं छन्दसि (पा० ६-१-३४) इति सम्प्रसारणम्। वकारस्योकारः। परपूर्वत्वम्। गुणावादेशौ। अतो दीर्घो यञि (पा० ७-३-१०१) इति दीर्घत्वम्। तिङ्ङतिङः (पा० ८-१-२८) इति निघातः। युजम्। युज समाधावित्यस्य क्विप्। युजेरसमासे (पा० ७-१-७१) इति नुम् न भवति। स हि युजेरिति निर्देशादिकाररहितस्य न भवति। अनित्य-मागमशासनम् (पा० प० ८४) इति वा युजिर् योग इत्यस्यापि नुम् न भवति। वृत्रेषु। वृतु वर्तने। प्रतिकूलतया वर्तन्त इति वृत्राणि शत्रुकुलानि। स्फायितञ्चि० (उ० २-१३) इत्यादिना रक्प्रत्ययः। कित्त्वाद्गुणाभावः। प्रत्ययस्वरः। वज्रिणम्। अत इनिठनौ (पा० ५-२-११५) इतीनः प्रत्ययस्वरः ॥५॥

प्रथमस्य प्रथमे त्रयोदशो वर्गः।

इन्द्रमिद्गाथिन इति सूक्ते षष्ठीमृचमाह। हे सत्रादावन्। अस्मदभीष्टानां सर्वेषां फलानां सहप्रदातः। अतो व्रीह्यादिनिष्पत्त्यर्थं हे वृषन् वृष्टिप्रदेन्द्र नोऽस्मदर्थममुं दृश्यमानं चरुं मेघमपावृधि। उद्घाटय। तथैवास्मभ्यमस्मदर्थमप्रतिष्कुतः प्रतिशब्दरहितः। यद्यदस्माभिर्याच्यते तत्र सर्वत्र नेति प्रतिशब्दं नोच्चारयति। अतोऽस्मद्विषये कदाचिदप्यप्रतिस्खलितः। एतदेवाभिप्रेत्य यास्क आह। अप्रतिष्कुतोऽप्रतिष्कृतोऽप्रतिस्खलितो वा ( नि० ६-१६ ) इति। वृषन्। आमन्त्रितनिघातः। अमुम्। प्रातिपदिकस्वरेणान्तोदात्तः। चरुम्। चरतीति चरुः। भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः ( उ० १-७ ) इत्युप्रत्ययः। प्रत्ययस्वरेणान्तोदात्तः। सत्रादावन्। सत्राशब्दः सहार्थे। अभिमतफलजातं सकलं सह ददातीति सत्रादावा। आतो मनिन्क्वनिब्वनिपश्च ( पा० ३-२-७४ ) इति वनिप्। आमन्त्रितस्य च ( पा० ६-१-१९८ ) इत्युदात्तत्वम्। पादादित्वान्न निघातः। अप। निपातस्य च ( पा० ६-३-१२६ ) इति दीर्घः। निपात आद्युदात्तः। वृधि। वृञ् वरणे। लोटः सिप्। तस्य सेर्ह्यपिच्च ( पा० ३-४-८७ ) इति हिः। स्वादिभ्यः श्नुः ( पा० ३-१-७३ )। तस्य बहुलं छन्दसि ( पा० २-१-७४ ) इति लुक्। श्रुशृणुपृकृवृभ्यश्छन्दसि ( पा० ६-४-१०२ ) इति हेर्धिरादेशः। तस्य ङित्त्वाद्गुणाभावः। निघातः। अस्मभ्यम्। अस्मच्छब्दाद्भ्यसोभ्यम् ( पा० ७-१-३० ) इति भ्यमादेशः। शेषे लोपः ( पा० ७-२-९० ) इति दकारलोपः। बहुवचने झल्येत् ( पा० ७-३-१०३ ) इत्येत्वं न भवति। अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य ( म० भा० ७-१-३० ) इत्युक्तम्। प्रातिपदिकस्वरेण स्मेत्यकार उदात्तः। भ्यसोऽभ्यम् ( पा० ७-१-३० ) इत्यभ्यमादेशपक्षे शेषे लोपः ( पा० ७-२-९० ) इति मपर्यन्तशेषस्यादृशब्दस्य लोपः। तदोदात्तनिवृत्तिस्वरेणाभ्यमादेरकारस्योदात्तत्वम्। अप्रतिष्कुतः। केनचिदप्रतिशब्दितः। कुङ् शब्दे। निष्ठा ( पा० ३-२-१०२ ) इति कर्मणि क्तप्रत्ययः। प्रतेः प्राक् प्रयोगः। पारस्करादेराकृतिगणत्वात्सुडागमः। सुषामादेराकृतिगणत्वात्षत्वम्। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥६॥

सप्तमीमृचमाह। तुञ्जे तुञ्जे तस्मिंस्तस्मिन्फलदातरि देवान्तरे ये स्तोमाः स्तोत्रविशेषा उत्तरे उत्कृष्टाः सन्ति तैः स्तोमैः सर्वैरपि वज्रिणो वज्रयुक्तस्येन्द्रस्य सुष्टुतिं योग्यां शोभनस्तुतिं न विन्धे। न विन्दामि। इन्द्रस्यात्यन्तगुणबाहुल्येन देवान्तरेषूत्तमत्वेन प्रसिद्धान्यपि स्तोत्राणि न पर्याप्तानीत्यर्थः। एतामृचं यास्क एवं व्याचष्टे तुञ्जस्तुञ्जतेर्दानकर्मणः। दाने दाने य उत्तरे स्तोमा इन्द्रस्य वज्रिणो नास्य तैर्विन्दामि समाप्तिं स्तुतेः ( नि० ६-१८ ) इति। तुञ्जे तुञ्जे। तुञ्जतिर्दानकर्मेत्युक्तम्। ततः कर्तरि पचाद्यच्। चितः ( पा० ६-१-१६३ ) इत्यन्तोदात्तत्वम्। नित्यवीप्सयोः ( पा० ८-१-४ ) इति द्विर्भावः। तस्य परमाम्रेडितम् ( पा० ८-१-२ ) इति द्वितीयस्याम्रेडितसञ्ज्ञा। अनुदात्तं च ( पा० ८-१-३ ) इत्यनुदात्तत्वम्। दातरि दातरीत्यर्थः। निरुक्ते तु दाने दाने ( नि० ६-१८ ) इत्यर्थतो व्याख्यानम्। उत्तरे। तॄ प्लवनतरणयोः। भावे ऋदोरप् ( पा० ३-३-५७ )। उच्छब्द उत्कृष्टवाचकः। उत्कृष्टस्तरो यस्येति बहुव्रीहिः। उच्छब्दो निपाता आद्युदात्ताः ( फि० ४-१२ ) इत्याद्युदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। स्तोमाः। अर्तिस्तुसु० ( उ० १-१३८ ) इत्यादिना स्तोमशब्दो मन्नन्तो नित्स्वादाद्युदात्तः। विन्धे। विद्लृ लाभे। लट्। स्वरितेत्त्वादात्मनेपदम्। उत्तमैकवचनमिट्। तुदादिभ्यः शः ( पा०

३-१-७७)। शेमुचादीनाम्। (पा० ७-१-५९) इति नुम्। दकारस्य व्यत्ययेन धकारः। अस्य। प्रकृतस्येन्द्रस्य परामर्शादन्वादेश इदमोऽश्। शित्त्वात्सर्वादेशः। अनुदात्तः। सुष्टुतिम्। ष्टुञ स्तुतौ। धात्वादेः षः सः (पा० ६-१-६४) इति सत्वम्। स्त्रियां क्तिन् (पा० ३-३-९४) इति भावे क्तिन्। स्वित्युदात्तेनोपसर्गेण प्रादिसमासः। उपसर्गात्सुनोति० (पा० ८-३-६५) इत्यादिना षत्वम्। अत्राऽव्ययपूर्वपदप्रकृतिस्वरत्वेन सोः प्राप्तमुदात्तत्वं बाधित्वा गतिकारकोपपदात्कृत् (पा० ६-२-१३९) इत्युत्तरपदप्रकृतिस्वरेण धातोरुदात्तत्वे प्राप्ते तदपवादत्वेन तादौ च निति कृत्यतौ (पा० ६-२-५०) इत्यनन्तरस्य गतिसञ्ज्ञकस्य सोरेवोदात्तेन भवितव्यम्। तत्तु मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः (पा० ६-२-१५१) इत्युत्तरपदान्तोदात्तत्वेन बाध्यते। तथाच सुहवा सुष्टुती हुवे (ऋ० २-७-१५)। वृष्णे चोदस्व सुष्टुतिम् (ऋ० ६-५-२५)। यास्ते राके सुमतयः (ऋ० २-७-१५) इत्यादावन्तोदात्तत्वमाहुः। यथातु मन्क्तिन्० (पा० ६-२-१५१) इत्यादौ वृत्तावुक्तं तथैव तत्र घटत इति लक्ष्यते। तत्र हि कारकाद्दत्तश्रुतयोरेवाशिषि (पा० ६-२-१४८) इत्यतः कारकपदानुवृत्तेः पाणिनिकृतिरित्यादावेव मन्क्तिन्० (पा० ६-२-१५१) इत्यादिसूत्रमित्युक्तम्। तथा कारकादित्येव। प्रकृतिः प्रहृतिरिति प्रत्युदाहृतम्। स्यादेतद्। स्तूयतेऽनयेति स्तुतिरिति क्तिना करणभूतमभिधीयते। सुशब्देन च करणमेव विशेष्यते न धात्वर्थः। तथाच सुष्टुतिरित्यत्र सुशब्दः कारकपर एव भविष्यति। प्रकृतिः प्रहृतिरित्यादौ तु प्रशब्दो धात्वर्थं विशेषणमेवेति तत्प्रत्युदाहरणोपपत्तिरिति। न। एवं सति सुशब्दस्य क्रियायोगाभावादुपसर्गाः क्रियायोगे (पा० १-४-५९) इत्युक्तोपसर्गसञ्ज्ञा न स्यात्। तथाचोपसर्गात्सुनोतिसुवति० (पा० ८-३-६५) इत्यादिना षत्वं न स्यात्। ननु क्तिना करणमभिधीयते। क्रियासाधनं च करणम्। तथाच करणविशेषणस्यापि सुशब्दस्य करणान्तर्गतक्रियायोगादुपसर्गता भविष्यतीति। न। तथा सति यत्क्रियायुक्तास्तं प्रत्युपसर्गसञ्ज्ञकाः (पा० वा० १-४-५९) इति करोत्यर्थमेव प्रति सोपसर्गता ननु स्तुधात्वर्थं प्रतीत्यस्य षत्वं न स्यादेव। ननु स्तुधात्वर्थद्वारैव तत्करणस्य सुशब्दो विशेषणं भविष्यति। या हि शोभना स्तुतिस्तत्करणमपि शोभनमेवेति। एवञ्च स्तुधात्वर्थसम्बन्धात्तं प्रत्युपसर्गत्वेन षत्वमपि भविष्यतीति वृत्त्यविरोधेन मन्क्तिन्० (पा० ६-२-१५१) इत्यादिसूत्रस्य सुष्टुतिशब्दो विषयो भविष्यति। प्रकृतिः प्रहृतिरित्यत्र भावे क्तिन्निति प्रत्युदाहृतमिति न तत्र प्रशब्दस्य करणपरत्वम्। करणे क्तिन्नुदाहरणेऽपि धात्वर्थमात्रविशेषणतैव विवक्षिता न तद्द्वारा प्रत्ययार्थविशेषणतापीति तत्प्रत्युदाहरणोपपत्तिरिति। सुष्टुतिरित्यत्र तु क्तिन्नभिधेयकरणपर्यन्तं सुशब्दस्य व्यापार इत्युदाहरणतैव न प्रत्युदाहरणतेति। न। किमत्र सुशब्दः श्रुत्यैव प्रकृतिप्रत्ययार्थोभयविशेषणपरः, उत श्रुत्यैकं विशिनष्टि अर्थादितरदिति। यद्यापि उभयपरत्वं तदापि यौगपद्येनोत क्रमेणेति। आद्ये प्रतिविशेष्यं विशेषणपदावृत्तिरिति प्रसङ्गः। द्वितीये विरम्य व्यापारापातः। न च शब्दबुद्धिकर्मणां विरम्य व्यापारः कस्य चिद् इष्ट इष्टो वा। अतो न श्रुत्योभयपरत्वम्। अथैकत्र श्रुत्या तात्पर्यमितरत्र त्वर्थादिति। तत्र धात्वर्थसम्बन्धस्यार्थिकत्वे षत्वासिद्धिः। प्रत्ययार्थसम्बन्धस्यार्थिकत्वे मन्क्तिन्० (पा० ६-२-१५१) इत्यादिस्वरासिद्धिः। आर्थिकेनापि कारकसम्बन्धेनोदाहरणत्वाभिमाने प्रकृतिः प्रहृतिरित्यादि प्रत्यु-

दाहरणं न स्यात्। श्रुत्या धात्वर्थमात्रसम्बन्धस्यापि प्रशब्दस्यार्थात्तत्करणसम्बन्धः केन वारयितुं शक्यत इत्येषा दिक्। अत इह प्रत्ययार्थमात्रसम्बन्धपरत्वाङ्गीकारेण स्वरः सिध्यतु षत्वं तु च्छान्दसमस्तु। शोभना स्तुतिर्यस्यामिति बहुव्रीहिर्वा भवतु। एवञ्च नञ्सुभ्याम् ( पा० ६-२-१७१ ) इत्यन्तोदात्तत्वं भविष्यति। अथवा सुष्ठु स्तुवन्तीति सुष्टुतय इति करणभूता-ऋचः सुष्टुतिशब्देनोच्यन्ते। क्तिच्क्तौ च सञ्ज्ञायाम् ( पा० ३-३-१७४ ) इति क्तिच्प्रत्यये सति चित्त्वादन्तोदात्तत्वं भविष्यति। नच करणीभूतानामृचां कर्तृप्रत्ययेन क्तिचा कथमभिधान-मिति वाच्यम्। काष्ठानि पचन्तीतिवत्तासामपि स्वव्यापारविवक्षया कर्तृत्वोपपत्तेरिति ॥७॥

अष्टमीमृचमाह। वृषा कामानां वर्षितेन्द्र ओजसा स्वकीयबलेनानुग्रहीतुं कृष्टीर्मनुष्या-निय़र्ति। प्राप्नोति। कीदृश इन्द्रः। ईशानः। समर्थः। अप्रतिष्कुतः। प्रतिशब्दरहितः। याच्यमानं न परिहरतीत्यर्थः। इन्द्रस्य दृष्टान्तः। वंसगो वननीयगतिर्वृषभो यूथेव गो-यूथानि यथा प्राप्नोति तद्वत्। वृषा। कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः ( उ० १-१५५ ) इति वर्षतेः कनिन्प्रत्ययः। कित्त्वाद् गुणाभावः। नित्त्वादाद्युदात्तः। यूथा इव। युवन्ति मिश्री भवन्तीति यूथानि। यु मिश्रणामिश्रणयोः। तिथपृष्ठगूथयूथप्रोथाः ( उ० २-१२ ) इति थप्रत्ययान्तो निपातितः। निपातनाद्दीर्घत्वम्। प्रत्ययस्वरेणाकार उदात्तः। शेश्छन्दसि बहुलम् ( पा० ६-१-७० ) इति लुक्। इवेन समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्। (पा० वा० २-२-१८) इति समासेऽपि स एव स्वरः। वंसगः। पृषोदरादित्वादभिमतरूपस्वरसिद्धिः। कर्षन्तीति कृष्टयः। क्तिच्क्तौ च सञ्ज्ञायाम् ( पा० ३-३-१७४ ) इति क्तिच्। चित्त्वादन्तोदात्तः। इयर्ति। ऋ गतौ। तिप्। शपः श्लुः। श्लौ ( पा० ६-१-१० ) इति द्विर्भावः। अभ्यासो-ऽरत्वहलादिःशेषौ। अर्तिपिपर्त्योश्च ( पा० ७-४-७७ ) इत्यकारस्येकारः। अभ्यासस्या-सवर्णे ( पा० ६-४-७८ ) इतीयङादेशः। ऋधातोरस्य गुणो रपरत्वम्। ओजसा। उब्जेर्बले बलोपश्च ( उ० ४-१९२ ) इत्यसुन्। तत्सन्नियोगेन बकारलोपः। लघूपधगुणः। नित्त्वादाद्युदात्तः। ईशानः। ईश ऐश्वर्ये। लटः शानच्। अदिप्रभृतिभ्यः शपः ( पा० २-४-७२ ) इति शपो लुक्। चितः ( पा० ६-१-१६३ ) इत्यन्तोदात्तत्वं बाधित्वाऽनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वेन धातुस्वर एव शिष्यते। अप्रतिष्कुतः। अप्रतिशब्दितः। कु शब्दे। कर्मणि क्तः। पारस्क-रादेराकृतिगणत्वात्सुडागमः। सुषामादित्वात्षत्वम्। नञ्समासः। अव्ययपूर्वपदप्रकृतिस्व-रत्वम् ॥८॥

नवमीमृचमाह। य इन्द्रः स्वयमेक एव चर्षणीनां मनुष्याणामिरज्यति। ईष्टे। तथा-वसूनां धनानामिरज्यति। स इन्द्रः पञ्च निषादपञ्चमानां क्षितीनां निवासार्हाणां वर्णाना-मनुग्रहीतेति शेषः। एकः। इण् गतौ। इण्भीकापाशल्यतिमर्चिभ्यः कन् ( उ० ३-४३ ) इति कन्। बाहुलकात्कलोपाभावः। नित्त्वादाद्युदात्तत्वम्। चर्षणीनाम्। प्रातिपदिकस्वरेणान्तो-दात्तः। अन्तोदात्तात्० ( पा० ६-१-१६९ ) इत्यनुवृत्तौ नामन्यतरस्याम् ( पा० ६-१-१७७ ) इति विभक्तेरुदात्तत्वम्। वसूनाम्। ०नित् ( उ० १-९ ) इत्यनुवृत्तौ शृस्वृस्निहित्रप्यसिवसि-हनिक्लिदिबन्धिमनिभ्यश्च ( उ० १-१० ) इत्युप्रत्ययः। नित्त्वादाद्युदात्तः। इरज्यति। कण्ड्वादि-ष्विरज् ईर्ष्यायाम्। अत्रैश्वर्यार्थः। कण्ड्वादिभ्यो यक् ( पा० ३-१-२७ )। प्रत्ययस्वरेणोदात्तः।

पञ्च। पचि व्यक्तीकरणे। पञ्चश्वेति कनिन्। निश्वादाद्युदात्तः। क्षितीनाम्। प्रातिपदिकस्वरेणान्तोदात्तः। नामन्यतरस्याम् ( पा० ६-१-१७७ ) इति विभक्तेरुदात्तत्वम् ॥९॥

आश्विनं शंसिष्यन्निन्द्रं वो विश्वतस्परीति जुहुयात्। संस्थितेष्वाश्विनाय स्तुवत इति खण्डे बृगमहाँ असि सूर्येति द्वाभ्यामिन्द्रं वो विश्वतस्परि (आ० श्रौ० ६-५) इति सूत्रितम्। चतुर्विंशेऽहनि प्रातःसवने ब्राह्मणाच्छंसिन इन्द्रं वो विश्वतस्परीत्यारम्भणीया। चतुर्विंश इत्युपक्रम्य ऋजुनीती नो वरुण इन्द्रं वो विश्वतस्परि ( आ० श्रौ० ७-२ ) इति सूत्रितम्।

तामेतां दशमीमृचमाह। हे ऋत्विग्यजमानाः। विश्वतः सर्वेभ्यो जनेभ्यः परि। उपर्यवस्थितमिन्द्रं वो युष्मदर्थं हवामहे। आह्वयामः। अतः स इन्द्रोऽस्माकं केवलोऽसाधारणोऽस्तु। इतरेभ्योऽप्यधिकमनुग्रहमस्मासु करोत्वित्यर्थः। इन्द्रम्। रन्प्रत्ययान्तो निश्वादाद्युदात्तः। वः। अनुदात्तं सर्वमपादादौ ( पा० ८-१-१८ ) इत्यनुवृत्तौ बहुवचनस्य वस्नसौ ( पा० ८-१-२१ ) इति वस्। विश्वतः। लिति ( पा० ६-१-१९३ ) प्रत्ययात्पूर्वमुदात्तम्। परि। निपातत्वादाद्युदात्तः। संहितायां पञ्चम्याः परावध्यर्थे ( पा० ८-३-५१ ) इति विसर्जनीयस्य सत्वम्। हवामहे। ह्वेञः शपि बहुलं छन्दसि ( पा० ६-१-३४ ) इति संप्रसारणम्। परपूर्वत्वम्। गुणावादेशौ। जनेभ्यः। जन्यन्त इति जनाः। जनयतेः कर्मणि घञ्। जनिवध्योश्च ( पा० ७-३-३५ ) इत्युपधाया वृद्ध्यभावः। ञित्वादाद्युदात्तत्वम्। अस्माकम्। अस्मच्छब्दोऽन्तोदात्तः। शेषे लोपः ( पा० ७-२-९० ) इत्यन्तलोपपक्षे साम आकम् ( पा० ७-१-३३ ) इत्याकारेणैकादेश उदात्तः। टिलोपपक्षे उदात्तनिवृत्तिस्वरेणाकार उदात्तः। केवलः। वृषादेराकृतिगणत्वादाद्युदात्तः ॥१०॥

प्रथमस्य प्रथमे चतुर्दशो वर्गः। प्रथममण्डले द्वितीयोऽनुवाकः।

॥८॥

१.८

तृतीयानुवाके चत्वारि सूक्तानि। तत्रेन्द्र सानसिमित्यादिकं प्रथमं दशर्चं सूक्तं सरूपकृत्नुमित्यादिषु षट्सु पञ्चमम्। ऋष्याद्यस्तु पूर्ववत्। विशेषविनियोगस्तु महाव्रते निष्केवल्यशस्त्रे औष्णिहतृचाशीतौ एन्द्र सानसिं रयिमित्यादिके द्वे सूक्ते। पञ्चमारण्यके औष्णिहतृचाशीतिरिति खण्डे शौनकेन सूत्रितम्। सुरूपकृत्नुमूतय इति त्रीण्येन्द्र सानसिं रयिमिति द्वे ( ऐ० आ० ५ ) इति। अतिरात्रे प्रथमे पर्यायेऽच्छावाकशस्त्र एन्द्र सानसिमिति सूक्तम्। सूत्रितञ्च। इन्द्रमिद्गाथिनो बृहदेन्द्र सानसिम् ( आ० श्रौ० ६-४ ) इति। दर्शयागे इन्द्रयाजिनः सान्नाय्यस्यानुवाक्या। एन्द्र सानसिं रयिमिति। उक्ता देवता इत्यस्मिन् खण्डे एन्द्र सानसिं रयिं प्र ससाहिषे पुरुहूत शत्रून् ( आ० श्रौ० १-६ ) इति सूत्रितम्।

तामेतां प्रथमामृचमाह। हे इन्द्र। ऊतयेऽस्मद्रक्षार्थं रयिं धनमाभर। आहर। कीदृशं रयिम्। सानसिम्। सम्भजनीयम्। सजित्वानम्। समानशत्रुजयशीलम्। धनेन हि

शूरान्भृत्यान्सम्पाद्य शत्रवो जीयन्ते। सदासहम्। सर्वदा शत्रूणामभिभवहेतुम्। वर्षिष्ठम्। अतिशयेन वृद्धम्। प्रभूतमित्यर्थः। सानसिम्। वन षण सम्भक्तौ। इत्यस्मादसिप्रत्ययो वृद्धिरन्तोदात्तत्वं च सानसिवर्णसि० (उ० ४-१०६) इत्यादिना निपात्यते। रयिम्। प्रातिपदिकस्वरेणान्तोदात्तः। सजित्वानम्। समानानरीञ्जेतुं शीलमस्य। अन्येभ्योऽपि दृश्यन्ते (पा० ३-२-७५) इति क्वनिप्। उपपदसमासः। समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु (पा० ६-३-८४) इति समानस्य सभावः। कृदुत्तरपदप्रकृतिस्वरेण धातुस्वर एव शिष्यते। वृद्धशब्दादतिशायने तमबिष्ठनौ (पा० ५-३-५५) इतीष्ठन्। प्रियस्थिर० (पा० ६-४-१५७) इत्यादिना वृद्धशब्दस्य वर्षादेशः। इष्ठनो नित्त्वादाद्युदात्तत्वम्। ऊतये। ०उदात्तः (पा० ३-३-९६) इत्यनुवृत्तौ ऊतियूतिजूतिसातिहेतिकीर्तयश्च (पा० ३-३-९७) इत्यनेन क्तिन्नुदात्तो निपातितः। भर। हृग्रहोर्भश्छन्दसि (पा० वा० ८-२-३२) इति हकारस्य भकारः। ते प्राग्धातोः (पा० १-४-८०) इति धातोः प्राक् प्रयोक्तव्यस्याङो व्यवहिताश्च (पा० १-४-८२) इति छन्दसि व्यवहितप्रयोगः ॥१॥

द्वितीयामृचमाह। येन धनेन संपादितानां भटानां नि मुष्टिहत्यया नितरां मुष्टिप्रहारेण वृत्रा शत्रून्निरुणधामहै। निरुद्धान्करवाम। तादृशं धनमावहेत्यर्थः। त्वोतासस्त्वया रक्षिता वयमर्वताऽस्मदीयेनाश्वेन निरुणधामहा इत्यनुषङ्गः। पदातियुद्धेनाश्वयुद्धेन च शत्रून् विनाशयामेत्यर्थः। मुष्टिहत्यया। हनस्त च (पा० ३-१-१०८) इति सुबन्त उपपदे क्यप्। तत्सन्नियोगेन नकारस्य तकारः। कृदुत्तरपदप्रकृतिस्वरे प्राप्ते परादिश्छन्दसि बहुलम् (पा० ६-२-१९९) इति बहुलग्रहणेन त्रिचक्रेणाप्यन्तोदात्तत्वाभिधानादन्तोदात्तत्वम्। नि। आख्यातसम्बद्धस्यापि नेरुपसर्गस्य व्यवहिताश्च (पा० १-४-८२) इति व्यवहितप्रयोगः। वृत्रा। शेश्छन्दसि बहुलम् (पा० ६-१-७०) इति शेर्लोपः। नलोपः। रुणधामहै। आट्संयोगेन पित्त्वात् श्नसोरल्लोपः (पा० ६-४-१११) इत्यकारलोपो न भवति। पित्त्वादेव च आख्यातस्यानुदात्तत्वेन विकरणस्य श्नम एवोदात्तत्वं शिष्यते। ननु तिङ्ङतिङः (पा० ८-१-२८) इति निघातेन भवितव्यम्। न। द्वे ह्यत्र तिङ्विभक्ती। निविडया मुष्ट्या निरुणधामहा इत्यत्र मुख्या श्रुतैका। अर्वता निरुणधामहा इत्यत्रानुषक्ता द्वितीया। तयोः समुच्चयार्थश्चकारो लुप्यते। तेन चादिलोपे विभाषा (पा० ८-१-६३) इति प्रथमेयं तिङ्विभक्तिर्न निहन्यते। यथा नात्मा तृप्यति नान्यस्मै ददातीत्यत्र हि समुच्चयार्थस्य चशब्दस्य लोपात्तृप्यतीति प्रथमा तिङ्विभक्तिर्न निहन्यते ददातीति द्वितीया तु निहन्यत एव। ननु तत्र द्वे तिङ्विभक्ती श्रूयेते। इह पुनरेकैव श्रुता। सैवोत्तरत्रानुषज्यते नान्या श्रूयत इति द्वितीयाभावात्कथमियं प्रथमा। न। अनुषङ्गलब्धद्वितीयापेक्षमपि प्राथम्यमुपजीव्य निघातनिषेधदर्शनात्। पुरोडाशं चाधिश्रयत्याज्यञ्च। प्रोक्षणीश्चासादयत्याज्यञ्च इत्यत्र ह्यधिश्रयत्यासादयतीत्याख्यातयोः प्रथमवाक्यद्वयश्रुतयोरुत्तरवाक्यद्वयेऽनुषङ्गमपेक्ष्यैव प्राथम्यस्योकारेण चवायोगे प्रथमा (पा० ८-१-५९) इति निघातनिषेधो दृष्ट इति। त्वयोता रक्षितास्त्वोतासः। प्रत्ययोत्तरपदयोश्च (पा० ७-२-९८) इति मपर्यन्तस्य त्वादेशे वकारलोपश्छान्दसः। अवतेर्निष्ठायामिडभावश्च। ज्वरत्वरस्रिव्यविमवामुपधायाश्च (पा० ६-४-२०) इत्यूठ्। एत्येधत्यूठ्सु (पा० ६-१-८९) इति वृद्ध्यभावश्छान्दसः।

तृतीया कर्मणि ( पा० ६-२-४८ ) इति पूर्वपदप्रकृतिस्वरेणाकारः उदात्तः। एकादेश एकादेश उदात्तेनोदात्तः ( पा० ८-२-५ ) इत्युदात्तः। अर्वता। अर्वति गच्छतीत्यर्वा। अर्व गतौ। अन्येभ्यो-ऽपि दृश्यन्ते ( पा० ३-२-७५ ) इति वनिप्प्रत्ययः। नेड्वशि कृति ( पा० ७-२-८ ) इतीट्प्रतिषेधः। लोपो व्योर्वलि ( पा० ६-१-६६ ) इति वकारलोपः। अर्वणस्त्रसावनञः ( पा० ६-४-१२७ ) इति तकारः। वनिपः पित्त्वाद्धातुस्वर एव ॥२॥

तृतीयामृचमाह। हे इन्द्र त्वोतासस्त्वया पालिता वयं घना घनं शत्रुप्रहरणायात्यन्तं दृढं वज्र-मायुधमाददीमहि। स्वीकुर्मः। तेन च वज्रेण युधि युद्धे स्पृधः स्पर्द्धमानाञ्छत्रून्त्सञ्जयेम। सम्यग्जयेम। त्वोतासः। उक्तम्। वज्रम्। वज व्रज गतौ। ऋज्रेन्द्राग्र० ( उ० २-२१ ) इत्यादिना रन्प्रत्ययान्तो निपातितः। घना। घनः काठिन्यम्। तदस्यास्तीत्यर्शआदित्वादच्। चित्त्वा-दन्तोदात्तः। सुपां सुलुक्० ( पा० ७-१-३९ ) इति डादेशः। ददीमहि। डुदाञ् दाने। प्रार्थनायां लिङ्। क्रियाफलस्य कर्तृगामित्वात्स्वरितञितः० ( पा० १-३-७२ ) इत्यात्मनेपदोत्तमपुरुषबहुवचनं महिङ्। जुहोत्यादित्वाच्छपः श्लुः। श्लौ ( पा० ६-१-१० ) इति द्विर्भावः। लिङः सलोपोऽनन्त्यस्य ( पा० ७-२-७९ ) इति सलोपः। श्नाभ्यस्तयोरातः ( पा० ६-४-११२ ) इत्याकारलोपः। जयेम। शपः पित्त्वादनुदात्तत्वम्। तिङश्च लसार्वधातुकस्वराद्धातुस्वर एव शिष्यते। छन्दसि परेऽपि ( पा० १-४-८१ ) इति समः परः प्रयोगः। युधि। युध संप्रहारे। सम्पदादित्वाद्भावे क्विप्। सावेकाचः० ( पा० ६-१-१६८ ) इति विभक्तेरुदात्तत्वम्। स्पर्धन्त इति स्पृधः। स्पर्ध सङ्घर्षे। क्विप् च ( पा० ३-२-७६ ) इति क्विप्। बहुलं छन्दसि ( पा० ६-१-३४ ) इति रेफस्य सम्प्रसारण-मृकारः। अकारलोपश्च ॥३॥

चतुर्थीमृचमाह। वयं कर्मानुष्ठातारः शूरेभिः शौर्ययुक्तैरस्तृभिरायुधानां प्रक्षेप्तृभिर्भटैः संयुज्येमहीति शेषः। हे इन्द्र तादृशभटसहिता वयं युजा सहायभूतेन त्वया पृतन्यतः सेनामिच्छतः शत्रून् सासह्याम। अतिशयेनाभिभवेम। शूरेभिः। शु श्व गतौ। ०क्रन् ( उ० २-२७ ) इत्यनुवृत्तौ शुसि-चिमीनां दीर्घश्च ( उ० २-२८ ) इति क्रन्। कित्त्वाद्गुणाभावः। नित्त्वादाद्युदात्तत्वम्। बहुलं छन्दसि ( पा० ७-१-१० ) इत्यैसो निषिद्धत्वाद् बहुवचने झल्येत् ( पा० ७-३-१०३ ) इत्येत्वम्। सहयोगे तृतीयाबलाद्वयमित्यस्मत्पदसमभिव्याहाराच्च वयं संयुज्येमहीति गम्यम्। विनापि सहशब्देन वृद्धो यूना० ( पा० १-२-६५ ) इति निपातनादिति ह्युक्तम्। अस्तृभिः। शस्त्रास्त्रप्रक्षेपणशीलैः। तद्धर्मभिस्तत्साधुकारिभिर्वा। असु क्षेपणे। तृन् ( पा० ३-२-१३५ ) इति ताच्छील्यादिषु तृन्। नित्त्वादाद्युदात्तः। रधादिभ्यश्च ( पा० ७-२-४५ ) इति विकल्पविधानादयं पक्ष इडभावः। वस्तु-तस्तु रधादावभावात्तृन्तृचौ शंसिक्षदादिभ्यः ( उ० २-९० ) इत्यनेनानिट् तृन्। त्वया। युष्यसिभ्यां मदिक् ( उ० १-१३७ )। कित्त्वाद्गुणाभावः। युष्मदः प्रत्ययस्वरेणाकार उदात्तः। तृतीयैक-वचनं टा। त्वमावेकवचने ( पा० ७-२-९७ ) इति मपर्यन्तस्य त्वादेशः। अतो गुणे ( पा० ६-१-९७ ) इति पररूपत्वम्। एकादेश उदात्तेनोदात्तः ( पा० ८-२-५ ) इत्युदात्तः। युजा। ०अत्र युजिक्रुञ्चां च ( पा० ३-२-५९ ) इति क्विन्। सावेकाचः० ( पा० ६-१-१६८ ) इति विभक्ते-रुदात्तत्वम्। सासह्याम। भृशं पुनः पुनः सहेमहि। षह मर्षणे। धात्वादेः षः सः ( पा० ६-१-६४ )। धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ( पा० ३-१-२२ )। यङोऽचि च ( पा०

२-४-७४ ) इति लुक्। सन्यङोः ( पा० ६-१-९ ) इति द्विर्भावः। हलादिः शेषः ( पा० ७-४-६० ) दीर्घोऽकितः ( पा० ७ ४-८३ ) इति दीर्घः। प्रार्थनायां लिङ्। चर्करीतं च ( पा० ग० २ ) परस्मैपदमदादिवच्च द्रष्टव्यम्। इति परस्मैपदोत्तमपुरुषबहुवचनं मस्। कर्तरि शप् ( पा० ३-१-६८ )। अदादिवद्भावाल्लुक्। नित्यं ङितः ( पा० ३-४-९९ ) इत्यन्त्यसकारलोपः। यासुट् परस्मैपदेषूदात्तो ङिच्च ( पा० ३-४-१०३ ) इति यासुट्। लिङः सलोपोऽनन्त्यस्य ( पा० ७-२-७९ ) इति सकारलोपः। सतिशिष्टत्वाद्यासुट एवोदात्तत्वं शिष्यते। पादादित्वान्न निघातः। पृतन्यतः। योद्धुं पृतनामात्मन इच्छतः। सुप आत्मनः क्यच् ( पा० ३-१-८ ) इति क्यच्। सनाद्यन्ता धातवः ( पा० ३-१-३२ ) इति धातुसञ्ज्ञायां सुपो धातुप्रातिपदिकयोः ( पा० २-४-७१ ) इति सुपो लुक्। क्यचि च ( पा० ७-४-३३ ) इत्यनुवृत्तौ कव्यध्वरपृतनस्यर्चि लोपः ( पा० ७-४-३९ ) इत्याकारलोपः। पृतन्यधातुश्चित्त्वादन्तोदात्तः। उपरि लटः शत्रादेशः। कर्तरि शप् ( पा० ३-१-६८ )। पित्त्वादनुदात्तत्वम्। शतुश्च लसार्वधातुकस्वरेण। उदात्तेन सहैकादेश उदात्तेनोदात्तः ( पा० ८-२-५ ) इति पृतन्यच्छब्दोऽन्तोदात्तः। शसः सुप्स्वरेणानुदात्तस्यान्तोदात्ताद्० ( पा० ६-१-१६९ ) इत्यनुवृत्तौ शतुरनुमो नद्यजादी ( पा० ६ १-१७३ ) इत्युदात्तत्वम् ॥४॥

पञ्चमीमृचमाह। अयमिन्द्रो महान् शरीरेण प्रौढः परश्च गुणोत्कृष्टोऽपि। नु किञ्च वज्रिणे वज्रयुक्तायेन्द्राय महित्वं पूर्वोक्तं द्विविधमाधिक्यं सर्वदाऽस्तु। स्वभावसिद्धस्यापि भक्त्या प्रार्थनमेतद्। किञ्च। द्यौनं। द्युलोक इव शवो बलमिन्द्रस्य सेनारूपं प्रथिना प्रथिम्ना पृथुत्वेन युज्यतामिति शेषः। यथा द्युलोकः प्रभूत एवमस्य सेना प्रभूता। नुशब्दो यद्यपि क्षिप्रनामसु नु मक्षु (निघ० २-१५) इति पठितस्तथाप्यत्र तस्यान्वयाभावान्निपातत्वेनानेकार्थत्वसम्भवाच्च समुच्चयार्थोऽत्र गृहीतः। नशब्दो लोके प्रतिषेधार्थ एव। स्वाध्याये तु प्रतिषेधार्थ उपमानार्थश्चेति द्विविधः। येन पदेनान्वीयते तस्मात्पूर्वं प्रयुज्यमानः प्रतिषेधार्थः। उपरिष्टात् प्रयुज्यमान उपमानार्थः। तथाच यास्क उदाहरति। उभयमन्वध्यायं नेन्द्रं देवममंसतेति प्रतिषेधार्थीयः। पुरस्तादुपाचारस्तस्य यत्प्रतिषेधति। दुर्मदासो न सुरायामित्युपमार्थीयः। उपरिष्टादुपाचारस्तस्य येनोपमिमीते ( नि० १-४ ) इति। अत्रोपमानवाचिनो द्युशब्दस्यादौ प्रयुक्तत्वादुपमार्थः स्वीकृतः। अष्टाविंशतिसङ्ख्याकेषु बलनामस्वोजः पाजः शवः ( निघ० २-९ ) इति पठितम्। महानिति नकारस्य संहितायां दीर्घादटि समानपादे ( पा० ८-३-९ ) इति रुत्वम्। आतोऽटि नित्यम् ( पा० ८-३-३ ) इति पूर्वस्याकारस्यानुनासिकः। भोभगोअघोअपूर्वस्य योऽशि ( पा० ८-३-१७ ) इति यकारः। तस्य लोपः। तस्यासिद्धत्वात्स्वरसन्धिर्न भवति। महेरिन् ( उ० २-५७ ) इत्यौणादिक इन्। महेर्भावो महित्वम्। त्वमिति प्रत्ययस्वरेणोदात्तः। स एव शिष्यते। वज्रिणे। इकारः प्रत्ययस्वरेणोदात्तः। द्यौः। द्योशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। गोतो णित् ( पा० ७-१-९० ) इति विभक्तेर्णित्त्वादचो ञ्णिति ( पा० ७-२-११५ ) इति वृद्धिरान्तरतम्यादुदात्तैव भवति। प्रथिना। प्रथिम्ना। पृथोर्भाव इत्यर्थे पृथ्वादिभ्य इमनिज्वा ( पा० ५-१-१२२ ) इतीमनिच्। र ऋतो हलादेर्लघोः ( पा० ६-४-१६१ ) इति ऋकारस्य रभावः। तुरिष्ठेमेयस्सु ( पा० ६-४-१५४ ) इत्यनुवृत्तौ टेः ( पा० ६-४-१५५ ) इति टिलोपः। प्रथिमन्शब्दश्चित्त्वादन्तोदात्तः। तृतीयैकवचने भस्याल्लोपोऽनः ( पा० ६-४-१३४ )

इत्यकारलोपः। छान्दसो मकारलोपः। अनुदात्तस्य च यत्रोदात्तलोपः ( पा० ६-१-१६१ ) इति विभक्तेरुदात्तत्वम्। शवः। नब्विषयस्यानिसन्तस्य ( फि० २-१६ ) इत्याद्युदात्तत्वम् ॥५॥

इति प्रथमस्य प्रथमे पञ्चदशो वर्गः।

एन्द्र सानसिमिति सूक्ते षष्ठीमृचमाह। ये नरः पुरुषाः समोहे संग्रामे तोकस्यापत्यस्य सनितौ वा लाभे वाशत। व्याप्तवन्तः। इन्द्रं स्तुत्येति शेषः। वा अथवा विप्रासो मेधाविनो धियायवः प्रज्ञाकामाः सन्त आशत। ते सर्वे लभन्त इत्यध्याहारः। रण इत्यादिषु षट्चत्वारिंशत्संग्रामनामसु समोहे समिथे: ( निघ० २-१७ ) इति पठितम्। समोहे। प्राति-पदिकान्तोदात्तत्वम्। वा। चादयोऽनुदात्ताः ( फि० ४-१६ ) इत्यनुदात्तः। आशत। अशू व्याप्तौ। छान्दसश्च्लेर्लोपः। आडागम उदात्तः। सतिशिष्टत्वेन स एव शिष्यते। नरः। प्रातिपदिकस्वरः। सनितौ। स्त्रियां क्तिन् ( पा० ३-३-९४ ) तितुत्रेष्वग्रहादीनामिति वचनात् ( पा० वा० ७-२-९ ) निगृहीतिर्निपठितिरिरितिवदिडागमः। विप्रासः। ऋज्रेन्द्र० ( उ० २-२१ ) इत्यादिना रन्प्रत्ययान्तो निपातितः। धियायवः। धि धारणे। धीयते धार्यतेऽवबुध्यते श्रुतमज्ञातमनयेति धिया प्रज्ञा। तामात्मन इच्छन्तीति क्यच्। क्याच्छन्दसि ( पा० ३-२-१७० ) इत्युप्रत्ययः। अतो लोपः ( पा० ६-४-४८ )। प्रत्ययस्वरेणोदात्तः ॥६॥

सप्तमीमृचमाह। यः कुक्षिरिन्द्रस्योदरप्रदेशः सोमपातमोऽतिशयेन सोमस्य पाता। स कुक्षिः समुद्र इव पिन्वते। वर्धते। सेचनार्थो धातुरौचित्येन वृद्धिं लक्षयति। काकुदो मुख-सम्बन्धिन्य उर्वीर्बह्वय आपो न। जलानीव। जिह्वासम्बद्धमास्योदकं यथा कदाचिदपि न शुष्यति तथेन्द्रस्य कुक्षिः सोमपूरितो न शुष्यतीत्यर्थः। यद्यपि श्लोक इत्यादिषु सप्तपञ्चाशत्सङ्ख्याकेषु वाङ्नामसु काकुजिह्वा ( निघ० १-११ ) इति पठितं तथापि उदकसम्बन्धसिद्ध्यर्थमत्र काकुच्छब्देन मुखमुपलक्ष्यते। सम्बन्धिवाचिनस्तद्धितस्यात्र छान्दसो लोपो द्रष्टव्यः। सोमपातमः। सोमं पिबतीति सोमपाः। आकारो धातुस्वरेणोदात्तः। कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। तमपः पित्स्वादनुदात्तत्वम्। समुद्रशब्दः प्रातिपदिकत्वादन्तोदात्तः। इवेन समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च ( पा० वा० २-१-४ ) इति प्रकृतिस्वरः। पिन्वते। पिवि सेचने। इदितो नुम् धातोः ( पा० ७-१-५८ ) इति नुमागमः। शपः पित्त्वेनानुदात्तत्वम्। तिङश्च लसार्वधातुक-स्वरेण। धातुस्वर एव शिष्यते। उर्वीः। उरुशब्दोऽन्तोदात्तः। वोतो गुणवचनात् ( पा० ४-१-४४ ) इति ङीष्। यणादेशः। उदात्तयणो हल्पूर्वात् ( पा० ६-१-१७४ ) इतीकार उदात्तः। जसा सहैकादेश उदात्तेनोदात्तः ( पा० ८-२-५ ) इत्येकादेश उदात्तः। आपः। प्रातिपदिकस्वरः। काकुदः। प्रातिपदिकस्वरेणान्तोदात्तः ॥७॥

अभिप्लवषडहगतेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिन एवा ह्यस्य सूनृतेत्यनुरूपस्तृचः। एह्यू षु ब्रवाणि ते इति खण्डे, अथवा ब्राह्मणाच्छंसिन इत्युपक्रम्य एवा ह्यसि वीरयुरेवा ह्यस्य सूनृता ( आ० श्रौ० ७-८ ; ८-३ ) इति सूत्रितम्।

तस्मिंस्तृचे प्रथमां सूक्तेऽष्टमीमृचमाह। अस्येन्द्रस्य सूनृता प्रियसत्यरूपा वाग्दाशुषे हवि-र्दत्तवते यजमानाय तदर्थमेवा हि। एवं खलु। अनन्तरपदद्वयमाणगुणोपेता भवतीत्यर्थः।

कीदृशी। विरप्शी। विविधरपणोपेतवाक्ययुक्ता। बहुविधोपचारवादिनीत्यर्थः। गोमती बह्वीभिर्गोभिरुपेता। गोप्रदेत्यर्थः। अत एव मही महती पूज्या। यथोक्तवाचो दृष्टान्तः। पक्वा शाखा न। यथा बहुभिः पक्वैः फलैरुपेता पनसवृक्षादिशाखा प्रीतिहेतुस्तद्वत्। यद्यपि महन्नामसु बाधन्विरप्शी ( निघ० ३-३ ) इति पठितम्। तथाप्यत्र महीत्यनेन पुनरुक्तिप्रसङ्गादवयवार्थो गृहीतः। एव। एवमादीनामन्तः ( फि० ४-१४ ) इत्यन्तोदात्तः। संहितायां निपातस्य च ( पा० ६-३-१३६ ) इति दीर्घः। हि। निपात आद्युदात्तः। अस्य प्रकृतस्येन्द्रस्य परामर्शादिदमोऽन्वादेशे० ( पा० २-४-३२ ) इत्यादिनाशादेशोऽनुदात्त इति सर्वानुदात्तः। सूनृता। ऊन परिहाणे। सुतरामूनयत्यप्रियमिति सून्। सा चासावृता च सत्या चेति सूनृता प्रियसत्या वाक्। परादिश्छन्दसि बहुलम् ( पा० ६-२-१९९ ) इत्यृकार उदात्तः। विरप्शी। विविधं विचित्रं रपणं विरप्। रप लप व्यक्तायां वाचि। सम्पदादित्वाद्भावे क्विप्। तदेतदेषामस्तीति विरपशानि वाक्यानि। तानि यस्यां वाचि सन्ति सा वाग् विरप्शिनी। अत इनिठनौ ( पा० ५-२-११५ ) इतीनिः। यस्येति च ( पा० ६-४-१४८ ) इत्यकारलोपः। ऋन्नेभ्यो ङीप्। ( पा० ४-१-५ ) इति ङीप्। इकारः प्रत्ययस्वरेणोदात्तः। नकारलोपश्छान्दसः। सवर्णदीर्घ एकादेश उदात्तेनोदात्तः ( पा० ८-२-५ ) इत्युदात्तः। गावोऽस्यां सन्तीति गोमती। मतुम्ङीपौ पित्त्वादनुदात्तौ। प्रातिपदिकस्वर एव शिष्यते। मही। महती। उगितश्च ( पा० ४-१-६ ) इति ङीप्। तस्य पित्त्वादनुदात्तत्वे प्राप्ते शतुरनुमो नद्यजादी ( पा० ६-१-१७३ ) इत्यत्र बृहन्महतोरुपसङ्ख्यानम् ( पा० वा० ६-१-१७३ ) इत्युदात्तत्वम्। अच्छब्दलोपश्छान्दसः। पक्वा। डुपचष् पाके। निष्ठा ( पा० ३-२-१०२ ) इतिक्तप्रत्ययः। पचो वः ( पा० ८-२-५२ ) इति वत्वम्। चोः कुः ( पा० ८-२-३० ) इति कुत्वम्। प्रत्ययस्वरेणान्तोदात्तः। टापा सह सवर्णदीर्घ एकादेश उदात्तेनोदात्तः ( पा० ८-२-५ ) इत्युदात्तः। शाखा। शाखृ व्याप्तौ। पचाद्यच्। चित्त्वादन्तोदात्ते प्राप्ते वृषादेराकृतिगणत्वाद् वृषादित्वादाद्युदात्तत्वम्। दाशुषे। दाशृ दाने। दाश्वान्साह्वान्मीढ्वांश्च ( पा० ६-१-१२ ) इति निपातनात्क्वसाविडभावो द्विर्वचनाभावश्च। चतुर्थ्येकवचने यचि भम् ( पा० १-४-१८ ) इति भसञ्ज्ञायां वसोः सम्प्रसारणम् ( पा० ६-४-१३१ ) इति संप्रसारणं वकारस्योकारः। परपूर्वत्वम्। शासिवसिघसीनां च ( पा० ८-३-६० ) इति षत्वम्। प्रत्ययस्वरेणोकार उदात्तः ॥८॥

नवमीमृचमाह। हे इन्द्र ते तव विभूतयः। ऐश्वर्यविशेषाः। एवा हि। एवंविधाः खलु। किंविधा इति तदुच्यते। मावते मत्सदृशाय दाशुषे हविर्दत्तवते यजमानायोतयस्त्वदीयरक्षारूपाः सद्यश्चित्सन्ति। यदा कर्मानुष्ठितं तदैव भवन्ति। मावते। मत्सदृशाय। वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानम् ( पा० वा० ५-२-३९ ) इत्यस्मच्छब्दाद्वतुप्। मपर्यन्तस्य ( पा० ७-२-९१ ) प्रत्ययोत्तरपदयोश्च ( पा० ७-२-९८ ) इति मादेशः। अच्छब्देन सहातो गुणे ( पा० ६-१-९७ ) इति पररूपत्वम्। दृग्दृशवतुषु ( पा० ६-३-९० ) इत्यनुवृत्तौ आ सर्वनाम्नः ( पा० ६-३-९१ ) इति दकारस्याकारः। सवर्णदीर्घत्वम्। वतुपः पित्त्वात्प्रातिपदिकस्वर एव शिष्यते। सद्यः। समाने सद्य इत्यर्थे सद्यःपरुत्परार्येषमः० ( पा० ५-३-२२ ) इत्यादिना निपातितम्। प्रत्ययस्वरेणान्तोदात्तत्वम्। चित्। चादयोऽनुदात्ताः ( फि० ४-१६ ) इत्यनुदात्तः। सन्ति। अस भुवि। लटः स्थाने झिः। झोऽन्तः। ( पा० ७-१-३ ) अदिप्रभृतिभ्यः

शपः ( पा० २-४-७२ ) इति शपो लुक्। तिङः प्रत्ययाद्युदात्तत्वम्। प्रत्ययलोपे प्रत्ययलक्षणम्। ( पा० १-१-६२ ) इति शयकारमाश्रित्य लसार्वधातुकानुदात्तत्वं न भवति वर्णाश्रयविधौ प्रत्ययलक्षणं नास्ति ( पा० प० २१ ) इति निषेधात्। दाशुषे। गतमन्त्रे गतम् ॥९॥

दशमीमृचमाह। अस्येन्द्रस्य स्तोमः सामसाध्यं स्तोत्रमुक्थं चर्क्साध्यं शस्त्रमप्येता हि। एते उभे एवंविधे खलु। किंविधे तदुच्यते। काम्या। कामयितव्ये। शंस्या। ऋत्विग्भिः शंसनीये। किमर्थं शंसनमिति तदुच्यते। इन्द्राय सोमपीतये। इन्द्रस्य सोमपानार्थम्। एवा ह्यस्य। व्यवहितमन्त्रे गतम्। काम्या। कमेर्णिङन्ताद्चो यत् ( पा० ३-१-९७ )। णेरनिटि ( पा० ६-४-५१ ) इति णिलोपः। तित्स्वरितम् ( पा० ६-१-१८५ ) इति स्वरिते प्राप्ते यतोऽनावः ( पा० ६-१-२१३ ) इत्याद्युदात्तत्वम्। सुपो डादेशः। स्तोमः। अर्तिस्तुसु० ( उ० १-१३८ ) इत्यादिना मन्प्रत्ययः। उक्थम्। वच परिभाषणे। पातृतुदिवचिरिचिसिचिभ्य स्थक् ( उ० २-७ ) इति थक्। कित्त्वात्संप्रसारणम्। परपूर्वत्वगुणाभावौ। शंस्या। शंसु स्तुतौ। ण्यन्ताद्चो यत् ( पा० ३-१-९७ )। यतोऽनावः ( पा० ६-१-२१३ ) इत्याद्युदात्तत्वम्। सुपो डादेशः। सोमपीतये। सोमस्य पीतिः। कृदुत्तरपदप्रकृतिस्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वम्। अथवा सोमस्य पीतिर्यस्येन्द्रस्येति सोमपीतिरिन्द्रः। बहुव्रीहौ प्रकृत्या पूर्वपदम् ( पा० ६-२-१ ) इति पूर्वपदप्रकृतिस्वरत्वम् ॥१०॥

इति प्रथमस्य प्रथमे षोडशो वर्गः।

॥९॥

१-९

इन्द्रेहीत्यादिकं दशर्चं सूक्तं सुरूपकृत्नुमित्यादिषु पठम्। ऋष्याद्यस्तु पूर्ववत्। विशेषस्त्वतिरात्रे द्वितीयपर्यायेऽच्छावाकशस्त्रे इन्द्रेहीत्यनुरूपस्तृचः। अतिरात्रे पर्यायाणामिति खण्डे इदं वसो सुतमन्ध इन्द्रेहि मत्स्यन्धसः ( आ० श्रौ० ६-४ ) इति सूत्रितम्।

तस्मिन्सूक्ते प्रथमामृचमाह। हे इन्द्र एहि। अस्मिन्कर्मणि आगच्छ। आगत्य च विश्वेभिः सर्वैः सोमपर्वभिः सोमरसरूपैरन्धसोऽन्धोभिरन्नैर्मत्सि। माद्य। हृष्टो भव। तत ऊर्ध्वमोजसा बलेन महान्भूत्वाऽभिष्टिः शत्रूणामभिभविता। भवेति शेषः। अष्टाविंशतिसङ्ख्याकेषु बलनामसु ओजः पाजः ( निघ० २-९ ) इति पठितम्। आ इहि। आद्गुणः ( पा० ६-१-८७ )। इन्द्र एहि इन्द्रेहि। यो ह्युभयोः स्थाने जायते लभतेऽसावन्यतरव्यपदेशमित्याङ्नाङोरेकादेशस्याङ्व्यपदेशादोमाङोश्च ( पा० ७ १-९५ ) इति पररूपम्। मत्सि। माद्य। मदी हर्षग्लेपनयोः। लोटः सिप्। सर्वे विधयश्छन्दसि विकल्प्यन्ते ( पा० प०३५ ) इति सेर्हिरादेशो न भवति। दिवादिभ्यः श्यन् ( पा० ३-१-६९ ) इति श्यन्। बहुलं छन्दसि ( पा० २-४-७३ ) इति श्यनो लुक्। न लुमताङ्गस्य ( पा० १-१-६३ ) इति प्रत्ययलक्षणप्रतिषेधाच्छमामष्टानां दीर्घः श्यनि ( पा० ७-३.७४ ) इत्युपधा-

दीर्घो न भवति। सिपः पित्त्वाद्धातुस्वर एव। अन्धसः। अदेर्नुम् धश्च (उ० ४-२०७) इत्यसुन्। व्यत्ययेन तृतीयाबहुवचनं कर्तव्यम्। नित्त्वादाद्युदात्तः। विश्वेभिः। अशिप्रुषि० (उ० १-१५०) इत्यादिना क्वन्। नित्त्वादाद्युदात्तत्वम्। ऐसादेशो बहुलं छन्दसि (पा० ७-१-१०) इति न भवति। सोमपर्वभिः। लतारूपं सोमं पृणन्ति पूरयन्ति इति सोमपर्वाणः सोमरसाः। पृ पालनपूरणयोः। अन्येभ्योऽपि दृश्यन्ते (पा० ३-२-७५) इति वनिप्। गुणो रपरत्वम्। वनिपः पित्त्वाद्धातुस्वर एव। उपपदसमासे कृदुत्तरपदप्रकृतिस्वरेण पुनः स एव भवति। अभिष्टिरभिगन्ता। इष गतौ। मन्त्रे वृष० (पा० ३-३-९६) इत्यादिना क्तिन्नुदात्तः। स हि भावपरोऽपि भवितारं लक्षयति। कित्त्वाल्लघूपधगुणाभावः। तितुत्रतथसिसुसरकसेषु च (पा० ७-२-९) इतीडागमो न भवति। अभिशब्दस्यैकारस्य एमन्नादिषु पररूपं वक्तव्यम् (पा० वा० ६-१-९४) इति पररूपत्वम्। प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम्। ओजसा। उब्जेर्बलोपश्च (उ० ४-८६) इत्यसुन्। नित्त्वादाद्युदात्तः ॥१॥

द्वितीयामृचमाह। ईमित्यनर्थकः पादपूरणाय प्रयुक्तः। हे अध्वर्यवः सुतेऽभिषुते चमसस्थे सोमे एनं सोममिन्द्रायेन्द्रार्थमासृजत। पुनरभ्युन्नयत। शुक्रामन्थिचमसगणे पुनरभ्युन्नयनमापस्तम्बेनोक्तम्। होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्धुत्वा शुक्रस्याभ्युन्नीयोपावर्तध्वम् (आप० श्रौ० १२-२३-४ इति। कीदृशमेनम्। मन्दिम्। हर्षहेतुम्। चक्रिम्। साधुकरणशीलम्। कीदृशायेन्द्राय। मन्दिने। हर्षयुक्ताय। विश्वानि सर्वाणि कर्माणि चक्रये कृतवते। सर्वकर्मनिष्पादनशीलायेत्यर्थः। ईमित्यस्य पादपूरणार्थत्वं यास्क आह। अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति (नि० १-९) इति। अस्यायमर्थः। अन्यैरेव पदैर्विवक्षितार्थे समाप्ते सति ये शब्दा ईमित्यादयः प्रयुक्तास्ते शब्दा अमिताक्षरेषु छन्दोराहित्येन परिमिताक्षररहितेषु ब्राह्मणादिवाक्येषु वाक्यपूरणार्था द्रष्टव्याः। मिताक्षरेषु छन्दोयुक्तेषु ग्रन्थेषु पादपूरणार्थाः। ते च कमीमित्यादय इति। ईमित्यस्य शब्दस्यानर्थक्यायैतामृचमुदाजहार। एमेनं सृजता सुते। आसृजतैनं सुते (नि० १-९) इति। एनम्। इदमो द्वितीयायां द्वितीयाटौस्स्वेनः (पा० २-४-३४ इत्यनेनेनादेशः। ०अनुदात्तः० (पा० २-४-३२) इत्यनुवृत्तेः सर्वानुदात्तः। सृजता। संहितायामन्येषामपि दृश्यते (पा० ६-३-१३७) इति दीर्घः। मन्दिम्। प्रमोदहेतुम्। मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। इदितो नुम् धातोः (पा० ७-१-५८) इति नुम्। मन्दमानं प्रयुङ्क्त इत्यर्थे हेतुमति च (पा० ३-१-२६) इति णिच्। ण्यन्तस्याजन्तत्वादच इः (उ० ४-१-४०) इतीकारप्रत्ययः। णेरनिटि (पा० ६-४-५१) इति णिलोपः। प्रत्ययस्वरेणान्तोदात्तत्वम्। मन्दिने। मन्देः पूर्ववत् चतुर्थ्येकवचनेऽनपुंसकस्यापि (पा० ७-१-७३) इति व्यत्ययेन नुमागमः। चक्रिम्। डुकृञ् करणे। आदृगमहनजनः किकिनौ लिट् च (पा० ३-२-१७१) इति तच्छीलतद्धर्मतत्साधुकारिषु कर्तृषु किन्प्रत्ययः। तस्य कित्त्वाद्गुणाभावः। यणादेशः। लिड्वद्भावात्कृशब्दो द्विरुच्यते। अभ्यासस्योरदत्त्वरपरत्वश्च हलादिःशेषाः। किनो नित्त्वादाद्युदात्तत्वम्। विश्वानि। विशेः क्वन्। नित्त्वादाद्युदात्तः। अस्य चक्रय इति कृदन्तेन योगेऽपि कर्तृकर्मणोः कृति (पा० २-३-६५) इति षष्ठी न भवति। ०किकिनौ लिट् च (पा० ३-२-१७१) इति किकिनोर्लिड्वद्भावेन नलोकाव्ययनिष्ठाखलर्थतृनाम् (पा० २-३-६९) इति निषेधात् ॥२॥

तृतीयामृचमाह। हे सुशिप्र हे शोभनहनो शोभननासिक वा। शिप्रे हनू नासिके वा ( नि० ६-१७ ) इति यास्केनोक्तत्वात्। तादृश हे इन्द्र मन्दिभिर्हर्षहेतुभिः स्तोमेभिः स्तोमैः स्तोत्रैर्मत्स्व। हृष्टो भव। हे विश्वचर्षणे सर्वमनुष्ययुक्त। सर्वैर्यजमानैः पूज्येत्यर्थः। तादृशेन्द्र त्वमेषु आगतेषु त्रिषु सवनेषु सचा देवैरन्यैः सहागच्छेति शेषः। मदि स्तुतीत्यस्य लोट्यनित्यमागमशासनम् ( पा० प० ९२ ) इति इदितो नुम् धातोः ( पा० ७-१-५८ ) इति नुम् न भवति। अनुदात्तेत्त्वात्तास्यनुदात्तेन्ङिदुपदेशाद्० ( पा० ६-१-१८६ ) इति लसार्वधातुकानुदात्तत्वम्। धातुस्वर एव। संहितायां द्व्यचोऽतस्तिङः ( पा० ६-३-१३५ ) इति दीर्घत्वम्। सुशिप्रेत्यामन्त्रितनिघातः। मन्दिभिः। गतमन्त्रे व्याख्यातम्। स्तोमेभिः। मन्प्रत्ययस्य नित्त्वादाद्युदात्तत्वम्। बहुलं छन्दसि ( पा० ७-१-१० ) इति भिस ऐसादेशो न भवति। विश्वचर्षणे। निघातः। सचा। उक्तम्। एषु। ऊडिदम्० ( पा० ६-१-१७१ ) इत्यादिना विभक्तेरुदात्तत्वम् ॥३॥

चतुर्थीमृचमाह। हे इन्द्र गिरस्त्वदीयाः स्तुतीरसृग्रम्। सृष्टवानस्मि। ताश्च गिरः स्वर्गेऽवस्थितं त्वां प्रत्युदहासत। उद्गत्य प्राप्नुवन्। तादृशीर्गिरस्त्वमजोषाः। सेवितवानसि। कीदृशं त्वाम्। वृषभम्। कामानां वर्षितारम्। पतिम्। सोमस्य पातारम्। यजमानानां पालयितारं वा। पाता वा पालयिता वा ( नि० ४-२६ ) इति यास्केनोक्तत्वात्। असृग्रम्। असृजम्। सृज विसर्गे। लटो मिप्। तुदादिभ्यः शः ( पा० ३-१-७७ )। बहुलं छन्दसि ( पा० ७-१-८ ) इत्यत्र विकरणस्य रुडागमः। जकारस्य गकारः। लुङ्लङ्लृङ्क्ष्वडुदात्तः ( पा० ६-४-७१ ) इत्यडागम उदात्तः। सतिशिष्टत्वात्स एव शिष्यते। गिरः। प्रातिपदिकस्वरः। अहासत। ओहाङ् गतौ। लुङ्। झस्यादादेशः। च्लेः सिच् ( पा० ३-१-४४ ) अडागमो निघातश्च। अजोषाः। जुषी प्रीतिसेवनयोः। लङः स्थास्। तुदादिभ्यः शः ( पा० ३-१-७७ )। तस्य छन्दस्युभयथा ( पा० ३-४-११७ ) इत्यार्धधातुकत्वेन ङित्त्वाभावाल्लघूपधगुणः। थासस्थकारलोपश्छान्दसः। सवर्णदीर्घः। अडागमः। सतिशिष्टत्वादुदात्तः शिष्यते। वृषभम्। वृषु वृषु सेचने। ०ऋभच् ( उ० ३-१२२ ) इत्यनुवृत्तावृषिवृषिभ्यां कित् ( उ० ३-१२२ ) इत्यभच् प्रत्ययः। कित्त्वाद् गुणाभावः। चित्त्वादन्तोदात्तः। पतिम्। पा रक्षणे। पातेर्डतिः ( उ० ४-५८ )। डित्त्वाट्टिलोपः। प्रत्ययाद्युदात्तत्वम् ॥४॥

पञ्चमीमृचमाह। हे इन्द्र वरेण्यं श्रेष्ठं राधो धनं चित्रं मणिमुक्तादिरूपेण बहुविधमर्वागस्मदभिमुखं यथा भवति तथा सञ्चोदय। सम्यक् प्रेरय। भोगाय यावत्पर्याप्तं तावद्विभुशब्देनोच्यते। ततोऽप्यधिकं प्रभुशब्देन। तादृशं धनं ते तवैवासदित्। अस्त्येव। तस्मादस्मभ्यं प्रयच्छेत्यर्थः। मघमित्याद्यष्टाविंशतिधननामसु रायो राधः ( निघ० २-१० ) इति पठितम्। चोदय। चुद प्रेरणे। ण्यन्ताल्लोट्। तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातः। राधः। राध्नुवन्त्यनेनेति राधो धनम्। सर्वधातुभ्योऽसुन् ( उ० ४-१९० )। नित्त्वादाद्युदात्तः। वरेण्यम्। वृञ् एण्यः। वृषादित्वादाद्युदात्तः। असत्। अस भुवि। लेट्। तिप्। इतश्च लोपः० ( पा० ३-४-९७ ) इतीकारलोपः। लेटोऽडाटौ ( पा० ३-४-९४ ) इत्यडागमः। अदिप्रभृतिभ्यः शपः ( पा० २-४-७२ ) इति शपो लुक्। आगमा अनुदात्ताः ( पा० प० ५७ ) इत्यटोऽनुदात्त-

त्वाद्धातुस्वर एव। विभु। विभवतीति विभु। भुवः० ( पा० ३-२-१७८ ) इत्यनुवृत्तौ विप्रसंभ्यो डुसञ्ज्ञायाम् ( पा० ३-२-१८० ) इति डुप्रत्ययः। डित्त्वाट्टिलोपः। प्रत्ययस्वरेणोकार उदात्तः। कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। एवं प्रभु ॥५॥

इति प्रथमस्य प्रथमे सप्तदशो वर्गः।

इन्द्रेहीति सूक्ते षष्ठीमृचमाह। हे तुविद्युम्न प्रभूतधनेन्द्र राये धनसिद्ध्यर्थमस्माननुष्ठातॄन्। तत्र कर्मणि सुचोदय। सुष्ठु प्रेरय। कीदृशानस्मान्। रभस्वतः। उद्योगवतः। यशस्वतः। कीर्तिमतः। तत्र। तच्छब्दात्सप्तम्यास्त्रल् ( पा० ५-३-१० )। लिति ( पा० ६-१-१९३ ) इति प्रत्ययात्पूर्वस्योदात्तत्वम्। इन्द्र। आमन्त्रितायुदात्तत्वम्। पादादित्वान्न निघातः। राये। ऊडिदम्० ( पा० ६-१-१७१ ) इत्यादिना विभक्तेरुदात्तत्वम्। रभस्वतः। रभ राभस्ये। राभस्यं कार्योपक्रमः। सर्वधातुभ्योऽसुन् ( उ० ४-१९० )। नित्त्वादाद्युदात्तः। मतुपः पित्त्वादनुदात्तत्वम्। स्वादिष्वसर्वनामस्थाने ( पा० १-४-१७ ) इति न पदत्वम्। तसौ मत्वर्थे ( पा० १-४-१९ ) इति भसञ्ज्ञया बाधितत्वात्। आकडारादेका सञ्ज्ञा ( पा० १-४-१ ) इति नियमात्। तुविद्युम्न। तुवि बहु द्युम्नं धनं यस्य। पाष्ठिकमामन्त्रितायुदात्तत्वम्। यशस्वतः। यशोऽस्यास्तीति मतुप्। अस्मायामेधास्रजो विनिः ( पा० ५-२-१२१ ) इति विनिना न बाध्यते। मतुपः सर्वत्रसमुच्चयात्। यशश्शब्दो नब्विषयस्यानिसन्तस्य ( फि० २-३ ) इत्याद्युदात्तः। मतुपः पित्त्वात्स एव शिष्यते ॥६॥

सप्तमीमृचमाह। हे इन्द्र श्रवो धनमस्मे सन्धेहि। अस्मभ्यं सम्यक् प्रयच्छ। कीदृशं श्रवः। गोमत्। बह्वीभिर्गोभिरुपेतम्। वाजवत्। प्रभूतेनान्नेनोपेतम्। पृथु। परिमाणेनाधिकम्। विश्वायुः। कृत्स्नायुःकारणम्। अक्षितम्। विनाशरहितम्। गोमत्। वाजवत्। उभयत्र मतुपोऽनुदात्तत्वात्प्रातिपदिकस्वर एव। वाजशब्दो वृषादित्वादाद्युदात्तः। अस्मे। अस्मच्छब्दाच्चतुर्थीबहुवचनस्य सुपां सुलुक्० ( पा० ७-१-३९ ) इत्यादिना शे आदेशः। शित्त्वात्सर्वादेशः। प्रातिपदिकस्येत्यन्तोदात्तत्वम्। शेषे लोपष्टिलोप इति पक्षे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। अन्त्यलोपपक्षेऽतो गुणे ( पा० ६-१-९७ ) इति पररूपे एकादेश उदात्तेनोदात्तः ( पा० ८-२-५ ) इत्युदात्तत्वम्। पृथु। प्रथ प्रख्याने। प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च ( उ० १-२८ ) इतिकुप्रत्ययः। रेफस्य संप्रसारणमृकारः। परपूर्वत्वम्। कोः कित्त्वान्न लघूपधगुणः। श्रूयत इति श्रवो धनम्। असुन्प्रत्ययः। नित्त्वादाद्युदात्तः। बृहत्। प्रातिपदिकस्वरः। विश्वायुः। विश्वमायुर्यस्मिन्धने। विश्वशब्दः कन्प्रत्ययान्तः। तस्य बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे प्राप्ते परादिश्छन्दसि बहुलम् ( पा० ६-२-१९९ ) इति पूर्वपदान्तोदात्तत्वम्। एकादेश उदात्तेनोदात्तः ( पा० ८-२-५ ) इत्युदात्तः। अक्षितम्। क्षि क्षय इत्यस्मादन्तर्भावितण्यर्थात्कर्मणि निष्ठा। तेन ण्यर्थत्वान्निष्ठायामण्यदर्थे ( पा० ६-४-६० ) इति न दीर्घत्वम्। अत एव क्षियो दीर्घात् ( पा० ८-२-४६ ) इति न निष्ठानत्वम्। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥७॥

अष्टमीमृचमाह। हे इन्द्र बृहच्छ्रवो महतीं कीर्तिमस्मे धेहि। अस्मभ्यं प्रयच्छ। तथा सहस्रसातममतिशयेन सहस्रसङ्ख्याकदानोपेतं द्युम्नं धनमस्मे धेहि। अस्मे। सुपां सुलुक्०

(पा० ८-१-२८) इत्यादिना शे आदेशः। धेहि। ध्वसोरेद्धावभ्यासलोपश्च (पा० ६-४-११९) इत्येत्वाभ्यासलोपौ। श्रूयत इति श्रवः। असुनो नित्त्वादाद्युदात्तत्वम्। सहस्रं सनुते ददातीति सहस्रसाः। षणु दाने। जनसनखनक्रमगमो विट् (पा० ३-२-६७)। विड्वनोरनुनासिकस्यात् (पा० ६-४-४१) इत्याकारादेशः। धातुस्वरेणान्तोदात्तः। पुनः कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। रथा आसां सन्तीति रथिन्यः। इनिप्रत्ययस्याद्युदात्तत्वम्। ऋन्नेभ्यो ङीप् (पा० ४-१-५)। स च पित्त्वादनुदात्तः। इयो यौगिकत्वे धातुस्वरः। रूढत्वे प्रातिपदिकस्वरः ॥८॥

नवमीमृचमाह। वसोर्वसुनोऽस्मदीयस्य धनस्योतये रक्षार्थमिन्द्रं होम वयमाह्वयामः। किं कुर्वन्तः। गीर्भिः स्तुतिभिर्गृणन्तः। स्तुवन्तः। कीदृशमिन्द्रम्। वसुपतिम्। धनपालकम्। ऋग्मियम्। ऋचां मातारम्। गन्तारम्। यागदेशे गमनशीलम्। वसोः। वस निवासे। शृस्वृस्निहि० (उ० १-१०) इत्यादिना उप्रत्ययः। निदित्यनुवृत्तेर्नित्त्वादाद्युदात्तः। वसुपतिम्। समासान्तोदात्तत्वे प्राप्ते पत्यावैश्वर्ये (पा० ६-२-१८) इति पूर्वपदप्रकृतिस्वरत्वम्। गीर्भिः। सावेकाचः० (पा० ६-१-१६८) इति विभक्तेरुदात्तत्वम्। गृणन्तः। गॄ शब्दे। लटः शतृ। क्र्यादिभ्यः श्ना (पा० ३-१-८१)। शतुः सार्वधातुकमपित् (पा० १-२-४) इति ङित्त्वाच्छ्नाभ्यस्तयोरातः (पा० ६-४-११२) इत्याकारलोपः। शतुरकारस्य प्रत्ययस्वरेणोदात्तत्वम्। ऋग्मियम्। ऋचो मिमीत इत्यृग्मीः। तमृग्मियम्। माङ् माने शब्दे च। क्विप् च (पा० ३-२-७६) इति क्विप्। घुमास्था० (पा० ६-४-६६) इत्यादिनेत्वम्। चकारस्य चोः कुः (पा० ८-२-३०) झलां जशोऽन्ते (पा० ८-२-३९) इति जश्त्वं गकारः। द्वितीयैकवचनेऽचि श्नुधातु० (पा० ६-४-७७) इत्यादिनेयङादेशः। एरनेकाचः० (पा० ६-४-८२) इति यणादेशः सर्वे विधयश्छन्दसि विकल्प्यन्ते (पा० प० ३५) इति न भवति। कृदुत्तरपदप्रकृतिस्वरेणेकार उदात्तः। होम। आह्वयामः। ह्वेञ् स्पर्धायां शब्दे च। लट्। तस्यास्मदो बहुत्वेऽपि व्यत्ययेन मिप्। इकारस्य व्यत्ययेनाकारः। शपो बहुलं छन्दसि (पा० २-४-७३) इति लुक्। बहुलं छन्दसि (पा० ६-१-३४) इति ह्वः सम्प्रसारणं परपूर्वत्वं गुणः। धातोः (पा० ६-१-१६२) इत्योकार उदात्तः। मिपः पित्स्वरेणानुदात्तत्वम्। गन्तारम्। गम्लृ सृप्लृ गतौ। ताच्छील्ये तृन्। नित्त्वादाद्युदात्तः। ऊतये। ऊतियूति० (पा० ३-३-९७) इत्यादिना क्तिन्नुदात्तो निपातितः ॥९॥

दशमीमृचमाह। आकार इच्छब्दश्च पादपूरणे। यद्वा व्याप्तिवचन आकारः। आ ईषदर्थेऽभिव्याप्तावित्यभिधानात्। इच्छब्दोऽपिशब्दार्थः। इयर्ति गच्छत्यनुष्ठेयं कर्मेत्यरिर्यजमानः। एवरिः सर्वोऽपि यजमान इन्द्राय सुते सुते इन्द्रार्थमभिषुते तत्तत्सोमे शूषं बलमर्चति। स्तौति। इन्द्रस्य पराक्रमं प्रशंसतीत्यर्थः। कीदृशं शूषम्। बृहत्। प्रौढम्। कीदृशायेन्द्राय। न्योकसे। नियतस्थानाय। बृहते। प्रौढाय। सुतेसुते। षुञ् अभिषवे। क्तप्रत्ययः। प्रत्ययस्वरेणोदात्तः। नित्यवीप्सयोः (पा० ८-१-४) इति वीप्सायां द्विर्भावः। तस्य परमाम्रेडितम् (पा० ८-१-२) इति द्वितीयस्याम्रेडितत्वेनानुदात्तं च (पा० ८-१-३) इत्यनुदात्तत्वम्। न्योकसे। नियतमोको यस्य तस्मै। निशब्दो निपाता आद्युदात्ताः (फि० ४-१२) इत्युदात्तः। तस्य यणादेशे उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (पा० ८-२-४) इत्योकारः स्वरितः। बृहते। बृहन्महतोरुप-

सङ्ख्यानम् ( पा० वा० ६-१-१७३ ) इत्यजादिविभक्तेरुदात्तत्वम्। अरिः। ऋ गतौ। अच इः ( उ० ४-१४० ) इतीकारप्रत्ययः। गुणो रपरत्वम्। प्रत्ययस्वरेणेकार उदात्तः। इन्द्राय। ऋज्रेन्द्र० ( उ० २-२१ ) इत्यादिना रन् प्रत्ययः। इकार उदात्तः। शुष्मम्। अष्टाविंशतिसङ्ख्याकेषु बलनामसु शुष्मं सहः ( निघ० २-९ ) इति पठितम्। प्रातिपदिकस्वरः। अर्चत निघातस्वरः ॥१०॥

इति प्रथमस्य प्रथमेऽष्टादशो वर्गः।

॥१०॥

१·१०

गायन्तीति सूक्तस्य मन्त्रसङ्ख्या छन्दोविशेषश्चैवमनुक्रम्येते। गायन्ति द्वादशानुष्टुभं तु ( अनु० १-१ ) इति। तुहिहवै ( अनु० १२-३ ) इत्यादिपरिभाषायां तुशब्दस्य सूक्तद्वये परिभाषितत्वादस्य सूक्तस्य वक्ष्यमाणस्य चानुष्टुभत्वं द्रष्टव्यम्। ऋषिदेवते पूर्ववत्। अभिप्लवषडहस्योक्थ्ये तृतीयसवनेऽच्छावाकस्य गायन्तीति स्तोत्रियस्तृचः। एष्वपु इति खण्डे गायन्ति त्वा गायत्रिण आ त्वा गिरो रथीरिव ( आ० श्रौ० ७-८ ) इति सूत्रितम्।

अस्मिस्तृचे प्रथमामृचमाह। हे शतक्रतो। बहुकर्मन् बहुप्रज्ञ वेन्द्र त्वां गायत्रिण उद्गातारो गायन्ति। स्तुवन्ति। अर्किणः। अर्चनहेतुमन्त्रयुक्ता होतारोऽर्कमर्चनीयमिन्द्रमर्चन्ति। शस्त्रगतैर्मन्त्रैः प्रशंसन्ति। ब्रह्माणो ब्रह्मप्रभृतय इतरे ब्राह्मणास्त्वा त्वामुद्येमिरे। उन्नतिं प्रापयन्ति। तत्र दृष्टान्तः। वंशमिव। यथा वंशाग्रे नृत्यन्तः शिल्पिनः प्रौढं वंशमुन्नतं कुर्वन्ति। यथा वा सन्मार्गवर्तिनः स्वकीयं कुलमुन्नतं कुर्वन्ति तद्वत्। एतामृचं यास्क एवं व्याचष्टे। गायन्ति त्वा गायत्रिणः प्रार्चन्ति तेऽर्कमर्किणो ब्रह्माणस्त्वा शतक्रत उद्येमिरे वंशमिव। वंशो वनशयो भवति वननाच्छ्रूयते इति वा ( नि० ५-५ ) इति। अर्कशब्दं च बहुधा व्याचष्टे। अर्को देवो भवति यदेनमर्चन्ति अर्को मन्त्रो भवति यदेनेनार्चन्त्यर्कमन्नं भवत्यर्चति भूतान्यर्को वृक्षो भवति स वृतः कटुकिम्ना ( नि० ५-४ ) इति। गायन्ति। शप्तिङौ पित्त्वाल्लसार्वधातुकत्वाच्चानुदात्तौ। धातुरुदात्तः। गायत्रिणः। गायत्रं साम येषामुद्गातॄणामस्ति ते। अत इनिठनौ ( पा० ५-२-११५ )। प्रत्ययस्वरेणेकार उदात्तः। अर्चन्ति। अर्च पूजायाम्। भौवादिकः। शप्तिङावनुदात्तौ। धातुस्वर एव। पादादित्वान्न निघातः। अर्कम्। अर्चन्त्येभिरित्यर्का मन्त्राः। तैरर्चनीयतया तदात्मक इन्द्रोऽपि लक्षणयार्कः। पुंसि सञ्ज्ञायां घः प्रायेण ( पा० ३-३-११८ ) इति करणे घः। चजोः कुघिण्ण्यतोः ( पा० ७-३-५२ ) इति चकारस्य कुत्वं ककारः। प्रत्ययस्वरेणान्तोदात्तः। अर्का मन्त्रा एषां सन्तीत्यर्किणो होतारः। एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ ( पा० वा० ५-२-११५ ) इति कृदन्तादिनिठनौ यद्यपि प्रतिषिद्धौ तथाप्यत्र व्यत्ययादिनिः। प्रत्ययस्वरेणेकार उदात्तः। ब्रह्माणः। प्रातिपदिकस्वरेणान्तोदात्तः। शतक्रतो। निघातः। संहितायामवादेशे लोपः शाकल्यस्य ( पा० ८-३-१९ ) इति वकारलोपः।

वंशशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। इवेन समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च (पा० वा० २·४-७१) इति स एव शिष्यते। येमिरे। यम उपरमे। तिङ्ङतिङः (पा० ८-१-२८) इति निघातः॥१॥

द्वितीयामृचमाह। यद्यदा सानोः सानुमारुहद्यजमानः सोमवल्लीसमिदाद्याहरणायैकस्मात्पर्वतभागादपरं पर्वतभागमारूढवान्। तथा भूरि प्रभूतं कर्त्वं कर्म सोमयागरूपमस्पष्ट। स्पृष्टवानुपक्रान्तवानित्यर्थः। तत्तदानीमिन्द्रोऽर्थं यजमानस्य प्रयोजनं चेतति। जानाति। ज्ञात्वा च वृष्णिः कामानां वर्षयिता सन् यूथेन मरुद्गणेन सहेजति। कम्पते। स्वस्थानाद्यज्ञभूमिमागन्तुमुद्युङ्क्त इत्यर्थः। सानोः। षणु दाने। सनोति ददाति निवसतामवकाशमिति सानुः। दृसनिजनिचरिचटिरहिभ्यो ञुण् (उ० १-२)। णित्वादुपधाया वृद्धिः। ञित्त्वादाद्युदात्तत्वं च। अरुहत्। रुहेर्लङि तिपि शपि सञ्ज्ञापूर्वको विधिरनित्यः (पा० प० ९३-१) इति लघूपधगुणो न भवति। लुङ्लङ्लृङ्क्ष्वडुदात्तः (पा० ६-४-७१) सतिशिष्टत्वात्स एव शिष्यते। निपातैर्यद्यदिहन्त० (पा० ८-१-३०) इति निषेधान्निघातो न भवति। भूरि। अदिशदिभूशुभिभ्यः क्रिन् (उ० ४-६६)। कित्त्वाद्गुणाभावः। नित्त्वादाद्युदात्तः। अस्पष्ट। स्पश बाधनस्पर्शनयोः। स्वरतिजितः० (पा० १-३-७२) इत्यात्मनेपदम्। लङः प्रथमपुरुषैकवचनं त। बहुलं छन्दसि (पा० २-४-७३) इति शपो लुक्। व्रश्चादिषत्वष्टुत्वे। लुङ्लङ्लृङ्क्ष्वडु० (पा० ६-४-७१) इत्यडागमः स चोदात्तः। स एव शिष्यते। अनुषङ्गेण यच्छब्दयोगान्निघाताभावः। कर्त्वम्। डुकृञ् करणे। अन्येभ्योऽपि दृश्यन्ते (पा० ३-२-७५) इति विच्। गुणो रपरत्वम्। विचः सर्वापहारी लोपः। करो भावः कर्त्वम्। अर्थम्। अर्त्तेरुषिकुषिगार्तिभ्यस्थन् (उ० २-४)। नित्त्वादाद्युदात्तः। यूथेन। तिथपृष्ठगूथयूथप्रोथाः (उ० २-१२) इति थक्प्रत्ययान्तो निपातितः। वृष्णिः। ०निः (उ० ४-४९) इत्यनुवृत्तौ सृवृषिभ्यां कित् (उ० ४-५०) इति निप्रत्ययान्तः। कित्त्वाद्गुणाभावः। प्रत्ययस्वरेणान्तोदात्तः। एजति। एजृ कम्पने। तिङ्ङतिङः (पा० ८-१-२८) इति निघातः॥२॥

तृतीयामृचमाह। हे सोमपाः सोमपानयुक्तेन्द्र हरी त्वदीयावश्वौ युक्ष्व हि। सर्वथा संयोजय। अथानन्तरं नोऽस्मदीयानां गिरां स्तुतीनामुपश्रुति समीपे श्रवणमुद्दिश्य चर। तत्प्रदेशं गच्छ। कीदृशौ हरी। केशिना। स्कन्धप्रदेशे लम्बमानकेशयुक्तौ। वृषणा। सेचनसमर्थौ युवानौ। कक्ष्यप्रा। अश्वस्योदरबन्धनरज्जुः कक्ष्यं तस्य पूरकौ। पुष्टाङ्गावित्यर्थः। युक्ष्व। श्नमो लोपश्छान्दसः। सतिशिष्टत्वेन प्रत्ययस्वरः शिष्यते। द्व्यचोऽतस्तिङः (पा० ६-३-१३५) इति संहितायां दीर्घत्वम्। केशिना। प्रशस्ताः केशा अनयोस्सन्तीति मत्वर्थीय इनिः। प्रत्ययस्वरः। सुपां सुलुक्० (पा० ७-१-३९) इत्यादिना द्विवचनस्याकारादेशः। वृषणा। वृषु वृषु मृषु सेचने। कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः (उ० १-१५५) इति कनिन्। ञ्नित्यादिर्नित्यम (पा० ६-१-१९७) इत्याद्युदात्तः। वा षपूर्वस्य निगमे (पा० ६-४-९) इत्युपधायाः पक्षे दीर्घाभावः। पूर्ववदकारः। कक्ष्यप्रा। कक्षयोर्भवं कक्ष्यं सूत्रम्। तत्प्रातः पूरयतः पुष्टत्वादिति कक्ष्यप्रौ। प्रा पूरणे। आतोऽनुपसर्गे कः (पा० ३-२-३) इति कप्रत्ययः। कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम्। आकारः पूर्ववत्। अथ। निपातस्य० (पा० ६-३-१३६) इति संहितायां दीर्घः। नः। अनुदात्तं सर्वमपादादौ (पा० ८-१-१८) इत्यनुवृत्तौ बहुवचनस्य वस्नसौ (पा० ८-१-२१)

इति नसादेशोऽनुदात्तः। इन्द्र सोमपाः। उभावामन्त्रितस्य च (पा० ८-१-१९) इति सर्वानुदात्तौ। गिराम्। सावेकाचस्तृतीयादिर्विभक्तिः (पा० ६-१-१६८) इति विभक्तिरुदात्ता। उपशब्दो निपातत्वादाद्युदात्तः। श्रुतिशब्देन प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तादौ च निति कृत्यतौ (पा० ६-२-५०) इति तुवर्जिततादिपरत्वाद् गतेः प्रकृतिस्वरः। चर। निघातः ॥३॥

विशेषविनियोगस्तु यत्र श्रौतो न सूत्रितः। स्मार्तं तत्र विजानीयादृग्विधानादिसूत्रतः। एहि स्तोमानित्येषा सूत्रेऽविशेषाकारेण विनियुक्ता। साधारणविनियोगस्तु ब्रह्मयज्ञादौ सर्वत्रानुसन्धेयः।

तामेतां सूक्तगतां चतुर्थीमृचमाह। हे वसो निवासकारणभूतेन्द्र। एहि। अस्मिन्कर्मण्यागच्छ। आगत्य च स्तोमानुद्गातृप्रयुक्तानि स्तोत्राण्यभिस्वर। अभिलक्ष्य प्रशंसारूपं शब्दं कुरु। तथाऽन्यर्थवमभिलक्ष्य गृणीहि। शब्दं कुरु। तथा होतृप्रयुक्तानि शस्त्राण्यभिलक्ष्य रुव। शब्दं कुरु। परितोषेण सर्वानृत्विजः प्रशंसेत्यर्थः। तत ऊर्ध्वं नोऽस्माकं ब्रह्म चान्नं च यज्ञं चानुष्ठीयमानं कर्म च सचा सह वर्धय। साङ्गत्वसंपादनेन यज्ञं वर्धयित्वा तत्फलमन्नं च प्रवृद्धं कुरु। अन्धः इत्यादिष्वष्टाविंशत्यन्ननामसु ब्रह्म वर्चः (निघ० २-७) इति पठितम्। इहि। इण् गतौ। सेर्हिः। हेरपित्वेन ङित्त्वाद्गुणाभावः। निघातः। आङा सह गुण एकादेश उदात्तेनोदात्तः (पा० ८-२-५) इत्युदात्तः। स्तोमान्। अर्तिस्तुसु० (उ० १-१४५) इत्यादिना मन्। नित्त्वादाद्युदात्तः। उत्तरपदेन संहितायां नकारस्य दीर्घादटि समानपादे (पा० ८-३-९) इति रुत्वम्। आतोऽटि नित्यम् (पा० ८-३-३) इत्याकारस्यानुनासिकः। भोभगोअघोअपूर्वस्य योऽशि (पा० ८-३-१७) इति यत्वम्। तस्य लोपः शाकल्यस्य (पा० ८-३-१९) इति लोपः। तस्यासिद्धत्वात्स्वरसन्धिर्न भवति। अभि। एवमादीनामन्तः (फि० ४-१४) इत्यन्तोदात्तः। स्वरः। स्वृ शब्दोपतापयोः। निघातः। अभि। गतम्। गृणीहि। गॄ शब्दे। सेर्ह्यपिच्च (पा० ३-४-८७) इति हिः। क्र्यादिभ्यः श्ना (पा० ३-१-८१)। ई हल्यघोः (पा० ६-४-११३) इतीत्वम्। प्वादीनां ह्रस्वः (पा० ७-३-८०) इत्यृकारस्य ऋकारः। ऋवर्णाचेति वक्तव्यम् (पा० वा० ८-४-१) इति णत्वम्। तिङ्ङतिङः (पा० ८-१-२८) इति निघातः। रुव। रु शब्दे। सेर्ह्यपिच्च (पा० ३-४-८७) शपि प्राप्ते व्यत्ययेन शः। तस्य ङित्त्वेन गुणाभावादुवङादेशः। अतो हेः (पा० ६-४-१०५) इति हेर्लुक्। तिङ्ङतिङः (पा० ८-१-२८) इति निघातः। ब्रह्म। बृह बृहि वृद्धौ। मनिन्नित्यनुवृत्तौ बृंहेरम् च नलोपश्च (उ० ४-१४७) इति मनिन्। तत्सन्नियोगेन नलोपः। अमागमश्च मिदचोऽन्त्यात्परः (पा० १-१-४७) इत्यृकारात्परः। यणादेशः। मनिनो नित्त्वादाद्युदात्तत्वम्। वसो। आमन्त्रितनिघातः। यज्ञम्। यजयाच० (पा० ३-३-९०) इत्यादिना नङ्। प्रत्ययस्वरः। वर्द्धय। निघातः। अत्र चकारद्वयश्रवणादियमेव तिङ्विभक्तिः पूर्ववाक्येष्वनुषज्यते। अतोऽनुषक्तेव प्रथमा न श्रुतेति श्रुतायाश्चवायोगे प्रथमा (पा० ८-१-५९) इति निघातनिषेधो न भवति ॥४॥

अभिप्लवषडहगतोक्थ्येष्वच्छावाकस्य तृतीयसवन उक्थ्यमिन्द्राय शंस्यमित्यनुरूपस्तृचः। एह्यू ष्विति खण्ड इन्द्रं विश्वा अवीवृधन्नुक्थमिन्द्राय शंस्यम् (आ० श्रौ० ७-८) इति सूत्रितम्।

तस्मिंस्तृचे प्रथमां सूक्ते पञ्चमीमृचमाह। इन्द्रायेन्द्रार्थम्। वर्धनं वृद्धिसाधनमुक्थं शस्त्रं

शस्यमस्माभिः शंसनीयम्। कीदृशायेन्द्राय। पुरुनिष्ष्विधे। बहूनां शत्रूणां निषेधकारिणे। शक्रः शक्त इन्द्रो नोऽस्मदीयेषु सुतेषु पुत्रेषु सख्येषु च सखित्वेष्वपि। यथा येन प्रकारेण रारणत्। अतिशयेन शब्दं कुर्यात्तथा शंस्यमिति पूर्वत्रान्वयः। अस्मदीयेन शस्त्रेण परितुष्ट इन्द्रोऽस्माकं पुत्रानस्मत्सख्यानि च बहुधा प्रशंसत्वित्यर्थः। उक्थम्। वचेस्थक् प्रत्ययः। प्रत्ययस्वरः। शंस्यम्। शंसु स्तुतौ। ऋहलोर्ण्यत् (पा० ३-१-१२४)। णेरनिटि (पा० ६-४-५१) इति णिलोपः। तित्स्वरिते प्राप्ते यतोऽनावः (पा० ६-१-२१३) इत्याद्युदात्तत्वम्। वर्धनम्। करणाधिकरणयोश्च (पा० ३-३-११७) इति करणे ल्युट्। लिति (पा० ६-१-१९३) इति प्रत्ययपूर्वस्योदात्तत्वम्। पुरुनिष्ष्विधे। बहूनां शत्रूणां निषेधकाय। षिध गत्याम्। धात्वादेः षः सः (पा० ६-१-६४)। अत्र निरित्युपसर्गस्य निशब्दसमानार्थस्य प्राक् प्रयोगः। क्विप् च (पा० ३-२-७६) इति क्विप्। क्विपः सर्वापहारी लोपः। कुगतिप्रादयः (पा० २-२-१८) इति समासः। निसः सकारेणेणो व्यवधानं छान्दसत्वाद्नादृत्योपसर्गात्सुनोति० (पा० ८-३-६५) इत्यादिना धातुसकारस्य षत्वम्। निसः सकारस्य ष्टुना ष्टुः (पा० ८-४-४१) इति षत्वम्। पुरुशब्देन कर्मणि षष्ठ्यन्तेन समासः। षिधो धातुस्वरेणोदात्तत्वम्। निष्षिध इति प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम्। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् पुनः कारकसमासेऽपि स एव स्वरः। शक्नोतीति शक्रः। स्फायितञ्चिवञ्चिशकि० (उ० २-१३) इत्यादिना रक्प्रत्ययः। यथा। प्रकारवचने थाल् (पा० ५-३-२३)। लित्स्वरेण प्रत्ययात्पूर्वोऽकार उदात्तः। सुतेषु। क्तः। प्रत्ययस्वरेणोदात्तः। नः। नसो नकारस्य नश्च धातुस्थोरुषुभ्यः० (पा० ८-४-२७) इति संहितायां णत्वम्। रारणत्। रण शब्दार्थः। धातोरेकाचः० (पा० ३-१-२२) इति यङ्। यङोऽचि च (पा० २-४-७४) इति लुक्। प्रत्ययलक्षणेन द्विर्भावो हलादिः शेषः। दीर्घोऽकितः (पा० ७-४-८३) इति दीर्घः। प्रत्ययलक्षणेन सनाद्यन्ता धातवः (पा० ३-१-३२) इति धातुसञ्ज्ञायां लिङर्थे लेट् (पा० ३-४-७) इति हेतुहेतुमद्भावलक्षणे लिङर्थे लेट्। अत्र हि इन्द्रकर्तृकं रारणनमुक्थशंसनस्य कर्तव्यत्वे हेतुः। लेटस्तिप्। इतश्च लोपः परस्मैपदेषु (पा० ३-४-९७) इतीकारलोपः। लेटोऽडाटौ (पा० ३-४-९४) इत्यडागमः। कर्तरि शप् (पा० ३-१-६८)। तस्य चर्करीतं च परस्मैपदमदादिवच्च द्रष्टव्यमित्यदादिवद्भावाद्दिप्रभृतिभ्यः शपः (पा० २-४-७२) इति प्राप्तो लुग् बहुलं छन्दसि (पा० २-४-७३) इति निषिध्यते। शपोऽनुदात्तत्वाद्धातोरन्तोदात्त एव शिष्यते। शपा लसार्वधातुकस्य व्यवधानात्तत्र परतो विधीयमानमभ्यस्तानामादिः (पा० ६-१-१८९) इत्याद्युदात्तत्वं न भवति। न च तिङ्ङतिङः (पा० ८-१-२८) इति निघातः। अत्र यथाशब्दयोगेन यावद्यथाभ्याम् (पा० ८-१-३६) इति निषेधात्। चवायोगे प्रथमा (पा० ८-१-५९) इति वात्र निघातो न भविष्यति। अत्र ह्युत्तरवाक्ये सख्येषु चेति चानुकृष्टविभक्त्यपेक्षयेयं प्रथमा तिङ्विभक्तिः। सख्येषु। सख्युः कर्माणि सख्यानि। तेषु। ०कर्मणि च (पा० ५-१-१२४) इत्यनुवृत्तौ सख्युर्यः (पा० ५-१-१२६) इति सखिशब्दाद्यप्रत्ययः। तत्र भसञ्ज्ञायां यस्येति च (पा० ६-४-१४८) इतीकारलोपः। प्रत्ययस्वरः ॥५॥

षष्ठीमृचमाह। सखित्वे निमित्तभूते सति तमित्तमेवेन्द्रमीमहे। प्राप्नुमः। तथा राये धनार्थं तमीमहे। तथा सुवीर्यं शोभनसामर्थ्यनिमित्तं तमीमहे। उत। अपि च। शक्रः शक्तिमान्स इन्द्रो

नोऽस्मभ्यं वसु धनं दयमानः प्रयच्छन् शकत्। अस्मदीयरक्षणे शक्तोऽभूत्। सप्तदशयाच्ञाकर्मसु ईमहे यामि ( निघ० ३-१९ ) इति पठितम्। तदनुसारेणेन्द्रं याचामहे इति व्याख्येयम्। सख्युर्भावः सखित्वम्। तस्य भावस्त्वतलौ ( पा० ५-१-११९ ) इति त्वः। प्रत्ययस्वरेणोदात्तः। ईमहे। ईङ् गतौ। ङित्त्वादात्मनेपदम्। दिवादिभ्यः श्यन् ( पा० ३-१-६९ )। बहुलं छन्दसि ( पा० २-४-७३ ) इति श्यनो लुक्। तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातः। राये। ऊडिदम्० ( पा० ६-१-१७१ ) इति विभक्तेरुदात्तत्वम्। सुवीर्ये। शोभनं वीर्यं यस्यासौ सुवीर्यः। भवितृवाचिनानेन भावो लक्ष्यते। सुवीर्यत्व इत्यर्थः। बहुव्रीहौ० ( पा० ६-२-१०६ ) इत्यनुवृत्तौ वीरवीर्यौ च ( पा० ६-२-१२० ) इत्युत्तरपदाद्युदात्तत्वम्। शक्नोतीति शक्रः। स्फायितञ्चिवञ्चिशकि० ( उ० २-१३ ) इत्यादिना रक्। प्रत्ययस्वरः। शकत्। शक्लृ शक्तौ। धातुसम्बन्धाधिकारे छन्दसि लुङ्लङ्लिटः ( पा० ३-४-६ ) इति लुङ्। यतः शक्नोत्यतस्तमीमहे इति धातुसम्बन्धः। लुङस्तिप्। पुषादिद्युताद्यॢदितः परस्मैपदेषु ( पा० ३-१-५५ ) इति च्लेरङादेशः। बहुलं छन्दसि ( पा० ६-४-७५ ) इत्यडागमाभावः। तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातः। वसु। निदित्यनुवृत्तौ वसेरुप्रत्ययः। नित्त्वादाद्युदात्तत्वम्। दयमानः। दय दानगतिरक्षणहिंसादानेषु। अनुदात्तेत्त्वादात्मनेपदम्। लटः शानजादेशः। शपः पित्त्वादनुदात्तत्वम्। शानच्चाञ्चितः ( पा० ६-१-१६३ ) इति अन्तोदात्तत्वं बाधित्वादुपदेशाच्छप उत्तरत्वेन परत्वाल्लसार्वधातुकानुदात्तत्वम्। धातुस्वर एव शिष्यते ॥६॥

इति प्रथमस्य प्रथमे एकोनविंशो वर्गः।

गायन्तीति सूक्ते सप्तमीमृचमाह। हे इन्द्र यशोऽन्नं कर्मफलभूतं सुविवृतं च सुष्ठु प्रसृतं सुनिरजं सुखेन निःशेषं प्राप्तुं शक्यं स्यादातमित्त्वया शोधितं च। सम्पन्नमिति शेषः। इतः परं क्षीरादिलाभार्थं गवां व्रजं निवासस्थानमप वृधि। अपावृतमुद्घाटितद्वारं कुरु। हे अद्रिवः। पर्वतोपलक्षितवज्रयुक्तेन्द्र। राधो धनं कृणुष्व। संपादय। सुविवृतम्। वृञ् वरणे। कर्मणि क्तप्रत्ययः। विशब्देन प्रादिसमासः। विवृतमित्यत्र कृदुत्तरपदप्रकृतिस्वरं बाधित्वा कर्मवाचिनि क्तान्ते परतो गतिरनन्तरः ( पा० ६-२-४९ ) इति पूर्वपदप्रकृतिस्वरे प्राप्ते परादिश्छन्दसि बहुलम् ( पा० ६-२-१९९ ) इत्युकार उदात्तः। पुनः सुशब्देन समासे कृदुत्तरपदप्रकृतिस्वरेण स एवकार उदात्तः। ननु वृतमित्येव कृदन्तं न तु विवृतमिति। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ( पा० प० २३ ) इति वचनात् सुविवृतमित्यत्र च समासे वृतमित्येतावन्मात्रं नोत्तरपदं किन्तु विवृतमिति। तत्कथं कृदुत्तरपदप्रकृतिस्वरत्वमिति चेत्। उच्यते। प्रत्ययग्रहणपरिभाषापवादेन कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ( पा० प० २८) इत्यनेन विवृतमित्यस्यापि कृदन्तव्यपदेशोपपत्तेः। ननु विवृतमित्यस्य यथा कृदन्तव्यपदेश एवं क्तान्तव्यपदेशोऽप्यस्ति तयैव परिभाषया। तथाच कर्मणि क्तान्त उत्तरपदे परतो गतिरनन्तरः ( पा० ६-२-४९ ) इति सुशब्दस्य प्रकृतिस्वरः प्राप्नोति। न चात्रापि परादिश्छन्दसि बहुलम् ( पा० ६-२-१९९ ) इत्येवं नास्ति निस्तारः। तथा हि सति सुविवृतमित्यत्र विवृतमित्येवोत्तरपदमिति तदादिरिकार एवोदात्तः स्यात्। विवृतमिति समासे यद्यप्युकारः पदादिर्भवति तथापि सुविवृतमिति समासस्य

सति शिष्टत्वेन बलीयस्त्वात्तत्रत्य एवोत्तरपदादाविकार एवोदात्तस्वरेण भवितव्यमिति। उच्यते। गतिरनन्तरः ( पा० ६-२-४९ ) इत्यत्रानुवृत्ते कग्रहणे कृद्ग्रहणपरिभाषा नाश्रीयते। तदाश्रयणे व्यवहितगतावपि प्रकृतिस्वरे सत्यनन्तरग्रहणमनर्थकं स्यात्। अनेनैव चाभिप्रायेणानन्तरग्रहणस्य प्रयोजनमभ्युद्धृतमित्यत्र व्यवहितस्याभिशब्दस्य मा भूदिति प्रत्युदाहृतम्। तस्मात्सुविवृतमित्यकार एवोदात्त इति स्थितम्। सुनिरजम्। अनायासेन निरवशेषं प्राप्यम्। अज गतिक्षेपणयोः। सुनिसोरुपसर्गयोः प्राक् प्रयोगः। ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ( पा० ३-३-१२६ )। न चात्र सुशब्दस्य निसा व्यवधानं शङ्कनीयम्। सुशब्दस्य ह्युपपदत्वमात्रं खलो निमित्तं नानन्तर्यम्। अत एव सुपरिहरं दुष्परिहरमित्यादयः प्रयोगा इति। पूर्ववद्गतिसमासे लिति ( पा० ६-१-९३ ) इति प्रत्ययात्पूर्वमुदात्तमिति धात्वकार उदात्तः। निसा समासे कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। पुनः सुशब्देन समासे कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ( पा० प० २८ ) इति परिभाषया कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। त्वादातम्। त्वया शोधनेन विशदीकृतम्। दैप् शोधने। आदेच उपदेशेऽशिति ( पा० ६-१-४५ ) इत्यात्वम्। सत्यपि हि पकारे नानुबन्धकृतमनेजन्तत्वम् ( पा० प० ७ ) इत्यजन्त एवायम्। निष्ठा (पा० ३-२-१०२ ) इति कर्मणि क्तः। दाधा घ्वदाप् ( पा० १-१-२० ) इत्यत्रादाबिति प्रतिषेधेन घुसञ्ज्ञाया अभावाद्दो दद् घोः ( पा० ७-४-४६ ) इति ददादेशो न भवति। ननु दाप् लवने इति प्रतिपदोक्तस्यैव दापस्तत्रादाबिति निषेधः। न पुनर्लाक्षणिकस्य दैपः। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य ( पा० प० ११३ ) इति नियमादिति चेत्। न। गामादाग्रहणेष्वविशेषः ( पा० प० ११४ ) इति प्रतिप्रसवात्। युष्मच्छब्दात्तृतीयैकवचनस्य सुपां सुलुक्० ( पा० ७-१-३९ ) इति डादेशः। त्वमावेकवचने ( पा० ७-२-९७ ) इति मपर्यन्तस्य त्वादेशः। अतो गुणे ( पा० ६-१-९७ ) इति पररूपत्वम्। भसञ्ज्ञायां टेः ( पा० ६-४-१४३ ) इत्यच्छब्दस्य लोपः। उदात्तनिवृत्तिस्वरेणाकार उदात्तः। कर्तृकरणे कृता बहुलम् ( पा० २-१-३२ ) इति तृतीयायास्समासः। तत्पुरुषे कृति बहुलम् ( पा० ६-३-१४ ) इति तृतीयाया अप्यलुक्। कृदुत्तरपदप्रकृतिस्वरे प्राप्ते तृतीया कर्मणि ( पा० ६-२-४८ ) इति पूर्वपदप्रकृतिस्वरत्वम्। यशः। अशू व्याप्तौ। अशेर्युट् च ( उ० ४-१९२ ) इत्यसुन्। तत्सन्नियोगेन धातोर्युडागमः। नित्त्वादाद्युदात्तत्वम्। गवाम्। प्रातिपदिकस्वरः। सावेकाचः० ( पा० ६-१-१६८ ) इति विभक्तेरुदात्तत्वं प्राप्तम्। न गोश्वन्साववर्ण० ( पा० ६-१-१८२ ) इति निषिध्यते। वृधि। वृञ् वरणे। श्रुशृणुपॄकृवृभ्यश्छन्दसि ( पा० ६-४-१०२ ) इति हेर्धिरादेशः। बहुलं छन्दसि ( पा० २-४-७३ ) इति श्नोरपि लुक्। निघातः। कृणुष्व। कृवि हिंसाकरणयोश्च। इदितो नुम्० (पा० ७-१-५८) इति नुम्। व्यत्ययेनात्मनेपदम्। लोटस्थास्। थासस्से (पा० ३-४-८०) सवाभ्यां वामौ ( पा० ३-४-९१ )। कर्तरि शपि प्राप्ते धिन्विकृण्व्योरच ( पा० ३-१-८० ) इत्युप्रत्ययः। तत्सन्नियोगेन वकारस्य चाकारः। तस्यातो लोपः ( पा० ६-४-४८ ) इति लोपः। अचः परस्मिन्पूर्वविधौ ( पा० १-१-५७ ) इत्यकारस्य स्थानिवद्भावाल्लघूपधगुणो न भवति। अत्र सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः (पा० वा० ६-१-१५८) इति सति शिष्टमपि विकरणस्वरं बाधित्वा तिङ एव प्रत्ययाद्युदात्तत्वम्। राधः। असुन्नन्तो नित्त्वादाद्युदात्तः। अद्रिवः। अद्रिवन्नम्। तदस्यास्तीति मतुप्। छन्दसीरः ( पा० ८-२-१५ ) इति मकारस्य वत्वम्। सम्बुद्धौ

उगिदचाम्० ( पा० ७-१-७० ) इति नुम्। हल्ङ्यादिसंयोगान्तलोपौ। मतुवसोरु सम्बुद्धौ छन्दसि ( पा० ८-३-१ ) इति रुत्वम्। विसर्जनीयः। आमन्त्रितस्य च निघातः ॥७॥

अष्टमीमृचमाह। हे इन्द्र ऋघायमाणं शत्रुवधं कुर्वाणं त्वा त्वां रोदसी उभे द्यावापृथिव्यावपि त्वदीयं महिमानं व्याप्तुं नहीन्वतः। न समर्थे इत्यर्थः। तादृशस्त्वं स्वर्वतीः स्वर्लोकयुक्ता अपो वृष्ट्यादिरूपा जेषः। जयेः। प्रेरयेत्यर्थः। अपां स्वर्गसम्बन्धश्चान्यत्र दिवो वृष्टिं च्यावयति (तै० स० ३-३ ४-१) इति श्रुतः। किञ्च वृष्टिप्रदानादन्नसम्पत्तेरूर्ध्वमस्मभ्यं क्षीरादिरसप्रदा गाः सन्धूनुहि। सम्यक् प्रेरय। नहि। नञो हिशब्देन सह सुपा (पा० २-१-४) इति समासः। समासत्वादन्तोदात्तत्वम्। त्वा। अनुदात्तं सर्वमपादादौ (पा० ८-१-१८) इत्यनुवृत्तौ त्वामौ द्वितीयायाः ( पा० ८-१-२३ ) इति त्वादेशः। रोदसी। रुदेरसुन्। नित्त्वादाद्युदात्तः। उगितश्च ( पा० ४-१-६ ) इति ङीप्। उभे। प्रातिपदिकस्वरेणान्तोदात्तः। स्या सहैकादेश उदात्तः। ऋघायमाणम्। नॄन्हन्तीत्यृघा। अन्येभ्योऽपि दृश्यन्ते ( पा० ३-२-७५ ) इति विच्। दृशिग्रहणस्य विध्यन्तरोपसङ्ग्रहणार्थत्वान्नकारस्य लोपो हकारस्य च घकारः। अनृघा ऋघा भवतीत्यभूततद्भावे लोहितादिडाज्भ्यः क्यष् ( पा० ३-१-१३ ) इति क्यष् प्रत्ययो भवति। स ह्याकृतिगणः। लोपश्च हलः ( पा० ३-१-१२ ) इत्यनुवृत्तेर्नकारलोपश्च। वा क्यषः ( पा० १-३-९० ) इत्यात्मनेपदम्। लटः शानच्। शपोऽदुपदेशात्स्वराच्छानचो लसार्वधातुकानुदात्तत्वम्। शपः पित्त्वादनुदात्तत्वम्। क्यषः प्रत्ययस्वरः। एकादेशस्योदात्तत्वम्। इन्वतः। इवि व्याप्तौ। इदितो नुम् धातोः ( पा० ७-१-५८ ) इति नुम्। शपः पित्त्वादनुदात्तत्वम्। लडादेशस्य तसश्च लसार्वधातुकस्वरेण। धातुस्वर एव शिष्यते। हि च ( पा० ८-१-३४ ) इति निषेधात्तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातो न भवति। जेषः। जेः प्रार्थनायां लिङर्थे लेट् ( पा० ३-४-७ )। तस्य मध्यमपुरुषैकवचनं सिप्। इतश्च लोपः परस्मैपदेषु ( पा० ३-४-९७ ) इतीकारलोपः। कर्तरि शपि प्राप्ते तदपवादः सिब्बहुलं लेटि ( पा० ३-१-३४ ) इति सिप्। अडागमस्यानुदात्तत्वाद्धातुस्वर एव शिष्यते। स्वरासामस्तीति स्वर्वत्यः। न्यङ्स्वरौ स्वरितौ ( फि० ४-६ ) इति स्वःशब्दः स्वरितः। मतुम्ङीपौ पित्त्वादनुदात्तौ। संहितायां स्वरितात्संहितायामनुदात्तानाम् ( पा० १-२-३९ ) इत्येकश्रुतिः। स्वरित एवावशिष्यते। अपः। ऊडिदम्० ( पा० ६-१-१७१ ) इत्यादिना विभक्तेरुदात्तत्वम्। धूनुहि। धूञ् कम्पने। लोटः सेर्ह्यपिच्च ( पा० ३-४-८७ )। स्वादिभ्यः श्नुः ( पा० ३-१-७३ )। उतश्च प्रत्ययादसंयोगपूर्वात् ( पा० ६-४-१०६ ) इति प्राप्तस्य लुकश्च छन्दसत्वादभावः ॥८॥

अभिप्लवषडहस्योक्थ्येषु तृतीयसवनेऽच्छावाकस्य षट्स्तोत्रियानुरूपयुगलेषु द्वितीयस्मिन्युगल आ श्रुत्कर्णेति तृचोऽनुरूपः। एह्यू षु इति खण्डे श्रुधी हवं तिरश्च्या आ श्रुत्कर्ण श्रुधी हवम् ( आ० श्रौ० ७-८ ) इति सूत्रितम्।

तस्मिंस्तृचे प्रथमा सूक्ते नवमीमृचमाह। हे आश्रुत्कर्ण सर्वतः श्रोतारौ कर्णौ यस्य तादृगिन्द्र हवमस्मदीयमाह्वानं नु क्षिप्रं श्रुधि। शृणु। मे मम होतुर्गिरश्चित् स्तुतीरपि दधिष्व। चित्ते धारय। किञ्च मम मदीयमिमं स्तोमं स्तोत्ररूपं वाक्यसमूहं युजश्चित्स्वकीयसख्युरप्यन्तरं कृष्व। आसन्नं कुरु। यथा वचनं तस्य प्रियं मन्यसे तद्वदस्मदीयस्तुतिष्वपि प्रीतिं कुर्वित्यर्थः। आश्रुत्कर्ण। आसमन्ताच्छृणुत इत्याश्रुतौ। क्विप्। ह्रस्वस्य तुक्। तादृशौ कर्णौ यस्य।

आमन्त्रितस्य च ( पा० ६-१-१९८ ) इत्याद्युदात्तत्वम्। श्रुधि। श्रु श्रवणे। लोटो हिः। श्रुवः शृ च ( पा० ३-१-७४ ) इति विहितश्नोर्बहुलं छन्दसि ( पा० २-४-७३ ) इति लुक्। तत्सन्नियोगशिष्टत्वाच्छृभावोऽपि निवर्तते। श्रुशृणुपृकृवृभ्यः छन्दसि ( पा० ६-४-१०२ ) इति हेर्धिः। सति शिष्टत्वात्प्रत्ययस्वरः। आमन्त्रितं पूर्वमविद्यमानवत् ( पा० ८-१-७२ ) इत्यविद्यमानवत्त्वेन पदादपरत्वात्तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातो न भवति। संहितायामन्येषामपि दृश्यत ( पा० ६-३-१३८ ) इति दीर्घः। हवम्। ह्वेञ् स्पर्धायां शब्दे च। बहुलं छन्दसि ( पा० ६-१-३४ ) इत्यनैमित्तिके संप्रसारणे कृते पश्चादुकारान्तत्वेन ऋदोरप् ( पा० ३-३-५७ ) इत्यप् प्रत्ययः। अपः पित्त्वाद्धातुस्वरः। नु। संहितायामृचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ( पा० ६-३-१३३ ) इति दीर्घः। चित्। चादिरनुदात्तः। दधिष्व। दधातेर्लोट्। थासस्से ( पा० ३-४-८० )। सवाभ्यां वामौ ( पा० ३-४-९१ )। शपः श्लुः। अभ्यासस्य ह्रस्वत्वादि। छन्दस्युभयथा ( पा० ३-४-११७ ) इत्यार्द्धधातुकस्यापि स्वीकारादिडागमः। आकारलोपः। निघातः। मे। मम। तवममौ ङसि ( पा० ७-२-९६ ) इत्यनेन मपर्यन्तस्य ममादेशः। प्रातिपदिकस्वरेणान्तोदात्तत्वे प्राप्ते युष्मदस्मदोर्ङसि ( पा० ६-१-२११ ) इत्याद्युदात्तत्वम्। कृष्व। डुकृञ् करणे। लोट्। थासस्से ( पा० ३-४-८० )। सवाभ्यां वामौ ( पा० ३-४-९१ )। शपो बहुलं छन्दसि ( पा० २-४-७३ ) इति लुक्। सति शिष्टत्वात्प्रत्ययस्वरः। पादादित्वान्न निघातः। युजः। सावेकाचः० ( पा० ६-१-१६८ ) इति विभक्तेरुदात्तत्वम्। अन्तरम्। वृषादित्वादाद्युदात्तः ॥९॥

दशमीमृचमाह। हे इन्द्र त्वा त्वां विद्म जानीमः। कीदृशं त्वाम्। वृषन्तमम्। कामानामतिशयेन वर्षितारम्। वाजेषु सङ्ग्रामेषु हवनश्रुतम्। अस्मदीयस्याह्वानस्य श्रोतारम्। वृषन्तमस्यातिशयेन कामादीनां वर्षितुस्तवोति रक्षामस्मद्विषयामुद्दिश्य हूमहे। त्वामाह्वयामः। कीदृशीमूतिम्। सहस्रसातमाम्। अतिशयेन सहस्राणां दात्रीम्। विद्म। विदो लटो वा ( पा० ३-४-८३ ) इति मसो मादेशः। प्रत्ययस्वरेणान्तोदात्तः। द्व्यचोऽतस्तिङः ( पा० ६-३-१३५ ) इति संहितायां दीर्घः। वृषन्तमम्। वृषु वृषु मृषु सेचने। कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः ( उ० १-१५५ ) इति कनिन्। नित्त्वादाद्युदात्तः। तमपः पित्त्वात्स एव शिष्यते। अयस्मयादीनि छन्दसि ( पा० १-४-२० ) इति भत्वेन पदत्वाभावान्नलोपाभावः। पदत्वाच्च टिलोपाभावः। वाजेषु। वाजशब्दो वृषादिराद्युदात्तः। हवनश्रुतम्। ह्वः० ( पा० ६-१-३२ ) इत्यनुवृत्तौ बहुलं छन्दसि ( पा० ६-१-३४ ) इति ल्युटि संप्रसारणम्। हवनं शृणोतीति हवनश्रुत्। तुगागमः। वृषन्तमस्य। उक्तम्। हूमहे। बहुलं छन्दसि ( पा० ६-१-३४ ) इति संप्रसारणम्। ०शपः ( पा० २-४-७२ ) इत्यनुवृत्तौ बहुलं छन्दसि ( पा० २-४-७३ ) इति शपो लुक्। ऊतिम्। ऊतियूति० ( पा० ३-३-९७ ) इत्यादिनान्तोदात्तो निपातितः। सहस्रसातमाम्। सहस्रं सनोतीति सहस्रसाः। षणु दाने। जनसनखनक्रमगमो विट् ( पा० ३-२-६७ )। विड्वनोरनुनासिकस्यात् ( पा० ६-४-४१ ) इत्याकारादेशः। कृदुत्तरपदप्रकृतिस्वरत्वं तमपः पित्त्वादेव शिष्यते ॥१०॥

एकादशीमृचमाह। हे इन्द्र नु क्षिप्रं नोऽस्मान्प्रत्यागच्छेति शेषः। हे कौशिक कुशिकस्य पुत्रेन्द्र मन्दसानो हृष्टो भूत्वा सुतमभिषुतं सोमं पिब। यद्यपि विश्वामित्रः कुशिकस्य पुत्रस्तथापि

तद्रूपेणेन्द्रस्यैवोत्पन्नत्वात्कुशिकपुत्रत्वमविरुद्धम्। अयं वृत्तान्तोऽनुक्रमण्यामुक्तः। कुशिकस्त्वैषीरथिरिन्द्रतुल्यं पुत्रमिच्छन्ब्रह्मचर्यं चचार। तस्येन्द्र एव गाथी पुत्रो जज्ञे (अनु० १५) इति। हे इन्द्र नव्यं सर्वैर्देवैः स्तुत्यं कर्मानुष्ठानपरमायुर्जीवितं प्र सू तिर। प्रकर्षेण सुष्ठु वर्द्धय। ततो मां सहस्रसां सहस्रसङ्ख्याकलाभोपेतमृषिमतीन्द्रियद्रष्टारं कृधि। कुरु। तु। संहितायामृचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् (पा० ६-३-१३३) इति दीर्घः। नः। संहितायामुदात्तादनुदात्तस्य स्वरितः (पा० ८-४-६६)। इन्द्र। आमन्त्रितनिघातः। कौशिक। निघातः। मन्दसानः। हृष्यन्। मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। ०असानच० (उ० २-८७) इत्यनुवृत्तावृञ्जिवृधिमन्दिसहिभ्यः कित् (उ० २-८८) इत्यसानच्प्रत्ययः। चित्त्वादन्तोदात्तः। सुतम्। प्रत्ययस्वरः। नव्यम्। णु स्तुतौ। अचो यत्। गुणः। वान्तो यि प्रत्यये (पा० ६-१-७९) इत्यवादेशः। यतोऽनावः (पा० ६-१-२१३) इत्याद्युदात्तत्वम्। आयुः। उसि निदित्यनुवृत्तावेतेर्णिच्च (उ० २-११८) इत्युसिप्रत्ययः। णित्त्वाद्वृद्ध्यायादेशौ। नित्त्वादाद्युदात्तत्वम्। सु। निपातस्य० (पा० ६-३-१३६) इति संहितायां दीर्घत्वम्। तिर। तरतेर्व्यत्ययेन शः। ऋत इद्धातोः (पा० ७-१-१००) इतीत्वम्। अतो हेः (पा० ६-४-१०५) इति हेर्लुक्। कृधि। डुकृञ् करणे। बहुलं छन्दसि (पा० २-४-७३) इति शपो लुक्। श्रुशृणुपृकृवृभ्यश्छन्दसि (पा० ६-४-१०२) इति हेर्धिरादेशः। सहस्रसाम्। उक्तम्। ऋषिम्। ऋषी गतौ। ०इन् (उ० ४-११९) इत्यनुवृत्ताविगुपधात्किच्च (उ० ४-१२१)। कित्त्वाद् गुणाभावः। नित्त्वादाद्युदात्तत्वम् ॥११॥

प्रवर्ग्ये परि त्वेत्यभिष्टुयात्। स्पृष्टोदकमिति खण्डे परि त्वा गिर्वणो गिरोऽधि द्वयोरदधा उक्थ्यं वच इति (आ० श्रौ० ४-६) सूत्रितम्। तथा हविर्धानप्रवर्तने सेयं परिधानीया। हविर्धाने प्रवर्तयन्तीति खण्डे परि त्वा गिर्वणो गिर इति परिदध्यात् (आ० श्रौ० ४-९) इति सूत्रितम्। तथा ब्राह्मणं च। परि त्वा गिर्वणो गिर इत्युत्तमया परिदधाति (ऐ० ब्रा० १-२९) इति ॥

तामेतां द्वादशीमृचमाह। हे गिर्वणः। अस्मदीयस्तुतिभागिन्द्र। विश्वतः सर्वेषु कर्मसु प्रयुज्यमाना इमा गिरोऽस्मदीयाः स्तुतयस्त्वा त्वां परि भवन्तु। सर्वतः प्राप्नुवन्तु। कीदृश्यो गिरः। वृद्धायुमनु प्रवृद्धेनायुष्येणोपेतं त्वामनुसृत्य वृद्धयो वर्धमानाः। किञ्चैता गिरो जुष्टास्त्वया सेविताः सत्यो जुष्टयोऽस्माकं प्रीतिहेतवो भवन्तु। गिर्वणः। गीर्भिर्वन्यत इति गिर्वणाः। वन षण संभक्तौ। सर्वधातुभ्योऽसुन् (उ० ४-१४६)। गिर उपधाया दीर्घाभावश्छान्दसः। आमन्त्रितनिघातः। विश्वतः। लिति (पा० ६-१-१९३) इति प्रत्ययात्पूर्वस्योदात्तत्वम्। वृद्धायुम्। वृधु वृद्धौ। क्तप्रत्ययः। उदितो वा (पा० ७-२-५६) इति इटः क्त्वाप्रत्यये विकल्पितत्वाद्यस्य विभाषा (पा० ७-२-१५) इति निष्ठायामिडभावः। प्रत्ययस्वरः। इण् गतौ। छन्दसीणः (उ० १-२) इत्युण्। णित्त्वाद्वृद्धिः। आयादेशश्च। वृद्धमायुर्यस्य। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। वृद्धयः। वृधेः क्तिनि तितुत्रतथसिसुसरकसेषु च (७-२-९) इतीडभावः। नित्त्वादाद्युदात्तत्वम्। जुष्टः। श्वीदितो निष्ठायाम् (पा० ७-२-१४) इतीडभावः। जुष्टार्पिते० (पा० ६-१-२०९) इत्यनुवृत्तौ नित्यं मन्त्रे (पा० ६-१-२१०) इत्याद्युदात्तत्वम्। जुष्टयः। जुषी प्रीतिसेवनयोः। क्तिन्। तितुत्र० (पा० ७-२-९) इतीडभावः। नित्त्वादाद्युदात्तः ॥१२॥

इति प्रथमस्य प्रथमे विंशो वर्गः।

॥११॥

१·११

इन्द्रं विश्वा इत्यष्टर्चस्य सूक्तस्य मधुच्छन्दसः पुत्रो जेतृनामक ऋषिः। तथा चानुक्रान्तम्। इन्द्रमष्टौ जेता माधुच्छन्दस इति। छन्दस्त्वानुष्टुभमिति पूर्वमेवोक्तम्। इन्द्रो देवताऽनुवर्तते। विनियोगस्तु महाव्रते निष्केवल्ये कृत्स्नं सूक्तं शंसनीयम्। ऊरु इति खण्डे शौनकेन सूत्रितम्। इन्द्रं विश्वा अवीवृधन्नित्यानुष्टुभम्। तस्य प्रथमायाः पूर्वमर्द्धर्चं शस्त्वोत्तरेणार्द्धर्चेनोत्तरस्याः पूर्वमर्द्धर्चं व्यतिषजति पादैः पादाननुष्टुप्कारं प्रागुत्तमायाः ( ऐ० आ० ५-३-१ ) इति। ब्राह्मणं च प्रथमारण्यके पठितम्। प्र वो मह इति खण्ड इन्द्रं विश्वा अवीवृधन्निति पदानुषङ्गाः ( ऐ० आ० १-५-२ ) इति। तथा पृष्ठ्यस्य पञ्चमेऽहनि निष्केवल्यशस्त्र इन्द्रं विश्वा अवीवृधन्नित्य-नुरूपस्तृचः। स्तोमे वर्द्धमान इति खण्डे सूत्रितम्। उप नो हरिभिः सुतमिन्द्रं विश्वा अवीवृधन् ( आ० श्रौ० ७-१२ ) इति।

अस्मिन्सूक्ते प्रथमामृचमाह। विश्वाः सर्वा गिरोऽस्मदीयाः स्तुतय इन्द्रमवीवृधन्। वर्द्धित-वत्यः। कीदृशमिन्द्रम्। समुद्रव्यचसम्। समुद्रवद् व्याप्तवन्तम्। रथीनां रथयुक्तानां योद्धॄणां मध्ये रथीतमम्। अतिशयेन रथयुक्तम्। वाजानामन्नानां पतिं स्वामिनम्। सत्पतिं सतां सन्मार्गवर्तिनां पालकम्। विश्वाः। विशेः क्वन्। नित्स्वरः। अवीवृधन्। वृधेर्णिचि चङ्युपधाया ऋत् ( पा० ७-४-७ ) इत्यनुवृत्तौ नित्यं छन्दसि (पा० ७-४-८) इत्यृकारस्य ऋकारविधाना-ल्लघूपधगुणाभावः। निघातस्वरः। समुद्रव्यचसम्। व्यचेरसुन्। गाङ्कुटादिभ्योऽञ्णिन्ङित् ( पा० १-२-१ ) इति प्राप्तस्य ङित्त्वस्य व्यचेः कुटादित्वमनसि ( पा० वा० १-२-१ ) इत्यपि निषेधाद् ग्रहिज्या० ( पा० ६-१-१६ ) इत्यादिना ङिति विधीयमानं सम्प्रसारणं न भवति। समुद्रव्यच इव व्यचो यस्य। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। रथीतमं रथीनाम्। रथशब्दा-दुत्पन्नस्येनश्छान्दसं दीर्घत्वम्। प्रत्ययस्वरेणाद्युदात्तत्वं च। वाजानाम्। वृषादित्वादाद्युदात्त-त्वम्। सत्पतिम्। पत्यावैश्वर्ये ( पा० ६-२-१८ ) इति पूर्वपदप्रकृतिस्वरत्वम् ॥१॥

द्वितीयामृचमाह। हे शवसस्पते बलस्य पालकेन्द्र ते तव सख्येऽनुग्रहयुक्ते सखित्वे वर्तमाना वयं वाजिनोऽन्नवन्तो भूत्वा मा भेम। शत्रुभ्यो भीतिं प्राप्ता मा भूम। अतस्त्वामभयहेतुमभि प्र णोनुमः। सर्वतः प्रकर्षेण स्तुमः। कीदृशं त्वाम्। जेतारं युद्धेषु जयशीलम्। अपराजितम्। क्वापि पराजयरहितम्। सख्ये। सख्युः कर्म सख्यम्। सख्युर्यः ( पा० ५-१-१२६ )। प्रत्यय-स्वरः। वाजिनः। वाजोऽन्नमेषामस्तीति वाजिनः। प्रत्ययस्वरः। भेम। ञिभी भये। लुङुत्तमबहुवचनं मस्। नित्यं ङितः ( पा० ३-४-९९ ) इति सलोपः। बहुलं छन्दसि ( पा० २-४-७३ ) इति च्लेर्लुक्। छन्दस्युभयथा ( पा० ३-४-११७ ) इति तिङ आर्द्धधातुकत्वेन ङित्त्वा-भावाद्गुणः। न माङ्योगे ( पा० ६-४-७४ ) इत्यडागमप्रतिषेधः। शवसः। षष्ठ्याः पतिपुत्र-पृष्ठपारपदपयस्पोषेषु ( पा० ८-३-५३ ) इति विसर्जनीयस्य संहितायां सत्वम्। सुबामन्त्रित-पराङ्गवद्भावेन पदद्वयनिघातः। नोनुमः। णु स्तुतौ। णो नः ( पा० ६-१-६५ ) इति नत्वम्। यङो लुक्। प्रत्ययलक्षणेन सन्यङोः ( पा० ६-१-९ ) इति द्विर्भावः। गुणो यङ्लुकोः ( पा०

७-४-८२ ) इत्यभ्यासस्य गुणः। प्रत्ययलक्षणेन धातुसञ्ज्ञायां लटो मस्। अदादिवद्भावाच्छपो लुक्। उपसर्गादसमासेऽपि णोपदेशस्य ( पा० ८-४-१४ ) इति संहितायां णत्वम्। जेतारम्। जि जये। ताच्छील्यादिषु तृन्। ञ्नित्यादिर्नित्यम् ( पा० ६-१-१९७ ) इत्याद्युदात्तत्वम्। अपराजितम्। अव्ययपूर्वपदप्रकृतिस्वरत्वेन नञ उदात्तत्वम् ॥२॥

तृतीयामृचमाह। इन्द्रस्य सम्बन्धिन्यो रातयो धनानि पूर्वीरनादिकालसिद्धाः प्रभूता वा। अस्येन्द्रस्य सर्वदा यष्टृभ्यो धनदानमेव स्वभाव इत्यर्थः। एवं सतीदानीन्तनोऽपि यजमानः स्तोतृभ्य ऋत्विग्भ्यो गोमतो गोसहितस्य वाजस्यान्नस्य पर्याप्तं मघं धनं यदि मंहते। दक्षिणारूपेण ददाति तदानीमूतयो बहुधनदानपूर्वकाणीन्द्रस्यास्मद्विषयाणि रक्षणानि न वि दस्यन्ति। विशेषेण नोपक्षीयन्ते। मघं रेक्णः ( निघ० २-१० ) इत्यादिष्वष्टाविंशतिसङ्ख्याकेषु धननामसु मघशब्दः पठितः। दाति दाशतीत्यादिषु दशसु दानकर्मसु मंहते ( निघ० ३-२० ) इति पठितम्। पूर्वीः। पुरुशब्दस्य वोतो गुणवचनाद् ( पा० ४-१-४४ ) इति ङीष्। आद्यस्योकारस्य दीर्घश्छान्दसः। जसि दीर्घाज्जसि च ( पा० ६-१-१०५ ) इति निषेधं बाधित्वा वा छन्दसि ( पा० ६-१-१०६ ) इति पूर्वसवर्णदीर्घत्वम्। ङीषः प्रत्ययस्वरेणोदात्तत्वम्। रातयः। मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ( पा० ३-३-९६ ) इति क्तिन उदात्तत्वम्। दस्यन्ति। दसु उपक्षये। दिवादिभ्यः श्यन् ( पा० ३-१ ६९ ) निघातः। ऊतयः। ऊतियूति० ( पा० ३-३-९७ ) इत्यादिना क्तिन्नुदात्तः। यदि। निपातत्वादाद्युदात्तः। संहितायां निपातस्य च ( पा० ६-३-१३६ ) इति दीर्घत्वम्। स्तोतृभ्यः। ष्टुञ् स्तुतौ। धात्वादेः षः सः ( पा० ६-१-६४ )। तृचश्चित्त्वादन्तोदात्तत्वम्। मंहते। शपः पित्त्वादनुदात्तत्वम्। तिङश्च लसार्वधातुकस्वरेण। तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातो न भवति। निपातैर्यद्यदिहन्त० ( पा० ८-१-३० ) इति निषेधात् ॥३॥

अभिप्लवषडहस्योक्थ्येषु तृतीयसवनेऽच्छावाकस्य पुरां भिन्दुर्युवा कविरिति स्तोत्रियस्तृचः। तथाच सूत्रितम्। एह्यू ष्वित्युपक्रम्य पुरां भिन्दुर्युवा कविर्नू षा ह्यसि राधसेः ( आ० श्रौ० ७-८ ) इति।

तस्मिंस्तृचे प्रथमां सूक्ते चतुर्थीमृचमाह। अयमिन्द्र उच्यमानगुणयुक्तोऽजायत। सम्पन्नः। कीदृग्गुणक इति तदुच्यते। पुरामसुरपुराणां भिन्दुर्भेत्ता। युवा कदाचिदपि बलीपलितादिवार्धकरहितः। कविर्मेधावी। अमितौजाः। प्रभूतबलः। विश्वस्य कर्मणः कृत्स्नस्य ज्योतिष्टोमादेर्धर्ता पोषकः। वज्री। यजमानरक्षणार्थं सर्वदा वज्रयुक्तः। पुरुष्टुतः। बहुविधे तत्तत्कर्मणि स्तुतः। भिन्दुः। भिदिर् विदारणे। कुरित्यनुवृत्तौ पृभिदिव्यधिगृधिधृषिहृषिभ्यः ( उ० १-२३ ) इति कुप्रत्ययः। तस्य छन्दस्युभयथा (पा० ३-४-११७) इति सार्वधातुकसञ्ज्ञायां रुधादिभ्यः श्नम् ( पा० ३-१-७८ )। मित्त्वादन्त्यादचः परो भवति। श्नसोरल्लोपः ( पा० ६-४-१११ )। अनुस्वारपरसवर्णौ। अचः परस्मिन्पूर्वविधौ ( पा० १-१-५७ ) इति प्राप्तस्य स्थानिवद्भावस्य न पदान्त० ( पा० १-१-५८ ) इत्यादिना निषेधः। युवा। यु मिश्रणामिश्रणयोः। कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः ( उ० १-१६२ ) इति कनिन्। नित्त्वादाद्युदात्तः। कविः। कु शब्दे। अच इः ( उ० ४-१४० ) इतीप्रत्ययः। प्रत्ययस्वरः। अमितौजाः। अमितशब्दस्याव्ययपूर्वपदप्रकृतिस्वरत्वम्। बहुव्रीहौ पूर्वपदप्रकृतिभावेन तदेव शिष्यते। विश्वस्य। अशिप्रुषि०

( उ० १-१५७ ) इत्यादिना कन्। निस्त्वादाद्युदात्तः। कर्मणः। अन्येभ्योऽपि दृश्यन्ते ( पा० ३-२-७५ ) इति मनिन्। निस्स्वरः। धर्ता। तृच्। चित्त्वादन्तोदात्तः। वज्री। मत्वर्थीय इनिः। प्रत्ययस्वरः। पुरुष्टुतः। स्तुतस्तोमयोश्छन्दसि ( पा० ८-३-१०५ ) इति षत्वम्। बहुषु प्रदेशेषु स्तुतः। थाथघञ्क्ताजबित्रकाणाम् ( पा० ६-२-१४४ ) इत्यन्तोदात्तत्वम्। तृतीया-समासे हि थाथादिस्वरापवादस्तृतीया कर्मणि ( पा० ६-२-४८ ) इति पूर्वपदप्रकृतिस्वरः स्यात् ॥४॥

पञ्चमीमृचमाह। वलनामकः कश्चिदसुरो देवसम्बन्धिनीर्गा अपहृत्य कस्मिंश्चिद् बिले गोपित-वान्। तदानीमिन्द्रस्तद् बिलं स्वसैन्येन समावृत्य तस्माद् बिलाद्गा निःसारयामास। तदिदमुपाख्या-नमिन्द्रो वलस्य बिलमपौर्णोत् ( तै० स० २-१-५-१ ) इत्यादिब्राह्मणेषु मन्त्रान्तरेषु च प्रसिद्धम्। तदेतद्धृदि निधायायं मन्त्रः प्रवर्तते। हे अद्रिवः। वज्रयुक्तेन्द्र त्वं गोमतो वलस्य गोभिर्युक्तस्य वल-नामकस्यासुरस्य सम्बन्धि बिलमपावः। स्वसैन्यमुखेनापावृतवानसि। तदानीं तुज्यमानासो वलेन हिंस्यमाना देवा अविभ्युषस्त्वदीयरक्षया वलादभीताः सन्तस्त्वामाविषुः। प्राप्तवन्तः। अप। निपातत्वादाद्युदात्तः। अवः। वृञ् वरणे। लङ्। सिप्। इतश्च० पा० ३-४-१००) इति लोपः। स्वादिभ्यः श्नुः (पा० ३-१-७३)। तस्य बहुलं छन्दसि ( पा० २-४-७३ ) इति लुक्। गुणो रपरत्वम्। हल्ङ्यादि-लोपः। विसर्जनीयः। अडागमः। अद्रिवः। अद्रिरस्यास्तीति मतुप्। छन्दसीरः ( पा० ८-२-१५ ) इति वत्वम्। संबोधन उगिदचाम्० ( पा० ७-१-७० ) इति नुम्। हल्ङ्यादिलोपान्तलोपौ। मतुवसो रु सम्बुद्धौ छन्दसि ( पा० ८-३-१ ) इति रुत्वम्। बिलम्। नब्विषयस्यानिसन्तस्य ( फि० २-२ ) इत्याद्युदात्तत्वम्। अविभ्युषः। ञिभी भये। लिट्। द्विर्भावः। अभ्यासस्य ह्रस्वजश्त्वे। क्वसुश्च ( पा० ३-२-१०७ ) इति लिटः क्वसुरादेशः। क्रादिनियमात्प्राप्त इट् वस्वे-काजाद्घसाम् ( पा० ७-२-६७ ) इति नियमान्निवर्तते। जसि सर्वनामस्थानेऽपि व्यत्ययेन भत्वा-द्वसोः सम्प्रसारणम् (पा० ६-४-१३१)। परपूर्वत्वम्। शासिवसिघसीनां च ( पा० ८-३-६० ) इति षत्वम्। अचि श्नुधातु० ( पा० ६-४-७७ ) इत्यादिना प्राप्तमियङादेशं बाधित्वा एरनेकाचः० ( पा० ६-४-८२) इति यणादेशः। नञ्समासः। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। तुज्यमानासः। तुजेर्हिंसार्था-त्परस्य कर्मणि लटः स्थाने शानच्। सार्वधातुके यक् ( पा० ३-१-६७ ) इति यक्। तस्माद-दुपदेशादुत्तरस्य लसार्वधातुकस्य अनुदात्तत्वम्। यकार एव प्रत्ययस्वरः शिष्यते। आविषुः। अव रक्षणादिषु। अस्माद्गत्यर्थाल्लुङो झिः। तस्य सिजभ्यस्तविदिभ्यश्च ( पा० ३-४-१०९ ) इति जुस्। सिच इडागमः। आडजादीनाम् ( पा० ६-४-७२ ) इत्यडागमः। आदेशप्रत्यययोः ( पा० ८-३-५९ ) इति षत्वम् ॥५॥

षष्ठीमृचमाह। हे शूर सङ्ग्रामे शौर्ययुक्तेन्द्र तव रातिभिस्त्वदीयैर्धनदानैर्निमित्तभूतैरहं होता प्रत्यायन्। त्वां पुनरागतोऽस्मि। पुरा बहुषु कर्मसु त्वत्तो धनस्य लब्धत्वादस्मिन्कर्मणि प्रत्यागमनमित्युच्यते। किं कुर्वन्। सिन्धुं स्यन्दमानं सोममावदन्। सर्वतः कथयन्। अस्मि-न्सोमयागे त्वदीयां धनदानकीर्तिं प्रकटयन्नित्यर्थः। हे गिर्वणः। गीर्भिर्वननीयेन्द्र। कारवः कर्तार ऋत्विग्यजमाना उपातिष्ठन्त। पुरा धनलाभार्थं त्वामुपस्थितवन्तः। उपस्थाय च तस्य तादृशस्यौदार्योपेतस्य ते तव धनदानं विदुर्जानन्ति। गिर्वणश्शब्दं यास्क इत्थं निब्रूते। गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति ( नि० ६-१४ ) इति। रेभो जरिता ( नि० ३-१६ ) इत्यादिषु

त्रयोदशसु स्तोतृनामसु कारुशब्दः पठितः। तव। युष्मदस्मदोर्ङसि ( पा० ६-१-२११ ) इत्याद्युदात्तत्वम्। रातिभिः। मन्त्रे वृष० ( पा० ३-३-९६ ) इत्यादिना क्तिन्नुदात्तः। आयम्। इणो लङ्। तस्थस्थमिपां तान्तन्तामः (पा० ३-४-१०१) इत्यमादेशः। अदिप्रभृतिभ्यः शपः ( पा० २-४-७२ ) इति शपो लुक्। आडागमः। वृद्ध्यायादेशौ। तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातः। सिन्धुम्। स्यन्दू प्रस्रवणे। निदित्यनुवृत्तौ स्यन्देः सम्प्रसारणं धश्च ( उ० १-११ ) इत्युप्रत्ययो धकारश्चान्तादेशः। नित्त्वादाद्युदात्तः। आवदन्। वद व्यक्तायां वाचि। लटः शतृ। शपः पित्त्वादनुदात्तत्वम्। शतुश्च लसार्वधातुकस्वरेण। धातुस्वर एव शिष्यते। आङा सह कुगतिप्रादयः ( पा० २-२-१८ ) इति समासः। कृदुत्तरपदप्रकृतिस्वरत्वम्। अतिष्ठन्त। उपान्मन्त्रकरणे ( पा० १-३-२५ ) इत्यात्मनेपदम्। गिर्वणः। वन षण सम्भक्तौ। असुन्। आमन्त्रितस्य च ( पा० ८-१-१९ ) इति निघातः। विदुः। विद ज्ञाने। लट्। अदिप्रभृतिभ्यः शपः ( पा० २-४-७२ ) इति शपो लुक्। विदो लटो वा ( पा० ३-४-८३ ) इति झेरुस्। पादादित्वान्न निघातः। संहितायां युष्मत्तत्ततक्षुष्वन्तःपादम् ( पा० ८-३-१०३ ) इति षत्वम्। ष्टुना ष्टुः ( पा० ८-४-४१ ) इत्युत्तरस्य नकारस्य ष्टुत्वम्। तस्य। सावेकाचः० ( पा० ६-१-१६८ ) इति विभक्तेरुदात्तत्वं प्राप्तं न गोश्वन्साववर्ण० ( पा० ६-१-१८२ ) इति निषिध्यते। कारवः। कृवापाजि० ( उ० १-१ ) इत्यादिना उण्। प्रत्ययस्वरः ॥६॥

सप्तमीमृचमाह। हे इन्द्र त्वं मायिनं नानाविधकपटोपेतम्। शुष्णं भूतानां शोषणहेतुमेतन्नामकमसुरं मायाभिस्तत्प्रतिकूलैः कपटविशेषैः। यद्वा तद्वधोपायगोचराभिः प्रज्ञाभिः। अवातिरः। हिंसितवानसि। एतच्च यास्केनोक्तम्। इन्द्रः शुष्णं जघानेति (नि० ३-११) इति। शुष्णं पिप्रुम् (ऋ० सं० १-१०३-८) इत्यादिमन्त्रे चायमर्थो विस्पष्टः। मेधिरा मेधावन्तोऽनुष्ठातारः। तस्य तादृशस्य ते तव महिमानं विदुर्जानन्ति। तेषां जानतामनुष्ठातॄणां श्रवांस्यन्नान्युत्तिर। वर्धय। केतः केतुः इत्यादिष्वेकादशसु प्रज्ञानामसु माया वयुनम् ( निघ० ३-९ ) इति पठितम्। श्रवःशब्दं यास्को निर्वक्ति। श्रव इत्यन्ननाम श्रूयत इति सतः ( नि० १०-३ ) इति। मायाभिः। माङ् माने। माच्छासिसूभ्यो यः ( उ० ४-१११ ) इति यप्रत्ययः। प्रत्ययस्वरः। मायिनम्। मायास्यास्तीति मायी। व्रीह्यादित्वादिनिप्रत्ययः। प्रत्ययस्वरः। शुष्णम्। शुष शोषणे। अस्मादन्तर्भावितण्यर्थान्निदित्यनुवृत्तौ तृषिशुषिरसिभ्यः कित् ( उ० ३-१२ ) इति नप्रत्ययः। नित्त्वादाद्युदात्तः। अतिरः। तरतेर्लङि व्यत्ययेन शः। तस्य ङित्त्वेन गुणाभावादृत इद्धातोः ( पा० ७-१-१०० ) इतीत्वम्। विदुष्टे तस्य। गतमन्त्रे गतम्। मेधिराः। मिधृ मेधृ मेधाहिंसनयोः। औणादिक इरन्। नित्त्वादाद्युदात्तः। श्रवांसि। नब्विषयत्वादाद्युदात्तः ॥७॥

अष्टमीमृचमाह। स्तोमाः स्तोतार ऋत्विज ओजसा बलेनेशानं जगतो नियामकमिन्द्रमभ्यनूषत। सर्वत्र स्तुतवन्तः। यस्येन्द्रस्य रातयो धनदानानि सहस्रं सहस्रसङ्ख्योपेतानि सन्ति। उत वा। अथवा भूयसीः सहस्रसङ्ख्याया अप्यधिकाः सन्ति। तमिन्द्रमिति पूर्वत्रान्वयः। इन्द्रम्। ऋज्रेन्द्र० ( उ० २-२१ ) इत्यादिना रन्। नित्त्वादाद्युदात्तः। ईशानम्। लटः शानच्। अदिप्रभृतिभ्यः शपः ( पा० २-४-७२ ) इति शपो लुक्। धातोरनुदात्तेत्त्वात्तास्यनुदात्तेद्० ( पा० ६-१-१८६ ) इत्यादिना शानचोऽनुदात्तत्वम्। ओजसा। नब्विषयत्वादाद्युदात्तः। स्तोमाः।

अर्तिस्तुसु० ( उ० १-१४५ ) इत्यादिना मन् प्रत्ययः नित्त्वादाद्युदात्तः। अनूषत। णु स्तुतौ। णो नः ( पा० ६-१-६५ )। लुङ्। व्यत्ययेन झस्यादादेशः। च्लेः सिच् ( पा० ३-१-४४ ) अस्य धातोः कुटादित्वेन सिचो ङित्त्वाद् गुणाभावः। इडभावश्छान्दसः। दीर्घत्वं च। अडागमः। सहस्रम्। कर्दमादीनां च ( फि० ३-१० ) इति द्वितीयाक्षरमुदात्तम्। रातयः। मन्त्रे वृष० ( पा० ३-३-९६ ) इत्यादिना क्तिन्नुदात्तः। उत। प्रातिपदिकस्वरः। वा। चादिरनुदात्तः। सन्ति। प्रत्ययाद्युदात्तत्वम्। तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातो न भवति। यद्वृत्तान्नित्यम् ( पा० ८-१-६६ ) इति प्रतिषेधात्। स हि व्यवहितेऽपि भवतीत्युक्तम्। भूयसीः। सहस्रादतिशयेन बह्व्यो भूयस्यः। अत्र विभक्तव्यस्य सहस्रस्य सन्निधिबलादुपपदत्वप्रतीतेर्द्विवचनविभज्योपपदे तरबीयसुनौ ( पा० ५-३-५७ ) इति बहुशब्दादीयसुन्। बहोर्लोपो भू च बहोः ( पा० ६-४-१५८ ) इतीकारलोपः प्रकृतेर्भूरादेशश्च। ईयसुनो नित्त्वादाद्युदात्तत्वम्। उगितश्च ( पा० ६-३-४५ इति ङीप् ॥८॥

इति प्रथमस्य प्रथम एकविंशो वर्गः।

इति प्रथममण्डले तृतीयोऽनुवाकः॥

॥ १२ ॥

१·१२

चतुर्थानुवाके षट् सूक्तानि। तत्राग्निं दूतमित्यादिकस्य द्वादशर्चस्य प्रथमस्य सूक्तस्य काण्वपुत्रो मेधातिथिरृषिः। अपवादाभावादनुवर्तमानं प्राग्घिरण्यस्तूपाद् (अनु० १२-१४) इत्युक्तं गायत्रमेव छन्दः। अग्निदेवताकत्वं विस्पष्टम्। अत एवानुक्रम्यते। अग्निं द्वादश मेधातिथिः काण्व आग्नेयमग्निनेति पादौ द्व्यग्निदेवतो निर्मन्थ्य आहवनीयश्चेति। विनियोगस्तु प्रातरनुवाक आग्नेये क्रतौ गायत्रे छन्दसि अग्निं दूतमिति सूक्तम्। अथैतस्या रात्रे विवासकाल इति खण्डेऽग्निमीळेऽग्निं दूतम् ( आ० श्रौ० ४-१२ ) इति सूत्रितम्। तथा पृष्ठ्यषडहस्य द्वितीयेऽहनीदमेव सूक्तमाज्यशस्त्रम्। पृष्ठ्यस्याभिप्लवेनोक्ते अहनी इति खण्डे सूत्रितम्। अग्निं दूतमिति द्वितीये ( आ० श्रौ० ७-१० ) इति। दर्शपूर्णमासयोः सामिधेनीषु अग्निं दूतमित्येका। नमः प्रवक्त्रे इति खण्डे सूत्रितम् ईळेन्यो नमस्यस्तिरोऽग्निं दूतं वृणीमहे ( आ० श्रौ० १-२ ) इति।

अस्मिन्सूक्ते प्रथमामृचमाह। अग्नेर्दूतत्वमेतन्मन्त्रव्याख्याने तैत्तिरीयब्राह्मणे समाम्नायते। अग्निर्देवानां दूत आसीदुशना काव्योऽसुराणाम् ( तै० सं० २-५-८-५ ) इति। तादृशं देवदूतमग्निमस्मिन्कर्मणि वृणीमहे। सम्भजामः। कीदृशम्। होतारम्। देवानामाह्वातारम्। विश्ववेदसम्। सर्वधनोपेतम्। अस्य प्रवर्तमानस्य यज्ञस्य निष्पादकत्वेन सुक्रतुम्। शोभनकर्माणम्। शोभनप्रज्ञं वा। मघम् ( निघ० २-१० ) इत्यादिकेष्वष्टाविंशतिसङ्ख्याकेषु धननामसु वेदश्शब्दः पठितः। होतारम्। ह्वेञ् स्पर्द्धायां शब्दे च। तान्डीत्यादिषु तृन्। बहुलं छन्दसि ( पा० ६-१-३४ ) इति सम्प्रसारणे परपूर्वत्वे गुणः। नित्त्वादाद्युदात्तः। विश्ववेदसम्। बहुव्रीहौ विश्वं संज्ञायाम् ( पा० ६-२-१०६ ) इति पूर्वपदान्तोदात्तत्वम्। अस्य। ऊडिदम्० ( पा० ६-१-१७१ ) इत्यादिना विभक्तेरुदात्तत्वम्। सुक्रतुम्। क्रत्वादयश्च ( पा० ६-२-११८ ) इत्याद्युदात्तत्वम् ॥१॥

द्वितीयामृचमाह। यद्यप्यग्निः स्वरूपेणैक एव तथापि प्रयोगभेदादाहवनीयादिस्थानभेदात्पावकादिविशेषणभेदाद्वा बहुविधत्वमभिप्रेत्याग्निमग्निमिति वीप्सा। तं हवीमभिराह्वानकरणमन्त्रैः सदा हवन्त। निरन्तरमनुष्ठातार आह्वयन्ति। कीदृशम्। विश्पतिम्। विशां प्रजानां होत्रादीनां पालकम्। हव्यवाहम्। यजमानसमर्पितस्य हविषो वोढारम। अत एव पुरुप्रियम्। बहूनां प्रीत्यास्पदम्। अग्निमग्निम्। नित्यवीप्सयोः ( पा० ८-१-४ ) इति वीप्सायां द्विर्भावः। तस्य परमाम्रेडितम् ( पा० ८-१-२ ) इत्युत्तरस्याम्रेडितसञ्ज्ञायामनुदात्तं च ( पा० ८-१-३ ) इत्यनुदात्तत्वम। हवीमभिः। ह्वेञ् स्पर्धायां शब्दे च। आह्वानकरणभूतेषु मन्त्रेषु स्वव्यापारस्वातन्त्र्यात्कर्तृत्वविवक्षयाऽन्येभ्योऽपि दृश्यन्ते ( पा० ३-२-७५ ) इति कर्तरि मनिन्। तस्य छान्दस ईडागमः। बहुलं छन्दसि ( पा० ६-१ ३४ ) इति धातोः सम्प्रमारणं परपूर्वत्वं गुणावादेशौ। नित्त्वादाद्युदात्तत्वम। सदा। सर्वैकान्य० ( पा० ५-३-१५ ) इत्यादिना सर्वशब्दाद्दाप्रत्ययः। सर्वस्य सोऽन्यतरस्यां दि ( पा० ५-३-६ ) इति सभावः। व्यत्ययेनाद्युदात्तत्वम्। हवन्त। ह्वेञो लट्। झस्यान्तादेशः। टेरेत्वाभावश्छान्दसः। शपि बहुलं छन्दसि ( पा० ६-१-३४ ) इति संप्रसारणम्। तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातः। विश्पतिम्। पत्यावैश्वर्य ( पा० ६-२-१८ ) इति पूर्वपदप्रकृतिस्वरे प्राप्ते परादिश्छन्दसि बहुलम ( पा० ६-२-१९९ ) इति उत्तरपदाद्युदात्तत्वम्। हव्यवाहम्। वह प्रापणे। वहश्च ( पा० ३-२-६४ ) इति ण्विप्रत्ययः। कृदुत्तरपदप्रकृतिस्वरत्वम्। पुरुप्रियम्। पुरूणां प्रियम। समासान्तोदात्तत्वम् ॥२॥

तृतीयामृचमाह। हे अग्ने जज्ञानोऽरण्योरुत्पन्नस्त्वं वृक्तबर्हिषे। आस्तरणाय छिन्नेन बर्हिषा युक्ताय। तं यजमानमनुग्रहीतुमिह कर्मणि हविर्भुजो देवानावह। नोऽस्मदर्थं होता देवानामाह्वाता त्वमीड्यः स्तुत्योऽसि। देवानित्यत्र संहितायां दीर्घादटि समानपादे ( पा० ८-३-९ ) इति रुत्वम्। आतोऽटि नित्यम् ( पा० ८-३-३ ) इत्यनुनासिकभावः। जज्ञानः। जनी प्रादुर्भावे। लिटः कानच्। गमहन० ( पा० ६-४-९८ ) इत्युपधालोपः। द्विर्वचनेऽचि ( पा० १-१-५९ ) इति तस्य स्थानिवद्भावाद्द्विर्वचनम्। चित्त्वादन्तोदात्तः। वृक्तबर्हिषे। ओव्रश्चू छेदने। निष्ठा ( पा० ३-२-१०२ ) इति क्तप्रत्ययः। यस्य विभाषा ( पा० ७-२-१५ ) इतीट्प्रतिषेधः। वृक्तं बर्हिर्यजमानाय येन ऋत्विजा। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः। असि। अस्तेः सिप्। अदिप्रभृतिभ्यः शपः ( पा० २-४-७२ ) इति शपो लुक्। तासस्त्योर्लोपः ( पा० ७-४-५० ) इति सकारस्य लोपः। पादादित्वान्न निघातः। होता। ह्वयतेस्ताच्छील्यादिषु तृन्। बहुलं छन्दसि ( पा० ६-१-३४ ) इति सम्प्रसारणम्। नित्त्वादाद्युदात्तः। ईड्यः। ईड स्तुतौ। ऋहलोर्ण्यत्। ( पा० ३-१-१२४ )। तित्स्वरिते प्राप्ते ईडवन्दवृशंसदुहां ण्यतः। ( पा० ६-१-२१४ ) इत्याद्युदात्तत्वम् ॥३॥

चतुर्थीमृचमाह। हे अग्ने यद्यस्मात्कारणाद्दूत्यं यासि। देवानां दूतकर्म प्राप्नोषि। तस्मात्कारणादुशतो हविः कामयमानांस्तान्देवान हविःस्वीकारार्थं वि बोधय। विबोध्य च बर्हिष्यस्मिन्कर्मणि तैर्देवैः सह आसत्सि। आसीद। आगत्योपविश। तान्। दीर्घादटि समानपादे ( पा० ८-३-९ ) इति संहितायां रुत्वम्। आतोऽटि नित्यम् ( पा० ८-३-३ ) इत्यनुनासिकभावः। उशतः। वश कान्तौ। लटः शतृ। अदिप्रभृतिभ्यः शपः ( पा० २-४-७२ ) इति शपो लुक्।

ग्रहिज्या० ( पा० ६-१-१६ ) इत्यादिना सम्प्रसारणम्। शतुरनुमो नद्यजादी ( पा० ६-१-१७३ ) इति विभक्तेरुदात्तत्वम्। यासि। यद्वृत्तान्नित्यम् ( पा० ८-१-६६ ) इति निघातप्रतिषेधः। दूतस्य भागः कर्म वा दूत्यम्। दूतस्य भागकर्मणी (पा० ४-४-१२०) इति यत्। तस्य तित्स्वरिता-पवादत्वेन यतोऽनावः ( पा० ६-१-२१३ ) इति प्राप्तमाद्युदात्तत्वं सर्वे विधयश्छन्दसि विकल्प्यन्ते ( पा० प० ३५ ) इति निवर्तते। अतस्तित्स्वरितम् ( पा० ६-१-१८५ ) इत्येव भवति। शेष-निघातः। सत्सि। सीदसि। षद्लृ विशरणगत्यवसादनेषु। लटः सिपि शपो बहुलं छन्दसि ( पा० २-४-७३ ) इति लुक्। न लुमताङ्गस्य (पा० १-१-६३) इति प्रत्ययलक्षणप्रतिषेधात्पाघ्रा० ( पा० ७-३-७८ ) इत्यादिना सीदादेशो न भवति। बर्हिषि। बृह बृहि वृद्धौ। बृंहेर्नलोपश्च ( उ० २-१०५ ) इतीसिप्रत्ययः। प्रत्ययस्वरेणेकार उदात्तः ॥४॥

पञ्चमीमृचमाह। हे घृताहवन। घृतेनाहूयमान दीदिवो दीप्यमानाग्ने त्वं रक्षस्विनो रक्षो-युक्तान् रिषतो हिंसकाञ्छत्रून्प्रत्यस्माकं प्रतिकूलान्दह स्म। सर्वथा भस्मीकुरु। घृतेनाहूयतेऽ-स्मिन्निति करणाधिकरणयोश्च (पा० ३-३-११७) इत्यधिकरणे ल्युट्। अत्र जुहोतेरविवक्षितकर्मत्वेना-कर्मकत्वाद्धुतस्य करणत्वमेव न कर्मत्वम्। अतो नैषा तृतीया च होश्छन्दसि ( पा० २-३-३ ) इति कर्मणि तृतीया किन्तु कर्तृकरणयोस्तृतीया (पा० २-३-१८) इति करणवाचिन्येव। अतः कर्तृकरणे कृता बहुलम् ( पा० २-१-३२ ) इति समासः। तत्र पूर्वपदप्रकृतिस्वरापवादे कृदुत्तरपदप्रकृतिस्वरे प्रातिपदिकावस्थायामेव कृते सति पश्चाद्विभक्तावुत्पन्नायामामन्त्रितस्य च ( पा० ६-१-१९८ ) इत्याद्युदात्तत्वम्। दीदिवः। दीव्यतेर्लिटः क्वसुः। तस्य वस्वेकाजाद्घसाम् ( पा० ७-२-६७ ) इति नियमादिडभावः। द्विर्वचनम्। हलादिः शेषः ( पा० ७-४-६० )। उत्तरवकारस्य लोपो व्योर्वलि ( पा० ६-१-६६ ) इति लोपः। क्वसोः कित्त्वाद्गुणाभावः। तुजादीनां दीर्घोऽभ्यासस्य ( पा० ६-१-७ ) इति दीर्घत्वमभ्यासस्य। सम्बुद्धावुगिदचाम्० ( पा० ७-१-७० ) इति नुम्। संयोगान्तस्य लोपः ( पा० ८-२-२३ ) इति सकारलोपे नकारस्य मतुवसो रु सम्बुद्धौ छन्दसि ( पा० ८-३-१ ) इति रुत्वम्। विसर्गः। पदात्परत्वादामन्त्रितनिघातः। नच नामन्त्रिते समानाधिकरणे सामान्यवचनम् ( पा० ८-१-७३ ) इत्यविद्यमानवत्त्वप्रतिषेधः। अनयोरग्निद्विशेषणत्वेन विशेषवचनत्वात्। अत एव परस्परमनन्वयेनासामर्थ्यात्समर्थः पदविधिः ( पा० २-१-१ ) इति नियमात्पूर्वस्य न पराङ्गवद्भावो येनैकपद्येन निघातः स्यात्। अत एव ईडे रन्तेऽदिते सरस्वति ( तै० सं० ७-१-६-८ ) इत्यादौ पृथक् पृथगाद्युदात्तत्वम्। इति। उच्यते। अत्र दीदिव इति नाग्निविशे-षणं किन्तु घृताहवनपदस्यैव द्योतनार्थं घृताहवन इति विशेष्यत्वेन विवक्षितत्वम्। विशिष्टस्य तु पश्चादग्निविशेषणता। तत्र दीदिवःपदं प्रति घृताहवनपदस्य विशेष्यत्वान्नामन्त्रिते समाना-धिकरणे० ( पा० ८-१-७३ ) इत्यविद्यमानवत्त्वप्रतिषेधाभावात्तोपपत्तिः। अत एव परस्पर-विशेष्यविशेषणभावेन सामर्थ्यात्सुबामन्त्रिते० ( पा० २-१-२ ) इति पराङ्गवद्भावे शेषनिघातेनापि स्वरोपपत्तिरिति। इडे रन्ते इत्यादौ तु नैवं परस्परान्वय इति वैषम्यम्। रिषतः। रुष रिष हिंसाया-मिति भौवादिकस्य लटः शत्रादेशे शपि छान्दसो गुणाभावः। तौदादिकस्य वा रिष हिंसाया-मित्यस्य छान्दसं षत्वम्। विकरणस्य शस्य ङित्त्वाद्गुणाभावः। रक्षस्विनः। रक्षःशब्दादस्माया-मेधास्रजो विनिः ( पा० ५-२-१२१ ) इति मत्वर्थीयो विनिः। तस्य प्रत्ययाद्युदात्तत्वम् ॥५॥

अग्निमन्थनेऽग्निनाग्निः समिध्यत इत्येषानुवचनीया। प्रातर्वैश्वदेव्यां प्रेषित इति खण्डे सूत्रितम्। अग्निनाग्निः समिध्यते त्वं ह्यग्ने अग्निना ( आ० श्रौ० २-१६ ) इति। एषैवाग्निमत इत्यस्यानुवाक्या। अथाग्नेय्य इति खण्डेऽग्नावग्निप्रणयनमुपक्रम्य सूत्रितम्। यद्वो वयं प्र मिनाम व्रतान्यग्निनाग्निः समिध्यते ( आ० श्रौ० ३-१३ ) इति।

तामेतां षष्ठीमृचमाह। अग्निराहवनीयाख्यस्तस्मिन्प्रक्षिप्यमाणेनाग्निना निर्मन्थ्येन प्रणीतेन वा सह समिध्यते। सम्यग् दीप्यते। कीदृशोऽग्निः। कविः। मेधावी। गृहपतिः। यजमानगृहस्य पालकः। युवा। नित्यतरुणः। हव्यवाट्। हविषो वोढा। जुह्वास्यः। जुहूरूपेण मुखेन युक्तः। गृहपतिः। पत्यावैश्वर्ये ( पा० ६-२-१८ ) इति पूर्वपदप्रकृतिस्वरत्वम्। युवा। यु मिश्रणे। कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः ( उ० १-१६२ ) इति कनिन्। नित्त्वादाद्युदात्तः। हव्यं वहतीति हव्यवाट्। वहश्च ( पा० ३-२-६४ ) इति ण्विः प्रत्ययः। णित्त्वादुपधावृद्धिः। गतिकारकोपपदात्कृदुत्तरपदप्रकृतिस्वरत्वम्। जुह्वास्यः। हूयतेऽनयेति जुहूः। हुवः श्लुवच्च ( उ० २-६१ ) इति क्विप्। तत्सन्नियोगाद्दीर्घः। श्लुवद्भावाद्द्विर्भावः। चुत्वजश्त्वे। प्रातिपदिकस्वरेणान्तोदात्तः। जुहूरास्यं यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एव शिष्यते। शेषनिघातः। यणादेश उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ( पा० ८-२-४ ) इत्याकारः स्वरितः ॥६॥

इति प्रथमस्य प्रथमे द्वाविंशो वर्गः।

सूक्ते सप्तमीमृचमाह। हे स्तोतृसङ्घ। अध्वरे क्रतावग्निमुपस्तुहि। उपेत्य स्तुतिं कुरु। कीदृशम्। कविम्। मेधाविनम्। सत्यधर्माणम्। सत्यवदनरूपेण धर्मेणोपेतम्। देवम्। द्योतमानम्। अमीवचातनम्। अमीवानां हिंसकानां शत्रूणां रोगाणां वा घातकम्। सत्यं धर्मो यस्येति सत्यधर्मा। धर्मादनिच् केवलात् ( पा० ५-४-१२४) इत्यनिच् समासान्तः। अत्र केवलात्पदेन तस्य समासेऽभिधानाद् समासे बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे शेषनिघातेनानुदात्तत्वम्। अमीवशब्दोऽम रोग इत्यस्मात् शेवयह्वजिह्वाग्रीवाप्वामीवाः ( उ० १-१२२ ) इति वन्प्रत्यय इडागमे च निपातः। नित्त्वादाद्युदात्तः। चते चदे याचने चेत्यस्माद्धिंसार्थाण्णिजन्तान्नन्द्यादित्वाल्ल्युः। योरनादेशः। णेरनिटि ( पा० ६-४-५१ ) इति णेर्लोपः। लिति ( पा० ६-१-१९३ ) इति धातोरकारस्योदात्तत्वम्। न च स्वरे कर्तव्ये णिलोपस्य स्थानिवद्भावः। न पदान्तद्विर्वचन० ( पा० १-१-५८ ) इत्यादिना प्रतिषेधात्। अमीवानां चातन इति समासे कृते कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते ॥७॥

अष्टमीमृचमाह। हे अग्ने देव यो हविष्पतिर्यजमानो दूतं देवदूतं त्वा त्वां सपर्यति। परिचरति। तस्य यजमानस्य प्राविता अव स्म। अवश्यं रक्षको भव। हूयत इति हविः। अर्चिशुचि० ( उ० २-१०४ ) इत्यादिना इसिः। प्रत्ययस्वरेणेकार उदात्तः। हविषः पतिर्हविष्पतिः। नित्यं समासेऽनुत्तरपदस्थस्य ( पा० ८-३-४५ ) इति षत्वम्। पत्यावैश्वर्ये ( पा० ६-२-१८ ) इति पूर्वपदप्रकृतिस्वरत्वम्। सपरशब्दात्कण्ड्वादिभ्यो यक् ( पा० ३-१-२७ ) इति यक्। धातुप्रकरणाद्गुणप्रतिषेधार्थककित्त्वाच्च सपरशब्दस्य धातुत्वात्ततो विहितस्य यक आर्धधातुकत्वे सति

अतो लोपः ( पा० ६-४-४८ ) इति लोपः। सनाद्यन्ता धातवः ( पा० ३-१-३२ ) इति धातुसञ्ज्ञायां तिप्। कर्तरि शप् ( पा० ३-१-६८ )। तस्मिन्पूर्वस्यातो गुणे ( पा० ६-१-९७ ) इति पररूपत्वम्। यकः प्रत्ययस्वरेणोदात्तत्वम्। शपा सहैकादेशस्यैकादेश उदात्तेनोदात्तः ( पा० ८-२-५ ) इत्युदात्तत्वम्। तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातो न भवति। यद्वृत्तान्नित्यम् ( पा० ८-१-६६ ) इति प्रतिषेधात् ॥८॥

गार्हपत्याहवनीययोः परस्परं संसर्गे विहितस्य हविषो याज्या यो अग्निं देववीतय इत्येषा। अथाग्नेय्य इष्टय इति खण्डे सूत्रितम्। यो अग्निं देववीतये कुविदङ्ग नो गविष्टये (आ० श्रौ० ३-१३) इति।

तामेतां याज्यां सूक्तगतां नवमीमृचमाह। हविष्मान् हविर्युक्तो यो यजमानो देववीतये देवानां हविर्भक्षणहेतुयागार्थमग्निमाविवासति। अग्नेः समीपे विशेषेणागत्य परिचर्यां करोति। हे पावकाग्ने तस्मै मृळय। तं यजमानं सुखय। देववीतये। वी गतिव्याप्तिप्रजनकान्त्यसनखादनेष्वित्यस्मादशनार्थात् क्तिन्। देवानां वीतिर्यस्मिन्यागे स देववीतिः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। नब्विषयस्यानिसन्तस्य ( फि० २-३ ) इति पर्युदासाद्धविःशब्दोऽन्तोदात्तः। मतुपः सर्वानुदात्तत्वात्स एव शिष्यते। आविवासति। वा गतिगन्धनयोः। अस्मादन्तर्भावितण्यर्थादागमयितुमिच्छतीत्यर्थे सन्। आह्वानेच्छा परिचर्यायां पर्यवस्यतीति विवासतिशब्दः परिचर्यार्थे निघण्टौ पठितः। द्विर्भावः। अभ्यासस्य ह्रस्वः। सन्यतः ( पा० ७-४-७९ ) इतीत्वम्। ञ्नित्यादिर्नित्यम् ( पा० ६-१-१९७ ) इत्याद्युदात्तत्वम्। तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातो न भवति यद्वृत्तान्नित्यम ( पा० ८-१-६६ ) इति प्रतिषेधात्। तिङि चोदात्तवति ( पा० ८-१-७१ ) इत्याङो निघातः। सह सुपा ( पा० २-१-४ ) इत्यत्र सहेति योगविभागादाङस्तिङा सह समासे समासान्तोदात्तत्वे प्राप्ते परादिश्छन्दसि बहुलम् ( पा० ६-२-१९९ ) इत्युत्तरपदाद्युदात्तत्वम्। तस्मै। क्रियाग्रहणं कर्तव्यम् ( पा० वा० १-४-३२ ) इति सम्प्रदाने चतुर्थी ॥९॥

पवमानेष्टौ पावकस्याग्नेरनुवाक्या स नः पावक दीदिव इति। पौर्णमासेनेष्टिपशुसोमा उपदिष्टा इति खण्डे सूत्रितम्। स नः पावक दीदिवोऽग्ने पावक रोचिषा ( आ० श्रौ० २-१ ) इति।

तामेतामनुवाक्यां सूक्तगतां दशमीमृचमाह। हे दीदिवो दीप्यमान पावक शोधकाग्ने स त्वं नोऽस्मदर्थमिह देवयजनदेशे देवानावह। तत नोऽस्मदीयं यज्ञं तत्रत्यं हविश्चोप देवसमीपे प्रापयेति शेषः। दीदिवः। दिवु क्रीडादौ। छन्दसि लुङ्लङ्लिटः ( पा० ३-४-६ ) इति वर्तमाने लिट्। क्वसुः। द्विर्भावो हलादिः शेषः ( पा० ७-४-६० )। तुजादीनां दीर्घोऽभ्यासस्य ( पा० ६-१-७ ) इत्यभ्यासस्य दीर्घत्वम्। वस्वेकाजाद्घसाम् ( पा० ७-२-६७ ) इति नियमादिटोऽप्रतिषेधः। उत्तरवकारस्य लोपो व्योर्वलि ( पा० ६-१-६६ ) इति लोपः। क्वसोः कित्त्वाद् गुणाभावः। सम्बुद्धावुगिदचाम्० ( पा० ७-१-७० ) इति नुम्। हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् (हल्ङ्यादिलोपः)। संयोगान्तलोपः। नकारस्य तु मतुवसोः० ( पा० ८-३-१ ) इति रुत्वम्। विसर्गः। अग्ने। पादादित्वान्न निघातः। देवाँइहेत्यत्र दीर्घादटि समानपादे ( पा० ८-३-९ ) इति रुत्वम्। आतोऽटि नित्यम् ( पा० ८-३-३ ) इत्याकारस्यानुनासिकः। भोभगोअघोअपूर्वस्य योऽशि ( पा० ८-३-१७ ) इति रोर्यकारः। लोपः शाकल्यस्य ( पा० ८-३-१९ ) इति यकारलोपः। तस्या-

सिद्धत्वाद् गुणो न भवति। इह। इदमो हः ( पा० ५-३-११ ) इति सप्तम्यन्ताद्धप्रत्ययः। इदम इश्। ( पा० ५-३-३ ) तद्धितान्तत्वात्प्रातिपदिकत्वे सुपो धातुप्रातिपदिकयोः ( पा० २-४-७१ ) इति सप्तम्या लुक्। तद्धितश्चासर्वविभक्तिः ( पा० १-१-३८ ) इत्यव्ययत्वम्। अव्ययादाप्सुपः ( पा० २-४-८२ ) इति उत्तरस्याः सप्तम्या लुक्। अकारः प्रत्ययस्वरेणोदात्तः ॥१०॥

एकादशीमृचमाह। हे अग्ने नवीयसा नवतरेण पूर्वं कैरप्यसंपादितेन गायत्रेण गायत्रीछन्दस्केनानेन सूक्तेन स्तवानः स्तूयमानः स त्वं नोऽस्मदर्थं रयिं धनं वीरवतीं शूरपुत्रप्रभृत्यपत्ययुक्तामिषमन्नं चाभर। संपादय। स्तवानः। ष्टुञ् स्तुतौ। धात्वादेः षः सः ( पा० ६-१-६४ )। स्वरितञितः० ( पा० १-३-७२ ) इत्यात्मनेपदम्। लटः शानच्। कर्तरि शप् ( पा० ३-१-६८ ) बहुलं छन्दसि ( पा० २-४-७३ ) इति लुगभावः। गुणावादेशौ। आने मुक् ( पा० ७-२-८२ ) इति मुङ्न भवति। अनित्यमागमशासनम् ( पा० प० ८४ ) इत्यागमशासनस्यानित्यत्वात्। शपः पित्त्वादनुदात्तत्वम्। शानचश्चित्त्वादन्तोदात्तस्यादुपदेशाच्छपः परत्वाल्लसार्वधातुकानुदात्तत्वम्। धातुस्वर एव शिष्यते। भर। हृग्रहोर्भश्छन्दसि ( पा० वा० ३-१-८४ ) इति भत्वम्। गायत्रेण। गायत्र्याःसम्बन्धि गायत्रम्। तस्येदम् ( पा० ४-३-१२० ) इत्यण् प्रत्ययः। प्रत्ययस्वरः। नवीयसा। नवशब्दादातिशायनिक ईयसुन् प्रत्ययः। नित्त्वादाद्युदात्तः। वीरवतीम्। मतुब्ङीपोः पित्त्वादनुदात्तत्वम्। अकारः प्रातिपदिकस्वरेणोदात्तः ॥११॥

द्वादशीमृचमाह। हे अग्ने शुक्रेण शोचिषा त्वदीयश्वेतवर्णदीप्त्या विश्वाभिर्देवहूतिभिस्त्वत्कृतसर्वदेवताह्वानस्तोत्रैश्च युक्तस्त्वं नोऽस्मदीयमिमं स्तोमं स्तोत्रविशेषं जुषस्व। सेवस्व। विश्वशब्दो विशेः क्वन्नन्तो नित्त्वादाद्युदात्तः। देवहूतिभिः। देवशब्दः पचाद्यजन्तः। चित्त्वादन्तोदात्तः। देवानां हूतय आह्वानान्यासु स्तुतिषु इति देवहूतयः स्तुतयः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्॥ स्तूयतेऽनेनेति स्तोमः। अर्तिस्तुसु० ( उ० १-१४५ ) इत्यादिना मन्। नित्त्वादाद्युदात्तः ॥१२॥

इति प्रथमस्य प्रथमे त्रयोविंशो वर्गः॥

॥ १३ ॥

१·१३

सुसमिद्ध इत्यादिकं द्वादशर्चं द्वितीयमाप्रीसूक्तम्। तस्य काण्वो मेधातिथिर्ऋषिः। गायत्रं छन्दः। प्रत्यृचं प्रतीयमानाः समिद्धतनूनपादादिका द्वादश देवताः। तथा चानुक्रमणिकायामृकसङ्ख्यानृषिश्च छन्दश्चानुवृत्तिबलात्सिद्धवत्कृत्य देवता उदाहृताः। सुसमिद्ध इतीध्मः समिद्धो वाग्निस्तनूनपान्नराशंस इळो बर्हिर्देवीर्द्वार उषासानक्ता दैव्यौ होतारौ तिस्रो देव्यः सरस्वतीळाभारत्यस्त्वष्टा वनस्पतिः स्वाहाकृतय इति प्रत्यृचं देवता एतदाप्रीसूक्तमिति। विनियोगस्तु पशौ सुसमिद्धो न आ वहेति काण्वमाप्रीसूक्तम्। एकादश प्रयाजा इति खण्डे सूत्रितम्। समिद्धो अद्येति सर्वेषां यथाऋषि वा ( आ० श्रौ० ३-२ ) इति।

तस्मिन्सूक्ते प्रथमामृचमाह। हे अग्ने सुसमिद्धनामकस्त्वं नोऽस्मदीयाय हविष्मते यजमानाय तदनुग्रहार्थं देवानावह। हे पावक शोधक होतर्होमनिष्पादकाग्ने यक्षि च। यज च। सुसमिद्धः। समः क्रियाविशेषणत्वेन गतिसञ्ज्ञकत्वात्प्रादिसमासः। शोभनवाचिनः सुशब्दस्य तु विशेषणं विशेष्येण बहुलम् ( पा० २-१-५७ ) इति समिद्धपदेन कर्मधारयसमासः। सुशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। कर्मधारयेऽनिष्ठा (पा० ६-२-४६) इति पूर्वपदप्रकृतिस्वरत्वम्। क्रियाविशेषणत्वे हि सुशब्दस्य गतित्वात्प्रादिसमासे गतिरनन्तरः ( पा० ६-२-४९ ) इति समो यदुदात्तत्वं तदेव कृदुत्तरपदप्रकृतिस्वरत्वेन स्थास्यतीति सुशब्दोऽनुदात्तः स्यात्। देवाँअग्ने। पूर्ववद्रुत्वानुनासिकौ। हविष्मते। हविरस्यास्तीति मतुप्। तसौ मत्वर्थे ( पा० १-४-१९ ) इति भत्वेन पदत्वस्य बाधितत्वान्न रुत्वम्। होतःपावकशब्दयोरामन्त्रितयोः पृथक् पृथगेव क्रियान्वये परस्परमसामर्थ्यात्पराङ्गवद्भावाभावान्न तन्निबन्धनमैकस्वर्यम्। न च द्वितीयस्यामन्त्रितस्याष्टमिकनिघातेनैकस्वर्यम्। आमन्त्रितं पूर्वमविद्यमानवद् ( पा० ८-१-७२ ) इति पूर्वस्याविद्यमानवत्त्वेन पदात्परत्वाभावात्पादादित्वाच्च। परस्परसामानाधिकरण्येऽपि होतरित्यस्य विशेषणत्वे समानत्वेवाविद्यमानवत्त्वम्। अतएवाविद्यमानवत्त्वात्सामर्थ्येऽपि न पराङ्गवद्भाव इति नैकस्वर्यसिद्धिः। अतः पुनातीति पावक इत्यवयवप्रसिद्धिस्वीकारेण विशेषणत्वाद्धोतरिति विशेष्यम्। तच्च सामान्यवचनमिति नामन्त्रिते समानाधिकरणे० ( पा० ८-१-७३ ) इत्यविद्यमानवत्त्वप्रतिषेधात्पदात्परत्वादपादादित्वाच्च द्वितीयामन्त्रितस्याष्टमिकनिघातेन च पराङ्गवद्भावे सति शेषनिघातेन वा सर्वानुदात्तत्वसिद्धिः। यक्षि। यजेर्लोटः सिपि बहुलं छन्दसि ( पा० २-४-७३ ) इति शपो लुक्। व्रश्च० ( पा० ८-२-३६ ) इत्यादिना षत्वम्। षढोः कः सि ( पा० ८-२-४१ ) इति कत्वम्। सेर्हिरादेशश्छान्दसत्वान्न भवति। सिपः पित्त्वेनानुदात्तत्वाद्धातुस्वर एव शिष्यते। न च तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातः। पूर्वस्य पावकेत्यामन्त्रितस्याविद्यमानवत्त्वेन पदादपरत्वात्। अतएव तस्याव्यवधायकत्वेन होतरित्यपेक्ष्य निघातः स्यादिति चेन्न। यक्षिपदापेक्षया होतरित्यस्यापि पूर्वत्वेनाविद्यमानवत्त्वात्। ननु नामन्त्रिते समानाधिकरणे० ( पा० ८-१-७३ ) इति तस्य निषिद्धमविद्यमानवत्त्वम्। न च पावकपदस्याविद्यमानवत्त्वेन समानाधिकरणपरत्वाभावः। यक्षिपदस्यैव कार्यं प्रति पावकपदं पूर्वत्वादविद्यमानवत्स्यात्। होतःपदकार्यमविद्यमानत्वप्रतिषेधं प्रति तु परत्वाद्विद्यमानवदेवेति भवत्येव होतरित्यस्याविद्यमानवत्त्वप्रतिषेधः। अतस्तस्य विद्यमानवत्त्वात्तदपेक्षया यक्षीत्यस्य निघातः प्राप्नोत्येव। सत्यम्। अत्र यक्षीत्यस्य चशब्दपरत्वाच्चादिषु च ( पा० ८-१-५८ ) इति निघातप्रतिषेधो भविष्यतीत्यदोषः ॥१॥

द्वितीयामृचमाह। हे कवे मेधाविन्नग्ने तनूनपादेतन्नामकस्त्वमद्यास्मिन्दिने नोऽस्मदीयं मधुमन्तं रसवन्तं यज्ञं हविर्वीतये भक्षणार्थं देवेषु कृणुहि। कुरु। प्रापयेत्यर्थः। मधुमन्तम्। फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च ( उ० १-१८ ) इति मन्यतेरुप्रत्ययो धकारश्चान्तादेशः। निदित्यनुवृत्तेः प्रत्ययस्य नित्त्वादाद्युदात्तो मधुशब्दः। तनूनपात्। आमन्त्रितनिघातः। अद्य। सद्यःपरुत्० ( पा० ५-३-२२ ) इत्यादिनाऽस्मिन्काल इत्यर्थे द्यप्रत्ययान्तो निपातितः। प्रत्ययस्वरेणान्तोदात्तः। तद्धितश्चासर्वविभक्तिः ( पा० १-१-३८ ) इत्यव्ययत्वादव्ययादाप्सुपः ( पा०

२-४-८२ ) इत्युपरि सप्तम्या लुक्। संहितायामन्येषामपि दृश्यते ( पा० ६-३-१३७ ) इति दीर्घत्वम्। कृणुहि। कृवि हिंसाकरणयोश्च। इदितो नुम् धातोः ( पा० ७-१-५८ ) इति नुम्। लोटः सेर्हिरादेशः। धिन्विकृण्व्योर च ( पा० ३-१-८० ) इति शपोऽपवादो विकरण उप्रत्ययः। तत्सन्नियोगेन वकारस्याकारः। तस्यातो लोपः ( पा० ६-४-४८ ) इति लोपः। तस्य स्थानिवद्भावाल्लघूपधगुणो न भवति। उतश्च प्रत्ययादसंयोगपूर्वात् (पा० ६-४-१०६) इति हेर्लुक् न भवति। उतश्च प्रत्यये च्छन्दसि वा वचनम् (पा० वा० ६-४-१०६) इति वचनात्। तिङ्ङतिङः (पा० ८-१-२८) इति निघातः। वीतये। मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ( पा० ३-३-९६ ) इति क्तिन्नुदात्तः ॥२॥

तृतीयामृचमाह। इह देवयजनदेशेऽस्मिन्प्रवर्तमाने यज्ञे नराशंसमेतन्नामकमग्निमुपह्वये। आह्वयामि। कीदृशम्। प्रियम्। देवानां प्रीतिहेतुम्। मधुजिह्वम्। मधुरभाषिजिह्वोपेतम्। माधुर्यरसास्वादकजिह्वोपेतं वा। हविष्कृतम्। हविषो निष्पादकम्। नराशंसम्। नरशब्दो नृ नये इत्यस्मादबन्तः। प्रत्ययस्य पित्त्वाद्धातुस्वर एव शिष्यते। शंसत्यस्मिन्निति शंसः। हलश्च ( पा० ३-३-१२१ ) इत्यधिकरणे घञ्। नराणां शंस इति समासे कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्त उभे वनस्पत्यादिषु युगपद् ( पा० ६-२-१४० ) इति पूर्वोत्तरपदे प्रकृतिस्वरे भवतः। अत एव वनस्पत्यादिषु पाठान्नरशब्दस्य दीर्घत्वम्। इह। इदमो हः ( पा० ५-३-११ ) इति हप्रत्ययः। इदम इश् ( पा० ५-३-३ ) इतीशादेशः। प्रत्ययस्वरः। प्रियम्। प्रीणातीति प्रियः। इगुपधज्ञाप्रीकिरः कः ( पा० ३-१-१३५ ) इति कः। प्रत्ययस्वरः। अस्मिन्। ऊडिदम्० ( पा० ६-१-१७१ ) इत्यादिना विभक्तेरुदात्तत्वम्। ह्वये। निघातः। मधुजिह्वम्। मधुशब्दस्याद्युदात्तत्वमुक्तम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण स एव शिष्यते। हविष्कृतम्। हविः करोतीति हविष्कृत्। क्विपि ह्रस्वस्य तुक्। नित्यं समासेऽनुत्तरपदस्थस्य ( पा० ८-३-४५ ) इति षत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम् ॥३॥

चतुर्थीमृचमाह। इट्शब्दाभिधेय हे अग्ने। ईळितोऽस्माभिः स्तुतः सन् सुखतमेऽतिशयेन सुखहेतौ कस्मिंश्चिद्रथे देवान्स्थापयित्वा कर्मभूमावावह। इट्शब्दाभिधेयत्वं सूचयितुमत्रेडित इति विशेषणम्। मनुर्हितः। मनुना मन्त्रेण मनुष्येण वा यजमानादिरूपेण हितोऽत्र स्थापितस्त्वं होता देवानामाह्वातासि। सुखतमे। सुखमस्मिन्नस्तीति मतुप्। तस्य गुणवचनेभ्यो मतुपो लुगवक्तव्यः ( पा० वा० ४-२-७४ ) इति लुक्। अतिशयेन सुखः सुखतमः। तमपोऽनुदात्तत्वात्प्रातिपदिकस्वरः। रथे। रमु क्रीडायाम्। रमन्तेऽस्मिन्निति रथः। हनिकुषिनीरमिकाशिभ्यः क्थन् ( उ० २-२ ) इति क्थन्। एकाच उपदेशेऽनुदात्तात् ( पा० ७-२-१० ) इतीट्प्रतिषेधः। अनुदात्तोपदेश० ( पा० ६-४-३७ ) इत्यादिना मकारलोपः। नित्त्वादाद्युदात्तत्वम्। ईडितः। ईड स्तुतौ। निष्ठा ( पा० ३-२-१०२ ) इति क्तः। इडागमः। तस्यागमा अनुदात्ता इत्यनुदात्तः। देवानिति नकारस्य संहितायां दीर्घादटि समानपादे ( पा० ८-३-९ ) इति रुत्वम्। आतोऽटि नित्यम् ( पा० ८-३-३ ) इत्याकारस्यानुनासिकभावः। भोभगो० ( पा० ८-३-१७ ) इत्यादिना रोर्यत्वम्। तस्य लोपः शाकल्यस्य ( पा० ८-३-१९ ) इति लोपः। तस्यासिद्धत्वाद्गुणो न भवति। आ। निपातत्वादाद्युदात्तः। असि। अस भुवि। लटः सिप्। अदिप्रभृतिभ्यः शपः ( पा० २-४-७२ ) इति शपो लुक्। तासस्त्योर्लोपः ( पा० ७-४-५० ) इति सकारस्य लोपः। होता। ताच्छील्ये

नृन्। सौ ऋदुशन० ( पा० ७-१-९४ ) इत्यादिना अनङ्। ङित्वादन्तादेशः। अप्तृन्० ( पा०
६-४-११ ) इत्यादिना उपधादीर्घः। हल्ङ्याादिलोपनलोपौ। नित्त्वादाद्युदात्तः। मनुर्हितः। मन्यत
इति मनुः। मन ज्ञाने। शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च ( उ० १-१० ) इत्यु-
प्रत्ययः। तत्र निदित्यनुवृत्तेर्नित्वादाद्युदात्तः। हितः। दधातेर्निष्ठा ( पा० ३-२-१०२ ) इति
कर्मणि क्तः। दधातेर्हिः ( पा० ७-४-४२ ) इति हिरादेशः। मनुना हित इति समासे तृतीयाया
स्थाने सुपां सुलुक्० ( पा० ७-१-३९ ) इत्यादिना स्वित्यादेशः। तस्य रुत्वम्। लुगभावश्छान्दसः।
तृतीया कर्मणि ( पा० ६-२-४८ ) इति पूर्वपदप्रकृतिस्वरत्वम् ॥४॥

पञ्चमीमृचमाह। हे मनीषिणो बुद्धिमन्त ऋत्विजः। बर्हिर्दर्भान् स्तृणीत। वेदेरुपर्या-
च्छादयत। अत्रापि बर्हिर्नामकोऽग्निः सूच्यते। कीदृशं बर्हिरास्तरणीयम्। आनुषक्। अनु-
क्रमेण सक्तम्। परस्परं सम्बद्धम्। घृतपृष्ठम्। घृतपूर्णानां स्रुचां बर्हिष्यासादितत्वाद्घृतं पृष्ठ
उपरि भागे यस्य बर्हिषस्तद्घृतपृष्ठम्। यत्र यस्मिन्बर्हिषि अमृतस्यामृतसमानस्य घृतस्य चक्षणं
दर्शनं भवति। तद् बर्हिः स्तृणीतेति पूर्वत्रान्वयः। स्तृणीत। स्तृञ आच्छादने। लोटमध्यम-
पुरुषस्य बहुवचनम्। लोटो लङ्वत् ( पा० ३-४-८५ )। तस्थस्थमिपाम्० ( पा० ३-४-१०१ )
इति थस्य तादेशः। क्र्यादिभ्यः श्ना ( पा० ३-१-८१ )। ई हल्यघोः ( पा० ६-४-११३ ) इतीत्वम्।
ऋवर्णाच्चेति वक्तव्यम् ( पा० वा० ८-४-१ ) इति णत्वम्। प्वादीनां ह्रस्वः ( पा० ७-३-८० ) इति
धातोर्ह्रस्वत्वम्। सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः। अतस्तिङ एव प्रत्ययस्वरेणो-
दात्तत्वम्। बर्हिः। बृंहतेर्नलोपश्च ( उ० २-१०५ ) इतीस्प्रत्ययनलोपौ। प्रत्ययस्वरः। आनुषक्।
आसमन्तात् अनुषजतीत्यानुषक्। षञ्ज सङ्गे। धात्वादेः षः सः ( पा० ६-१-६४ )। क्विप् च
( पा० ३-२-७६ ) इति क्विप्। अनिदिताम्० ( पा० ६-४-२४ ) इति नलोपः। आङन्वोरुपसर्गयोः
प्राक् प्रयोगः। गतिसमासः। उपसर्गात्सुनोति० ( पा० ८-३-६५ ) इत्यादिना षत्वम्। घृतपृष्ठम्।
घृ क्षरणदीप्त्योः। निष्ठा ( पा० ३-२-१०२ ) इति क्तः। प्रत्ययस्वरेणोदात्तः। घृतयुक्तं पृष्ठमस्येति
बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। मनीषिणः। आमन्त्रितनिघातः। अमृतस्य। न विद्यते मृतं
मरणमस्मिन्नित्यमृतम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं बाधित्वा नञ्सुभ्याम् ( पा०
६-२-१७२ ) इति उत्तरपदान्तोदात्तत्वे प्राप्ते नञो जरमरमित्रमृताः ( पा० ६-२-११६ ) इत्युत्तरपदाद्यु-
दात्तत्वम्। चक्षणम्। चक्षिङ् व्यक्तायां वाचि। वागभिव्यक्तिवाची धातुरिहाभिव्यक्तिमात्रं
लक्षयति। ल्युट् च ( पा० ३-३-११५ ) इति भावे ल्युट्। योरनादेशः। तस्यार्द्धधातुकत्वाच्च-
क्षिङः ख्याञ् ( पा० २-४-५४ ) इति ख्याञादेशे प्राप्ते। असनयोश्च ( पा० म० २-४-५४ ) इति
प्रतिषेधः ॥५॥

षष्ठीमृचमाह। द्वारो यज्ञस्य शालाद्वाराणि विश्रयन्ताम्। कपाटोद्घाटनेन विश्रियन्ताम्।
कीदृश्यः। ऋतावृधः। ऋतस्य सत्यस्य यज्ञस्य वा वर्द्धयित्र्यः। देवीः। द्योतमानाः।
असश्चतः। असश्चन्त्यः। उद्घाटनेन प्रवेष्टृपुरुषसङ्गरहिताः। यद्वा। असश्चतः। प्रवेष्टृ-
पुरुषरहितानि यज्ञगृहाणि तत्र पुरुषप्रवेशाय द्वाराभिमानिन्य एतत्सञ्ज्ञका अग्निविशेषमूर्तयो विश्र-
यन्ताम्। विशेषेण सेवन्ताम्। द्वारसेवया तत्र पुरुषप्रवेशेन वा किं प्रयोजनमिति। तदुच्यते।
अद्यास्मिन्दिने नूनमवश्यं यष्टवे यष्टुम्। चकाराद्दिनान्तरेष्वपीति द्रष्टव्यम्। ऋतावृधः। ऋतं

वर्धयन्तीत्यर्थे वृधेरन्तर्भावितण्यर्थात्क्विप् च (पा० ३-२-७६) इति क्विप्। उपपदसमासः। अन्येषामपि दृश्यते (पा० ६-३-१३७) इति पूर्वपदस्य दीर्घत्वम्। वृधिर्धातुस्वरेणोदात्तः। समासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते। देवीः। वा छन्दसि (पा० ६-१-१०६) इति पूर्वसवर्णदीर्घत्वम्। देवशब्दात्पचाद्यजन्तात्पुंयोगादाख्यायाम् (पा० ४-१-४८) इति ङीष्। प्रत्ययस्वरेणोदात्तः। विभक्त्या सहैकादेश उदात्तेनोदात्तः (पा० ८-२-५) इत्युदात्तः। असश्चतः। ग्लुञ्चु षस्ज गतौ। जकारस्य व्यत्ययेन चकारः। लटः शत्रादेशः। द्वाराभावे न विद्यन्ते सश्चन्तो गच्छन्तो यासु प्राग्वंशादिषु तानसश्चतः। अद्य। सद्यःपरुत्० (पा० ५-३-२२) इत्यादिना द्यप्रत्ययान्तो निपातितः। तद्धितश्चासर्वविभक्तिः (पा० १-१-३८) इत्यव्ययसञ्ज्ञकत्वात् परस्या विभक्तेर्लुक्। प्रत्ययस्वरेणान्तोदात्तः। संहितायामन्येषामपि दृश्यते (पा० ६-३-१३७) इति दीर्घत्वम्। नूनम्। एवमादीनामन्तः (फि० ४-१४) इत्यन्तोदात्तत्वम्। यष्टवे। यजेस्तुमर्थे सेसेन्० (पा० ३-४-९) इत्यादिना तवेन्प्रत्ययः। व्रश्चादिना षत्वम्। नित्त्वादाद्युदात्तः ॥६॥

इति प्रथमस्य प्रथमे चतुर्विंशो वर्गः ॥

सूक्ते सप्तमीमृचमाह। नक्तशब्द उषःशब्दश्च लोके कालविशेषवाचिनौ। इह तु तत्कालाभिमानिवह्निमूर्तिद्वये प्रयुज्येते। नक्तोषासा नक्तोषोनामिके वह्निमूर्ती अस्मिन्वर्तमाने यज्ञकर्मण्युपह्वये आह्वयामि। किमर्थम्। नोऽस्मदीयमिदं येषामास्तीर्णं बर्हिर्दर्भमासदे। आसत्तुं प्राप्तुम्। कीदृश्यौ। सुपेशसा। शोभनरूपयुक्ते। नक्ता चोषाश्च नक्तोषसा। द्वितीयाद्विवचनस्य सुपां सुलुक्० (पा० ७-१-३९) इत्याकारः। मलोपोपधादीर्घौ छान्दसौ। देवताद्वन्द्वे च (पा० ६-२-१४१) इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम्। सुपेशसा। शोभनं पेशो रूपं ययोस्ते। पूर्ववदाकारः। पेशःशब्दो नब्विषयत्वादाद्युदात्तः। बहुव्रीहौ नञ्सुभ्याम् (पा० ६-२-१७२) इत्युत्तरपदान्तोदात्तत्वस्यापवादत्वेनाद्युदात्तं द्व्यच् छन्दसि (पा० ६-२-११९) इत्युत्तरपदाद्युदात्तत्वम्। अस्मिन्। ऊडिदम्० (पा० ६-१-१७१) इत्यादिना विभक्तिरुदात्ता। आसदे। षद्लृ विशरणगत्यवसादनेषु। धात्वादेः षः सः (पा० ६-१-६४)। आङ्पूर्वादस्मात्संपदादिभ्यो भावे क्विप्। प्रादिसमासः। कृदुत्तरपदप्रकृतिस्वरत्वम् ॥७॥

अष्टमीमृचमाह। तच्छब्दोऽत्र सर्वनामत्वात्प्रसिद्धार्थवाची। ता तौ याज्ञिकानां प्रसिद्धौ द्वावग्नी उपह्वये। आह्वयामि। नोऽस्मदीयमिमं यज्ञं यजताम्। तावुभौ यजतामनुतिष्ठताम्। कीदृशौ। सुजिह्वा। शोभनजिह्वोपेतौ। प्रियवचनौ शोभनज्वालौ वेत्यर्थः। होतारा। होमनिष्पादकौ। दैव्या। दैव्यौ। देवसम्बन्धिनौ। अत एवेमावग्नी दैव्यहोतृनामकौ। कवी। मेधाविनौ। ता तौ। द्वितीयाद्विवचनस्य सुपां सुलुक्० (पा० ७-१-३९) इत्याकारः। एकादेश उदात्तेनोदात्तः (पा० ८-२-५)। सुजिह्वा। शोभना जिह्वा ययोस्तौ। नञ्सुभ्याम् (पा० ६-२-१७२) इत्युत्तरपदान्तोदात्तत्वम्। पूर्ववदेकादेशस्वरः। संहितायामायादेशः। वस्य लोपः शाकल्यस्य (पा० ८-३-१९) इति लोपः। होतारा। जुहोतेस्तृन्। द्विवचने ऋतो ङि० (पा० ७-३-११०) इति गुणः। अप्तृन्० (पा० ६-४-११) इत्युपधादीर्घः। पूर्ववदाकारः। नित्त्वादाद्यु-

दात्तः। देव्या। देवानामिमौ। देवाद्यञञौ (पा० वा० ४-१-८५) इति यञ्। यस्येति च (पा० ६-४-१४८) इत्याकारलोपः। ञ्नित्यादिर्नित्यम् (पा० ६-१-१९७) इत्याद्युदात्तः। पूर्ववदाकारः यजताम्। यजताम्। लोटि शपि परतः सिब्बहुलं लेटि (पा० ३-१-३४) इति बहुलग्रहणात्सिप्। कुत्वचर्त्वषत्वानि ॥८॥

नवमीमृचमाह। अत्र महीशब्दो महत्त्वगुणयुक्तां भारतीमाचष्टेऽन्येष्वाप्रीसूक्तेषु सहशेष्विळा सरस्वती भारतीत्याम्नातत्वात्। इळादिशब्दाभिधेया वह्निमूर्तयस्तिस्रो देवीर्दीप्यमाना बर्हिर्वयमास्तीर्णं सीदन्तु। प्राप्नुवन्तु। कीदृश्यः। मयोभुवः। सुखोत्पादिकाः। अस्रिधः। शोषेण क्षयेण वा रहिताः। इळा। ईड स्तुतौ। छान्दसं ह्रस्वत्वम्। क्विप्। धातुस्वरः। टापं चापि हलन्तानां यथा वाचा निशा दिशा (पा० वा० २-४-८२) इति टाप्। सरस्वती। सरोऽस्यास्तीति सरस्वती। अदुपधाद्वत्वम्। तसौ मत्वर्थे (पा० १-४-१९) इति भत्वेन पदत्वस्य बाधितत्वाद्रुत्वाद्यभावः। उगितश्च (पा० ४-१-६) इति ङीप्। मतुम्ङीपौ पित्त्वादनुदात्तौ। मही। महतीशब्दे तकारलोपश्छान्दसः। यस्येति च (पा० ६-४-१४८) इत्यकारलोपः। उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम्। तिस्रः। त्रिशब्दाज्जसि त्रिचतुरोः स्त्रियां तिसृचतसृ (पा० ७-२-९९) इति तिस्रादेशः। अचि र ऋतः (पा० ७-२-१००) इति रेफादेशः। तिसृभ्यो जसः (पा० ६-१-१६६) इति जस उदात्तत्वम्। देवीः। देवानां पत्न्यो देव्यः। पुंयोगादाख्यायाम् (पा० ४-१-४८) इति ङीप्। यस्येति च (पा० ६-४-१४८) इत्यकारलोपः। प्रत्ययस्वरेण ङीप उदात्तत्वम्। जसि दीर्घाज्जसि च (पा० ६-१-१०५) इति निषिद्धं दीर्घत्वं वा छन्दसि (पा० ६-१-१०७) इति पक्षेऽभ्यनुज्ञायते। मयोभुवः। अन्तर्भावितण्यर्थाद्भुवः क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वम्। बर्हिः। बृंहेर्नलोपश्च (उ० २-१०९) इतीसिप्रत्ययः। प्रत्ययस्वरः। सीदन्तु। षद्लृ विशरणादौ। पाघ्रा० (पा० ७-३-७८) इत्यादिना सीदादेशः। अस्रिधः। स्रिधेर्हिंसार्थस्य शोषणार्थस्य वा संपदादिभ्यो भावे क्विपि नञा बहुव्रीहिः। पूर्वपदप्रकृतिस्वरत्वं बाधित्वा नञसुभ्याम् (पा० ६-२-१७२) इत्युत्तरपदान्तोदात्तत्वम् ॥९॥

पत्नीसंयाजे त्वष्टुः पुरोऽनुवाक्येह त्वष्टारमग्रियमिति। शंयुवाकाय संप्रेषित इति खण्डे सूत्रितम्। सं ते पयांसि समु यन्तु वाजा इह त्वष्टारमग्रियम् (आ० श्रौ० १-१०) इति।

तामेतां पुरोऽनुवाक्यां सूक्ते दशमीमृचमाह। त्वष्टारं त्वष्टृनामकमग्निमिह कर्मण्युपह्वये। कीदृशम्। अग्रियम्। श्रेष्ठम्। विश्वरूपम्। बहुविधरूपोपेतम्। सोऽस्माकं केवलोऽसाधारणोऽस्तु। इतरयजमानेभ्योऽपि अधिकमनुग्रहं करोत्वित्यर्थः। त्वष्टारम्। तक्षू त्वक्षू तनूकरणे। तृन्। स्वरतिसूतिसूयतिधूञूदितो वा (पा० ७-२-४४) इतीडभावपक्षे स्कोः संयोगाद्योरन्ते च (पा० ८-२-२९) इति ककारलोपः। ष्टुत्वम्। द्वितीयैकवचने ऋतो ङिसर्वनामस्थानयोः (पा० ७-३-११०) इति गुणेऽप्तृन्० (पा० ६-४-११) इत्यादिनोपधाया दीर्घः। तृनो नित्त्वादाद्युदात्तत्वम्। अग्रियम्। अग्राद्० (पा० ४-४-११६) इत्यनुवृत्तौ घच्छौ च (पा० ४-४-११७) इति घच्। आयनादिषु उपदेशिवद्वचनं स्वरसिद्ध्यर्थम् (पा० वा० ७-१-२) इत्युपदेशिवद्भावात्प्रत्ययाद्युदात्तत्वाद् घचश्चित्त्वादन्तोदात्तत्वम्। विश्वरूपम्। विश्वानि रूपाणि त्वष्टृ त्पन्नत्वेन यस्य। त्वष्टा वै पशूनां मिथुनानां रूपकृत् (तै० स० ६-१-८-५) इति श्रुतेः। विश्वशब्दस्याद्युदात्तत्वात्पूर्वपदप्रकृतिस्वरत्वे प्राप्ते

बहुव्रीहौ विश्वं सञ्ज्ञायाम् ( पा० ६-२-१०६ ) इति पूर्वपदान्तोदात्तत्वम्। अस्माकम्। अत्र क्षेपणे। युष्यसिभ्यां मदिक् ( उ० १-१३७ )। प्रत्ययस्वरेणान्तोदात्तः। षष्ठीबहुवचनमाम्। अत्र परमपि योऽचि ( पा० ७-२-८९ ) इति यत्वं बाधित्वा नित्यत्वात्प्रतिपदविधित्वाच्चाम आकमादेशे कृते ०अनादेशे ( पा० ७-२-८६ ) इति निषेधेन यत्वाभावाच्छेषे लोपः ( पा० ७-२-९० ) इति दकारलोपेऽकारान्तत्वेन पश्चात्प्राप्तस्यापि सुटः सामः० ( पा० ७-१-३३ ) इति निर्देशेन स्थानिन्यतभविन निवृत्तिः। एकमर्थं एव हि साम इति ससुटकस्य निर्देशः। केवलः। वृषादेराकृतिगणत्वादाद्युदात्तः ॥१०॥

एकादशीमृचमाह। हे वनस्पते। एतन्नामकाग्ने देव हविर्भुग्भ्यो देवेभ्योऽस्मदीयं हविरवसृज। समर्पयेत्यर्थः। प्रदातुर्यजमानस्य चेतनं परलोकविषयं ज्ञानं त्वत्प्रसादादस्तु। वनस्पते। आमन्त्रितनिघातः। देव। पादादित्वान्न निघातः। षाष्ठिकमामन्त्रिताद्युदात्तत्वम्। हविः। इसः प्रत्ययस्वरः। दातुः। ददातेस्तृच्। चितः ( पा० ६-१-१६३ ) इत्यन्तोदात्तः। ङसि ऋत उत् ( पा० ६-१-१११ ) इत्युत्वम्। एकादेशः। रपरत्वं च। रात्सस्य ( पा० ८-२-२४ ) इति सलोपः। एकादेशः। लघूपधगुणः। लिति ( पा० ६-१-१९३ ) इति प्रत्ययात्पूर्वस्योदात्तत्वम् ॥११॥

द्वादशीमृचमाह। स्वाहाशब्दो हविःप्रदानवाची सन्नेतन्नामकमग्निविशेषं लक्षयति। तदग्निसंपादितं यज्ञमिन्द्रायेन्द्रतुष्ट्यर्थं यज्वनो यजमानस्य गृहे ऋत्विजः कृणोतन। कुरुत। तत्र यज्ञे देवानुपह्वये। कृणोतन। कृवि हिंसाकरणयोश्च। इदित्वान्नुम्। लोण्मध्यमबहुवचनस्य तस्थस्थमिपाम्० ( पा० ३-४-१०१ ) इति तादेशः। तप्तनप्तनथनाश्च ( पा० ७-१-४५ ) इति तनबादेशः। शपि प्राप्ते धिन्विकृण्व्योर च ( पा० ३-१-८० ) इत्युप्रत्ययः। तत्सन्नियोगेन वकारस्य चाकारः। तस्यातो लोपः ( पा० ६-४-४८ ) इति लोपः। अचः परस्मिन्० ( पा० १-१-५७ ) इति स्थानिवद्भावादृकारस्य लघूपधगुणो न भवति। तनपः पित्त्वेनाङित्त्वादुकारस्य गुणः। इन्द्राय। ऋज्रेन्द्र० ( उ० २-३१ ) इत्यादिना रन्। नित्त्वादाद्युदात्तः। यज्वनः। यज देवपूजासंगतिकरणमित्रकरणदानेषु। सुयजोर्ङ्वनिप् । (पा० ३-२-१०३)। ङसि भसञ्ज्ञायामल्लोपे प्राप्ते न संयोगाद्वमन्तात् ( पा० ६-४-१३७ ) इति निषेधः। वनिपः पित्त्वेन धातुस्वर एव शिष्यते। गृहे। ग्रह उपादाने। गेहे कः ( पा० ३-१-१४४ ) इति कप्रत्ययः। ग्रहिज्या० ( पा० ६-१-१६ ) इत्यादिना संप्रसारणम्। परपूर्वत्वम्। प्रत्ययस्वरः। तत्र संहितायां दीर्घादटि० ( पा० ८-३-९ ) इति नकारस्य रुत्वम्। आतोऽटि नित्यम् ( पा० ८-३-३ ) इत्याकारस्यानुनासिकादेशः। भोभगो० ( पा० ८-३-१७ ) इति यत्वम्। तस्य लोपः शाकल्यस्य ( पा० ८-३-१९ ) इति लोपः ॥१२॥

इति प्रथमस्य प्रथमे पञ्चविंशो वर्गः।

॥१४॥

१·१४

ऐभिरग्न इत्यादिकस्य द्वादशर्चस्य तृतीयसूक्तस्य ऋषिच्छन्दसी पूर्ववत्। तच्च सूक्तं बहुदेवताकम्। अत एवानुक्रम्यते। ऐभिर्वैश्वदेवमिति। विनियोगस्तु व्यूढद्वादशाहस्य प्रथमे

छन्दोमे तृतीयसवने वैश्वदेवशस्त्रे ऐभिरग्ने दुवो गिर इति सूक्तम्। तथाच सूत्रितम्। अथ छन्दोमाः समुद्रादूर्मिरित्युपक्रम्यैभिरग्ने दुवो गिर इति वैश्वदेवम् ( आ०श्रौ० ८-६ ) इति।

तत्र प्रथमामृचमाह। हे अग्ने। एभिरस्मिन्यज्ञे संभावितैर्विश्वेभिर्देवेभिः सर्वैर्देवैः सह सोमपीतये सोमपानोपेतयागार्थं दुवोऽस्मदीयां परिचर्यां गिरोऽस्मदीयाः स्तुतीश्च प्रत्यायाहि। आगच्छ। यक्षि च। आगत्य यज च। एभिः। पूर्वनिर्दिष्टानां देवानामिदमा परामर्शादिदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ( पा० २-४-३२ ) इत्यशनुदात्तः। शित्त्वात्सर्वादेशः। नेदमदसोरकोः ( पा० ७-१-११ ) इति भिस ऐसादेशाभावः। विभक्तिरनुदात्तैव। न चोडिदम्० ( पा० ६-१-१७१ ) इत्यादिना विभक्तेरुदात्तत्वम्। तत्रान्तोदात्तादित्यधिकारात्। दुवः। नब्विषयस्यानिसन्तस्य ( फि० २-३ ) इत्याद्युदात्तत्वम्। विश्वेभिः। विश्वशब्दो विशेः क्वन्नन्तो नित्त्वादाद्युदात्तः। बहुलं छन्दसि ( पा० ७-१-१० ) इति भिस ऐस् न भवति। बहुवचने झल्येत् ( पा० ७-३-१०३ ) इत्येत्वम्। सोमपीतये। सोमशब्दोऽर्तिस्तु० ( उ० १-१४५ ) इत्यादिना मन्नन्तो नित्त्वादाद्युदात्तः। सोमस्य पीतिर्यस्मिन्यागे स सोमपीतिः। तस्मै। तादर्थ्ये चतुर्थी। देवेभिः। बहुलं छन्दसि ( पा० ७-१-१० ) इति भिस ऐसादेशाभावः। बहुवचने झल्येत् ( पा० ७-३-१०३ ) इत्येत्वम्। यक्षि। यजेर्लोटः सिप्। बहुलं छन्दसि ( पा० २-४-७३ ) इति शपो लुक्। व्रश्चादिना षत्वम्। षढोः कः सि ( पा० ८-२-४१ ) इति कत्वम्। सेर्हिरादेशश्छान्दसत्वान्न भवति। सिपः पित्त्वेनानुदात्तत्वाद्धातुस्वर एव ॥१॥

द्वितीयामृचमाह। हे विप्र मेधाविन् अग्ने कण्वा मेधाविन ऋत्विजस्त्वा यज्ञनिष्पादकं त्वामाहूषत। आह्वयन्ति। तथा ते धियस्त्वदीयानि कर्माणि गृणन्ति। कथयन्ति। ततो हे अग्ने देवेभिर्देवैः सहागहि। आगच्छ। विप्र इत्यादिषु चतुर्विंशतिसङ्ख्याकेषु मेधाविनामसु कण्व ऋभुः ( निघ० ३-१५ ) इति पठितम्। त्वा। त्वामौ द्वितीयायाः ( पा० ८-१-२३ ) इति त्वादेशः सर्वानुदात्तः। कण्वाः। कण शब्दार्थः। अशिप्रुषिलटिकणिखटि० ( उ० १-१५७ ) इत्यादिना क्वन्। नित्त्वादाद्युदात्तः। अहूषत। ह्वेञ् स्पर्धायां शब्दे च। छन्दसि लुङ्लङ्लिटः ( पा० ३-४-६ ) इति वर्तमाने लुङ्। ञित्त्वादात्मनेपदं झः। झस्य आत्मनेपदेष्वनतः (पा० ७-१-५) इत्यदादेशः। च्लेः सिच्। एकाचः० (पा० ७-२-१०) इतीट्प्रतिषेधः बहुलं छन्दसि ( पा० ६-१-३४ ) इति संप्रसारणं परपूर्वत्वम्। हलः ( पा० ६-४-२ ) इति दीर्घत्वम्। आदेशप्रत्यययोः ( पा० ८-३-५९ ) इति षत्वम्। छान्दसत्वादूकारस्य न गुणः। अडागमः। गृणन्ति। गॄ शब्दे। लट्। झि। झोऽन्तः (पा० ७-१-३)। क्र्यादिभ्यः श्ना (पा० ३-१-८१)। प्वादीनां ह्रस्वः ( पा० ७-३-८० ) इति धातोर्ह्रस्वत्वम्। श्नाभ्यस्तयोरातः ( पा० ६-४-११२ ) इत्याकारलोपः। ऋवर्णाच्चेति वक्तव्यम् (पा० वा० ८-४-१) इति। णत्वतिङन्तस्वर एव शिष्यते। विप्र आमन्त्रितनिघातः। ते। अनुदात्तम्० ( पा० ८-१-१८ ) इत्यनुवृत्तौ तेमयावेकवचनस्य ( पा० ८-१-२२) इति षष्ठ्यास्ते आदेशः। देवेभिः। छान्दस ऐसोऽभावः। गहि। गम्लृ सृप्लृ गतौ। लोटः सिप्। सेर्हिरपिच्च। कर्तरि शप् ( पा० ३-१-६८ )। तस्य बहुलं छन्दसि (पा० २-४-७३) इति लुक्। अनुदात्तोपदेश० ( पा० ६-४-३७ ) इत्यादिना मकारलोपः। तस्यासिद्धवदत्राभात् ( पा० ६-४-२२ ) इत्यसिद्धत्वादतो हेः ( पा० ६-४-१०५ ) इति लुक न भवति ॥२॥

तृतीयामृचमाह। इन्द्रादिदेवान्मारुतं मरुतां वायूनां सम्बन्धिनं गणं च हे अग्ने यक्षीति पदद्वयमनुवर्तते। इन्द्रश्च वायुश्चेन्द्रवायू। देवताद्वन्द्वे च (पा० ६-३-२६) इति प्राप्तस्यानङ उभयत्र वायोः प्रतिषेधो वक्तव्यः (पा० वा० ६-३-२६) इति प्रतिषेधः। देवताद्वन्द्वे च (पा० ६-२-१४१) इति प्राप्तस्योभयपदप्रकृतिस्वरस्य नोत्तरपदेऽनुदात्तादौ० (पा० ६-२-१४२) इति निषेधः। समासान्तोदात्तत्वमेव। बृहस्पतिम्। तद्बृहतोः करपत्योश्चोरदेवतयोरभिधेययोः सुट्तलोपो वक्तव्यः। (पा० ग० ६-१-१५७) इति तलोपः सुडागमश्च। बृहच्छब्दमाद्युदात्तं केचिद्व- र्णयन्तीति वामनः। पा रक्षणे। पातीति पतिः। पातेर्डतिः। (उ० ४-५८)। प्रत्ययस्वरेणाद्युदात्तः। समास उभे वनस्पत्यादिषु युगपद् (पा० ६-२-१४०) इत्युभयपदप्रकृतिस्वरत्वम्। मित्रा। सुपां सुलुक्० (पा० ७-१-३९) इत्यादिना द्वितीयायाः विभक्तेराजादेशः। आदित्यान्। अदितेरपत्या- न्यादित्याः। दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः (पा० ४-१-८५)। प्रत्ययस्वरः। मारुतम्। मरुतां विकारः। अनुदात्तादेश्च (पा० ४-३-१४०) इत्यञ्। ञित्त्वादाद्युदात्तः ॥३॥

चतुर्थीमृचमाह। हे इन्द्रादिदेवाः। वो युष्मदर्थमिन्दवः सोमाः प्रभ्रियन्ते। प्रकर्षेण संपाद्यन्ते। कीदृशाः। मत्सराः। तृप्तिकराः। मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः (नि० २-५) इति यास्कः। मादयिष्णवः। हर्षहेतवः। द्रप्साः। बिन्दुरूपाः। मध्वः। मधुराः। चमूषदः। चमूषु चमसादिपात्रेष्ववस्थिताः। प्र। प्राक् व्यवहिताश्च (पा० १-४-८२) इति व्यवहित- प्रयोगः। भ्रियन्ते। भृञो यङि रिङ् शयग्लिङ्क्षु (पा० ७-४-२८) इति रिङादेशः। हृग्रो वा। हृग्रहोर्भश्छन्दसि (पा० वा० ३-१-८२) इति हकारस्य भकारः। इन्दवः। उन्दी क्लेदने। उन्दन्ति पात्राणीति निदित्यनुवृत्तावुन्देरिच्चादेः (उ० १-१२) इत्युप्रत्ययः। आदिरिकारश्च। नित्त्वादाद्युदात्तः। मत्सराः। मद तृप्तियोगे। चिदित्यनुवृत्तौ कृधूमदिभ्यः कित् (उ० ३-७२) इति सरप्रत्ययः। तितुत्रतथसिसुसरकसेषु च (पा० ७-२-९) इतीट्प्रतिषेधः। चित्त्वादन्तोदात्तः। मादयिष्णवः। मदी हर्षग्लपनयोः। मदेर्ण्यन्तादिष्णुच्छन्दसि (पा० ३-२-१३७) इत्ययादेशः। चित्त्वादन्तोदात्तः। मध्वः। मधुशब्द आद्युदात्तः। मधुशब्दस्य व्यत्ययेन पुंल्लिङ्गत्वम्। सञ्ज्ञापूर्वको विधिरनित्यः (पा० प० ९३) इति जसि च (पा० ७-३-१०९) इति गुणो न भवति। चमूषदः। चमु छमु जमु झमु अदने। चम्यते भक्ष्यते येषु चमसेषु ते चम्वः। कृषिचमि० (उ० १-८१) इत्यादिना ऊः। तत्र सीदन्तीति चमूषदः। सत्सूद्विष० (पा० ३-२-६१) इत्यादिना क्विप्। सुषामादेराकृतिगणत्वात्षत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम् ॥४॥

पञ्चमीमृचमाह। हे अग्ने त्वामीळते। ऋत्विजः स्तुवन्ति। कीदृशाः। अवस्यवः। अवनं रक्षणं तद्धेतून्देवानिच्छन्तः। कण्वासः। मेधाविनः। वृक्तबर्हिषः। आस्तरणार्थं छिन्नदर्भाः। हवि- ष्मन्तः। हविर्युक्ताः। अरंकृतः। अलंकर्तारः। ईळते। ईड स्तुतौ। अनुदात्तेत्त्वादात्मनेपदम्। टेरेत्वम्। अदि- प्रभृतिभ्यः शपः (पा० २-४-७२) इति शपो लुक्। झस्यादादेशः। टेरेत्वम्। तास्यनुदात्तेदु० (पा० ६-१-१८६) इत्यादिना लसार्वधातुकस्यानुदात्तत्वाद्धातुस्वर एव शिष्यते। अवस्यवः। अवन्तीत्यवा देवाः। तानतिशयेनेच्छन्ति। सुप आत्मनः क्यच् (पा० ३-१-८)। क्यचि च (पा० ७-४-३३) इतीत्वं न भवति। न छन्दस्यपुत्रस्य (पा० ७-४-३५) इति निषेधात्। सर्वप्रातिपदिकेभ्यो लाल- सायां सुग्वक्तव्यः (पा० वा० ७-१-५१) इति सुक्। क्याच्छन्दसि (पा० ३-२-१७०) इत्यु-

प्रत्ययः। अतो लोपः। (पा० ६-४-४८) प्रत्ययस्वरेणान्तोदात्तत्वम्। कण्वासः। कण्व शब्दार्थः। कणन्ति ध्वनन्ति स्तोत्रपाठादिनेति कण्वा ऋत्विजः। अशिप्रुषि० (उ० १ १५७) इत्यादिना क्वन्। नित्त्वादाद्युदात्तः। आज्जसेरसुक् (पा० ७-१-५०) इत्यसुक्। वृक्तबर्हिषः। उक्तम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। हविष्मन्तः। हविरेषामस्तीति हविष्मन्तः। तसौ मत्वर्थे (पा० १-४-१९) इति भत्वेनापदत्वान्न रुत्वम्। अरङ्कृतः। अरमलं कुर्वन्तीत्यरंकृतः। क्विप् च (पा० ३-२-७६) इति क्विप्। ह्रस्वस्य तुक्। कपिलकादीनां सञ्ज्ञाछन्दसोर्वा लो रत्वमापद्यते (पा० म० ८-२-१८) लकारस्य रेफादेशः ॥५॥

षष्ठीमृचमाह। हे अग्ने त्वा त्वां येऽश्वा रथेन वहन्ति। कीदृशाः। घृतपृष्ठाः। पुष्टाङ्गत्वेन दीप्तपृष्ठाः। मनोयुजः। मनःसंकल्पमात्रेण रथे युज्यमानाः। वह्नयः। वोढारः। तैरश्वैः सोमपानहेतुयागार्थं देवानावहेति शेषः। घृतपृष्ठाः। घृ क्षरणदीप्त्योः। घृतं दीप्तं पृष्ठं येषां ते घृतपृष्ठाः। घृतशब्दः प्रत्ययस्वरेणान्तोदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। मनसा युज्यन्त इति मनोयुजः। ऋत्विग्दधृक्० (पा० ३-२-५९) इत्यादिना क्विन्। कृदुत्तरपदप्रकृतिस्वरत्वम्। त्वा। त्वामौ द्वितीयायाः (पा० ८-१-२३) इत्यनुदात्तस्त्वादेशः। वहन्ति। शप्तिपोरनुदात्तत्वाद्धातुस्वरः। यद्वृत्तयोगान्निघाताभावः। वह्नयः। निरित्यनुवृत्तौ वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् (उ० ४-५२) इति निप्रत्ययः। तस्य नित्त्वादाद्युदात्तत्वम्। सोमपीतये। उक्तम्। सकारे परतो नकारस्य संहितायां नश्च० (पा० ८-३-३०) इति धुगागमः। खरि च (पा० ८-४-५५) इति चर्त्वम्। चयो द्वितीयाः शरि पौष्करसादेः (पा० वा० ८-४-४८) इति द्वितीयस्थकारः ॥६॥

इति प्रथमस्य प्रथमे षड्विंशो वर्गः।

सूक्ते सप्तमीमृचमाह। हे अग्ने तानिन्द्रादीन्देवान्यजत्रान्यजनीयान्। ऋतावृधः। सत्यस्य यज्ञस्य वा वर्द्धकान्। पत्नीवतः। पत्नीयुक्तान्। कृधि। कुरु। हे सुजिह्व शोभनजिह्वोपेत। मध्वो मधुरस्य सोमस्य भागं देवान्पायय। यजत्रान्। अमिनक्षियजिवधिपतिभ्योऽत्रन् (उ० ३-१०४) इति यजेरत्रन् प्रत्ययः। ऋतावृधः। वृधु वृद्धौ। अन्तर्भावितण्यर्थात्क्विप् च (पा० ३-२-७६) इति क्विप्। अन्येषामपि दृश्यते (पा० ६ ३-१३७) इति पूर्वपदस्य दीर्घत्वम्। वृधेर्धातुस्वरः। समासे कृदुत्तरपदप्रकृतिस्वरत्वम्। अग्ने। पादादित्वान्नामन्त्रितनिघातः। षाष्ठिकमाद्युदात्तत्वम्। पत्नीवतः। पत्युर्नो यज्ञसंयोगे (पा० ४-१-३३) इति ङीप्। इकारस्य च नकारः। ता एषां सन्तीति मतुप्। छन्दसीरः (पा० ८-२-१५) इति वत्वम्। पतिशब्दो डतिप्रत्ययान्तत्वादाद्युदात्तः। ङीम्मतुपोरनुदात्तत्वात्स एव शिष्यते। कृधि। कृञो लोटः सिः। सेर्ह्यपिच्च (पा० ३ ४-८७) इति हिः। बहुलं छन्दसि (पा० २-४-७३) इति विकरणलुक्। श्रुशृणुपृकृवृभ्यश्छन्दसि (पा० ६-४-१०२) इति हेर्धिरादेशः। ङित्त्वाद् गुणाभावः। मध्वः। उक्तम्। सुजिह्व। आमन्त्रितनिघातः। पायय। पा पाने। पिबन्तं प्रयुङ्क्त इति हेतुमति च (पा० ३-१-२६) इति णिच्। शाच्छासाह्वाव्यावेपां युक् (पा० ७-३-३७) इति युक्। पूर्वस्यामन्त्रितस्याविद्यमानवत्त्वम्। अत एवाव्यवधायकत्वान्मध्व इत्यपेक्ष्य तिङ्ङतिङः (पा० ८ १-२८) इति निघातः ॥७॥

अष्टमीमृचमाह। ये देवा यजत्रा यष्टव्याः। तथा ये देवा ईड्याः स्तुत्याः। ते सर्वेऽपि। वषट्कृति

वषट्कारकाले वषट्कारयुक्ते यागे वा। हे अग्ने ते त्वदीयया जिह्वया मधोर्मधुरस्य सोमस्य भागं पिबन्तु। ये यजत्राः। गतम्। ईड्याः। ईड स्तुतौ। ऋहलोर्ण्यत् (पा० ३-१-१२४)। तित्स्वरिते प्राप्ते ईडवन्दवृशंसदुहां ण्यतः (पा० ६-१-२१४) इत्याद्युदात्तत्वम्। द्वितीयस्य ते शब्दस्य युष्मदादेशस्य सर्वानुदात्तत्वम्। मधोः। उप्रत्ययस्य नित्त्वादाद्युदात्तत्वम्। अग्ने आमन्त्रितनिघातः। वषट्कृति। करोतेः संपदादिभ्यो भावे क्विप्। वषड् इत्यस्य करणं यस्मिन्याग इति बहुव्रीहिः। वषडित्यस्य निपातत्वादाद्युदात्तत्वम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्॥८॥

नवमीमृचमाह। विप्रो मेधावी होता होमनिष्पादकोऽग्निरुषर्बुध उषःकाले यागगमनाय बुध्यमानान्विश्वान्देवान्सूर्यस्य सम्बन्धिनो रोचनात्स्वर्गलोकादिह कर्मणि आकीं वक्षति। आवहतु। आकीम्। निपात आद्युदात्तः। सूर्यस्य। सूर्यशब्दो राजसूयसूर्य० (पा० ३-१-११४) इत्यादिना क्यप्प्रत्ययान्तो निपातितः। क्यपः पित्त्वाद्धातुस्वरेणाद्युदात्तः। रोचनात्। रोचमानात्। रुच दीप्तौ। अनुदात्तेतश्च हलादेः (पा० ३-२-१४९) इति कर्तरि युच्। चितः (पा० ६-१-१६३) इत्यन्तोदात्तत्वम्। विश्वान्। विशेः क्वन्नन्तो नित्त्वादाद्युदात्तः। उषर्बुध्यन्त इत्युषर्बुधः। क्विप् च (पा० ३-२-७६) इति क्विप्। धातुस्वरेणोकार उदात्तः। समासे कृदुत्तरपदप्रकृतिस्वरत्वम्। विप्रः। ऋज्रेन्द्र० (उ० २-२१) इत्यादिना रन्। नित्त्वादाद्युदात्तः। होता। ह्वयतेस्ताच्छील्ये तृन्। बहुलं छन्दसि (पा० ६-१-३४) इति संप्रसारणम्। परपूर्वत्वम्। गुणः। नित्त्वादाद्युदात्तः। इह। इदमो हः (पा० ५-३-११) इति हप्रत्ययः। इदम इश् (पा० ५-३-३) इतीश्। शित्त्वात्सर्वादेशः। प्रत्ययस्वरः। वक्षति। वहेः प्रार्थनायां लिङर्थे लेट् (पा० ३-४-७)। तस्य तिप्। कर्तरि शप् (पा० ३-१-६८)। शपि परतः सिब्बहुलं लेटि (पा० ३-१-३४) इति सिप्। ढत्वकत्वषत्वानि। तिङ्ङतिङः (पा० ८-१-२८) इति निघातः।

अग्निष्टोमे प्रउगशस्त्रस्य याज्या विश्वेभिः सोम्यं मध्विति। स्तोत्रमग्रे शस्त्रादिति खण्डे सूत्रितम्। विश्वेभिः सोम्यं मध्विति याज्या (आ० श्रौ० ५-१०) इति।

तामेतां याज्यां सूक्ते दशमीमृचमाह। हे अग्ने त्वं विश्वेभिः सर्वैः पूषभगादिभिर्देवैरिन्द्रेण वायुना मित्रस्य सम्बन्धिभिर्धामभिस्तेजोभिर्मूर्तिविशेषरूपैश्च सह सोम्यं सोमसम्बन्धि मधु मधुरं भागं पिब। विश्वेभिः। बहुलं छन्दसि (पा० ७-१-१०) इति भिस ऐसादेशाभावः। सोम्यम्। सोममर्हति यः (पा० ४-४-१३७) इत्यनुवृत्तौ मये च (पा० ४-४-१३८) इति यप्रत्ययः सोमस्य विकार इत्यर्थे। यस्येति च (पा० ६-४-१४८) इत्यकारलोपः। प्रत्ययस्वरः। मधु। फलिपाटिनमिमनि० (उ० १-१८) इत्यादिना उप्रत्ययः। निदित्यनुवृत्तेर्नित्त्वादाद्युदात्तः। वायुना। कृवापाजि० (उ० १-१) इत्यादिना उण्। आतो युक् चिण्कृतोः (पा० ७-३-३३) इति युक्। प्रत्ययस्वरः। पिब। पा पाने। लोटः सेर्हिरादेशः। शपि पाघ्रा० (पा० ७-३-७८) इत्यादिना पिबादेशः। अतो हेः (पा० ६-४-१०५) इति हेर्लुक्। शपः पित्त्वाद्धातुस्वरः। पादादित्वान्न निघातः। द्व्यचोऽतस्तिङः (पा० ६-३-१३५) इति संहितायां दीर्घः। धामभिः। धाञ्। आतो मनिन्० (पा० ३-२-७४) इति मनिन्। नित्स्वरः॥१०॥

एकादशीमृचमाह। हे अग्ने मनुर्हितो मनुषा होत्रादिरूपेण मनुष्येण हितः संपादितो होता होमनिष्पादको यस्त्वं यज्ञेषु सीदसि। तिष्ठसि। स त्वं नोऽस्मदीयमिममध्वरं यज्ञं

यज। निष्पाद्य। मनुर्हितः। मन्यते इति मनुः। जनेरुस् (उ० २-११५) इत्यनुवृत्तौ बहुलमन्यत्रापि (उ० २-११६) इति मनेरुस्। अर्तिपृवपि० (उ० २-११७) इत्यादिना नित्त्वानुवृत्तौ नित्त्वादाद्युदात्तः। हितः। धाञो धातोर्निष्ठा (पा० ३-२-१०२) इति क्तप्रत्ययः। दधातेर्हिः (पा० ७-४-४२) इति हिरादेशः। मनुषा हितो मनुर्हितः। कर्तृकरणे कृता बहुलम् (पा० २-१-३२) इति समासः। कृत्स्वरापवादेन तृतीया कर्मणि (पा० ६-२-४८) इति पूर्वपदप्रकृतिस्वरत्वम्। सीदसि। षद्लृ विशरणगत्यवसादनेषु। लटः सिप्। शपि पाघ्राध्मा० (पा० ७-३-७८) इत्यादिना सीदादेशः। निघातः। सेममित्यत्र संहितायां सोऽचि लोपे चेत्पादपूरणम् (पा० ६-१-१३४) इति सोर्लोपे गुणः। अध्वरम्। न विद्यते ध्वरो हिंसा यस्मिन्सोऽध्वरः। नञ्सुभ्याम् (पा० ६-२-१७२) इत्युत्तरपदान्तोदात्तत्वम्। नो अध्वरमित्यत्र संहितायामेङः पदान्तादति (पा० ६-१-१०९) इति पूर्वरूपं प्राप्तं प्रकृत्यान्तःपादमव्यपरे (पा० ६-१-११५) इति प्रकृतिभावान्निवर्तते ॥११॥

द्वादशीमृचमाह। हे देवाग्ने रोहितो रोहिच्छब्दाभिधेयास्त्वदीया अश्वा रथेषु युक्ष्व। युङ्क्ष्व। योजय। हिशब्दः पादपूरणार्थः। कीदृशीः। अरुषीः। गतिमतीः। हरितः। हर्तुं रथारूढान्पुरुषान्नेतुं समर्थाः। ताभिर्वडवाभिरिहास्मिन्कर्मणि देवानावह। युक्ष्व। युजिर् योगे। लोट्। स्वरितेत्त्वादात्मनेपदम्। थासः से (पा० ३-४-८०) इति से आदेशः। सवाभ्यां वामौ (पा० ३-४-९१) इति एकारस्य वकारः रुधादिभ्यः श्नम् (पा० ३-१-७८) इति श्नम्। तस्य बाहुलकाल्लुक्। कुत्वषत्वे। प्रत्ययस्वरेणान्तोदात्तः। संहितायां द्व्यचोऽतस्तिङः (पा० ६-३-१३५) इति दीर्घः। अरुषीः। ऋ गतौ। इयर्ति गच्छन्ति इत्यरुष्यो वडवाः। ऋहनिभ्यामुषन् (उ० ४-८४) इत्युषन्प्रत्ययः। गुणो रपरत्वम्। नित्त्वादाद्युदात्तोऽरुषशब्दः। तस्मात्स्त्रियां छान्दसो ङीप्। शसि प्रथमयोः पूर्वसवर्णः (पा० ६-१-१०२) इति दीर्घः। रथे। रमेरौणादिकः कथन्प्रत्ययः। नित्त्वादाद्युदात्तः। हरितः। हृसृरुहियुषिभ्य इतिः (उ० १-९७) इति हरतेरितिप्रत्ययः। इकारः प्रत्ययस्वरेणोदात्तः। रोहितः। रुहेरपि तेनैव सूत्रेणेतिः। इकारः प्रत्ययस्वरेणोदात्तः। ताभिः। सावेकाचः० (पा० ६-१-१६८) इति विभक्तेः प्राप्तमुदात्तत्वं ॰सावर्ण॰ (पा० ६-१-१८२) इति निषिध्यते। देवानित्यत्र पूर्ववद्रुत्वानुनासिकौ ॥१२॥

इति प्रथमस्य प्रथमे सप्तविंशो वर्गः ॥

॥१५॥

१·१५

इन्द्र सोममित्यादिकस्य द्वादशर्चस्य चतुर्थस्य सूक्तस्य ऋषिच्छन्दसी पूर्ववत्। यद्यप्येतत् सूक्तं कृत्स्नमृतुदेवताकं तथापि प्रत्यृचमिन्द्रादिदेवतान्तराणि मिलितानि। तथा चानुक्रम्यते। इन्द्र सोममृतव्यं तत्रेन्द्री मारुती त्वाष्ट्र्याग्नेय्यैन्द्री मैत्रावरुणी चतस्रो द्राविणोदस्य आश्विन्याग्नेय्यृतुदेवताः सर्वत्रेति। विनियोगस्तु स्मार्तो द्रष्टव्यः।

तस्मिन्सूक्ते प्रथमामृचमाह। हे इन्द्र ऋतुना सह सोमं पिब। इन्दवः पीयमानाः सोमास्त्वा त्वामाविशन्तु। कीदृशाः। मत्सरासः। तृप्तिकराः। तदोकसः। तन्निवासाः। सर्वदा त्वदुदरस्थायिन इत्यर्थः। इन्द्र। षाष्ठिकमामन्त्रिताद्युदात्तत्वम्। सोमम्। अर्तिस्तुसु० (उ० १-१४५) इत्यादिना मन्। नित्त्वादाद्युदात्तः। पिब। पिबा मित्रस्येत्यत्रोक्तम्। अस्या त्वा विशन्त्वित्युत्तरवाक्यगताख्यातार्थेन सह समुच्चयार्थश्चशब्दो लुप्तः। अतश्चादिलोपे विभाषा (पा० ८-१-६३) इति प्रथमा तिङ्विभक्तिर्न निहन्यते। विशन्त्विति चलोपसाम्येऽपि द्वितीयत्वान्निहन्यत एव। संहितायामाद्गुणः (पा० ६-१-८७) इति प्राप्तस्य गुणस्य ऋत्यकः (पा० ६-१-१२८) इति शाकल्यमते प्रकृतिभावादभावः। इन्दवः। प्र वो भ्रियन्त इत्यत्रोक्तम्। मत्सरासः। तत्रैवोक्तम्। आज्जसेरसुक् (पा० ७-१-५०) इत्यसुक्। तदोकसः। तदेवोकः स्थानं येषां ते तथोक्ताः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥१॥

द्वितीयामृचमाह। हे मरुत ऋतुना सह पोत्रात्पोतृनामकस्य ऋत्विजः पात्रात्सोमं पिबत। ततोऽस्मदीयं यज्ञं पुनीतन। शोधयत। हे सुदानवः। शोभनदातारो मरुतः। हि यस्माद्यूयं स्थ। युष्माकं शोधयितृत्वं प्रसिद्धम्। तस्माच्छोधयतेत्यर्थः। पिबत। अत्र तिङोऽदुपदेशाल्लसार्वधातुकानुदात्तत्वम्। धातुस्वरः। पूर्वामन्त्रितस्याविद्यमानवत्त्वेन पदादपरत्वान्निघाताभावः। पूर्ववत्प्रकृतिभावः। पोत्रात्। पोतुः सम्बन्धि पात्रं पोत्रम्। तस्येदम् (पा० ४-३-१२०) इत्यण्। तद्धितेष्वचामादेः (पा० ७-२-११७) इति प्राप्तावृद्धिः सर्वं विधयश्छन्दसि विकल्प्यन्ते (पा० प० ३५) इति न भवति। नन्वेवमन्त्यस्य ऋकारस्याचो ञ्णिति (पा० ७-२-११५) इति वृद्धिः प्राप्नोति। त्वाष्ट्र जागत इत्यत्र हि विप्रतिषेधे परं कार्यम् (पा० १-४-२) इति परयाऽऽदिवृद्ध्याऽन्त्योपधालक्षणा वृद्धिर्बाध्यत इत्युक्तम्। इह तु परस्या आदिवृद्धेश्छान्दसत्वेन निवृत्तत्वादन्त्यवृद्धिः प्राप्नोत्येवेति। एवं तर्ह्यत्राप्यादिवृद्धिरौकारः क्रियताम्। तस्य तु छान्दस ओकारो भविष्यति। पुनीतन। पूञ् पवने। लोट्। लोटो लङ्वत् (पा० ३-४-८५) इति लङ्वद्भावात् थस्य तस्थस्थमिपाम्० (पा० ३-४-१०१) इति तादेशः। क्र्यादिभ्यः श्ना (पा० ३-१-८१)। ई हल्यघोः (पा० ६-४-११३) इति ईकारः। तप्तनप्तनथनाश्च (पा० ७-१-४५) इति तनादेशः। प्वादीनां ह्रस्वः (पा० ७-३-८०) इति ह्रस्वः। प्रत्ययद्वयस्यापि सार्वधातुकमपित् (पा० १-२-४) इति ङित्त्वात्स्वरस्यपूर्वयोरिकोर्गुणाभावः। यूयम्। युष्मदः परस्य जसो ङेप्रथमयोरम् (पा० ७-१-२८) इत्यमादेशः। न विभक्तौ तुस्माः (पा० १-३-४) इति मकारस्येत्सञ्ज्ञाप्रतिषेधः। यूयवयौ जसि (पा० ७-२-९३) इति मपर्यन्तस्य यूयादेशः। शेषे लोपः (पा० ७-२-९०)। अत्र यूयादेशात्प्रागेवान्तरङ्गत्वात्प्रातिपदिकस्यान्तोदात्तत्वम्। शेषनिघातः। ततो यूयादेशः स्थानेऽन्तरतमः (पा० १-१-५०) इति सर्वानुदात्तः। तत्र शेषलोपोऽन्त्यलोप इति पक्षे सवर्णदीर्घत्वं बाधित्वा योऽयममि पूर्वः (पा० ६-१-१०७) इति प्रतिपदिकान्तेनोदात्तेन सहानुदात्तस्य सुप एकादेशः स एकादेश उदात्तेनोदात्तः (पा० ८-२-५) इत्युदात्तः। टिलोपपक्षे तूदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। स्थ। अस भुवि। लटो मध्यमबहुवचनं थः। अदिप्रभृतिभ्यः शपः (पा० २-४-७२) इति शप लुक्। श्नसोरल्लोपः (पा० ६-४-१११) इत्यकारलोपः। व्यत्ययेन षत्वम्। हि च (पा० ८-१-३४) इति निषेधात्तिङ्ङतिङः (पा० ८-१-२८) इति

निघातो न भवति। संहितायामन्येषामपि दृश्यते (पा० ६-३-१३७) इति दीर्घत्वम्। अत्र हे सुदानवो यूयं हि स्थेति विवक्षितम्। सुदानवः। दाभाभ्यां नुः (उ० ३-३२)। सोः प्रादिसमासः। आमन्त्रितनिघातः। अत्र यूयमित्युद्दिश्य सुदानवः स्थेति न विधीयते येनानामन्त्रितत्वान्निघातो न स्यात्। किन्तु सुदानव इति सिद्धवदनूद्य संबोध्यान्येषु मारुतसूक्तेषु मरुतां प्रसिद्धात्प्रभावातिशयाद्यूयं स्थेति युष्मच्छब्देन प्रतिनिर्दिश्य पुनीततेति प्रार्थने पवने तेषां हेतुत्वं हिशब्देनोच्यते ॥२॥

तृतीयामृचमाह। ग्नाशब्दः स्त्रीवाची। तथाच यास्क आह मेना ग्ना इति स्त्रीणां मेना मानयन्त्येना ग्ना गच्छन्त्येनाः (नि० ३-२१) इति। ग्ना अस्य सन्तीति ग्नावान्। नेष्टृशब्दोऽत्र त्वष्टारं देवमाह। कस्मिंश्चिद्दैवसत्रे नेष्टृत्वेन त्वष्टुर्वृतत्वात्। हे ग्नावः पत्नीयुक्त। नेष्टः। त्वष्टः। नोऽस्मदीयं यज्ञमभिगृणीहि। अभितो देवानां समीपे स्तुहि। ऋतुना सह त्वं सोमं पिब। हि यस्मात्त्वं रत्नधा असि। रत्नानां दातासि। दाता भवसि। तस्मात्सोमं पातुमर्हसीत्यर्थः। अभि। उपसर्गाश्चाभिवर्जम् (फि० ४-१३) इति पर्युदासादभेरन्तोदात्तत्वम्। गृणीहि। गॄ शब्दे। लोटि सिपो हिः। क्र्यादिभ्यः श्ना (पा० ३-१-८१)। हेर्ङित्त्वादी हल्यघोः (पा० ६-४-११३) इतीत्वम्। श्नाप्रत्ययस्य ङित्त्वाद्गुणाभावः। प्वादीनां ह्रस्वः (पा० ७-३-८०)। तिङ्ङतिङः (पा० ८-१-२८) इति निघातः। ग्ना अस्य सन्तीति मतुप्। व्यत्ययेन वत्वम्। सम्बुद्धौ मतुवसोरु० (पा० ८-३-१) इति रुत्वम्। विसर्गः। पादादित्वेनामन्त्रितनिघाताभावात्षाष्ठिकमामन्त्रितायुदात्तत्वम्। ग्नाव इत्यस्य विशेषणतया विशेषवचनत्वान्नामन्त्रिते समानाधिकरणे० (पा० ८-१-७३) इति निषेधाभावादविद्यमानवत्त्वेनोत्तरस्य नेष्टृशब्दस्य षाष्ठिकमाद्युदात्तत्वम्। पिब। शपः पित्त्वाद्धातुस्वरः। पूर्वयोरामन्त्रितयोरविद्यमानवत्त्वेन निघाताभावः। रत्नानि दधातीति रत्नधाः। क्विप् च (पा० ३-२-७६) इति क्विप्। धातुस्वरः। समासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते। असि। सिपः पित्त्वाद्धातुस्वरः। तिङ्ङतिङः (पा० ८-१-२८) इति निघातो न भवति। हि च (पा० ८-१-३४) इति प्रतिषेधात् ॥३॥

चतुर्थीमृचमाह। हे अग्ने देवानिहास्मिन्कर्मण्यावह। ततो योनिषु स्थानेषु त्रिषु सवनेषु सादय। देवानुपवेशय। ततस्तान्परिभूष। अलङ्कुरु। ऋतुना सह त्वं सोमं पिब। अग्ने देवानित्ययं पादो गतः। योनिषु। यु मिश्रणे। वहिश्रि० (उ० ४-५२) इत्यादिना निप्रत्ययः। नित्त्वादाद्युदात्तः। त्रिषु। षट्त्रिचतुर्भ्यो हलादिः (पा० ६-१-१७९) इति विभक्तेरुदात्तत्वम्। भूष अलङ्कारे। तिङ्ङतिङः (पा० ८-१-२८) इति निघातः। पिब। ऋतुना। गतौ ॥४॥

पञ्चमीमृचमाह। हे इन्द्र ब्राह्मणाद् ब्राह्मणाच्छंसिसम्बद्धाद्राधसो धनभूतात्पात्रात्सोमं पिब। किं कृत्वा। ऋतूननु ऋतुदेवाननुसृत्य। ऋतवोऽपि पिबन्त्वित्यर्थः। हि यस्मात्तेत्तव सख्यमस्तृतमृतूनामविच्छिन्नम्। तस्मादृतुभिः सह पानं युक्तम्। ब्राह्मणात्। ब्रह्मशब्देनात्र ब्रह्मवर्गे द्वितीयो ब्राह्मणाच्छंसी कथ्यते। स च पुँल्लिङ्गः शेषनिघातेनानुदात्तादिः। तस्य सम्बन्धि पात्रमसः। स च तस्यैवावयववन्नियत इत्यवयवविवक्षायामनुदात्तादेरञ् (पा० ४-२-४४)। तेन ञित्त्वादाद्युदात्तश्चमसपरोऽत्र ब्राह्मणशब्दः। राधसः। सर्वधातुभ्योऽसुन् (उ० ४-१८०)।

नित्स्वादाद्युदात्तः। पिब। पादादित्वादाद्युदात्तत्वम्। द्व्यचोऽतस्तिङः ( पा० ६-३-१३५ ) इति दीर्घत्वम्। ऋतूँरन्वित्यत्र दीर्घादटि समानपादे ( पा० ८-३-९ ) इति नकारस्य रुत्वम्। अत्रानुनासिकः पूर्वस्य तु वा ( पा० ८-३-२ ) इत्यूकारस्यानुनासिकत्वम्। तव। युष्मदस्मद्भ्यां ङसोऽश् ( पा० ७-१-२७ )। शित्त्वात्सर्वादेशः। तवममौ ङसि ( पा० ७-२-९६ ) इति तवादेशः। युष्मदस्मदोर्ङसि पा० ६-१-२११ इत्याद्युदात्तत्वम्। सख्यम्। सख्युः कर्म सख्यम्। सख्युर्यः ( पा० ५-१-१२६ )। यस्येति० ( पा० ६-४ १४८ ) इति लोपः। प्रत्ययस्वरः। अस्तृतम्। स्तृणातेर्हिंसार्थस्य क्तः। नञ्समासः। अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥५॥

षष्ठीमृचमाह। हे धृतव्रता स्वीकृतकर्माणौ मित्रावरुणा हे मित्रनामकवरुणनामकौ देवौ। युवमुभौ युवामृतुना सहास्मदीयं यज्ञमाशाथे। व्याप्नुथः। कीदृशं यज्ञम्। दक्षम्। प्रवृद्धम्। दूळभम्। दुर्दहम्। शत्रुभिर्दग्धुं विनाशयितुमशक्यमित्यर्थः। युवम्। प्रथमाद्विवचनस्य ङे प्रथमयोः० ( पा० ७-१-२८ ) इत्यमादेशः। युवावौ द्विवचने ( पा० ७-२-९२ ) इति मपर्यन्तस्य युवादेशः। शेषे लोपः ( पा० ७-२-९० ) इति टिलोपोऽन्त्यलोपो वा। अमि पूर्वत्वम्। भाषायामेव णत्वम्। टिलोपपक्ष उदात्तनिवृत्तिस्वरेणाम उदात्तत्वम्। अन्त्यलोपपक्ष एकादेश उदात्तः। दक्षम्। दक्ष वृद्धौ। दक्षन्त्यनेनेति करणे घञ्। एवं हि पुँल्लिङ्गत्वनियमः। अन्यस्यानियम इति नपुंसकत्वम्। धृतव्रता मित्रावरुणा। धृतानि व्रतानि याभ्यां तौ धृतव्रतौ। मित्रश्च वरुणश्च मित्रावरुणौ। उभयत्र सुपां सुलुक० ( पा० ७-१-३९ ) इत्यादिना विभक्तेराकारः। मित्रशब्दस्य देवताद्वन्द्वे च ( पा० ६-३-२६ ) इत्यानङादेशः। प्रथमस्यामन्त्रितनिघातः। द्वितीयस्य पादादित्वादाद्युदात्तत्वम्। संहितायां छान्दसं ह्रस्वत्वम्। दूळभम्। दह भस्मीकरणे। दुःखेन दह्यत इति दुर्दहम्। ईषद्दुःसुषु० ( पा० ३-३-१२६ ) इत्यादिना दुरुपपदे दहेः खल्। व्यत्ययो बहुलम् ( पा० ३-१-८५ ) इत्युकारस्य ऊकारो रेफस्य लोपो दकारस्य डकारो हकारस्य भकारः। लिति ( पा० ६-१-१९३ ) इति प्रत्ययात्पूर्वमुदात्तत्वम्। कृदुत्तरपदत्वेन स एव शिष्यते। आशाथे। अशू व्याप्तौ। छन्दसि लुङ्लङ्लिटः ( पा० ३-४-६ ) इति वर्तमाने लिट्। मध्यमद्विवचनमाथाम्। टेरेत्वम्। अत आदेः ( पा० ७-४-७० ) इत्यभ्यासस्य दीर्घः। अश्नोतेश्च ( पा० ७-४-७२ ) इति प्राप्तो नुडागमोऽनित्यमागमशासनम् इति निवर्तते ॥६॥

इति प्रथमस्य प्रथमेऽष्टाविंशो वर्गः।

सूक्ते सप्तमीमृचमाह। अध्वरेऽग्निष्टोमे प्रकृतिरूपे यज्ञेषु विकृतिरूपेषु उक्थ्यादिषु च देवमग्निमीळते। ऋत्विजः स्तुवन्ति। कीदृशा ऋत्विजः। द्रविणसः। धनार्थिनः। ग्रावहस्तासः। अभिषवसाधनपाषाणधारिणः। कीदृशं देवम्। द्रविणोदाः। धनप्रदम्। यद्वा धनप्रदोऽग्निः। सोमं पिबत्विति शेषः। तमेतं मन्त्रं यास्क एवं निराह द्रविणोदाः कस्माद्धनं द्रविणमुच्यते यदेनदभिद्रवन्ति बलं वा द्रविणं यदेनेनाभि द्रवन्ति तस्य दाता द्रविणोदास्तस्यैषा भवति द्रविणोदा द्रविणसः ( नि० ८-१२ ) इत्यादि। सोऽयं यास्कोक्तो निर्वचनप्रपञ्चस्तस्मिन्नेव ग्रन्थेऽवगन्तव्यः। द्रविणोदाः। द्रुदक्षिभ्यामिनन् ( उ० २-५१ )। नित्स्वादाद्युदात्तो द्रविणशब्दः। तद्ददातीति द्रविणोदाः। क्विप् च ( पा० ३ २-७६ ) इति क्विप्। पूर्वपदस्य सकारोपजनश्छान्दसः।

हस्त्वोत्वे। कृदुत्तरपदप्रकृतिस्वरत्वम्। देवविशेषणत्वेनैकवाक्यतापत्ते द्वितीयायाः स्वादेशः। अथवा द्रविणमात्मन इच्छन्ति द्रविणस्यन्ति। सुप आत्मनः क्यच् ( पा० ३-१-८ )। सर्वप्रातिपदिकेभ्यो लालसायां सुग्वक्तव्यः ( पा० वा० ७-१-५१ ) इति क्यचि परतः सुगागमः। द्रविणस्यतेः सम्पदादित्वाद्भावे क्विप्। अतो लोपः ( पा० ६-४-४८ )। कौ लुप्तं न स्थानिवद्भवति ( पा० वा० १-१-५८ ) इति तस्य स्थानिवत्त्वप्रतिषेधाद्यलोपः। एवं द्रविणःशब्दो धनेच्छावचनः। द्रविणेच्छां दस्यति यथेष्टधनप्रदानेनोपक्षपयतीत्यर्थे दसु उपक्षये इत्यस्मादन्तर्भावितण्यर्थात्क्विप् च ( पा० ३-२ ७६ ) इति क्विप्। एवं द्रविणोद:शब्दः सकारान्तो भवति। तथा द्राविणोदसाः प्रवादा भवन्ति ( नि० ८-२ ) इति नैरुक्तो व्यवहार उपपद्यते। अतो द्रविणोदश्शब्दे भिन्नवाक्यत्वे स्वार्थे प्रथमा। एकवाक्यत्वे तु व्यत्ययेन द्वितीयार्थे भवति। द्रविणस इत्यत्रापि वाक्यभेदपक्षे द्रविणसः सोमस्येत्यर्थे सकारोपजनश्छान्दसः। आद्युदात्तत्वं तु नियमेन स्थितम्। ऋत्विग्विशेषणत्वेनैकवाक्यत्वपक्षे तु क्यजन्तात्क्विप्। अतोलोपादि पूर्ववत्। अत्र तु पक्षे क्यचश्चित्त्वेनान्तोदात्तत्वे प्राप्ते व्यत्ययेनाद्युदात्तत्वम्। ग्रावयुक्ता हस्ता येषां ते ग्रावहस्तासः। आज्जसेरसुक् ( पा० ७-१-५० )। ग्रावशब्दो वृषादित्वादाद्युदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। अध्वरे। न विद्यते ध्वरो हिंसा यस्मिन्। नञ्सुभ्याम् ( पा० ६-२-१७ ) इत्युत्तरपदान्तोदात्तत्वम्। ईळते। अनुदात्तेत्त्वादात्मनेपदम्। अदिप्रभृतिभ्यः० ( पा० २-४.७२ ) इति शपो लुक्। झस्यादादेशः ॥७॥

अष्टमीमृचमाह। द्रविणोदा देवो नोऽस्मभ्यं वसूनि धनानि ददातु। यानि धनानि श्रृण्विरे हविरुपयुक्तत्वेन श्रूयन्ते। ता तानि च सर्वाणि धनानि देवेषु निमित्तभूतेषु वनामहे। सम्भजामः। धनैर्देवान्यष्टुं तानि स्वीकुर्म इत्यर्थः। द्रविणोदाः। गतम्। वसूनि। शृस्वृस्निहि० ( उ० १-१० ) इत्यादिना उप्रत्ययः। निदित्यनुवृत्तेराद्युदात्तः। श्रृण्विरे। श्रु श्रवणे। छन्दसि लुङ्लङ्लिटः ( पा० ३-४-६ ) इति वर्तमाने लिट्। झः। इरेच्। छन्दस्युभयथा ( पा० ३-४-११७ ) इति सार्वधातुकत्वे व्यत्ययेन श्नुः। तत्सन्नियोगेन श्रृभावश्च। उवङि प्राप्ते हुश्नुवोः सार्वधातुके ( पा० ६-४-८७ ) इति यणादेशः। चितः ( पा० ६-१-१६३ ) इत्यन्तोदात्तत्वम्। यद्वृत्तान्नित्यम् ( पा० ८-१-६६ ) इति निघातप्रतिषेधः। ता। शेश्छन्दसि बहुलम् ( पा० ६-१-१७० ) इति शेर्लोपः। नलोपः प्रातिपदिकान्तस्य ( पा० ८-२-७ ) इति नलोपः। वनामहे। वन षण सम्भक्तौ। व्यत्ययेनात्मनेपदम् ॥८॥

नवमीमृचमाह। द्रविणोदा देव ऋतुभिः सह नेष्ट्रान्नेष्टृसम्बन्धिपात्रात्पिपीषति। सोमं पातुमिच्छति। ततो हे ऋत्विज इष्यत। होमस्थाने गच्छत। गत्वा च जुहोत होमं कुरुत। हुत्वा प्र तिष्ठत च। होमस्थानात्स्थानान्तरं प्रति प्रस्थानमपि कुरुत। द्रविणोदाः। गतम्। पिपीषति। पा पाने। पातुमिच्छतीति सन्। छान्दस ईकारः। तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातः। जुहोत। लोण्मध्यमबहुवचनम्। तस्य लङ्वद्भावात्तादेशः। तस्य तप्तनप्तनथनाश्च ( पा० ७-१-४५ ) इति तबादेशः। तस्य पित्त्वाद्गुणः। अभ्यस्तानामादिः ( पा० ६-१-१८९ ) इत्यनुवृत्तावनुदात्ते च ( पा० ६-१-१९० ) इत्याद्युदात्तत्वे प्राप्ते भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति ( पा० ६-१-१९२ ) इत्योकार उदात्तः। तिष्ठत। ष्ठा गतिनिवृत्तौ। लोण्मध्यमबहुवचनस्य थस्य लङ्वद्भावात्तादेशः। शपि पाघ्राध्मा० ( पा० ७-३-७८ ) इत्यादिना तिष्ठादेशः। समवप्रविभ्यः

स्थः ( पा० १-३-२२ ) इत्यात्मनेपदं न भवति। तत्रानुवृत्तस्य निर्दिष्टग्रहणस्यानन्तर्यार्थकत्वात्। अत्र चशब्देन व्यवधानात्ते प्राग्धातोः ( पा० १-४-८० ) इत्युपसर्गत्वेन प्राक् प्रयोक्तव्यस्यापि प्रशब्दस्य व्यवहिताश्च ( पा० १-४-८२ ) इति छन्दसि व्यवहितप्रयोगः। अत्र चशब्दो जुहोतेति पूर्वेण सह समुच्चयार्थः। न पुनरिष्यतेत्युत्तरेण। तेनाप्रथमत्वाच्चवायोगे प्रथमा ( पा० ८-१-५९ ) इति निषेधाभावात्तिङ्ङतिङः ( पा० ८-१-२८ इति ) निघातः। नेष्ट्रात्। पोत्राद्यज्ञं पुनीतनेत्यत्र पोत्रशब्देन यदुक्तं तदत्र द्रष्टव्यम्। इष्यत। इष गतौ। लोण्मध्यमबहुवचनम् ॥९॥

दशमीमृचमाह। हे द्रविणोदो देव यद्यस्मात्कारणादृतुभिः सह त्वां यजामहे। अधेत्ययं निपातस्तच्छब्दार्थः। तस्मात्कारणान्नोऽस्मभ्यं ददिर्धनस्य दाता भव स्म। अवश्यं भव। तुरीयम्। चतुर्णां पूरणम्। चतुरश्छयतावाद्यक्षरलोपश्च ( पा० वा० ५-२-५१ ) इति छप्रत्ययः। तस्य प्रत्ययस्वरेणोदात्तात्प्रागेवायनेयीनी० ( पा० ७-१-२ ) इत्यादिनेयादेशः। आयन्नादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थम् ( पा० वा० ७-१-२ ) इति वचनात्कृत आदेशे प्रत्ययस्वरेणेकार उदात्तः। द्रविणोदः। उक्तम्। पादादित्वादामन्त्रिताद्युदात्तत्वम्। यजामहे। अत्र शपः पित्त्वेन तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव। पूर्वस्यामन्त्रितस्याप्यविद्यमानवत्त्वाद्यद्वृत्तयोगाद्वा न निघातः। व्यवहितयोगेऽपि हि स निषेध इत्युक्तम्। अध। छान्दसो धकारः। स्म। चादिरनुदात्तः। संहितायां निपातस्य च ( पा० ६-३-१३६ ) इति दीर्घः। ददिः। डुदाञ् दाने। आदृगमहनजनः किकिनौ लिट् च ( पा० ३-२-१७१ ) इति किप्रत्ययः। लिड्वद्भावाद्द्विर्वचनादि। आतो लोप इटि च ( पा० ६-४-६४ ) इत्याकारलोपः। प्रत्ययस्वरः ॥१०॥

एकादशीमृचमाह। हे अश्विनौ मधु माधुर्योपेतं सोमं पिबतम्। कीदृशौ। दीद्यग्नी। द्योतमानाहवनीयाद्यग्नियुक्तौ। शुचिव्रता। शुद्धकर्माणौ। ऋतुना ऋतुदेवतया सह। यज्ञवाहसा। यज्ञस्य निर्वाहकौ। अश्विना। संबोधनद्विवचनस्य सुपां सुलुक्० ( पा० ७-१-३९ ) इत्याकारः। आमन्त्रिताद्युदात्तः। पिबतम्। शपः पित्त्वादनुदात्तत्वम्। तिङश्च लसार्वधातुकस्वरे धातुस्वर एव शिष्यते। मधु। फलिपाटि० ( उ० १-१८ ) इत्यादिना उप्रत्ययः। नित्यनुवृत्तेर्नित्त्वादाद्युदात्तः। दीद्यग्नी। दिवु क्रीडादौ। अन्येभ्योऽपि दृश्यन्ते ( पा० ३-२-७५ ) इति विच्। वेरपृक्तलोपाद्वलि लोपो बलीयानिति प्रथमवकारस्य लोपः। प्रथमं प्रत्ययलोपे हि वर्णाश्रयविधौ प्रत्ययलक्षणं नास्ति ( पा० प० २१ ) इति निषेधाद्वलि लोपो न स्यात्। छान्दसं द्विर्वचनम्। तुजादित्वादभ्यासस्य दीर्घत्वम्। यङ्लुगन्ताद्वा सञ्ज्ञापूर्वको विधिरनित्यः ( पा० प० ९३ ) इति अभ्यासस्य गुणाभावः। दीदिरग्निर्ययोस्तौ दीद्यग्नी। आमन्त्रिताद्युदात्तत्वम्। पादादित्वान्न निघातः। शुचिव्रता। शुचि व्रतं ययोस्तौ। सुपां सुलुक्० ( पा० ७-१-३९ ) इत्याकारः। दीद्यग्निशब्दस्य सामान्यवचनत्वेन नामन्त्रिते० ( पा० ८-१-७३ ) इत्यविद्यमानवत्त्वप्रतिषेधादाष्टमिकनिघातत्वम्। पूर्वस्य पराङ्गवद्भावाद्वैकस्वर्यम्। यज्ञवाहसा। वह प्रापणे। यज्ञं वहत इति यज्ञवाहसौ। वहिहाधाञ्भ्यश्छन्दसि ( उ० ४-२२० ) इत्यसुन्। तत्र हि गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च ( उ० ४-२२६ ) इति वचनात्सोपपदानामपि भवति इत्युक्तम्। णिदित्यनुवृत्तेरुपधावृद्धिः। सुपां सुलुक्० ( पा० ७-१-३९ ) इत्यादिना विभक्तेराकारः। आमन्त्रितनिघातः। असामर्थ्यात्पूर्वस्य न पराङ्गवद्भावः ॥११॥

द्वादशीमृचमाह। हे सन्त्य फलप्रदाग्ने देव। गार्हपत्येन गृहपतिसम्बन्धिना रूपेण युक्तः सन्नृतुना ऋतुदेवेन सह यज्ञनीर्यज्ञस्य निर्वाहकोऽसि। तस्मात्त्वं देवयते देवविषयककामनायुक्ताय यजमानाय देवान्यज। गार्हपत्येन। गृहपतिना संयुक्ते ञ्यः ( पा० ४-४-९० )। यस्य० ( पा० ६-४-१४८ ) इति लोपः। ञित्त्वादादिवृद्धिराद्युदात्तत्वं च। गृहपतित्वमित्यर्थे पत्यन्तपुरोहिता-दिभ्यः० ( पा० ५-१-१२८ ) इति यकि तु अन्तोदात्तत्वं स्यात्। सन्त्य। सनने भव। षणु दाने। क्तिच्क्तौ च० ( पा० ३-३-१७४ ) इति क्तिच्। न क्तिचि दीर्घश्च ( पा० ६-४-३९ ) इति दीर्घनलोपा-भावः। भवे छन्दसि ( पा० ४-४-११० ) इति यत्। तत्र साधुः ( पा० ४-४.९८ ) इति वा। निघातः। यज्ञं नयतीति यज्ञनीः। सत्सूद्विष० ( पा० ३-२-६१ ) इत्यादिना क्विप्। कृदुत्तर-पदप्रकृतिस्वरः। देवयते। देवानात्मन इच्छतीति देवयन्। तस्मै। क्यचि च ( पा० ८-४-३३ ) इतीत्वं न भवति। न छन्दस्यपुत्रस्य ( पा० ८-४-३५ ) इति निषेधात्। अश्वाघस्य० ( पा० ७-४-३७ ) इति आत्वविधानादात्वनिषेधे प्राप्तस्य दीर्घस्याप्येष निषेध इत्युक्तम्। शतुरनुमो नद्यजादी ( पा० ६-१-१७३ ) इति विभक्तेरुदात्तत्वम्। क्यचश्चित्त्वादन्तोदात्तत्वम्। शपः पित्त्वा-दनुदात्तत्वम्। शतुश्च लसार्वधातुकस्वरेणोभयोः क्यचा सहैकादेश उदात्तेनोदात्तः ( पा० ८-२-५ ) इत्युदात्तः। तस्मादन्तोदात्तत्वादश्वस्या विभक्तेः शतुरनुमो नद्यजादी ( पा० ६-१-१७३ ) इत्यु-दात्तत्वम् ॥१२॥

इति प्रथमस्य प्रथमे एकोनत्रिंशो वर्गः ॥

॥ १६ ॥

१·१६

आ त्वा वहन्त्विति पञ्चमं नवर्चं सूक्तम्। ऋषिच्छन्दसी पूर्ववत् अनुवर्तेते। विशेषाभावा-दिन्द्रो देवता। विनियोगस्तु प्रातःसवने मैत्रावरुणस्योन्नीयमाने सूक्तमा त्वा वहन्तु हरय इति। तथा च द्विदेवत्यैश्चरन्तीति खण्डे सूत्रितम्। उन्नीयमानेभ्योऽन्वाहा त्वा वहन्तु ( आ० श्रौ० ५-५ ) इति। तथा षोडशिशस्त्रे आ त्वा वहन्तु हरय इति तिस्रः। तथा सूत्रितमथ षोडशीति खण्डे। आ त्वा वहन्तु हरय इति तिस्रो गायत्र्यः ( आ० श्रौ० ६-२ ) इति।

तस्मिन्सूक्ते प्रथमामृचमाह। हे इन्द्र वृषणं कामानां वर्षितारं त्वा त्वां सोमपीतये सोमपा-नार्थं हरयस्त्वदीया अश्वा आवहन्तु। अस्मिन्कर्मण्यानयन्तु। तथा सूरचक्षसः सूर्यसमान-प्रकाशयुक्ता ऋत्विजस्त्वां मन्त्रैः प्रकाशयन्त्विति शेषः। हरन्तीति हरयः। इन् सर्वधातुभ्यः ( उ० ४-११९ ) इतीन्। नित्त्वादाद्युदात्तः। वृषणम्। कनिन्युवृषितक्षि० ( उ० १-१६२ ) इत्या-दिना कनिन्। कित्त्वाल्लघूपधगुणाभावः। वा षपूर्वस्य निगमे ( पा० ६-४-९ ) इति विकल्पितमुप-धादीर्घत्वम्। सोमपीतये। ऐभिरग्ने ( ऋ० सं० १-१४-१ ) इत्यत्रोक्तम्। सूरचक्षसः। चक्षिङ् व्यक्तायां वाचि। सर्वधातुभ्योऽसुन् ( उ० ४-१४६ ) इत्यसुन्। चक्षिङः ख्याञ् ( पा० २-४-५४ ) इति न भवति। असनोः प्रतिषेधो वक्तव्यः ( पा० वा० २-४-५४ ) इति निषेधात्। षू प्रेरणे। सुवतीति सूरः। सुसूधागृधिभ्यः क्रन् ( उ० २-२५ ) इति क्रन्। कित्त्वाद्गुणाभावः। नित्त्वादाद्युदात्तः। सूरवत्ख्यानं प्रकाशो येषाम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥१॥

द्वितीयामृचमाह। हरिशब्द इन्द्ररथस्य वोढारावश्वावाचष्टे। तथा च श्रुत्यन्तरं हर्योः स्थाता ( तै० सं० १-४-२८-१ ) इति। हरिभ्यां त्वेन्द्रो देवतां गमयतु ( तै० सं० १-६-४-३ ) इति च। एतदेवाभिप्रेत्य निघण्टुकार आह हरी इन्द्रस्य ( निघ० १-१५ ) इति। तादृशौ हरी इमा यागार्थं वेद्यामासादितत्वेन पुरोवर्तिनीर्धाना भ्रष्टयवतण्डुलानुद्दिश्य सुखतमे रथ इन्द्रमवस्थाप्यास्मिन्कर्मण्युपवक्षतः। वेदिसमीपे वहताम्। कीदृशीर्धानाः। घृतस्नुवः। अलङ्करणोपस्तरणाभिघारणेन घृतस्राविणीः। धीयन्त इति धानाः। धापॄवस्यज्यतिभ्यो नः ( उ० ३-६ ) इति नः। प्रत्ययस्वरः। घृतस्नुवः। घृतं स्नुवन्तीति घृतस्नुवः। क्विपि तुगभावश्छान्दसः। धातुस्वरः। समासे कृदुत्तरपदप्रकृतिस्वरत्वम्। स्नोः संयोगपूर्वत्वेन यणभावादुवङादेशः। हरी। हृञ् हरणे। सर्वधातुभ्य इन् ( उ० ४-११७ )। नित्त्वादाद्युदात्तः। प्रगृह्यत्वात्संहितायां प्रकृतिभावः। वक्षतः। प्रार्थनाख्ये लिङर्थे लेट्। तस्य प्रथमपुरुषद्विवचनं तस्। लेटोऽडाटौ ( पा० ३-४-९४ ) इत्यडागमः। शपि प्राप्ते सिब्बहुलं लेटि ( पा० ३-१-३४ ) इति सिप्। ढत्वकत्वषत्वानि। तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातः। सुखतमे। गतम् ॥२॥

तृतीयामृचमाह। प्रातः कर्मारम्भे प्रातःसवने इन्द्रं हवामहे। आह्वयामः। तथैवाध्वरे सोमयागे प्रयति प्रगच्छति प्रारभ्य वर्तमाने सति माध्यन्दिने सवने तमिन्द्रं हवामहे। तथा यज्ञस्य समाप्त्यवसरे तृतीयसवने सोमस्य पीतये सोमपानार्थं हवामहे। प्रातः। स्वरादिष्वन्तोदात्तो निपातितः। हवामहे। ह्वेञो लटि शपि परतो ह्वः सम्प्रसारणम् ( पा० ६-१-३२ ) इत्यनुवृत्तौ बहुलं छन्दसि ( पा० ६-१-३४ ) इति सम्प्रसारणम्। परपूर्वत्वम्। गुणावादेशौ। प्रयति। इण् गतौ। लटः शतृ। अदिप्रभृतिभ्यः शपः ( पा० २-४-७२ ) इति शपो लुक्। शतुर्ङित्त्वाद् गुणाभावः। प्रादिसमासः। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ( पा० प० २८ ) इति वचनात्प्रत्ययग्रहण इति नियमाभावाच्छतुरनुमो नद्यजादी ( पा० ६-१-१७३ ) इति विभक्तेरुदात्तत्वम्। अध्वरे। उक्तम्। संहितायामुदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ( पा० ८-२-४ ) इत्यकारस्य स्वरितत्वम्। पीतये। पा पाने। क्तिनि छान्दसमन्तोदात्तत्वम् ॥३॥

चतुर्थीमृचमाह। हे इन्द्र केशिभिः केशयुक्तैर्हरिभिरश्वैस्त्वं नोऽस्मदीयं सुतमभिषुतं सोमं प्रत्युप समीप आगहि। आगच्छ। सुतेऽभिषुते सोमे निमित्तभूते सति यस्मात्कारणात्त्वा हवामहे। त्वामाह्वयामः। तस्मादागच्छेति पूर्वत्रान्वयः। गहि। गमेर्लोटः सेर्हिः। ०शपः ( पा० २-४-७२ ) इत्यनुवृत्तौ बहुलं छन्दसि ( पा० २-४-७३ ) इति शपो लुक्। इषुगमियमां छः ( पा० ७-३-७७ ) इति छत्वं न भवति। न लुमताङ्गस्य ( पा० १-१-६३ ) इति प्रतिषेधात्। अनुदात्तोपदेश० ( पा० ६-४-३७ ) इत्यादिनानुनासिकलोपः। तस्यासिद्धवदत्राभाद् ( पा० ६-४-२२ ) इत्यसिद्धत्वादतो० ( पा० ६-४-१०५ ) इति लुग् न भवति। केशिभिः। क्लिशेरन् लो लोपश्च ( उ० ५-३३ ) इत्यन्। मत्वर्थीय इनिः। प्रत्ययस्वरः। हवामहे। ह्वः० ( पा० ६-१-३२ ) इत्यनुवृत्तौ बहुलं छन्दसि ( पा० ६-४-३४ ) इति सम्प्रसारणम्। शपः पित्त्वादनुदात्तत्वम्। तिङो लसार्वधातुकस्वरेण। धातुस्वर एव। तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातो न। हि च ( पा० ८-१-३४ ) इति प्रतिषेधात् ॥४॥

पञ्चमीमृचमाह। हे इन्द्र स त्वं नोऽस्मदीयमिमं स्तोमं स्तुतिं प्रत्यागहि। आगच्छ। आगमने हेतुरुच्यते। उप देवयजनसमीपे सुतमभिषुतसोमयुक्तमिदमिदानीमनुष्ठीयमानं सवनं प्रातःसवनादिरूपं कर्म वर्तते। तस्माद्गौरो न गौरमृग इव तृषितः सन्निमं सोमं पिब। सः इमम्। इत्यत्र संहितायां सोऽचि लोपे चेत्पादपूरणम् ( पा० ६-१-१३४ ) इति सुलोपः। गहि। गतम्। सवनम्। सूयतेऽस्मिन्सोम इत्यधिकरणे ल्युट्। लिति ( पा० ६-१-१९३ ) इति प्रत्ययात्पूर्वस्योदात्तत्वम्। ल्युडन्तात्सप्तम्याः सुपां सुपो भवन्तीति वक्तव्यम् ( पा० म० ७-१-३९ ) इति वचनाद् द्वितीया। अभिषुतसोमयुक्तमिदं सवनमिति कर्मण्येव वा द्वितीया। तदा सुतशब्दादर्श-आदित्वादच्। तृषितः। ञितृषा पिपासायाम्। निष्ठा ( पा० ३-२-१०२ ) इति क्तः। प्रत्ययस्वरेणोदात्तः। पश्चादिट्। आगमा अनुदात्ता इति अनुदात्तत्वम् ॥५॥

इति प्रथमस्य प्रथमे त्रिंशो वर्गः ॥

सूक्ते षष्ठीमृचमाह। इन्दुशब्द उन्दी क्लेदन इति धातोरुत्पन्नः। इन्दवः। क्लेदनयुक्ता इमे वेद्यामवस्थिताः सोमासस्तत्तत्पात्रगताः सोमा बर्हिषि यज्ञेऽध्याधिक्येन सुतासोऽभिषुताः। हे इन्द्र सहसे बलार्थम्। तान् सोमान् पिब। सोमासः। आज्जसेरसुक् ( पा० ७-१-५० ) इति जसोऽसुगागमः। इन्दवः। उक्तम्। सुतासः। पूर्ववदसुक्। संहितायां प्रकृत्यान्तःपादमव्यपरे ( पा० ६-१-११५ ) इति प्रकृतिभावात्परपूर्वत्वं न भवति। बर्हिषि। बृंहेर्नलोपश्च ( उ० २-१०९ ) इतीसुः। प्रत्ययस्वरः। तां इन्द्रेत्यत्र दीर्घादटि समानपादे ( पा० ८-३-९ ) इति रुत्वम्। यत्वयलोपौ। अनुनासिकः। सहसे। षह मर्षणे। असुन्नन्तो नित्त्वादाद्युदात्तः ॥६॥

सप्तमीमृचमाह। हे इन्द्र। अयमस्माभिः क्रियमाणः स्तोमः स्तोत्रविशेषोऽप्रियः श्रेष्ठस्सन् ते तव हृदिस्पृक् मनस्यङ्गीकृतः शन्तमः सुखतमोऽस्तु। अथ स्तुतेरनन्तरं सुतमभिषुतं सोमं पिब। अप्रियः। अग्राद्० (पा० ४-४-११६) इत्यनुवृत्तौ घच्छौ च (पा० ४-४ ११७ इति घच्। चित्त्वादन्तोदात्तः। हृदि स्पृशतीति हृदिस्पृक्। स्पृशोऽनुदके क्विन् ( पा० ३-२-५८ ) इति क्विन्। तत्पुरुषे कृति बहुलम् ( पा० ६-३-१४ ) इत्यलुक्। क्विन्प्रत्ययस्य कुः ( पा० ८-२-६२ ) इति शकारस्य कुत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम्। शन्तमः। सुखकरद्रव्यवचनोऽत्र शंशब्दः। ततस्तमप्। अत्र सुखप्रकर्षस्य गुणद्वारा गुणयुक्तद्रव्ये संक्रान्तत्वादद्रव्यप्रकर्ष इति निषेधात् किमेत्तिङव्यय० ( पा० ५-४-११ ) इत्यादिना आम् न भवति। द्रव्यस्य स्वतः प्रकर्षाभावात्। ईदृगर्थ एव हि स निषेधः। अथा सोमम्। संहितायां निपातस्य० ( पा० ६-३-१३६ ) इति दीर्घः ॥७॥

अष्टमीमृचमाह। वृत्रहा शत्रुघातक इन्द्रः सोमपीतये सोमपानाय मदाय तत्पानजनितहर्षाय च विश्वमित्सर्वमपि सुतमभिषुतसोमयुक्तं सवनं प्रातःसवनादिरूपं कर्म गच्छति। विश्वम्। अशिप्रुषि० ( उ० १-१५७ ) इत्यादिना क्वन्। नित्त्वादाद्युदात्तः। सवनं सुतम्। पूर्ववत्। मदाय। मदोऽनुपसर्गे ( पा० ३-३-६७ ) इत्यप्प्रत्ययः। पित्त्वाद्धातुस्वरः। गच्छति। इषुगमियमां छः (पा० ७-३-७७)। वृत्रहा। वृत्रं हतवान्। ब्रह्मभ्रूणवृत्रेषु क्विप् (पा० ३-२-८७) इन्हन्० (पा० ६-४-१२) इत्यादिना निवृत्तं दीर्घत्वं सौ च ( पा० ६-४-१३ ) इति प्रतिप्रसवाद्भवति। कृदुत्तरपदप्रकृतिस्वरत्वम्। सोमपीतये। व्यधिकरणबहुव्रीहिरित्युक्तम्। तत्पुरुषे वा दासीभारादित्वात् ( पा० ६-२-४२ ) पूर्वपदप्रकृतिस्वरत्वम् ॥८॥

नवमीमृचमाह। हे शतक्रतो स त्वं नोऽस्मदीयमिमं कामं काम्यमानं फलं गोभिरश्वैश्च सहापृण। सर्वतः पूरय। वयमपि स्वाध्यः। सुष्ठु सर्वतो ध्यानयुक्ताः सन्तस्त्वा त्वां स्तवाम। सेमम्। संहितायां सोऽचि लोपे चेत् पादपूरणम् ( पा० ६-१-१३४ ) इति सुलोपः। कामम्। कमेर्घञि कर्षात्वतो घञोऽन्त उदात्तः ( पा० ६-१-१५९ ) इत्यन्तोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वम्। पृण। पृण प्रीणने। लोटः सेर्हिः। तुदादिभ्यः शः ( पा० ३-१-७७ )। तस्य ङित्त्वाद्गुणाभावः। अतो हेः (पा० ६-४-१०५) इति हेर्लुक्। गोभिः। सावेकाचः० ( पा० ६-१-१६८ ) इति प्राप्तं विभक्त्युदात्तत्वं न गोश्वन्साववर्ण० (पा० ६-१-१८२) इति प्रतिषिध्यते। अश्वैः। कनन्त इत्युक्तम्। असामर्थ्यान्न पराङ्गवद्भावः। स्तवाम। ष्टुञ् स्तुतौ। धात्वादेः षः सः ( पा० ६-१-६४ )। लोडुत्तमबहुवचनस्य लोटो लङ्वद् ( पा ३-४-८५ ) इति लङ्वद्भावान्नित्यं ङितः ( पा० ३-४-९९ ) इति सकारस्य लोपः। आडुत्तमस्य पिच्च ( पा० ३-४-९२ ) इत्याडागमः। प्रत्ययस्य पित्त्वादनुदात्तत्वम्। धातुस्वर एव। स्वाध्यः। ध्यै चिन्तायाम्। स्वाङोरुपसर्गयोः प्राक्प्रयोगः। अन्येभ्योऽपि दृश्यते ( पा० ३-२-१७८ ) इति क्विप्। दृशिग्रहणस्य विध्यन्तरोपसङ्ग्रहणार्थत्वादत्र संप्रसारणे सति परपूर्वत्वम्। हलः ( पा० ६-४-२ ) इति दीर्घः। जसि एरनेकाचः० ( पा० ६-४-८२ ) इति यणादेशः। गतिकारकोपपदात्कृत् ( पा० ६-२-१३९ ) इत्युत्तरपदप्रकृतिस्वरत्वम्। उदात्तयणो हल्पूर्वात् ( पा० ६-१-१७४ ) इति जस उदात्तत्वं न भवति। तत्रासर्वनामस्थानमित्यनुवृत्तेः। अत उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ( पा० ८-२-४ ) इति स्वरितत्वमेव भवति ॥९॥

इति प्रथमस्य प्रथम एकत्रिंशो वर्गः।

॥ १७ ॥

१·१७

इन्द्रावरुणयोरित्यादिकं नवर्चं षष्ठं सूक्तम्। अत एव नवशब्दानुवृत्तावनुक्रम्यते। इन्द्रावरुणयोरैन्द्रावरुणं युवाकु पादनिचृतावित्ति। अत्र देवता विस्पष्टा। ऋषिच्छन्दसी तु पूर्ववदनुवर्तेते। अयं तु विशेषः। युवाकु हीत्यादिके द्वे ऋचौ पादनिचृन्नामकच्छन्दोयुक्ते। विनियोगस्तु स्मार्तो लैङ्गिको वा कश्चिदवगन्तव्यः।

तस्मिन्सूक्ते प्रथमामृचमाह। अहमनुष्ठाता सम्राजोः समीचीनराज्योपेतयोः सम्यग्दीप्यमानयोर्वेन्द्रावरुणयोः सम्बन्धिनो रक्षणमावृणे। सर्वतः प्रार्थये। ता तौ देवावीदृशे एवंविधेऽस्मदीयवरणे निमित्तभूते सति मृळातः। अस्मान्सुखयतः। इन्द्रशब्दो रन्प्रत्ययान्तः। वरुणशब्द उनन्प्रत्ययान्तः। उभौ नित्त्वादाद्युदात्तौ। समासे देवताद्वन्द्वे च ( पा० ६-३-२६ ) इति पूर्वपदस्यानङादेशः। उभे युगपदित्यनुवृत्तौ देवताद्वन्द्वे च ( पा० ७-३-२१ ) इति युगपदुभयपदप्रकृतिस्वरत्वम्। सम्राजोः। राजृ दीप्तौ। सत्सूद्विष० ( पा० ३-२-६१ ) इत्यादिना क्विप्। समो मोऽनुस्वारः ( पा० ८-३-२३ ) इत्यनुस्वारे प्राप्ते मो राजि समः क्वौ ( पा० ८-३-२५ ) इति मकारादेशः। कृदुत्तरपदप्रकृतिस्वरत्वम्। कर्तृकर्मणोः कृति ( पा०

२-३-६५ ) इति कर्तरि षष्ठी। अव रक्षणादिषु। भावेऽसुन्। नित्त्वादाद्युदात्तः। ता। सुपां सुलुक्० ( पा० ७-१-३९ ) इत्यादिना द्विवचनस्य डादेशः। टिलोपे विभक्तेरुदात्तनिवृत्तिस्वरः। मृळातः। मृड सुखने। प्रार्थनायां लिङर्थे लेट् ( पा० ३-४-७ )। द्विवचने तस्। लेटोऽडाटौ ( पा० ३-४-९४ ) इत्यडागमः। तुदादिभ्यः शः ( पा० ३-१-७७ )। ङित्त्वाल्लघूपधगुणाभावः। ईदृशे। त्यदादिषु दृशोऽनालोचने कञ् च ( पा० ३-२-६० ) इतीदंशब्द उपपदे दृशेः कञ्। उपपदसमासः। इदंकिमोरीश्की ( पा० ६-३-९० ) इतीदम ईश्। शित्त्वात्सर्वादेशः। कञः कित्त्वाद्गुणाभावः। ञित्त्वादुत्तरपदस्याद्युदात्तत्वम्। उपपदसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते ॥१॥

द्वितीयामृचमाह। हे इन्द्रावरुणौ। अवसेऽवितुमनुष्ठातारं रक्षितुं मावतो मद्विधस्य विप्रस्य ब्राह्मणस्यर्त्विजो हवमाह्वानं गन्तारौ स्थो हि। प्राप्तिशीलौ भवथः खलु। कीदृशौ। चर्षणीनां मनुष्याणां धर्तारौ। योगक्षेमसंपादनेन धारयितारौ। गन्तारा। गमेस्ताच्छील्ये तृन्। द्विवचनस्य सुपां सुलुक्० ( पा० ७-१-३९ ) इत्यादिनाकारादेशः। ऋदृशोऽङि गुणः ( पा० ७-४-१६ )। अप्तृन्० ( पा० ६-४-११ ) इत्यादिनोपधादीर्घत्वम्। तृनो नित्त्वादाद्युदात्तत्वम्। स्थः। अस भुवि। लटो मध्यमपुरुषद्विवचनं थस्। अदिप्रभृतिभ्यः शपः ( पा० २-४-७२ ) इति शपो लुक्। हि च ( पा० ८-१-३४ ) इति निघातप्रतिषेधः। अवसे। अव रक्षणे। तुमर्थे सेसेन्० ( पा० ३-४-९ ) इत्यसेन्। नित्त्वादाद्युदात्तः। हवम्। ह्वेञो बहुलं छन्दसि ( पा० ६-१-३४ ) इत्यनैमित्तिके सम्प्रसारणे परपूर्वत्वे च ऋदोरप् ( पा० ३-३-५७ ) इत्यप्। गुणावादेशौ। अपः पित्त्वादनुदात्तत्वम्। धातुस्वर एव। विप्रस्य। डुवप् बीजसन्ताने। अस्य ऋज्रेन्द्र० ( उ० २-२१ ) इत्यादिना रन् निपातितः। नित्त्वादाद्युदात्तः। मावतः। वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् ( पा० वा० ५-२-३९ ) वतुप्। प्रत्ययोत्तरपदयोरस्मदो मपर्यन्तस्य मादेशः। आ सर्वनाम्नः ( पा० ६-३-९१ ) इति दकारस्याकारः। सवर्णदीर्घः। मतुपः पित्त्वादनुदात्तत्वम्। प्रातिपदिकान्तोदात्तत्वे स एव शिष्यते। धर्तारा। धृञ् धारणे। ण्वुल्तृचौ ( पा० ३-१-१३३ ) इति तृच्। एकाच उपदेश० ( पा० ७-२-१० ) इतीट्प्रतिषेधः। गुणो रपरत्वम्। अप्तृन्० ( पा० ६-४-११ ) इत्यादिनोपधादीर्घः। सुपां सुलुक्० ( पा० ७-१-३९ ) इत्याकारः। तृचश्चित्त्वादन्तोदात्तत्वम्। चर्षणीनाम्। कृषेरादेश्च चः ( उ० २-१०० ) इत्यनिप्रत्ययः। तत्सन्नियोगेन ककारस्य चकारः। प्रत्ययाद्युदात्तत्वं बाधित्वा छान्दसमन्तोदात्तत्वम्। अत एव नामन्यतरस्याम्० ( पा० ६-१-१७७ ) इति विभक्तेरुदात्तत्वम्। तत्र हि मतुपि यो ह्रस्वान्तस्तत उत्तरस्य नाम उदात्तत्वमिति व्याख्यातम् ॥२॥

तृतीयामृचमाह। इन्द्रावरुणा हे इन्द्रावरुणौ। अनुकाममस्मदीयमभिलाषमनु रायो धनस्य प्रदानेनातर्पयेथाम्। सर्वतोऽस्मांस्तृप्तान् कुरुतम्। वयं यदा यदा धनं कामयामहे तदा तदा प्रयच्छतमित्यर्थः। ता वां तादृशौ युवां नेदिष्ठमतिशयेन सामीप्यं यथा भवति तथा ईमहे। याचामहे। कालविलम्बमन्तरेण धनं दातव्यमित्यर्थः। सप्तदशसु याच्ञाकर्मसु ईमहे ( निघ० ३-१९ ) इति पठितम्। अनुकामम्। कामस्य पश्चादनुकामम्। अथवा कामे कामेऽनुकामम्। अनुरिह पश्चादर्थे। अथवा वीप्सालक्षणे यथार्थे। योग्यता वीप्सा

पदार्थानतिवृत्तिः साहृश्यं चेति चत्वारो हि यथार्था गृहीताः। अव्ययं विभक्ति० (पा० २-१-६) इत्यादिना अव्ययीभावसमासः। अव्ययीभावश्च (पा० १-१-४१) इत्यव्ययसञ्ज्ञायामव्यया-द्राप्सुपः (पा० २-४-८२) इति प्राप्तस्य लुकोऽपवादो नाव्ययीभावादतोऽम् त्वपञ्चम्याः (पा० २-४-८३) इति विभक्तेरमादेशः। समासस्य (पा० ६-१-२२३) इत्यन्तोदात्तत्वम्। तर्पयेथाम्। तृपे-र्णयन्ताच्छोटो णिचश्च (पा० १-३-७४) इत्यात्मनेपदम्। मध्यमद्विवचनमाथाम्। टेरेत्वम्। आमेतः (पा० ३-४-९०) इत्यामादेशः। शपि सत्यतो येयः (पा० ७-२-८०) इत्यनुवृत्तावातो ङितः (पा० ७-२-८१) इत्याकारस्येयादेशः। आद्गुणो यलोपश्च। इन्द्रावरुणा। सुपां सुलुक्० (पा० ७-१-३९) इति द्विवचनस्याकारः। आमन्त्रितायुदात्तत्वम्। संहितायामाकारस्य ह्रस्वत्वम्। रायः। ऊडिदम्० (पा० ६-१-१७१) इत्यादिना विभक्तेरुदात्तत्वम्। ता। सुपां सुलुग्० (पा० ७-१-३९) इति विभक्तेराकारः। पदात्परत्वाद्युवामित्यस्य वामादेशोऽनुदात्तः। नेदिष्ठम्। अतिशयेनान्तिकम्। अतिशायन इष्ठन्। अन्तिकबाढयोर्नेदसाधौ (पा० ५-३-६३) इति नेदादेशः। यस्य० (पा० ६-४-१४८) इति लोपः। इष्ठनो नित्त्वादाद्युदात्तत्वम्। ईमहे। ईङ गतौ। ङित्वादात्मनेपदम्। बहुलं छन्दसि (पा० २-४-७३) इति श्यनो लुक्। निघातः॥३॥

चतुर्थीमृचमाह। हि यस्मात्कारणाच्छचीनामस्मदीयकर्मणां सम्बन्धि सोमरूपं हविर्युवाकु वसतीवर्यैकधनात्मकैरुदकैः पयःसक्त्वादिद्रव्यान्तरैश्च मिश्रितम्। तथा सुमतीनां शोभन-बुद्धियुक्तानामृत्विजां स्तोत्ररूपं वचनमपि युवाकु नानाविधैः स्तुत्यगुणैर्मिश्रितम्। तस्मात् कारणात् हे इन्द्रावरुणौ तथाविधं हविः स्वीकुर्वतोर्युवयोः प्रसादाद्वयं वाजदाव्नामन्न-प्रदानां पुरुषाणां मध्ये मुख्या भूयाम। भवेम। आपोऽग्न इत्यादिषु षड्विंशतिसंख्याकेषु कर्मनामसु शची शमी (निघ० २-१) इति पठितम्। युवाकु। यु मिश्रणे। कटिकुषिभ्यां काकुः (उ० ३-७६) इत्यत्र बाहुलकाद्यौतेरपि काकुः प्रत्ययः। कित्त्वेन गुणाभावादुकारस्यो-वङादेशः। प्रत्ययस्वरेण मध्योदात्तत्वम्। शचीशब्दः केषांचिन्मते शार्ङ्गरवादिर्ङीनन्तो नित्त्वादाद्युदात्त इति उभे वनस्पत्यादिषु युगपद् (पा० ६-२-१४०) इत्यत्र वृत्तिकृतोक्तम्। सुमतीनाम्। विद्याम सुमतीनाम् (ऋ० सं० १-४-३) इत्यत्रोक्तम्। भूयाम। प्रार्थनायां लिङ्। उत्तम-बहुवचने नित्यं ङितः (पा० ३-४-९९) इति सकारलोपः। यासुट् परस्मैपदेषूदात्तो ङिच्च पा०) ३ ४-१०३) इत्युदात्तो यासुडागमः। लिङः सलोपोऽनन्त्यस्य (पा० ७-२-७९) इति सकार-लोपः। बहुलं छन्दसि (पा० २-४-७३) इति शपो लुक्। सतिशिष्टत्वाद्यासुडुदात्त एव शिष्यते। वाजदाव्नाम्। वाजं ददतीति वाजदावानः। आतो मनिन्० (पा० ३-२-७४) इत्यादिना वनिप्। तस्य पित्त्वाद्धातुस्वर एव शिष्यते। समासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते। आमि अल्लोपोऽनः (पा० ६-४-१३४) इत्यकारलोपः। तस्याचः परस्मिन्० (पा० १-१-५७) इति स्थानिवद्भावाल्लोपो व्योर्वलि (पा० ६-१-६६) इति वकारलोपो न भवति॥४॥

पञ्चमीमृचमाह। अयमिन्द्रः सहस्रदाव्नां सहस्रसंख्याकधनप्रदानां मध्ये क्रतुर्धनदानस्य कर्ता भवति। प्रभूतं ददातीत्यर्थः। तथा वरुणः शंस्यानां स्तुत्यानां मध्य उक्थ्यः स्तुत्यो भवति। अति-शयेन स्तुत्य इत्यर्थः। वरुणः। उनन्प्रत्ययान्तो नित्त्वादाद्युदात्तः। शंस्यानाम्। शंसु स्तुतौ।

ऋहलोर्ण्यत् ( पा० ३-१-१२४ )। तित्स्वरितम् ( पा० ६-१-१८५ ) इति प्राप्ते ईडवन्दवृशंसदुहां ण्यतः ( पा० ६-१-२१४ ) इत्याद्युदात्तः। क्रतुः। कृञः कतुः ( उ० १-७७ ) इति कतुः। कित्त्वाद्गुणाभावे यणादेशः। प्रत्ययस्वरेणाद्युदात्तः। उक्थ्यः। उक्थं शस्त्रम्। तेन स्तुत्यत्वेन तत्र भव उक्थ्यः। भवे छन्दसि ( पा० ४-४-११० ) इति यत्। यस्य० ( पा० ६-४-१४७ ) इति लोपः। अत्र तित्स्वरितम् ( पा० ३-१-१२४ ) इत्येतद् बाधित्वा तीर्थ्याय कूप्यायेत्यादिवद्द्व्यच्कत्वाद्यतोऽनावः ( पा० ६-१-२१३ ) इति प्राप्तमाद्युदात्तत्वं सर्वे विधयः छन्दसि विकल्प्यन्ते ( पा० प० ३५ ) इति न क्रियते। ननु यस्य० ( पा० ६-४-१४८ ) इति लोपात्प्रागेव तित्स्वरितत्वमस्तु। न हि तदा यतोऽनावः ( पा० ६-१-२१३ ) इत्येतदस्ति द्व्यच्कत्वाभावात्। अत एव ह्य म्यांय च सूर्म्याय चेत्यादौ स्वरितत्वं दृश्यते। न च परत्वान्नित्यत्वाच्च यस्य० ( पा० ६-४-१४८ ) इति लोपेन प्रथमतो भाव्यमिति वाच्यम्। प्रकृतिप्रत्ययाश्रयाद् बहिरङ्गाद्यस्य० ( पा० ६-४-१४८ ) इति लोपात्प्रत्ययमात्राश्रयत्वेनान्तरङ्गत्वेन तित्स्वरितम् ( पा० ३-१-१२४ ) इत्यस्य प्राबल्यात्। अत ऊर्म्यायेत्यादिवदुक्थ्य इत्यत्रापि लक्षणात एव स्वरितत्वं भविष्यतीति किं छान्दसेन। यत्र हि लोपमन्तरेणैव द्व्यच्कत्वं तत्र यतोऽनावः ( पा० ६-१-२१३ ) इत्येतद्भवति। यथा चेयं येयमिति। लोपनिबन्धनद्व्यच्कप्रदेशेषु तु स्वरितेनैव भवितव्यमिति। एवं तर्हि तीर्थ्याय कूप्यायेत्यादौ यदाद्युदात्तत्वं तदेव छान्दसमस्तु। अथात्र तु वार्णादाङ्गं बलीयः ( पा० प० ५५ ) इत्यन्तरङ्गत्वेऽपि स्वरितत्वं बाधित्वा लोप एव भविष्यति। तर्ह्युक्थ्य ऊर्म्याय सूर्म्यायेत्यादौ च छान्दसत्वमस्तु। सर्वथैकत्र छान्दस्यान्न मुच्यते ॥५॥

इति प्रथमस्य प्रथमे द्वात्रिंशो वर्गः।

सूक्ते षष्ठीमृचमाह। तयोरित्पूर्वोक्तयोरिन्द्रावरुणयोरेवावसा रक्षणेन वयमनुष्ठातारः सनेम। सम्भजेम। धनमिति शेषः। निधीमहि च। प्राप्ते धने यावदपेक्षितं तावद्भुक्त्वा ततोऽवशिष्टं धनं कचिन्निधिरूपेण स्थापयामश्च। उत। अपि च। प्रेचनम्। भुक्तान्निहिताच्च प्रकर्षेणाधिकं धनं स्यात्। सम्पद्यताम्। अवसा। अवन्। नित्त्वादाद्युदात्तः। वयम्। यूयं हि ष्ठा ( ऋ० १-१५-२ ) इत्यत्र यदुक्तं तदत्र द्रष्टव्यम्। सनेम। आशिषि लिङ्। तस्य मस्। नित्यं ङितः ( पा० ३-४-९९ ) इति सकारलोपः। किदाशिषि ( पा० ३-४-१०४ ) इति यासुट्। छन्दस्युभयथा ( पा० ३-४-११७ ) इति सार्वधातुकत्वमप्यस्तीति लिङः सलोपोऽनन्त्यस्य ( पा० ७-२-७९ ) इति सकारलोपः। अतो येयः ( पा० ७-२-८० ) इतीयादेशः। लोपो व्योर्वलि ( पा० ६-१-६६ ) इति यलोपः। लिङ्याशिष्यङ् ( पा० ३-१-८६ ) इत्यङ्। आद्गुणः। पादादित्वान्न निघातः। धीमहि। डुधाञ् धारणपोषणयोः। आशिषि लिङो महिङ्। तस्य छन्दस्युभयथा ( पा० ३-४-७-११७ ) इति सार्वधातुकार्धधातुकसञ्ज्ञे। तत्र सार्वधातुकत्वेन लिङः सलोपोऽनन्त्यस्य ( पा० ६-२-७९ ) इति सकारलोपः। सार्वधातुकमपित् ( पा० १-२-१४ ) इति ङित्त्वं शप् च। बहुलं छन्दसि ( पा० २-४-७३ ) इति जुहोत्यादेरपि शपो लुक्। आर्धधातुकत्वादातो लोप इटि च ( पा० ६-४-६४ ) इत्याकारलोपः। निघातः। सनेमेत्यपेक्षया द्वितीयत्वादत्र चवायोगे प्रथमा ( पा० ८-१-५९ ) इति न निषेधः। स्यात्। अस्तेः प्रार्थनायां लिङ्। तिप्। इतश्च०

( पा० ३-४-१०० ) इतीकारलोपः। यासुट् परस्मैपदेषूदात्तो ङिच्च ( पा ३-४-१०३ ) इति यासुड्-ङित्वे। अदिप्रभृतिभ्यः शपः ( पा० २-४-७२ ) इति शपो लुक्। श्नसोरल्लोपः ( पा० ६-४-१११ ) इत्यकारलोपः पादादित्वान्न निघातः। उत। एवमादीनामन्तः ( फि० ४-१४ ) इत्यन्तोदात्तः। प्रेचनम्। रिचिर् विरेचने। भावे ल्युट्। योरनादेशः। लिति ( पा० ६-१-१९३ ) इति प्रत्ययात्पूर्वस्योदात्तत्वम्। प्रादिसमासः। कृदुत्तरपदप्रकृतिस्वरत्वम् ॥६॥

सप्तमीमृचमाह। इन्द्रावरुणा हे इन्द्रावरुणौ वां युवामुभावहं हुवे। आह्वयामि। किमर्थम्। चित्राय मणिमुक्तादिरूपेण विविधाय राधसे धनाय तत आहूतौ युवामस्माननुष्ठातॄन्सुजिग्युषः शत्रुविषये सुष्ठु जययुक्तान् कृतम्। कुरुतम्। इन्द्रावरुणा। सुपां सुलुक्० ( पा० ७-१-३९ ) इत्यादिना सम्बोधनस्याकारः। देवताद्वन्द्वे च ( पा० ६-३-२६ ) इति पूर्वपदस्यानङ्। आमन्त्रिताद्युदात्तत्वम्। संहितायां छान्दसं ह्रस्वत्वम्। हुवे। ह्वयतेर्लडुत्तमस्यैकवचनमिट्। ०शपः ( पा० २-४-७२ ) इत्यनुवृत्तौ बहुलं छन्दसि ( पा० २-४-७३ ) इति लुक्। ह्वः० ( पा० ६-१-३२ ) इत्यनुवृत्तौ बहुलं छन्दसि ( पा० ६-१-३४ ) इति सम्प्रसारणं परपूर्वत्वम्। अचि श्नुधातु० ( पा० ६-४-७७ ) इत्यादिनोवङ्। न च हुश्नुवोः० ( पा० ६-४-८७ ) इत्यादिना यणादेशः। जुहोतेरेव हि प्रतिपदोक्तस्य तत्, न पुनरस्य। लाक्षणिकत्वात्। इटः प्रत्ययस्वरेणोदात्तत्वम्। पादादित्वान्न निघातः। राधसे। असुन्। नित्त्वादाद्युदात्तत्वम्। अस्मान्। शसि द्वितीयायां च ( पा० ७-२-८७ ) इत्यात्वम्। शसो न ( पा० ७-१-२९ ) इति नत्वम्। जिग्युषः। जि जये। लिटः कसुश्च ( पा० ३-२-१०७ ) इति क्वसुः। द्विर्भावः। सन्लिटोर्जेः ( पा० ७-३-५७ ) इति द्वितीयस्य कुत्वम्। क्वसोः कित्त्वाद्गुणाभावः। क्रादिनियमात्प्राप्तस्येटो वस्वेकाजाद्घसाम् ( पा० ७-२-६७ ) इति नियमेन निवृत्तिः। द्वितीयाबहुवचनं शस्। भसञ्ज्ञायां वसोः सम्प्रसारणम् ( पा० ६-४-१३१ ) इति संप्रसारणम्। परपूर्वत्वम्। एरनेकाचः० ( पा० ६-४-८२ ) इति यणादेशः। शासिवसिघसीनां च ( पा० ८-३-६० ) इति षत्वम्। प्रत्ययस्वरेणोकार उदात्तः। कृतम्। डुकृञ् करणे। लोणमध्यमद्विवचनस्य तङ्ङादेशात्तमादेशः। शपो बहुलं छन्दसि ( पा० २-४-७३ ) इति लुक्। तिङ्ङतिङः ( पा० ८-१-२८ ) इति निघातः ॥७॥

अष्टमीमृचमाह। इन्द्रावरुणा हे इन्द्रावरुणौ धीष्वस्मदीयबुद्धिषु वां युवां सिषासन्तीषु सनितुं सम्यक् सेवितुमिच्छन्तीषु तदानीमा समन्तादस्मभ्यं शर्म सुखं नू नु। अतिशयेन क्षिप्रं प्रयच्छतम्। दत्तम्। षड्विंशतिसङ्ख्याकेषु क्षिप्रनामसु नु मक्षु ( निघ० २-१५ ) इति पठितम्। तस्य द्विरावृत्तिबलादतिशयो लभ्यते। इन्द्रावरुणा। उक्तम्। नूनु। ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ( पा० ६-३-१३३ ) इति पूर्वस्य दीर्घत्वम्। सिषासन्तीषु। वन षण सम्भक्तौ। धात्वादेः षः सः ( पा० ६-१-६४ )। इच्छायां सन्। द्विर्भावो हलादिः शेषः। सन्यतः ( पा० ७-४-७९ ) इतीत्वम्। आदेशप्रत्यययोः ( पा० ८-३-५९ ) इति षत्वम्। सनीवन्त० ( पा० ७-२-४९ ) इत्यादिना विकल्पादिडभावः। जनसनखनां सञ्झलोः ( पा० ( ६-४-४२ ) इति नकारस्याकारः। उपरि लटः शतृ। कर्तरि शप्। उगितश्च ( पा० ४-१-६ ) इति ङीप्। शप्श्यनोर्नित्यम् ( पा० ७-१-८१ ) इति नुम्। ङीपः शपश्च पित्त्वाच्छतुश्च लसार्वधातुकत्वेनानुदात्तत्वम्। सनो नित्त्वादाद्युदात्तत्वम्। तदेव शिष्यते। धीषु। सावेकाचः०

( पा० ६-१-१६८ ) इति विभक्तेरुदात्तत्वम्। अस्मभ्यम्। अस्मभ्यमप्रतिष्कुतः ( ऋ० १-७-६ ) इत्यत्रोक्तम्। यच्छतम्। दाण् दाने। शपि पाघ्राध्मा० ( पा० ७-३-७८ ) इत्यादिना यच्छादेशः ॥८॥

नवमीमृचमाह। इन्द्रावरुणा हे इन्द्रावरुणौ यामस्मत्कर्तृकां शोभनस्तुतिं प्रति हुवे। युवामुभौ आह्वयामि। किञ्च सधस्तुतिं युवयोरुभयोः साहित्येन क्रियमाणया स्तवक्रियया युक्तां यां सुष्टुतिं प्रतिलभ्य युवामृधाथे। वर्धेथे। तादृशी सुष्टुतिः शोभनस्तुतिहेतुभूतस्रक्समूहो वामश्नोतु। युवां व्याप्नोतु। अश्नोतु। अशू व्याप्तौ। लोटो व्यत्ययेन तिप्। स्वादिभ्यः श्नुः ( पा० ३-१-७३ )। सुष्टुतिः। न विन्धे अस्य सुष्टुतिम् ( ऋ० १-७-७ ) इत्यत्रोक्तम्। इन्द्रावरुणा। हुवे। उक्तं। अत्र तु यद्वृत्तयोगान्न निघातः। ऋधाथे। ऋधु वृद्धौ। लट्। व्यत्ययेनात्मनेपदम्। मध्यमद्विवचने श्नोर्बहुलं छन्दसि ( पा० २-४-७३ ) इति लुक्। प्रत्ययस्वरेणाकार उदात्तः। यच्छब्दयोगान्न निघातः। सधस्तुतिम्। सह स्तुतिर्यस्यां सुष्टुतौ सा सधस्तुतिः। अत्र सुष्टुतिरित्यन्यपदार्थं स्तुतिशब्दस्य स्तूयतेऽनयेति करणसाधनत्वेन स्रक्परत्वेऽयं स्तुतिशब्दो भावसाधनतया स्तवनक्रियापरः। तस्मिन्भावसाधनत्वेन क्रियापरेऽयं करणसाधनतया स्रक्पर इति समस्यमानपदार्थान्वयः। सहेत्यत्र हकारस्य व्यत्ययेन धकारः। सहशब्द एवमादित्वादन्तोदात्तः। बहुव्रीहित्वेन पूर्वपदप्रकृतिस्वरत्वम् ॥९॥

इति प्रथमस्य प्रथमे त्रयस्त्रिंशो वर्गः।

॥ १८ ॥

१·१८

पञ्चमेऽनुवाके षट् सूक्तानि। तत्र सोमानमित्यादिकं नवर्चं प्रथमं सूक्तम्। ऋषिच्छन्दसी पूर्ववत्। देवताविशेषस्तु एवमनुक्रम्यते। सोमानमिति पञ्च ब्राह्मणस्पत्याश्चतुर्थ्यामिन्द्रश्च सोमश्च पञ्चम्यां दक्षिणा चान्त्याः सादसस्पत्या नाराशंसी वान्त्येति। सूक्तगता आद्याः पञ्चर्चो ब्रह्मणस्पतिदेवताकाः। तासां मध्ये स घा वीर इति एतस्याश्चतुर्थ्या ऋचो ब्रह्मणस्पतिरिन्द्रश्च सोमश्चेति तिस्रो देवताः। त्वं तमित्येतस्याः पञ्चम्या दक्षिणया सह पूर्वोक्तास्तिस्रो देवताः। षष्ठीमारभ्य तिसृणां सदसस्पतिर्देवता। नराशंसमित्येतस्या नवम्याः सदसस्पतिर्नराशंसो वा विकल्प्यते। विनियोगस्तु पूर्ववत्।

तस्मिन्सूक्ते प्रथमामृचमाह। हे ब्रह्मणस्पते एतन्नामक देव सोमानमभिषवस्य कर्तारं मामनुष्ठातारं स्वरणं देवेषु प्रकाशनवन्तं कृणुहि। कुरु। अत्र दृष्टान्तः। कक्षीवन्तमेतन्नामकमृषिम्। इवशब्दोऽत्राध्याहर्तव्यः। कक्षीवान्यथा देवेषु प्रसिद्धस्तद्वदित्यर्थः। यः कक्षीवान् ऋषिरौशिजः। उशिजः पुत्रः। तमिवेति पूर्वयोजना। कक्षीवतोऽनुष्ठातृषु मुनिषु प्रसिद्धिस्तैत्तिरीयैराम्नायते। एतं वै पर आट्णारः कक्षीवानौशिजो वीतहव्यः श्रायसस्त्रसदस्युः पौरुकुत्स्यः प्रजाकामा अचिन्वत ( तै० स० ५-६-५-३ ) इति। ऋगन्तरेऽप्यृषित्वकथनेन अनुष्ठातृत्वप्रसिद्धिः

सूच्यते। अहं कक्षीवाँ ऋषिरस्मि विप्रः ( ऋ० स० ४-२६·१ ) इति। तस्मादस्यानुष्ठातारं प्रति दृष्टान्तत्वं युक्तम्। सोऽयं मन्त्रो यास्केनैवं व्याख्यातः। सोमानं सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते कक्षीवन्तमिव य औशिजः। कक्षीवान् कक्ष्यावानौशिज उशिजः पुत्र उशिग्वष्टेः कान्तिकर्मणोऽपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्तं सोमानं सोतारं मा प्रकाशनवन्तं कुरु ब्रह्मणस्पते ( नि० ६-१० ) इति। अस्मिन्मन्त्रे सोमानमिति पादेन कृणुहि ब्रह्मणस्पत इति पादेन सूचितं तात्पर्यं तैत्तिरीया आमनन्ति। सोमानं स्वरणमित्याह सोमपीथमेवावरुन्धे। कृणुहि ब्रह्मणस्पत इत्याह ब्रह्मवर्चसमेवावरुन्धे ( तै० स० १-५-८-४ ) इति। सोमानम्। सुनोतीति। षुञ् अभिषवे। अन्येभ्योऽपि दृश्यन्ते ( पा० ३-२-७५ ) इति मनिन्। दृशिग्रहणस्य विध्यन्तरोपसंग्रहणार्थत्वान्नित्त्वेऽपि नाद्युदात्तत्वम्। किन्तु प्रत्ययस्वर एव। उक्षादिषु वा सोमन्शब्दो द्रष्टव्यः। बहुलग्रहणाद्वौणादिको वा मनिद् द्रष्टव्यः। स्वरणम्। प्रख्यातम्। स्वृ शब्दोपतापयोः। कृत्यल्युटो बहुलम् ( पा० ३-३-११३ ) इति कर्मणि ल्युट्। लिति ( पा० ६-१-१९३ ) इत्यकार उदात्तः। कृणुहि। कृवि हिंसाकरणयोश्च। इदितो नुम् धातोः ( पा० ७-१-५८ ) इति नुम्। लोटः सेर्हिः। शपि प्राप्ते धिन्विकृण्व्योर च ( पा० ३-१-८० ) इत्युप्रत्ययः। तत्सन्नियोगेन वकारस्य चाकारः। तस्यातो लोपः ( पा० ६-४-४८ ) इति लोपः। तस्य स्थानिवद्भावान्न पूर्वस्य लघूपधगुणः। हेर्ङित्त्वादुकारस्य न गुणः। उतश्च प्रत्ययाच्छन्दो वा वचनम् ( पा० वा० ६-४-१०६ ) इति हेर्लुक् न। सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वचनाद्धेरेव प्रत्ययस्वरेणोदात्तत्वम्। पादादित्वान्न निघातः। ब्रह्मणः। षष्ठ्याः पति-पुत्र० ( पा० ८-३-५३ ) इत्यादिना संहितायां विसर्जनीयस्य सकारः। सुबामन्त्रितपराङ्ग-वद्भावात्पदद्वयस्यामन्त्रितनिघातः। कक्षीवन्तम्। कक्षे भवा कक्ष्या अश्वोदरम्बन्धिनी रज्जुः। भवे छन्दसि ( पा० ४-४-११० ) इति यत्प्रत्ययः। सास्यास्तीत्यर्थे आसन्दीवदष्ठीवच्चक्रीव-त्कक्षीवद्० ( पा० ८-२-१२ ) इत्यृषिविशेषनाम कक्षीवच्छब्दो निपातितः। छन्दसीरः ( पा० ८-२-१५ ) इति वत्वम्। यप्रत्ययस्वरेण तदादेशो निपातित ईकार उदात्तः। मतुप्सुपौ पित्त्वा-दनुदात्तौ। औशिजः। वश कान्तौ। इजि ( उ० २-६९ ) इत्यनुवृत्तौ वशेः किच्च ( उ० २-७० ) इतीजिप्रत्ययः। तस्य कित्त्वाद् ग्रहिज्या० ( पा० ६-१-१६ ) इत्यादिना सम्प्रसारणं परपूर्वत्वं गुणाभावः। तस्यापत्यम् ( पा० ४-१-९२ ) इति प्राग्दीव्यतोऽण् ( पा० ४-१-८३ )। आदिवृद्धिः। प्रत्ययस्वरेणान्तोदात्तत्वम् ॥१॥

द्वितीयामृचमाह। यो ब्रह्मणस्पती रेवान्धनवानयश्चामीवहा रोगाणां हन्ता वसुवित् धनस्य लब्धा पुष्टिवर्धनः पुष्टेर्वर्द्धयिता यश्च तुरस्त्वरोपेतः शीघ्रफलप्रदः स ब्रह्मणस्पतिर्नोऽस्मान् सिषक्तु। सेवताम्। परिगृह्यानुगृह्णात्वित्यर्थः। अत्र सिषक्तुशब्दस्य सेवार्थत्वं यास्क आह सिषक्तु सेवत इति सेवमानस्य ( नि० ३-२१ ) इति। प्रत्यायकौ शब्दाविति शेषः। रेवान्। रयिरस्या-स्तीति मतुप्। रयेर्मतौ बहुलम् ( पा० वा० ६-१-३७ ) इति यकारस्य सम्प्रसारणं परपूर्वत्वम्। छन्दसीरः ( पा० ८-२-१५ ) इति वत्वम्। आद्गुणः। ननु वत्वस्यासिद्धत्वाद्बहिरङ्गत्वाच्च प्रागेव गुणे कृते इवर्णाभावान्न वत्वम्। नचान्तादिवच्च ( पा० ६-१-८५ ) इत्यादिवद्भावेनेवर्ण-सम्पादनम्। वर्णाश्रयविधौ तत्प्रतिषेधात्। अन्यथा खट्वाभिरित्यत्र सवर्णदीर्घस्यान्तवद्भावेना-

कारत्वादतो भिस ऐस् ( पा० ७-१-९ ) इत्यैसादेशः स्यात्। नच निरवकाशत्वेन वत्वस्यानवकाशत्वम्। अग्निमान्वै दर्भस्तम्बः ( तै० ब्रा० २-२-१-५ )। उप ब्रह्माणि हरिवः ( ऋ० १०-१०४-६ ) इत्यादाववकाशलाभात्। सत्यम्। अत्र गुणप्रवृत्तेः प्रागिकारात्परो मतुप्। कदाचिदिवर्णात्परस्य मतुपः पश्चादेकारादेशेनेवर्णाभावेऽपि भवति वत्वमिति छन्दसीरः ( पा० ८-२-१५ ) इति सूत्रकृता विवक्षितम्। अमुनैवाभिप्रायेण हरिव इत्यादिकमुदाहृत्याप्यन्ते वृत्तिकृता आरेवानित्यप्युदाहृतम्। ह्रस्वनुड्भ्याम्० ( पा० ६-१-१७६ ) इत्यत्रारेशब्दान्मतुप इत्युदात्तत्वं वक्तव्यम् ( पा० वा० ६-१-१७६ ) इत्यत्रारेशब्दो रैशब्दस्याप्युपलक्षणम्। अत एव हि रेवाँ इन्द्रेत्यादौ मतुप उदात्तत्वं दृष्टम्। अथवा ह्रस्वनुड्भ्याम् ( पा० ६-१-१७६ ) इत्यत्रापि कदाचिद्ध्रस्वात्परस्य मतुप उदात्तत्वमित्येव व्याख्येयम्। एवं च संप्रसारणपरपूर्वत्वयोः कृतयोर्गुणात्प्राग्घ्रस्वात्परो मतुब्भवति रेवानारेवानित्यादौ सर्वत्रोदात्तत्वं सिद्ध्यति। अयमेव सूत्रकृतोऽभिप्रायो वार्तिककृता व्याख्यात इति। अमीवहा। अम रोग इत्येतस्माद्वन्प्रत्ययेनामीवशब्दो निपातितः। तं हन्तीति बहुलं छन्दसि ( पा० ३-२-८८ ) इति क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वम्। वसुवित्। वसु विन्दतीति वसुवित्। क्विप् च ( पा० ३-२-७६ ) इति क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वम् पुष्टिवर्धनः। वर्धयतेर्नन्द्यादित्वाल्ल्युः। लिति ( पा० ६-१-१९३ ) इति प्रत्ययात्पूर्वस्योदात्तत्वम्। पुष्टेर्वर्धन इति कर्मणि षष्ठ्या समासः। कृदुत्तरपदप्रकृतिस्वरत्वम्। सिषक्तु। षच समवाये। लोटि बहुलं छन्दसि ( पा० २-४-७६ ) इति शपः श्लुः। श्लौ ( पा० ६-१-१० ) इति द्वित्वे हलादिशेषे बहुलं छन्दसि ( पा० ७-४-७८ ) इत्यभ्यासस्येकारः। तुरः। तुर त्वरणे। इगुपधज्ञाप्रीकिरः कः ( पा० ३-१-१३५ )। प्रत्ययस्वरः ॥२॥

तृतीयामृचमाह। अररुषो मर्त्यस्योपद्रवं कर्तुमस्मत्समीपं प्राप्तस्य शत्रुरूपस्य मनुष्यस्य धूर्तिर्हिंसकः शंसः शंसनमधिक्षेप इत्यर्थः। तादृशो वाग्विशेषो नोऽस्मान्मा प्रणक्। मा संपृणक्तु। शत्रूणां प्रयुक्तोऽधिक्षेपः कदाचिदस्मान्मा प्राप्नोत्वित्यर्थः। तदर्थं हे ब्रह्मणस्पते नोऽस्मान्रक्ष। पालय। मा। निपातः। शंसः। शंसनं शंसः। भावे घञ्। ञित्वादाद्युदात्तः। अररुषः। अर्तेररुः ( उ० ४-८० ) इत्यन्तर्भावितण्यर्थादृ गतावित्यस्मादरुस्। गुणो रपरत्वम्। प्रत्ययस्वरे प्राप्ते वृषादित्वादाद्युदात्तः। धूर्तिः। धुर्वी हिंसायाम्। क्तिच्क्तौ च संज्ञायाम् ( पा० ३-३-१७४ ) इति क्तिच्। तितुत्रतथसिसुसरकसेषु च ( पा० ७-२-९ ) इतीट्प्रतिषेधः। उपधायां च ( पा० ७-१-१०१ ) इत्युपधादीर्घत्वम्। वलिलोपं बाधित्वोठि प्राप्ते राल्लोपः (पा० ६-४-२१) इति वकारलोपः। प्रणक्। पृची संपर्के। लङस्तिप्। इतश्च (पा० ३-४-९७) इतीकारलोपः। हल्ङ्यादिलोपः। कुत्वम्। रुधादिभ्यः श्नम् (पा० ३-१-७८)। तस्य व्यत्ययो बहुलम् ( पा० ३-१-८५ ) इत्यडागमः। णत्वादेशः। अकारस्यागमानुदात्तत्वं बाधित्वा व्यत्ययेनोदात्तत्वम्। चादिलोपे विभाषा ( पा० ८-१-६३ ) इति निघाताभावः। मर्त्यस्य। मृङ् प्राणत्यागे। असिहसिमृ० ( उ० ३-८५ ) इत्यादिना औणादिकस्तन् प्रत्ययः। मर्तेषु भव इत्यर्थे भवे छन्दसि ( पा० ४-४-११० ) इति यत्। यतोऽनावः ( पा० ६-१-२१३ ) इत्याद्युदात्तत्वम्। रक्ष। रक्ष पालने। शपः पित्त्वादनुदात्तत्वम्। धातुस्वर एव शिष्यते। पादादित्वान्न निघातः। रक्षा णः। द्व्यचोऽतस्तिङः ( पा० ६-३-१३५ ) इति दीर्घः। उपसर्गाद्बहुलम् ( पा० ८-४-२८ ) इति बहुलग्रहणा-

दुनुपसर्गादपि नसो णत्वम्। ब्रह्मणस्पते। षष्ठ्याः पतिपुत्र० ( पा० ८-३-५३ ) इति संहितायां विसर्गस्य सकारः। सुबामन्त्रिते पराङ्गवद्भावात्पदद्वयस्यामन्त्रितनिघातः ॥३॥

चतुर्थीमृचमाह। इन्द्रो देवो यं मर्त्यं यजमानं हिनोति। प्राप्नोति वर्द्धयति वा। तथा ब्रह्मणस्पतिर्देवो हिनोति। तथा सोमो हिनोति। स घ स एव यजमानो वीरो वीर्ययुक्तः सन् न रिष्यति। न विनश्यति। घ। चादिरनुदात्तः। संहितायामृचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ( पा० ६-३-१३३ ) इति दीर्घः। ब्रह्मणस्पतिः। उक्तम्। हिनोति। हि गतौ वृद्धौ च। स्वादिभ्यः श्नुः ( पा० ३-१-७३ )। तिपः पित्त्वाच्छ्नुप्रत्ययस्वर एव शिष्यते ॥४॥

पञ्चमीमृचमाह। हे ब्रह्मणस्पते त्वं तं मर्त्यमनुष्ठातारं मनुष्यमंहसः पापात्पाहीति शेषः। तथा सोमः पात्विन्द्रश्च पातु दक्षिणाख्या देवता च पातु। दक्षिणा। दक्ष वृद्धौ। द्रु दक्षिभ्यामिनन् ( उ० २-५१ )। नित्त्वादाद्युदात्तः। अंहसः। नब्विषयस्य० ( उ० २-३ ) इत्यादिरुदात्तः ॥५॥

इति प्रथमस्य प्रथमे चतुस्त्रिंशो वर्गः।

अनुप्रवचनीयचरोर्होमे सदसस्पतिमित्येषा विनियुक्ता। तथाच गृह्ये मेखलामाबध्येति खण्डे पठ्यते। आचार्यः समन्वारब्धे जुहुयात्सदसस्पतिमद्भुतम् ( आ० गृ० १-२२ ) इति।

तामेतां सूक्ते षष्ठीमृचमाह। मेधां लब्धुं सदसस्पतिमेतन्नामकं देवमयासिषम्। प्राप्तवानस्मि। कीदृशम्। अद्भुतम्। आश्चर्यकरम्। इन्द्रस्य प्रियम्। सोमपाने सहचारित्वात्। काम्यम्। कमनीयम्। सनिम्। धनस्य दातारम्। सदसः। षदॢ विशरणादौ। सर्वधातुभ्योऽसुन् (उ० ४-१७०) नित्त्वादाद्युदात्तः। पतिम्। पातेर्डतिः (उ० ४-५८)। टिलोपः। प्रत्ययस्वरः। प्रियम्। इगुपधज्ञाप्रीकिरः कः ( पा० ३-१-१३५ )। इयङादेशः। प्रत्ययस्वरः। काम्यम्। कामयतेरचो यत् ( पा० ३-१-९७ )। णेरनिटि ( पा० ६-४-५१ ) इति णिलोपः। यतोऽनावः ( पा० ६-१-२१३ ) इत्याद्युदात्तत्वम्। सनिम्। षणु दाने। धात्वादेः षः सः ( पा० ६-१-६४ )। अच इः ( उ० ४-१४० ) इत्यनुवृत्तौ खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च। ( उ० ४-१४१ ) इति इप्रत्ययः। प्रत्ययस्वरः। अयासिषम्। या प्रापणे। लुङ्। मिपोऽमादेशः। यमरमनमातां सक् च ( पा० ७-२-७३ ) इति सिच इडागमो धातोः सगागमः। निघातः ॥६॥

सप्तमीमृचमाह। यज्ञोऽयमनुष्ठातव्यो विपश्चितश्चन विदुषोऽपि यजमानस्य यस्मात्सदसस्पतिर्देवाहते न सिध्यति। सोऽयं सदसस्पतिर्देवो धीनां मनोऽनुष्ठानविषयाणामस्मद्बुद्धीनामनुष्ठेयकर्मणां वा योगं सम्बन्धमिन्वति। व्याप्नोति। यजमानमनुगृह्य तदीयं यज्ञं निष्पादयतीत्यर्थः। यस्मात्। अन्यारात्० ( पा० २-३-२९ ) इत्यादिना ऋतेयोगात्पञ्चमी। सावेकाचः० ( पा० ६-१-१६८ ) इति विभक्तेरुदात्तत्वे प्राप्ते न गोश्वन्साववर्ण० ( पा० ६-१-१८२ ) इति प्रतिषेधः। सिध्यति। षिधु संराद्धौ। श्यनो नित्त्वादाद्युदात्तत्वम्। यद्वृत्तान्नित्यम् ( पा० ८-१-६६ ) इति निघातप्रतिषेधः। धीनाम्। सावेकाचः० ( पा० ६-१-१६८ ) इति विभक्तेरुदात्तत्वम्। योगम्। युजिर् योगे। घञो ञित्त्वादाद्युदात्तत्वम्। इवि व्याप्तौ। शप्। इदितो नुम् धातोः ( पा० ७-१-५८ ) इति नुम्। निघातः ॥७॥

अष्टमीमृचमाह। आदनन्तरमेव हविष्कृतिं हविःसम्पादनयुक्तं यजमानमृध्नोति। सदसस्पतिर्देवो वर्द्धयति। हविर्धानानन्तरमेव फलं प्रयच्छतीत्यर्थः। तथाविधफलसिद्धयेऽध्वरं यजमानेनानुष्ठीयमानं यज्ञं प्राञ्चं प्रकर्षेण गच्छन्तम्। अविघ्नेन परिसमाप्तियुक्तं कृणोति। करोति। होत्रा हूयमाना देवता तुष्टा सती यजमानं प्रख्यापयितुं देवेषु गच्छति। यद्वा होत्राऽस्मदीयस्तुतिरूपा वाक् देवान्परितोषयितुं देवेषु गच्छति। श्लोको धारेत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु होत्रा गीः ( निघ० १-११ ) इति पठितम्। हविष्कृतिम्। हविषः कृतिः सम्पादनं यस्य यजमानस्य सोऽयं हविष्कृतिः। बहुव्रीहौ प्रकृत्या० ( पा० ६-२-१ ) इति पूर्वपदप्रकृतिस्वरत्वम्। प्राञ्चम्। अनिगन्तोऽञ्चतौ वप्रत्यये ( पा० ६-२-५२ ) इति गतेः प्रकृतिस्वरत्वम्। पश्चादेकादेशस्वरः। अध्वरम्। न विद्यते ध्वरो हिंसा यस्मिन्। नञ्सुभ्याम् ( पा० ६-२-१७२ ) इत्युत्तरपदान्तोदात्तत्वम्। हूयतेऽस्यामिति होत्रा देवता। हुयामाश्रुभसिभ्यस्त्रन् ( उ० ४-१५६ ) इति त्रन्। नित्त्वादाद्युदात्तः ॥८॥

नवमीमृचमाह। नराशंसमेतन्नामकं देवविशेषम्। यद्वावयवार्थव्युत्पत्त्या सदसस्पतिदेवपरोऽयं शब्दः। व्युत्पत्तिं च यास्को दर्शयति। नराशंसो यज्ञ इति कात्थक्यो नरा अस्मिन्नासीनाः शंसन्त्यग्निरिति शाकपूणिर्नरः प्रशस्यो भवति। ( नि० ८-६ ) इति। अत्राग्निवत्सदसस्पतेरपि नरैः प्रशस्यमानत्वान्नराशंसत्वम्। एतमेवाभिप्रायं हृदि निधाय ब्राह्मणमेवमाम्नायते। प्रजा वै नरो वाक् शंसः ( ऐ० ब्रा० ६-२७ ) इति। अतो मनुष्यैः शस्यमानो यः सदसस्पतिर्देवो यो वा नराशंसनामको देवस्तमपश्यम्। शास्त्रदृष्ट्या दृष्टवानस्मि। कीदृशम्। सुधृष्टमम्। अत्याधिक्येन धार्ष्ट्ययुक्तम्। सप्रथस्तमम्। अतिशयेन प्रख्यातम्। सद्ममखसम्। प्राप्ततेजस्कम्। तत्र दृष्टान्तः। दिवो न। द्युलोकानिव। आदित्यचन्द्राधिष्ठिता द्युलोकविशेषा यथा तेजस्विनस्तद्वदयं नराशंसस्तेजस्वीत्यर्थः। सुधृष्टमम्। शोभनं धृष्णोतीति सुधृक्। क्विप् च ( पा० ३-२-७६ ) इति क्विप्। आतिशायनिकस्तमप्। षकारस्य जश्त्वाभावश्छान्दसः। कृदुत्तरपदप्रकृतिस्वरत्वेन ऋकार उदात्तः। अपश्यम्। प्राग्घा० ( पा० ७-३-७८ ) इत्यादिना पश्यादेशः। लुङ्लङ्लृङ्क्ष्वडुदात्तः ( पा०६-४-७१ ) इत्यट उदात्तत्वम्। पादादित्वान्न निघातः। सप्रथस्तमम्। प्रथ प्रख्याने। प्रथनं प्रथः। सर्वधातुभ्योऽसुन् ( उ० ४-१९० )। नित्त्वादाद्युदात्तत्वम्। सह प्रथसा वर्तत इति तेन सहेति तुल्ययोगे ( पा० २-२-२८ ) इति बहुव्रीहिसमासः। वोपसर्जनस्य ( पा० ६-३-८२ ) इति सादेशः। पूर्वपदप्रकृतिस्वरत्वे प्राप्ते परादिश्छन्दसि बहुलम् ( पा० ६-२-१९९ ) इत्युत्तरपदाद्युदात्तत्वम्। दिवः। ऊडिदम्० ( पा ६-१-१७१ ) इत्यादिना विभक्तेरुदात्तत्वम्। सद्ममखसम्। सीदति इति सद्म। षद्लृ विशरणादौ। अन्येभ्योऽपि दृश्यन्ते (पा० ३-२-७५) इति मनिन्। नित्त्वादाद्युदात्तः। सद्म महो यस्येति बहुव्रीहौ हकारस्य व्यत्ययेन खकारः ॥९॥

इति प्रथमस्य प्रथमे पञ्चत्रिंशो वर्गः।

॥१९॥

१·१९

प्रतित्यमिति नवर्चं द्वितीयं सूक्तम्। ऋषिश्छन्दसी पूर्ववत्। देवता त्वनुक्रम्यते। प्रतित्यं साग्निमारुतमिति। कारीरीष्टौ प्रतित्यमेषा धाय्या। तथाच सूत्रितम्। वर्षकामेष्टिः

कारीरी तस्यां प्रतित्यं चारुमध्वरमीळे अग्निं स्ववसं नमोभिरिति धाय्ये। ( आ० श्रौ० २-२२ ) इति।

तामेतां सूक्तगतां प्रथमामृचमाह। त्यच्छन्दः सर्वनाम तच्छब्दपर्यायः। हे अग्ने यो यज्ञश्चारुत्वकल्यरहितः। त्वं तथाविधं चारुमध्वरं प्रतिलभ्य गोपीथाय सोमपानाय प्रहूयसे। प्रकर्षेण त्वं हूयसे। तस्मादस्मिन्नध्वरे त्वं मरुद्भिः सह देवविशेषैः सहागहि। आगच्छ। सेयमृग्यास्केनैवं व्याख्याता। तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे सोऽग्ने मरुद्भिः सहागच्छ। ( नि० १०-३६ ) इति। प्रति। निपात आद्युदात्तः। त्यम्। त्यदादीनामः। ( पा० ७ २-१०२ ) प्रातिपदिकस्वरः। चारुम्। दृसनिजनिचरि० ( उ० १-३ ) इत्यादिना ञुण्। अत उपधाया वृद्धिः। ञित्त्वादाद्युदात्तः। गोपीथाय। निशीथगोपीथावगाथाः ( उ० २-९ ) इति थक्प्रत्ययान्तो निपातितः। प्र। निपातस्वरः ॥१॥

द्वितीयामृचमाह। हे अग्ने महो महतस्तव सम्बन्धिनं क्रतुं कर्मविशेषमुल्लङ्घ्य परो नहि। उत्कृष्टो देवो न भवति खलु। तथा मर्त्यो मनुष्यश्च परो न भवति। ये मनुष्यास्त्वदीयं क्रतुमनुतिष्ठन्ति ये च देवास्त्वदीये क्रतौ इज्यन्ते त एवोत्कृष्टा इत्यर्थः। मरुद्भिरित्यादि पूर्ववत्। नहि। एवमादीनामन्तः ( पा० ४-१४ ) इत्यन्तोदात्तः। देवः। पचाद्यजन्तश्चित्त्वादन्तोदात्तः। महः। महतस्तलोपः छान्दसः। बृहन्महतोरुपसङ्ख्यानम् ( पा० वा० ६-१-१७३ ) इति विभक्तेरुदात्तत्वम्। तव। युष्मदस्मदोर्ङसि ( पा० ६-१-२११ ) इत्याद्युदात्तत्वम्। क्रतुम्। कृञः कतुः ( उ० १-७७ )। प्रत्ययाद्युदात्तत्वम्। गहि। गम्लृ सृप्लृ गतौ। लोटः सेर्हिः। बहुलं छन्दसि ( पा० २-४-७३ ) इति शपो लुक्। अनुदात्तोपदेश० ( पा० ६-४-३७ ) इत्यादिनानुनासिकलोपः। तस्यासिद्धवदत्राभात् ( पा० ६-४-२२ ) इत्यसिद्धत्वादतो हेः ( पा० ६-४-१०५ ) इति लुक् न भवति। निघातः ॥२॥

तृतीयामृचमाह। हे अग्ने ये मरुतो महो रजसो महत उदकस्य वर्षणप्रकारं विदुस्तैर्मरुद्भिरित्यन्वयः। कीदृशा मरुतः। विश्वे। सर्वे सप्तविधगणोपेताः। सप्तगणा वै मरुतः ( तै० सं० २-२-११-१ ) इति श्रुतेः। देवासः। द्योतमानाः। अद्रुहः। द्रोहरहिताः। वर्षणेन सर्वभूतोपकारित्वात्। तथा चोपरिष्टादाम्नायते। उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः ( ऋ० सं० ५-५५-५ ) इति। शाखान्तरेऽपि मन्त्रान्तरस्य ब्राह्मणमेवमाम्नायते। मरुतः पृषयन्त स्वेत्याह मरुतो वै वृष्ट्या ईशते ( तै० ब्रा० ३-३ ६-४ ) इति। रजःशब्दो यास्केन बहुधा व्याख्यातः। रजो रजतेर्ज्योती रज उच्यते उदकं रज उच्यते लोका रजांस्युच्यन्तेऽसृगहनी रजसी उच्येते ( नि० ४-१९-१ ) इति। रजसः। नब्विषयस्यानिसन्तस्य ( फि० २-३ ) इत्याद्युदात्तः। विदुः। विद ज्ञाने। विदो लटो वा। ( पा० ३-४-८३ ) इति झेरुसादेशः। प्रत्ययस्वरः। यद्वृत्तयोगान्निघाताभावः। विश्वे। पचाद्यजन्तः। चित्त्वादन्तोदात्तः। अद्रुहः। संपदादित्वाद्भावे क्विपि बहुव्रीहौ नञ्सुभ्याम् ( पा० ६-२-१७२ ) इत्यन्तोदात्तत्वम्। कर्तरि वा क्विप्। तत्पुरुषे ह्यव्ययपूर्वपदप्रकृतिस्वरत्वं स्यात्। न च कृदुत्तरपदप्रकृतिस्वरत्वम्। यतो नञ् न गतिर्न कारक इति ॥३॥

चतुर्थीमृचमाह। ये मरुत उग्रास्तीव्राः सन्तोऽर्कमुदकमानृचुः। अर्चितवन्तः। वर्षणेन

संपादितवन्त इत्यर्थः। तैर्मरुद्भिरित्यन्वयः। कीदृशा मरुतः। ओजसा बलेनानाधृष्टासोऽतिरस्कृताः। सर्वेभ्योऽपि प्रबला इत्यर्थः। अर्कशब्दस्योदकवाचित्वं वाजसनेयिन आमनन्ति। आपो वा अर्कः ( श० ब्रा० १०-६-५-२ ) इति। तन्निर्वचनं च त एवमामनन्ति। सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वम् ( श० ब्रा० १०-६-५-१ ) इति। जगत्स्रष्टा हिरण्यगर्भ उदकं स्रष्टुमुद्युक्तोऽचन् उदकसत्यसङ्कल्पमहिमप्रख्यापनेन स्वात्मानं पूजयन्नचरत्। तथा पूजयतो हिरण्यगर्भस्य सकाशादुदकमुत्पन्नम्। तदानीमर्चतो मत्तः कमभूदित्यवोचत्। तेनोदकस्यार्कनाम निष्पन्नमित्यर्थः। आनृचुः। यद्वृत्तयोगादनिघातः। अनाधृष्टासः। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। ओजसा। उब्जेर्बले बलोपश्च ( उ० ४-१८३ ) इत्यसुन्। निस्वादाद्युदात्तः ॥४॥

पञ्चमीमृचमाह। ये मरुतः शुभ्रत्वादिगुणोपेतास्तैर्मरुद्भिरित्यन्वयः। शुभ्राः। शोभमानाः। घोरवर्पसः उग्ररूपधराः। सुक्षत्रासः। शोभनधनोपेताः। रिशादसः। हिंसकानां भक्षकाः। मघमित्यादिषु अष्टाविंशतिसङ्ख्याकेषु धननामसु क्षत्रं भगः ( निघ० २-१० ) इति पठितम्। शुभ्राः। स्फायितञ्चि० ( उ० २-१३ ) इत्यादिना शुभेरौणादिको रक्प्रत्ययः। प्रत्ययस्वरः। घोरवर्पसः। घोरं वर्पो येषां ते। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। सुक्षत्रासः। बहुव्रीहौ नञ्सुभ्याम् ( पा० ६-२-१७२ ) इत्युत्तरपदान्तोदात्तत्वम्। आद्युदात्तं द्व्यच्छन्दसि ( पा० ६-२-११९ ) इत्येव तु न भवति। क्षत्रशब्दस्यान्तोदात्तत्वात्। रिशन्ति हिंसन्तीति रिशाः। तानदन्तीति रिशादसः। सर्वधातुभ्योऽसुन् प्रत्ययः। नित्स्वरेणोत्तरपदमाद्युदात्तम्। कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते ॥

प्रथमस्य प्रथमे षट्त्रिंशो वर्गः।

सूक्ते षष्ठीमृचमाह। ये मरुतो नाकस्याधि दुःखरहितस्य सूर्यस्योपरि दिवि द्युलोके रोचने दीप्यमाने ये देवासः स्वयमपि दीप्यमाना आसते। तैर्मरुद्भिरित्यन्वयः। नाकस्य। कं सुखम्। तद्यस्मिन्नास्त्यसावक इति बहुव्रीहिं कृत्वा पश्चान्नञ्। न अको नाक इति नञा तत्पुरुषः। नलोपो नञः ( पा० ६-३-७३ ) इति लोपो न भवति। नभ्राण्नपान्न० ( पा० ६-३-७५ ) इत्यादिना प्रकृतिभावात्। तत्पुरुषे तुल्यार्थ० ( पा० ६-२-२ ) इत्यादिना अव्ययपूर्वपदप्रकृतिस्वरत्वेनोदात्तत्वम्। प्रथमस्य तत्पुरुषं कृत्वा पश्चाद् बहुव्रीहावुत्तरपदान्तोदात्तत्वं स्यात्। अधिशब्द उपर्यर्थे। उपसर्गप्रतिरूपको निपातः। रोचने। रुच दीप्तौ। अनुदात्तेतश्च हलादेः ( पा० ३-२-१४९ ) इति युच्। चितः ( पा० ६-१-१६३ ) इत्यन्तोदात्तत्वम्। दिवि। ऊडिदम्० ( पा० ६-१-१७१ ) इत्यादिना विभक्तेरुदात्तत्वम्। देवासः। आज्जसेरसुक् ( पा० ७-१-५० ) इत्यसुक्। आसते। आस उपवेशने। अनुदात्तेत्त्वादात्मनेपदम्। झस्यादादेशः। अदिप्रभृतिभ्यः शपः ( पा० २-४-७२ ) इति शपो लुक्। अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वम्। यद्वृत्तयोगान्न निघातः ॥६॥

सप्तमीमृचमाह। ये मरुतः पर्वतान्मेघानीङ्खयन्ति। चालयन्ति। तथार्णवमुदकयुक्तं समुद्रं तिरः। कुर्वन्तीति शेषः। निश्चलस्य जलस्य तरङ्गाद्युत्पत्तये चालनं तिरस्कारः।

तैर्मरुद्भिरित्यन्वयः। ईङ्खयन्ति। उख उखीत्यादावीखिर्गत्यर्थः। हेतुमति च ( पा० ३-१-२६ ) इति णिच्। इदितो नुम् धातोः ( पा० ७-१-५८ ) इति नुम्। णिजन्तधातोश्नितः ( पा० ६-१-१६३ ) इत्यन्तोदात्तत्वम्। शपः पित्त्वादनुदात्तत्वम्। तिङश्च लसार्वधातुकस्वरेण। धातुस्वर एव शिष्यते। पर्वतान्। पुर्व पर्व मर्व पूरणे। औणादिको भृमृदृशि० ( उ० ३-११० ) इत्यादिनाऽतच्प्रत्ययः। प्रत्ययस्वरः ॥७॥

अष्टमीमृचमाह। ये मरुतो रश्मिभिः सूर्यकिरणैः सहातन्वन्ति। आप्नुवन्त्याकाशमिति शेषः। किञ्च। ओजसा स्वकीयबलेन समुद्रं तिरस्कुर्वन्ति। तैमरुद्भिरित्यन्वयः। तन्वन्ति। तनु विस्तारे। लटो झोऽन्तः। तनादिकृञ्भ्य उः ( पा० ३-१-७९ )। सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति तिङ एवाद्युदात्तत्वम्। समुद्रम्। उन्दी क्लेदने। स्फायितञ्चि० ( उ० २-१३ ) इति रक्। समासे कृदुत्तरपदप्रकृतिस्वरत्वम् ॥८॥

नवमीमृचमाह। हे अग्ने पूर्वपीतये पूर्वकाले प्रवृत्ताय पानाय त्वा त्वां प्रति सोम्यं मधु सोमसम्बन्धिनं मधुररसमभिसृजामि सर्वतः संपादयामि। अतस्त्वं मरुद्भिः सहात्रागच्छ। अभि। एवमादीनामन्तः ( फि० ४-१३ ) इत्यन्तोदात्तत्वम्। त्वामौ द्वितीयायाः ( पा० ८-१-२३ ) इति त्वादेशः सर्वानुदात्तः। पूर्वपीतये। पूर्वा चासौ पीतिश्च। पुंवत्कर्मधारय० ( पा० ६-३-४२ ) इत्यादिना पुंवद्भावः। सृजामि। सृज विसर्गे। मिपः पित्त्वादनुदात्तत्वम्। विकरणस्वरः। सोम्यम्। सोममर्हति यः ( पा० ४-४-१३७ )। प्रत्ययस्वरेणान्तोदात्तः। मधु। फलिपाटिनमि० ( उ० १-१८ ) इत्यादिना उप्रत्ययः। निदित्यनुवृत्तेराद्युदात्तत्वम्। अन्यद्गतम्। अत्र यास्कः। अभि सृजामि त्वा पूर्वपीतये पूर्वपानाय सोम्यं मधु सोममयं सोऽग्ने मरुद्भिः सहागच्छ। ( नि० १०-३७ ) इति ॥९॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऋक्संहितायां
प्रथमेऽष्टके प्रथमोऽध्यायः ॥

॥ २० ॥

१·१०१

प्रमन्दिने इत्येकादशर्चमष्टमं सूक्तमाङ्गिरसस्य कुत्सस्यार्षम्। अष्टम्याद्याश्चतस्त्रस्त्रिष्टुभः शिष्टाः सप्त जगत्यः। इन्द्रो देवता। तथा चानुक्रान्तम्। प्रमन्दिन एकादश कुत्स आद्या गर्भस्राविण्युपनिषद् चतस्त्रिष्टुबन्तमिति। दशरात्रस्य नवमेऽहनि मरुत्वतीये एतत्सूक्तम्। विश्वजित इति खण्डे सूत्रितं प्रमन्दिने इमा उ त्वेति मरुत्वतीयमिति ( आ० श्रौ० ८-७ )।

प्रथमामृचमाह। हे ऋत्विजः। मन्दिने स्तुतिमते स्तोतव्यायेन्द्राय पितुमत् हविर्लक्षणेनान्नेनोपेतं वचः स्तुतिलक्षणं वचनं प्रार्चत। प्रकर्षेणोच्चारयत। य इन्द्रः ऋजिश्वना एतत्सञ्ज्ञकेन राज्ञा सख्या सहितः सन् कृष्णगर्भाः। कृष्णो नाम कश्चिदसुरः। तेन निषिक्त-

गर्भास्तदीया भार्या निरहन्। अवधीत्। कृष्णमसुरं हत्वा तदीयपुत्राणामपि अनुत्पत्त्यर्थं गर्भिणीस्तदीयभार्या अप्यवधीदित्यर्थः। अवस्यवो रक्षणेच्छवो वयं वृषणं कामानां वर्षितारं वज्रदक्षिणं वज्रयुक्तेन दक्षिणहस्तेनोपेतं तं मरुत्वन्तमिन्द्रं सख्याय सख्युः कर्मणे हवामहे। आह्वयामहे। मन्दिने। मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। औणादिक इनिप्रत्ययः। तदुक्तं यास्केन मन्दी मन्दतेस्तुतिकर्मणः ( नि० ४-२४ ) इति। पितुमत्। ह्रस्वनुड्भ्यां मतुप् ( पा० ६-१-१७६ ) इति मतुप उदात्तत्वम्। कृष्णगर्भाः। कृष्णेन निषिक्ता गर्भा यासु तास्तथोक्ताः। परादिश्छन्दसि बहुलम् ( पा० ६-२-१९९ ) इति पूर्वपदान्तोदात्तत्वम्। अवस्यवः। औणादिको भावेऽसुन्। अव इच्छति अवस्यति। सुप आत्मनः क्यच् ( पा० ३-१-८ )। क्याच्छन्दसि ( पा० ६-४-९ ) इति विकल्पादुपधादीर्घाभावः। सख्याय। सख्युः कर्म सख्यम्। सख्युर्यः ( पा० ५-१-१२६ ) इति यप्रत्ययः। हवामहे। ह्वो लटि बहुलं छन्दसि ( पा० ६-१-३४ ) इति सम्प्रसारणम् ॥१॥

द्वितीयामृचमाह। य इन्द्रो जाहृषाणेन प्रवृद्धेन मन्युना क्रोधेन व्यंसं विगतभुजं वृत्रमहन्नवधीत्। अपि च य इन्द्रः शम्बरमेतन्नामकमसुरं चावधीत्। तथा अव्रतम्। व्रतस्य यागादेः कर्मणो विरोधिनं पिप्रुमेतत्सञ्ज्ञकमसुरञ्च य इन्द्रोऽवधीत्। किञ्च य इन्द्रोऽशुषं शोषकरहितं शुष्णं सर्वस्य जगतः शोषकमेतत्सञ्ज्ञकमसुरम्। नि अवृणक्। न्यवर्तयत्। समूलं हतवानित्यर्थः। तं मरुत्वन्तमिन्द्रं सख्याय आह्वयामहे। व्यंसम्। विगतावंसौ यस्मात्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। यण उदात्तस्वरितयोर्यणः० ( पा० ८-२-४ ) इति परस्यानुदात्तस्य स्वरितत्वम्। हृष तुष्टौ। अत्र वृद्ध्यर्थः। छन्दसि लिट् ( पा० ३-२-५ )। लिटः कानज् वा ( पा० ३-२-१०६ ) इति तस्य कानजादेशः। अन्येषामपि दृश्यते ( पा० ६-३-१३७ ) इति संहितायामभ्यासस्य दीर्घत्वम्। चित्त्वादन्तोदात्तत्वम्। अशुषम्। शुष शोषणे। इगुपधलक्षणः कः। शुषः शोषका न सन्त्यस्येत्यशुषः। परादिश्छन्दसि बहुलम् ( पा० ६-२-१९९ ) इत्युत्तरपदाद्युदात्तत्वम्। अवृणक्। वृजी वर्जने। रौधादिकः ॥२॥

तृतीयामृचमाह। यस्येन्द्रस्य महद्विपुलं पौंस्यं बलं द्यावापृथिवी द्यावापृथिव्यावनुवर्तेते। यस्य चेन्द्रस्य व्रते नियमरूपे कर्मणि वरुणो वर्तते। वरुणोऽपीन्द्रस्य नियमनं नातिक्रामतीत्यर्थः। अपि च सूर्योऽपि यस्येन्द्रस्य व्रते वर्तते। तथा यस्येन्द्रस्य व्रतं कर्म सिन्धवो नद्यः सश्चति। वचनव्यत्ययः। गच्छन्ति। सश्चतिर्गतिकर्मा। इन्द्रेणानुशिष्टाः प्रवहन्तीत्यर्थः। तं मरुत्वन्तमिन्द्रं सख्याय हवामहे। द्यावापृथिवी। द्यौश्च पृथिवी च द्यावापृथिव्यौ। दिवो द्यावा ( पा० ६-३-२९ ) इति द्यावादेशः। स चाद्युदात्तो निपातितः। पृथिवीशब्दो ङीष्प्रत्ययान्तोऽन्तोदात्तः। देवताद्वन्द्वे च ( पा० ६-२-१४१ ) इत्युभयपदप्रकृतिस्वरत्वम्। वा छन्दसि ( पा० ६-१-१०६ ) इति पूर्वसवर्णदीर्घः ॥३॥

चतुर्थीमृचमाह। य इन्द्रोऽश्वानां पतिरधिपतिः। तथा य इन्द्रो गोपतिः। न केवलमेकस्या गोः किन्तु सर्वासामित्याह गवामिति। सर्वासां गवामधिपतिर्भवति। वशी। अपराधीनः। स्वतन्त्र इत्यर्थः। अपि च य इन्द्रः कर्मणि कर्मणि सर्वेषु कर्मसु स्थिरः नैश्चल्येनावतिष्ठमान आरितः स्तुतिभिः प्रत्यृतः प्राप्तो भवति। आरितः प्रत्यृतः स्तोमान् ( नि० ५-१५ ) इति निरुक्तम्।

अथेन्द्रोऽस्वन्वतः सन्वतां यागकर्तृणां विरोधिनो वीळोश्चित्। दृढस्यापि शत्रोर्वधो हन्ता। तं मरुत्वन्तं सख्याय हवामहे। गवाम्। न गोश्वन्त्साववर्ण० ( पा० ६-१-१८२ ) इति विभक्त्युदात्तस्य प्रतिषेधः। गोपतिः। पत्यावैश्वर्ये ( पा० ६-२-१८ ) इति पूर्वपदप्रकृतिस्वरत्वम्। आरितः। ऋ गतौ। अस्माण्ण्यन्तान्निष्ठा। आगमानुशासनस्यानित्यत्वात्पुगभावः। यद्वा सुचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनाम् ( म० भा० ३-१-२२-३ ) इति विहितस्य यङो यङोऽचि च ( पा० २-४-७४ ) इत्यत्र चशब्देन बहुलग्रहणानुकर्षणाद्नैमित्तिके लुकि प्रत्ययलक्षणेन सन्यङोः ( पा० ६-१-९ ) इति ऋ इत्येतस्य द्विर्वचने उरदत्वहलादिःशेषयोः सतोरुग्रिकौ च लुकि ( पा० ७-४-९१ ) इति रुक्। ततो निष्ठायां छान्दस इडागमः। ऋकारस्य यणादेशः। रो रि ( पा० ८-३-१४ ) इत्यभ्यासरेफलोपः। ढ्रलोपे पूर्वस्य दीर्घोऽणः ( पा० ६-३-१११ ) इति दीर्घत्वम्। वधः। कृत्यल्युटो बहुलम् ( पा० ३-३-११३ ) इति बहुलवचनाद्धनश्च वधः ( पा० ३-३-७६ ) इति कर्तर्यप् वधादेशश्च। स चादन्तः। अतो लोपे उदात्तनिवृत्तिस्वरेण प्रत्ययस्योदात्तत्वम् ॥४॥

य इन्द्रो विश्वस्य जगतो गच्छतः प्राणतः प्रश्वसतः प्राणिजातस्य पतिः स्वामी। यश्च ब्रह्मणे ब्राह्मणजातिभ्योऽङ्गिरोभ्यः प्रथमोऽन्येभ्यो देवेभ्यः पूर्वभावी सन् पणिभिरपहृता गा अविन्दत्। अलभत। अन्येभ्यो देवेभ्यः पूर्वमेव तैरसुरैर्युद्ध्वा गाः स्वयमलभतेत्यर्थः। अपि च य इन्द्रो दस्यूनुपक्षपयितॄनसुरानधराञ्निकृष्टान् कृत्वा अवातिरदवधीत्। अवतिरतिर्वधकर्मा। तं मरुत्वन्तं सख्याय आह्वयामहे। जगतः। गम्लृ सृप्लृ गतौ। वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ( उ० २-८४ ) इत्यतिप्रत्ययान्तो निपातितो जगच्छब्द आद्युदात्तः। प्राणतः। श्वस प्राणने। अन च। अस्माल्लटः शता। अदादित्वाच्छपो लुक्। शतुरनुमः० ( पा० ६-१-१७३ ) इति विभक्तेरुदात्तत्वम्। षष्ठ्याः पतिपुत्र० ( ८-३-५३ ) इति विसर्जनीयस्य सत्वम् ॥५॥

षष्ठीमृचमाह। य इन्द्रः शूरेभिः शौर्योपेतैः पुरुषैर्हव्यो योद्धुमाह्वातव्यः। यश्च भीरुभिर्भयशीलैः कातरैः पुरुषैः सहायार्थमाह्वातव्यः। अपि च य इन्द्रो धावद्भिः पराजयेन पलायमानै रक्षार्थमाहूयते। यश्च जिग्युभिः प्राप्तजयैराहूयते। यस्मिन्निन्द्रे विश्वा भुवना सर्वाणि भूतजातानि स्वेषु स्वेषु कार्येषु अभिसन्दधुः। आभिमुख्येन स्थापयन्ति। तं मरुत्वन्तमिन्द्रं सख्यायाह्वयामहे। शूरेभिः। बहुलं छन्दसि ( पा० ७-१-१० ) इति भिस ऐसभावः। हव्यः। ह्वयतेरचो यत् ( पा० ३-१-९७ ) इति यत्। ह्वः० ( पा० ६-१-३२ ) इत्यनुवृत्तौ बहुलं छन्दसि ( पा० ६-१-३४ ) इति सम्प्रसारणम्। गुणो धातोस्तन्निमित्तस्यैव ( पा० ६-१ ८० ) इत्यवादेशः। भीरुभिः। भियः क्रुक्लुकनौ ( पा० ३-२-१७४ ) इति क्रुप्रत्ययः। धावद्भिः। सृ गतौ। सर्त्तवेगितायां गतौ लटः शतरि शपि पाघ्रा० ( पा० ७-३-७८ ) इत्यादिना धावादेशः। शपः पित्त्वादनुदात्तत्वम्। शतुश्च लसार्वधातुकस्वरेण। धातुस्वरः शिष्यते। जिग्युभिः। जि जये। लिटः क्वसुः। द्विर्वचने सन्लिटोर्जेः ( पा० ७-३-५७ ) इत्यभ्यासादुत्तरस्य जकारस्य कुत्वम्। भिसि अयस्मयादित्वेन भत्वाद्वसोः सम्प्रसारणम् ( पा० ६-४-१३१ ) इति सम्प्रसारणम्। छान्दसोऽन्त्यलोपः ॥६॥

सप्तमीमृचमाह। विचक्षणः सूर्यात्मना प्रकाशमान इन्द्रो रुद्राणां रुद्रपुत्राणामध्यास्मं प्राणरूपेण वर्तमानानां मरुताम्। यद्वा। रोदयितॄणां प्राणानाम्। प्राणा हि शरीरान्निर्गताः सन्तो

बन्धुजनान्नोदयन्ति। प्रदिशा। प्रदेशनेन मनुष्येभ्यः प्रदानेन सहेति। अन्तरिक्षे गच्छति। तथा चाम्नायते योऽसौ तपन्नुदेति स सर्वेषां प्राणानादायोदेति ( तं० आ० १-१४-१ ) इति। अपिच रुद्रैभिरधिभूतं वर्तमानं रुद्रपुत्रैर्मरुद्भिर्योषा माध्यमिका वाक् पृथु विस्तीर्णं क्षयो वेगं तनुते विस्तारयति। प्रसङ्गादत्र मरुतां स्तुतिः। तमरुद्भिः सह वर्तमानं श्रुतं प्रख्यातं सूर्यसमानमिन्द्रं मनीषा स्तुतिलक्षणा वाक्। अभ्यर्चति। आभिमुख्येन स्तौति। तं मरुत्वन्तमिन्द्रं सख्याया-ह्वयामहे। प्रदिशा। दिश अतिसर्जने। संपदादिलक्षणो भावे क्विप्। क्षयः। क्षि क्षि अभिभवे। क्षीयतेऽभिभूयतेऽनेनेति क्षयो वेगः। करणे अच्न्। मनीषाअभीत्यत्रेषाअक्षादित्वात्प्रकृति-भावः ॥७॥

अष्टमीमृचमाह। हे मरुत्वो मरुद्भिर्युक्तेन्द्र परम उत्कृष्टे सधस्थे सहस्थाने गृहे। यद्वा यदि वा मादयासे तृप्तो वर्तसे। यद्वा यदि वा अवमे अर्वाचीने वृजने। वृज्यते रिक्तीक्रियतेऽस्मिन्धन-मिति वृजनं गृहम्। तस्मिन्मादयासे। अतोऽस्मादुभयविधास्थानान्नोऽस्माकमध्वरं यज्ञमच्छ आभिमुख्येन। आयाह्यागच्छ। हे सत्यराधः सत्यधन। त्वाया त्वत्कामनया वयं हविश्चकृम। कृतवन्तः। मरुत्वः। मतुवसोरु० ( पा० ८-३-१ ) इति सम्बुद्धौ नकारस्य रुत्वम्। सधस्थे। सुपि स्थः ( पा० ३-२-४ ) इति कप्रत्ययः। सधमादस्थयोश्छन्दसि ( पा० ६-३-९६ ) इति सह-शब्दस्य सधादेशः। मादयासे। मद तृप्तियोगे। चुरादिरात्मनेपदी। लेट्याडागमः। त्वाया। त्वामात्मन इच्छति इत्यर्थे सुप आत्मनः क्यच् ( पा० ३-१-८ ) प्रत्ययोत्तरपदयोश्च ( पा० ७-२-९८ ) इति मपर्यन्तस्य त्वादेशः। व्यत्ययेन दकारस्यात्वम्। अप्रत्ययात् ( पा० ३-३-१०२ ) इत्यकार-प्रत्ययः। सुपां सुलुक्० ( पा० ७-१-३९ ) इति तृतीयाया लुक् ॥८॥

नवमीमृचमाह। हे सुदक्ष शोभनबलेन्द्र त्वाया त्वत्कामनया सोमं सुषुम। अभिषुतवन्तो वयम्। हे ब्रह्मवाहः। ब्रह्मणा मन्त्ररूपेण स्तोत्रेणोह्यमान प्राप्यमाणेन्द्र त्वाया त्वत्कामनया आहवनीये पुरोडाशलक्षणं हविश्चकृम। कृतवन्तः। हे नियुत्वः। नियुतोऽश्वाः। तद्वन्निन्द्र। अध अनन्तरं मरुद्भिः सगणारूपैरेतत्सञ्ज्ञाकैर्देवैः सगणः सहितः सन्नस्मिन्वर्तमाने यज्ञे बर्हिषि आस्तीर्णे दर्भे उपविश्य मादयस्व। तृप्तो भव। सुषुम। षुञ् अभिषवे। लिटि क्रादिनियमप्राप्त-स्येटः, अनित्यमागमशासनम् ( पा० प० ९४ ) इति वचनादभावः ॥९॥

दशमीमृचमाह। हे इन्द्र हरिभिरश्वैः सह मादयस्व। तृप्तो भव। ये ते तव स्वभूतास्तदर्थं शिप्रे हनू संहते विष्यस्व। सोमपानार्थं विवृते कुरु। तथा धेने पानसाधनभूते जिह्वोपजिह्विके विसृजस्व। सोमपानार्थं विश्लिष्टे कुरु। हे सुशिप्र। शिप्रे हनू नासिके वा। शोभनशिप्रेन्द्र त्वा त्वां हरयोऽश्वा आवहन्तु। अस्मदीयं यज्ञं प्रापयन्तु। त्वं चोशन् कामयमानो नोऽस्माकं हव्यानि हवींषि प्रति जुषस्व। प्रत्येकं सेवस्व। मोदासिष्ठाः। विष्यस्व। षोऽन्तकर्मणि। व्यत्ययेनात्मनेपदम्। दिवादित्वाच्छ्यन्। ओतः श्यनि ( पा० ७-३-७१ ) इत्योकारलोपः। उपसर्गात्सुनोति० ( पा० ८-३-६५ ) इति षत्वम् ॥१०॥

एकादशीमृचमाह। मरुत्स्तोत्रस्य। मरुद्भिः सह स्तोत्रं यस्य स मरुत्स्तोत्रः। तस्य। वृजनस्य शत्रूणां क्षेप्तुरिन्द्रस्य सम्बन्धिना गोपा गोपायनीया रक्षणीया वयं तेनेन्द्रेण वाजमन्नं सनुयाम। लभेमहि। यदेतदस्माभिः प्रार्थितं नोऽस्मदीयं तन्मित्रादयो द्यावापृथिव्यौ च

ममहन्तां पूजितं कुर्वन्तु। वृजनस्य। वृजी वर्जने। कृपृवृजिमन्दिनिधाञ्भ्यः क्युः ( उ० २-८३ ) इति क्युप्रत्ययः ॥११॥

॥ २१ ॥

१·१२५

प्रातारत्नमिति सप्तच पञ्चमं काक्षीवतम्। दानस्य स्तूयमानत्वाद्दानदेवत्यम्। या तेनोच्यते सा देवता ( अ० नु० २-५ ) इति परिभाषितत्वात्। त्रैष्टुभम्। उपेत्यादिके द्वे जगत्यौ। "प्रातारत्नं स्वनयस्य दानस्तुतिरुप जगत्यौ" इत्यनुक्रमणिका। तत्र प्रथमा। अत्रेतिहासमाचक्षते दीर्घतमसः कक्षीवान्नाम ऋषिर्ब्रह्मचर्यं चरिष्यन्वेदाभ्यासाय गुरुकुले चिरकालमुषित्वा वेदान्सम्यगधीत्य व्रतानि च चरित्वा तेनानुज्ञातः पुनः स्वगृहं प्रति यास्यन्मध्येमार्गं रात्रौ विश्रान्तः। प्रभाते भावयव्यस्य पुत्रः स्वनयो नाम राजाऽनुचरैः संक्रीडमानोऽकस्मात्कक्षीवतोऽन्तिकमाससाद। स च रभसा प्रतिबुद्धः सहसोत्तस्थौ। तं च राजा पाणिं गृहीत्वा स्वकीये चासन उपवेश्यास्य सौन्दर्यमवगत्य स्वकन्याप्रदानमनाः प्रपच्छ भगवन्कस्य पुत्रः किंनामा त्वमिति। स च पृष्टो मातरं पितरं च स्ववृत्तान्तञ्चाचचक्षे। स च राजा सम्भाव्य इत्यवगत्य मुदितमनाः स्वगृहं प्राप्यास्मै मधुपर्कमारचय्य वस्त्रमाल्यादिभिः पूजयित्वा सरथा दशकन्याः शतं निष्कानश्वशतं पुङ्गवानां शतं गवां षष्ठ्युत्तरसहस्रं पुनरेकादश रथांश्च प्रादात्। स च सर्वमनुक्रमेण प्रतिगृह्य दीर्घतमसोऽन्तिकमागत्य तस्मै प्रादर्शयत्। ननु कथा नामाश्वबन्धनी रज्जुस्तद्वान्कक्षीवान्। अश्वबन्धनं च राज्ञ एवोचितम्। अतोऽस्य राजन्यत्वात्प्रतिग्रहो नोपपद्यते। याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रह इत्युक्तत्वात् ( मनु० १०-७६ )। तस्माद् ब्राह्मणस्यैवाधिकारो न तु क्षत्रियस्येति। नैष दोषः। यद्यप्यसौ कलिङ्गाख्यस्य राज्ञः पुत्रस्तथापि तेन कलिङ्गेन स्वयं वृद्धत्वादपत्योत्पादनाय सामर्थ्यमलभमानेन तदुत्पादनाय याचितो दीर्घतमा ऋषिरुशिङ्नामिकामपत्योत्पादनाय प्रेषितया राजमहिष्यातिजरठेन महर्षिणा सह रन्तुं लज्जमानया स्ववस्त्राभरणैरलङ्कृत्य स्वप्रतिनिधित्वेन प्रेषितामुशिङ्नामिकां योषितं दासीमित्यवगत्य मन्त्रपूतेन जलेनाभिषिच्य ऋषिपुत्रीं कृत्वा तया सह रेमे। तदुत्पन्नः कक्षीवान्नाम ऋषिः। एतत्सर्वमस्माभिः पूर्वाध्याये नासत्याभ्याम् ( ऋ० सं० १-११६ ) इत्यत्र सूक्ते विस्तरेण प्रतिपादितम्। अतोऽस्य क्षत्रियसम्बन्धात्कक्षीवानिति नामोपपन्नम्। दीर्घतमसः परमर्षेरुत्पन्नत्वेन ब्राह्मणत्वात्प्रतिग्रहोऽप्युपपन्न एव। इदमादिसूक्तद्वयं स्वनयस्य राज्ञो दानप्रशंसाख्यानप्रतिपादकम्। नन्वनुक्रमण्यां स्वनयस्य दानस्तुतिरिति दानतुष्टो भावयव्यं तुष्टावेति चोभयत्र स्तोतव्यं भिन्नमेवानुगम्यते इत्युच्यते। उत्तरसूक्तस्य प्रथमायामृचि "अधिक्षियतो भाव्यस्ये"ति दातुर्भावयव्यस्य श्रूयमाणत्वात्प्राधान्यमुपजीव्य पृथगुपात्तम्। वस्तुतस्तु पितुर्नाम्ना पुत्रस्य व्यवहर्तव्यत्वात् तथा "आ रुद्रास" इत्यादौ बहुशः प्रयोगदर्शनात्स्वनयेन दत्ता ( ऋ० सं० १-१२६-२ ) इति तत्रैव सूक्ते स्वनयस्यापि श्रूयमाणत्वाच्चोभयत्रापि दातृप्रतिग्रहीत्रोरेकत्वेनैकमेव दानप्रशंसारूपमाख्यानमिति प्रसिद्धम्।

स च कक्षीवानानीतं सर्वं पितुर्निवेदयन्परोक्षेणैव दानप्रकारं शंसति। स्वनयो नाम राजा प्रातरित्वा प्रातरेवात्मनः सकाशमागतः सन् रत्नं रमणीयं निष्कादिकं प्रातः प्रभातकाले दधाति। अस्मत्संनिधौ स्थापयति। ददाति। तं स्थापितं सर्वं चिकित्वान्। चेतनावान् अदुष्टमित्यवगतवान् प्रतिगृह्य स्वीकृत्य निधत्ते। पितुः समीपे स्थापयति। अनन्तरं तेन दत्तेन निष्कादिना प्रजां पुत्रभृत्यादिरूपां वर्धयमानः पोषयन्नायुर्जीवितं च वर्धयन्सुवीरः शोभनैर्वीरैः पुत्रभृत्यादिभिरुपेतः सन् रायस्पोषेण धनानां पुनः पुनर्वर्धनेन सचते। असौ राजा सङ्गच्छतामिति तत्र दातुराशिषं प्रार्थयते ॥१॥

अथ द्वितीया। अत्र कक्षीवतः पिताऽऽनीतेन धनेन सन्तुष्टो राजानं बहुप्रकारेणाशास्ते। असौ स्वनयो राजा सुगुरसत्। शोभनैर्बहुभिर्गोभिस्तद्वान् भवतु। तथा सुहिरण्यः सुष्ठु हितरमणीयैर्धनैस्तद्वान् भवतु। तथा स्वश्वः शोभनैरश्वैस्तद्वान् सन्नस्मै राज्ञे प्रदात्रे बृहत्प्रभूतं वयोऽन्नमिन्द्रः परमेश्वरो धर्मदेवता दधाति। दधातु। ददातु। यतोऽयं राजा गोहिरण्याश्वान्नानि बहुसङ्ख्यानि दत्तवान् अतस्तेषामभिवृद्धिप्रार्थनोचितैव। कस्यैवमाशीरिति स उच्यते। यः यो राजा प्रातरित्वः प्रातरागामिन्नतिथे पुत्र आयन्तं गुरुकुलादागतं पदिं पथिकं यदृच्छया गन्तारं त्वा त्वां वसुनान्नसाधनेन गवादिधनेनोत्सिनाति। गमनत उत्कृष्टं बध्नाति। गतिं निरुणद्धीत्यर्थः। प्रतिबन्धे दृष्टान्त उच्यते। मुक्षीजयेव पदिम्। मुच्यमाना सती बन्धनं जयतीति मुक्षीजा मृगपक्ष्यादिबन्धनी रज्जुः। तया पाशको यथा पदिं गन्तारं मृगपक्ष्यादिकमुत्सिनाति बध्नाति तथा मयाननुज्ञातमपि त्वां गमनं प्रतिबध्य गवादीष्टदानादिना यो राजा तोषयति स एवं भवत्विति। पदिरितिपदं व्याचक्षाणेन यास्केन तदुदाहरणमयं मन्त्रो व्याख्यातः। सुगुर्भवति सुहिरण्यः स्वश्वो महच्चास्मै वय इन्द्रो दधाति यस्त्वायन्तमन्नेन प्रातरागामिन्नतिथे मुक्षीजयेव पदिमुत्सिनाति कुमार। मुक्षीजा मोचनाच्च सयनाच्च ततनाच्चेति ( नि० ५-१९ ) ॥२॥

अथ तृतीया। प्रातः पूर्वेद्युः प्रभातकालेऽयं धनं दत्तवान् तस्मिन्नेव सुकृतस्य शोभनस्य कर्तारं त्वामिच्छन् प्राप्तुमिच्छन् कदा द्रक्ष्यामीति कामयमानोऽहमद्यास्मिन्दिने इदानीमायम्। प्राप्तोऽस्मि। अत्र यद्यपि केवलं प्रातरित्येव श्रुतं न पूर्वेद्युरिति तथापि अद्यायमित्युक्तत्वादर्थात्पूर्वेद्युः प्रातरिति गम्यते। कीदृशम्। इष्टेरिष्टस्येष्टसाधनस्य यागस्य वा पुत्रं पुरुत्रातारम्। पुत्रः पुरु त्रायतेः ( नि० २-११ ) इति यास्कः। कर्तारमित्यर्थः। केन साधनेन तदुच्यते। वसुमता रथेन समृद्धधनवता रथेन साधनेन। यद्वा तेन सहित इति सहार्थे तृतीया। किञ्च तदानीं तेन समृद्धेनांशोरंशुमतो वल्लीरूपस्य मत्सरस्य मदसाधनस्य सोमस्य। मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः ( नि० २-५ ) इति निरुक्तम्। तस्य सुतमभिषुतं रसं पायय। आत्मानं पायय। इष्टसाधनं सोमयागं कुर्वित्यर्थः। कृत्वा च क्षयद्वीरं क्षियन्तो निवसन्तो वीराः पुत्रभृत्यादयो यस्य तं तादृशं त्वदिष्टसाधनबहुधनप्रदातारं सूनृताभिः प्रियसत्यात्मिकाभिर्वाग्भिर्वर्धय। समृद्धं कुरु। पुत्रभृत्यादिवीरैर्यथा प्रवृद्धो भवति तथा कामयेत्यर्थः ॥३॥

अथ चतुर्थी। पूर्वस्यामृच्यानीतेन धनेन सोमयागं कुर्वित्युक्तम्। तमेव सोमयागं फलप्रदर्शनेन स्तौति। सिन्धवः स्यन्दनशीलाः प्रस्नुतपयोधराः। सिन्धुः स्यन्दनाद् ( नि०

६-२६ ) इति यास्कः। मयोभुवः सुखभावयित्र्यः। मय इति सुखनाम। मयः सुम्नम् ( निघ० ३-६ ) इति तन्नामसु पाठात्। धेनवः प्रीणयित्र्यो गाव ईजानं सोमयागमनुतिष्ठन्तं तथा यक्ष्यमाणं यक्ष्य इति प्रणाति कुर्वन्तं च। न केवलमीजानमपि तु यक्ष्य इत्यध्यवसितवन्त-मप्युप उपेत्य क्षरन्ति। स्रवन्ति। प्रीणयन्तीत्यर्थः। न च पूर्वस्यामृचि सोमं पिबेत्युक्त्वा-त्सर्वेषां सोमयागानामग्निष्टोमात्मकज्योतिष्टोमस्य प्रकृतित्वात्तस्य ज्योतिष्टोमेन स्वर्गकामो यजेतेति स्वर्ग एव फलत्वेन श्रुतो न गवादिकमिति वाच्यम्। स्वर्गवद्गवादिकामनयाऽपि सोमयागस्य कर्तुं शक्यत्वात्। न केवलं सोमयागमनुतिष्ठतामेव महत्फलमपि तु सुकृतसाधनानि कर्मा-न्तराण्यधितिष्ठतामपि महत्फलमस्त्येवेति दर्शयति पृणन्तं पितृन्प्रीणयन्तम्। पपुरिं प्रीणन-शीलमिष्टदातारं प्राणिनः सर्वदा प्रीणयन्तं च पुरुषं श्रवस्यवोऽन्नमिच्छन्त्योऽन्नसमृद्धिहेतवो घृतस्य धाराः। यद्वा घृतकुल्याः। विश्वतः सर्वत उपेत्य यन्ति प्राप्नुवन्ति। प्रीणयन्ती-त्यर्थः ॥४॥

अथ पञ्चमी। सोमयागप्रशंसाप्रसङ्गेन सामान्यतो दानमेतदादिभिस्त्रिभिः प्रशंसति। यद्वा सोमस्यैव प्रस्तुतत्वाद्दक्षिणाशब्दस्य याग एव प्रसिद्धत्वाच्चासूक्तपरिसमाप्ति सोमयाग एव तैः प्रस्तूयते। यः यो मर्त्यः पृणाति। हविरादिदानेन देवान्प्रीणाति स नाकस्य। कमिति सुखनाम तद्विरुद्धमकम्। न विद्यतेऽकं दुःखं तत्साधनं पापं वेति नाको द्युलोकः। तथा श्रूयते—नवा अमुं लोकं जग्मुषे किञ्चनाकमिति ( नि० २-१४ ) ( का० स० २१-२ )। तस्य पृष्ठे उन्नते उपरिदेशे श्रितः सन्नध्यधिकमाकल्पान्तं तिष्ठति। यद्वा अधितिष्ठति। अधिष्ठाय प्रमुखो भूत्वा तिष्ठति। न केवलं स्वर्गाश्रयणं किन्तु देवेषु मध्ये गच्छति वर्तते। स्वयमेव देवो भवतीत्यर्थः। हेति प्रसिद्धौ। तस्मै प्रीणयित्रे पुरुषाय सिन्धवः स्यन्दनशीला आपो घृतं तेजोवत्सारमर्षन्ति। गच्छन्ति। रसवत्यो भवन्तीत्यर्थः। किन्चेयं भूमिरपि दक्षिणा सस्यादिफलसंपादनदक्षा सती सदा सर्वकालं पिन्वते। सेचयति तोषयतीत्यर्थः। दातुर्जीवनसाधकान्नोदकानि रुचिराणि समृद्धा-नि भवन्तीत्यर्थः ॥५॥

अथ षष्ठी। दक्षिणावतां बहुविधगोहिरण्यादिरूपदक्षिणाप्रदातृणाम्। इच्छब्द एवकारार्थः। तेषामेवार्थं इमानि भूमौ दृश्यमानानि चित्राणि चायनीयानि स्रक्चन्दनमणिमुक्तादिरूपाणि द्रव्याणि समृद्धानि भवन्तीति शेषः। किञ्च दक्षिणावतामेव दिवि द्युलोके सूर्यासः सूर्यसम्बन्धिनो लोकास्तदनुगृहीता लोका वा समृद्धा भवन्ति। किञ्च दक्षिणावन्त एवामृतं जरामरणरहितं स्थानं भजन्ते। सेवन्ते। यद्वा। दानोपहतपाप्मान आत्मानं विदित्वाऽमृतमविनाशं मोक्षं भजन्ते। प्राप्नुवन्ति। यज्ञेन दानेन ( बृ० उ० ४-४-२२ ) इति श्रुतेः। किञ्च दक्षिणावन्त एवायुः प्रतिरन्ते। अतिदीर्घमेवायुष्यं लभन्ते। प्रपूर्वस्तिरतिर्वर्द्धनार्थः। इदमिति सर्वत्र सम्बध्यते ॥६॥

॥ २२ ॥

१·१६३

यदक्रन्द इति त्रयोदशर्चं सप्तमं सूक्तं दैर्घतमसं त्रैष्टुभम्। अश्वस्य स्तूयमानत्वात्तद्देवत्यम्। यदक्रन्दः सप्तोनेत्यनुक्रमणिका। आश्वमेधिके मध्यमेऽहनि उपाकरणायावस्थितमश्वमाणाभिरेका

दशभिः स्तौति। तथाच त्रीणि षष्ट्यानीति खण्डे सूत्रितम् तमवस्थितमुपाकरणाय यदक्रन्द इत्येकादशभिः स्तौत्यप्रणुवन्। ( आ० श्रौ० १०-८ ) इति।

तत्र प्रथमा। हे अर्वन् अरणकुशलाश्व ते तव जातं जन्म जननमुपस्तुत्यम् उपेत्य सर्वैः स्तोतव्यम्। स्तौतेरेतिस्तुशास० (पा० ३-१-१०६) इति क्यप्। ततस्तुक्। कथं स्तुत्यत्वमिति उच्यते। यद्यस्मात्समुद्रात्। अन्तरिक्षनामैतत्। उदकसमुन्दनापादानाद्यक्षगन्धर्वादिसम्मोदनाधिकरणाद्वान्तरिक्षात्प्रथमं पूर्वं जायमान उत्पन्नः। यद्वा समुद्र आदित्यः समुन्दनाद्वृष्ट्या। तस्माद्वा जायमानः। सूरादश्वं वसवो निरतष्ट ( ऋ० १-१६३-२ ) इति वक्ष्यमाणत्वात्। उत वा अथवा पुरीषात् सर्वकामानां पूरकादुदकात्प्रथममुद्यञ्जायमानः। स तादृशस्त्वं यद्यस्मादक्रन्दः। महाशब्दमकरोर्यजमानमनुग्रहीतुम्। किञ्च। ते पक्षा पतनसाधनौ पक्षौ श्येनस्य पक्षाविव। तौ यथा शीघ्रपतनसाधनौ तादृशावित्यर्थः। तव बाहू हरिणस्य बाहू इव। तौ यथा वेगवन्तौ तादृशावित्यर्थः। यस्मादेवं तस्मात्ते जन्म स्तुत्यमित्यर्थः ॥१॥

अथ द्वितीया। यमेन नियामकेनाग्निना दत्तमेनमश्वं त्रितः पृथिव्यादिषु त्रिषु स्थानेषु वर्तमानः स्तीर्णतमो वा वायुरयुनक्। रथे योजितवान्। किञ्चैनमश्वमिन्द्रः प्रथमः प्रकृष्टतमः। प्रथम इति मुख्यनाम। अध्यतिष्ठत्। अधिष्ठितवान्। अस्य गन्धर्वः सोमः। सोमेन समया विपृक्त इति वक्ष्यमाणत्वात्। स चाश्वस्य रशनां नियमनरज्जुमगृभ्णात्। अग्रहीत्। ईदृशोऽश्वः कुतः समुत्पन्न इति चेत्। हे वसवो रश्मयो यूयं सूरादादित्यादश्वमेवं महानुभावं निरतष्ट। निःशेषेण साधु संपादितवन्तः। यद्वा वसुशब्देनोक्ता एव यमादयः परामृश्यन्ते। हे वसवः स्वव्यापारेण सर्वस्याच्छादयितारो यूयं सूरादादित्यादश्वमेनं निरतष्ट। अतक्षत। निरित्येष समित्यस्य स्थाने। तक्षतिः करोतिकर्मा। स च क्रियासामान्यवचनः। अत्रौचित्याद्धारणे वर्तते। सम्यग् धारितवन्त इत्यर्थः। तक्षेर्लङि छान्दसः शपो लुक्। स्कोः संयोगाद्योः० ( पा० ८-२-२९ ) इति कलोपः ॥२॥

अथ तृतीया। हे अर्वन् त्वं यमोऽसि। नियमयिताग्निरसि। तेन दत्तत्वात्तच्छब्दव्यपदेशः। तथाऽऽदित्योऽसि। सूराग्निरतष्टेत्युक्तत्वात्। तथा गुह्येन व्रतेन गोपनीयेन दुर्निरूपेण वा कर्मणा सर्वत्र व्याप्तिरूपेणेत्यर्थः। तेन त्रितस्त्रिषु स्थानेषु तायमानो वायुरसि। त्रित एनमायुनगित्युक्तत्वात्तद्रूपत्वम्। अथवा गुह्येन व्रतेन गोपनीयेन कर्मणा योगादिसाधनरूपेण त्रित एतन्नामक ऋषिरसि। किञ्च हे अश्व त्वं सोमेन समया सह विपृक्तः। वीत्येष समित्येतस्यार्थे। संपृक्तोसि। तेन गृहीतत्वात्। हे अश्वरूप ते तव दिवि द्युलोके आदित्ये वा वर्तमानस्य त्रीणि बन्धनान्युत्पत्तिकारणान्याहुः पुराविदः। वसव आदित्यो द्युस्थानं चेति त्रीणि ॥३॥

अथ चतुर्थी। पूर्वं दिवि त्रीणि बन्धनानीत्युक्तम्। इदानीं स्थानत्रयेऽप्यपि त्रीणि बन्धनानीत्याह। हे अर्वन् ते तव दिवि बन्धनानि त्रीण्याहुः। तानि पूर्वमुक्तानि। अप्सु अनुपजीवित्वाद्भूलोकोऽप्शब्देनाभिधीयते। पृथिव्यां त्रीणि बन्धनान्याहुः। अन्नं स्थानं बीजमिति त्रीणि। तथा समुद्रेऽन्तः समुद्रमध्ये समुद्रवणापादानात्समुद्रमन्तरिक्षम्। तस्मिन्त्रीणि वृष्ट्युत्पत्तिनिमित्तानि मेघो विद्युत्स्तनितमिति। उतेव। इवशब्दश्चार्थे। अपि च हे अर्वन् अश्व वरुणः पापस्य वारकः फलस्यावर्जयिता वा त्वं मे मह्यम् छन्त्सि कथयसि। किं कथयसीति

चेदुच्यते। ते तव परमं जनित्रं निरतिशयं जन्म। जनेरौणादिक इत्रप्रत्ययः। यत्र येषु। त्रिषूक्तेषु स्थानेष्वाहुः। कथयन्ति। यद्वा। यत्र यस्मिन्नादित्ये परमं जनित्रमाहुः। सूरादश्वं वसवो निरतष्टेत्युक्तत्वात्। तादृशं प्रशस्यं जन्म यज्ञसाधनभावेन कथयसीत्यर्थः ॥४॥

अथ पञ्चमी। हे वाजिन्नश्व ते तव सम्बन्धीन्यवमार्जनान्यङ्गसंशोधकानि स्थानानीमा इमान्युक्तानि द्युलोकादीनि। किञ्च सनितुर्यागसम्भक्तुस्तवेमेमानि शफानां निधाना निधानस्थानानि। सञ्चारप्रदेशा इत्यर्थः। किञ्चात्रैव ते तव भद्रा भन्दनीया कल्याणा रशना ग्रीवादिषु संयुक्ता रज्जूरत्रापश्यम्। एषूक्तेषु स्थानेष्वपश्यम्। रशना विशेष्यन्ते। या गोपा गोपायित्र्यो रशना ऋतस्य सत्यभूतस्य यज्ञसाधनस्य वाऽश्वस्य। कर्मणि षष्ठी। ऋतमभिरक्षन्ति। अभितः पालयन्ति। ता अपश्यम्। दृष्टवानस्मि। यद्वा इमा ते तवावमार्जनान्यङ्गप्रक्षालनसाधनान्युदकानि इमानि सनितुस्तव शफानां निधाना निधानानि देवयजनभूमयः सञ्चारप्रदेशा वा। अत्रास्मिन्देवयजनस्थाने या रशना गोपास्तत्र पालयितारो राजपुरुषा ऋत्विजो वा ऋतस्य सम्बन्धिनोऽभिरक्षन्ति ता अपश्यम् ॥५॥

द्वितीयस्य तृतीय एकादशो वर्गः।

अथ षष्ठी। हे अश्व ते तवात्मानं शरीरं मनसास्मदीयेन प्रकृष्टगमनवता चेतसारादतिदूरे स्थितमजानाम्। जानामि। अतिव्याप्तं भावयामि इत्यर्थः। कथम्। अवः। अवस्तात्। सामर्थ्याद् भूमेः। भूमिमारभ्य दिवान्तरिक्षेण मार्गेण दिवि वा पतयन्तं गच्छन्तं पतङ्गमादित्यमवः। आवः। व्याप्नोषि। अतो व्याप्तं जानामि। किञ्च शिरोऽपश्यम्। तव शिर एवं पश्यामि। कथम्। सुगेभिः शोभनगमनसाधनैररेणुभिरपापैः पथिभिर्मार्गैः। आदित्यमण्डलादप्युपरिभूतैः सत्यलोकमार्गैरित्यर्थः। तत्र प्रतिबन्धाभावान्मार्गाणामुक्तरूपत्वम्। तथाविधैस्तैर्जेहमानमुपर्युपरि व्याप्नुवत्। पतत्रि पतनवत्। शिरोऽपश्यम्। भावयामि। एवं लोकत्रयव्याप्तं भावयामीत्यर्थः। यद्वा ते आत्मानमेवं भावयामि मनसा दिवा द्योतनात्मकेनान्तरिक्षमार्गेण दिवःसकाशाद्वावोऽवस्तादवाङ्मुखं पतयन्तं यागदेशं प्रति व्याप्नुवत् अत एव पतङ्गं पतनशीलमधःपतदादित्यसदृशं वा। एवं तव शिरो भावयामीत्यर्थः। शिरश्चैवमपश्यम्। उक्तरूपैर्देवयजनमार्गैर्जेहमानम्। यज्ञदेशं व्याप्नुवत् पतत्रि शीघ्रगामि शिरः पश्यामि। यद्यप्यात्मशब्देन सशिरस्कं शरीरमुक्तं तथापि देहात्पृथक् शिरसो दृश्यमानत्वात्पृथगभिधीयते ॥६॥

अथ सप्तमी। एवं गमनानन्तरं हे अश्व ते तवोत्तममुक्तरूपेणोत्कृष्टतमं रूपमत्रास्मिन्यागदेशेऽपश्यम्। पश्यामि। कीदृशम्। गोर्भूम्याः पदे स्थाने देवस्थाने देवयजनप्रदेशे आजिधावनस्थाने चेषः। कर्मणि षष्ठी। इष्यमाणमन्नमन्नानि वा आ सर्वतो जिगीषमाणम्। गन्तुमिच्छन्तम्। हे अश्व ते तव यदा मर्तो मनुष्यो भोगं भोक्तव्यमन्नमन्वानट्। नशतिर्गतिकर्मा। अनुक्रमेण समीपं गमयति। आदित् अनन्तरं तदानीमेव तदनुग्रहाद्विलम्बमकृत्वा ग्रसिष्ठो महानुभावेव ग्रसितृतमो भक्षयितृतमः सन् ओषधीरन्नान्यजीगः। गिरसि। भक्षयसि। महानुभावोऽपि त्वं लौकिकाश्ववत्तुच्छेन पुरुषेण दीयमानं स्वल्पं भक्ष्यमनुग्रहात्स्वीकरोषीत्यर्थः ॥७॥

अथाष्टमी। इदानीं कृत्स्नस्य लोकस्यापि मुख्य इति प्रतिपादयति। हे अर्वन् गमन-

शीलाश्च त्वा त्वामनु अनुसृत्य रथो गच्छति। ततः पुरतोऽश्वस्य गमनात्। तथा मर्यो मर्त्यस्त्वा त्वामनु। जात्येकवचनम्। अनु गावः। गावोऽपि त्वामनुगच्छन्ति। तथा कनीनां कन्यकानां स्त्रीणां भगो भाग्यं सौन्दर्यं त्वदङ्गमनु। तथा व्रातासो व्राताः सङ्घात्मका अन्येऽश्वसमूहा वस्वादिदेवगणा वा त्वामनु अनुसृत्य तव सख्यमीयुः। सखिभावं गच्छन्ति। देवा ऋत्विजो द्योतमाना देवा वा त्वामनुसृत्य ते वीर्यं वीरकर्म ममिरे। स्तुत्या मान्ति। अतः सर्वोऽपि त्वामनुसरति त्वं तु सर्वस्य श्रेष्ठ इत्यर्थः ॥८॥

अथ नवमी। अयमश्वो हिरण्यशृङ्गो हितरमणीयशृङ्गो वा। उन्नतशिरस्को हृदयरमणशृङ्गस्थानीयशिरोरुहो वा। अस्य पादा अयः। अयोमयाः। अयःपिण्डसदृशा इत्यर्थः। तथा मनोजवा मनोवेगाः। अथवैतदिन्द्रविशेषणम्। ईदृशस्याश्वस्य सामर्थ्यं प्रति मनोवेग इन्द्रोऽप्यवरो निकृष्ट आसीत्। किञ्चास्याश्वस्य हविरद्यं हविषो भक्षणम्। स्वार्थिको यत्। अदनयोग्यं हविर्वाऽपेक्ष्य देवा इति सर्वेऽपि देवा आयन् प्राप्ताः। य इन्द्रोऽर्वन्तं प्रथमः प्रथमभावी सन्नध्यतिष्ठत्। अधिष्ठितवान्। सहविप्टेन स्वकीयत्वेन वाऽऽश्रितवान् इत्यर्थः। इन्द्र एणं प्रथमो अध्यतिष्ठदिति ह्युक्तम् ॥९॥

अथ दशमी। अत्राश्वसमूहस्तुतिद्वारेणायं स्तूयते। ईर्मान्तासः। ईरिताः प्रेरिता अन्ता येषां ते तथोक्ताः। विरलान्ता इत्यर्थः। सिलिकमध्यमासः। संसृताः सङ्गता मध्यप्रदेशा येषां ते तथोक्ताः। मध्ये निबिडा इत्यर्थः। अथवा शरीरस्यैते विशेषणे। ईर्म ईरितः पुरतो नुन्न इत्यर्थः। तादृशः पृथुरन्तो जघनप्रदेशो येषां ते तादृशाः। तथा सिलिकमध्यमासः। संसृतः संगतः संलग्नो मध्यभागो येषां ते तादृशाः। पुरस्तात्प्रौढाः संलग्नमध्याश्चेत्यर्थः। जघनपुरोभागावपेक्ष्य सिलिकमध्यमा इत्युक्तम्। समित्ययमुपसर्गो यतन्त इत्याख्यातेन सम्बन्धयितव्यः। शूरणासः। विक्रमशीलाः। दिव्यासो दिविभवा अत्या अतनशीलाः। यद्यप्ययमश्वनाम तथाप्यश्वशब्दस्य वक्ष्यमाणत्वादयं यौगिकोऽवगन्तव्यः। ईदृशा अश्वाः श्रेणिशः। एकव्यापाराणां बहूनां समूहः श्रेणिरित्युच्यते। शीघ्रधावनाय श्रेणिशः पङ्क्तीभूय संयतन्ते। सम्यग्यत्नं कुर्वन्ति। तत्र दृष्टान्तः। हंसा इव। ते यथा श्रेणीभूता ईर्मान्तास इत्याद्युक्तरूपाः सन्तोऽन्तरिक्षे गमनाय यतन्ते तद्वत्। कदा। उच्यते। यद्दाश्वा दिव्यमज्मं गमनं गन्तव्यं वा मार्गमाक्षिषुः। व्याप्नुवन्ति। तदा। अयं मन्त्रो यास्केनैवं व्याख्यातः—ईर्मान्ताः समीरितान्ताः पृथ्वन्ता वा सिलिकमध्यमाः संसृतमध्यमाः शीर्षमध्यमा वा अपि वा शिर आदित्यो भवति यदनुशेते सर्वाणि भूतानि मध्ये चैषां तिष्ठति। इदमपीतरच्छिर एतस्मादेव समाश्रितान्येतदिन्द्रियाणि भवन्ति। संशूरणासो दिव्यासो अत्याः। शूरः शवतेर्गतिकर्मणो दिव्या दिविजा अत्या अतनाः। हंसाइव श्रेणिशो यतन्ते। हंसा हन्तेर्घ्नन्त्यध्वानम्। श्रेणिश इति श्रेणिः श्रयतेः समाश्रिता भवन्ति। यदाक्षिषुर्यदापुर्दिव्यमज्ममजनिमाजिमश्वाः ( नि० ४-१३ ) इति ॥१०॥

द्वितीयस्य तृतीये द्वादशो वर्गः ॥

अथैकादशी। हे अर्वन् तव शरीरं पतयिष्णु पतनशीलं व्याप्तमित्यर्थः। तथा तव चित्तं मनो वातइव ध्रजीमान्। शीघ्रगमनवायुरिव। तद्वच्छीघ्रगमनानुकूलमित्यर्थः। किञ्च तव

शृङ्गाणि शिरसो निर्गताः शृङ्गस्थानीयाः केशाः पुरुत्रा पुरुषु बहुषु प्रदेशेषु विष्ठिता विष्ठितानि। विविधं स्थिताः। किञ्च त एवारण्येषु जर्भुराणा मनोहराणि पूर्यमाणानि वा। एवंभूताः केशाश्चरन्ति। यद्वाऽश्वस्य शृङ्गाभावाच्छृङ्गवदुन्नतानि तेजांसि परिगृह्यन्ते ॥११॥

आश्वमेधिके मध्यमेऽहन्यग्निगुप्रैषे मानोमित्र (ऋ० स० १-१६२) इति सूक्तानन्तरमुपप्रागाच्छसनमिति द्वे ऋचौ शंसनीये। सूत्रितं च। "उप प्रागाच्छसनमिति द्वे" (आ० श्रौ० १०-८) इति।

सैषा सूक्ते द्वादशी। अयमर्वाऽरणकुशलो वाज्यश्वः शसनं विशसनस्थानमुपप्रागात्। उपप्रेति। किं कुर्वन्। देवद्रीचा मनसा देवान् गच्छता मनसा दीध्यानो ध्यायन्। किञ्चास्य पुरः पुरस्तान्नाभिर्नहनम्। बन्धुभूत इत्यर्थः। यद्वाऽस्य बन्धनस्थानीयोऽविमुक्तत्वात्। एवंभूतोऽजः पुरो नीयते पुरतः प्राप्यते। अनु अनुसृत्य पश्चादनन्तरम्। अत्र यद्यप्युभयोः पर्यवसितोऽर्थ एक एव, तथाप्यजाश्वोभयानन्तर्यप्रकटनाय पदद्वयम्। यद्वा अन्विति क्रियया सम्बध्यते। कवयोऽनूचानाः रेभाः स्तोतार ऋत्विजो यन्ति। गच्छन्ति। ये वा अनूचानास्ते कवय इति श्रुतेः। यद्वा कवय इति मेधाविनाम। कविर्मनीषी (निघ० ३-१५) इति तन्नामसु पठितत्वात्। रेभ इति स्तोतृनाम। रेभो जरिता (निघ० ३-१६) इति तत्र पाठात् ॥१२॥

अथ त्रयोदशी। अर्वानरणकुशलोऽयमश्व उपप्रागात्। उपगच्छति। किम्। यत् परममुत्कृष्टं सधस्थं सहस्थानं सुकृतिभिरेकत्र निवासयोग्यं स्वर्गाख्यं यदस्ति तत्। किमर्थम्। पितरं मातरं चाच्छाभिमुख्येन प्राप्तुम्। हे अश्वाद्यास्मिन्काले जुष्टतमः प्रीततमः स्वर्गं प्राप्नोमीति हर्षयुक्त इत्यर्थः। एवंभूतो देवान्गम्याः। गच्छेः। हिशब्दो यस्त उपयुक्तस्य पथोः स्वर्गप्राप्तेः सगर्भ्यो नु सखा सयूथ्यः (तै० स० १-२-४-२) इत्यादिमन्त्रान्तरप्रसिद्धिद्योतनार्थः। अथानन्तरं यजमान आशास्ते कस्मै। दाशुषे। हविर्दत्तवते स्वस्मै। कानि। वार्याणि। वरणीयानि धनानि। यद्वा पुरुषस्य व्यत्ययः। आशास्ते प्रार्थये यजमानार्थम् ॥१३॥

द्वितीयस्य तृतीये त्रयोदशो वर्गः

॥ २३ ॥

१·१६४

अस्यवामस्येति द्विपञ्चाशदृचमष्टमं सूक्तं दैर्घतमसम्। अत्रेयमनुक्रमणिका अस्य द्विपञ्चाशदल्पस्तवं त्वेतत्संशयोत्थापनप्रश्नप्रतिवाक्यान्यत्र प्रायेण ज्ञानमोक्षाक्षरप्रशंसा च पञ्चपादं साकंजानां यद्वायत्रेऽयंसषिङ्क्तं सप्तार्धगर्भां गौरीरिति जगत्यः। एतदन्तं तु वैश्वदेवं तस्याः समुद्रा इति वाचः समुद्रा आपोऽक्षरं सा प्रस्तारपङ्क्तिः शकमयमिति शकधूम उक्षाणं पृश्निमिति सोमस्त्रयः केशिन इत्यग्निः सूर्यो वायुश्च केशिनश्चत्वारिवागवाच इन्द्रं मित्रं सौर्यौ द्वादशेति संवत्सरसंस्थं कालचक्रवर्णनं यस्ते सरस्वत्यै यज्ञेन साध्येभ्यः पराऽनुष्टुप् सौरी पर्जन्याग्निदेवता वाऽन्त्या सरस्वते सूर्याय वेति। अत्र स्तुत्यबहुत्वेन स्तुतिभागस्याल्पीयस्त्वादिदं सूक्तमल्पस्तवनम्। इदमेव वैलक्षण्यं तुशब्देन द्योत्यते। अस्मिन्सूक्ते प्रायेण संशयोत्थापनादयो बहवोऽर्थाः प्रतिपाद्यन्ते। अचिकित्वाञ्चिकितुष इत्यनया संशय उत्थाप्यते। पृच्छामि त्वेत्यत्र प्रश्नः प्रतीयते।

इयं वेदिरित्यत्र प्रतिवचनम्। य ईं चकारेत्यादिना ज्ञानप्रशंसा प्रतिपाद्यते। अपश्यं गोपामित्यादिना ब्रह्मसाक्षात्काररूपस्य प्रशंसा। न ज्ञरतीत्यक्षरं ब्रह्म। द्वा सुपर्णेत्यादिना तस्य प्रशंसा। पञ्चपादं पितरं, साकंजानां सप्तथं, यद्गायत्रे अधि, अयं स शिङ्क्ते, सप्तार्धगर्भा, गौरीर्मिमायेति षड् जगत्यः। समानमेतदित्यनुष्टुप्। तस्याः समुद्रा इति। प्रस्तारपङ्क्तिः। तल्लक्षणं छन्दोग्रन्थे सूत्रितम्। प्रस्तारपङ्क्तिः पुरतः ( पि० ६-४-१ ) इति। पुरतः पूर्वार्द्धे द्वादशाक्षरौ जागतौ पादौ ततो द्वावष्टाक्षरौ गायत्रौ सा प्रस्तारपङ्क्तिरिति सूत्रार्थः। अनुक्रमण्यामप्युक्तम्—आद्यौ चेत्प्रस्तारपङ्क्तिः ( अनु० ८-६ ) इति। शिष्टा अनादिष्टपरिभाषया त्रिष्टुभः। गौरीर्मिमायेत्येतदन्तानां विश्वेदेवा देवता। तस्याः समुद्रा इत्यस्याः पूर्वार्द्धस्य वाग्देवता। उत्तरार्द्धस्यापः। शकमयमित्यस्याः पूर्वार्द्धस्य शकधूमः। उत्तरार्द्धस्य सोमो देवता। त्रयः केशिन इत्यस्या अग्निसूर्यवायवः। चत्वारिवागित्येषा वाग्देवताका। इन्द्रं मित्रं वरुणम्, कृष्णं नियानमित्येते सूर्यदेवते। द्वादश प्रधय इत्यस्याः संवत्सरात्मा कालो देवता। यस्तेस्तन इत्यस्याः सरस्वती। यज्ञेनेत्यस्याः साध्या देवाः। समानमेतदित्यस्याः सूर्यः पर्जन्यो वाग्नयो वा देवता। दिव्यं सुपर्णमित्यस्याः सरस्वान् सूर्यो वा देवता। कृत्स्नसूक्तस्य विनियोगं शौनक आह। स्तेयं कृत्वा द्विजो मोहात्त्रिरात्रोपोषितः शुचिः। सूक्तं जप्त्वास्यवामीयं क्षिप्रं मुच्येत किल्बिषात् इति ( ऋ० वि० १-२६ )। महाव्रते वैश्वदेवशस्त्रे वैश्वदेवं निविद्धानं द्विप्रतीकं तत्रास्य वामस्येत्यादिकमेकचत्वारिंशदृचं प्रथमं प्रतीकम्। पञ्चमारण्यके सूत्रितम्। अस्यवामस्य पलितस्य होतुरिति सलिलस्य दैर्घतमस एकचत्वारिंशतम् ( ऐ० आ० ५-१२ ) इति।

तत्र प्रथमा। अत्र द्वितीयपादे तच्छब्दश्रुतेः प्रथमपादे प्रतिविशेषणं योग्यक्रियार्थसम्बद्धो यच्छब्दोऽध्याहार्यः। योऽयं दिवि द्योतते तस्यास्य वामस्य वननीयस्य सम्भजनीयस्यारोग्यार्थिभिः सर्वैः सेवनीयस्य पलितस्य पालयितुः प्रकाशवृष्ट्यादिप्रदानेन पालकस्य। तथा योऽयं दिवि द्योतते तस्यास्य होतुर्ह्वातव्यस्याह्वानार्हस्यादित्यस्य मध्यमो मध्यमस्थानः। मध्ये भवो वायुरुच्यते। आदित्याग्नी अपेक्ष्यास्य मध्यमत्वम्। स चाश्नः सर्वत्र व्याप्तः। नहि वायुरहितः कश्चित्प्रदेशोऽस्ति। तादृशो भ्रातास्ति। भ्रातृस्थानीयो भवति। यथा लोके भ्राता पितृधनस्य भागं हरति तद्वत् मध्यमस्थानमन्तरिक्षलोकं वा हरतीति। वृष्ट्यर्थं रश्मिभिराहृतानां भौमानां रसानां हरणाद्वा भ्रातेत्युच्यते। पित्र्येण धनेन स्वार्जितेन वा भर्तव्यो भवतीति भ्राता। मध्यमो वायुरपि वृष्ट्यर्थं रसैर्भर्तव्यो भवति। किञ्च घृतपृष्ठः। घृतमाहुतिलक्षणं पृष्ठे यस्य तादृशो भ्राता तस्य तृतीयोऽस्ति। भवति। त्रयाणां पूरणस्तृतीयः। उक्तोभयापेक्षया तृतीयत्वम्। भ्रातृत्वं प्रतिपादितप्रकारेणात्रापि द्रष्टव्यम्। रात्रौ सवितुस्तेजोभागस्य हरणात्। दिवा स्वकीयतेजसो भागस्य तदर्थमेव भर्तव्यत्वाद्वा भ्रातृत्वम्। अत्रैषु भ्रातृषु मध्ये पुरोदेशे विश्पतिं विशां प्रजानां पालयितारं सप्तपुत्रं सर्पणरश्मिपुत्रोपेतम्। ऐतिहासिकपक्षेऽदितिः पुत्रकामेति प्रस्तुते मित्रवरुणादिष्वदितिपुत्रेषु अस्यादित्यस्य सप्तमपुत्रत्वम्। ईदृशं महानुभावमादित्यमपश्यम्। अद्राक्षम्। भावनया आत्मत्वेन साक्षात्करोमीत्यर्थः। तथोऽहं सोऽसौ योऽसौ सोऽहमिति श्रुतिः। एवं वा। अस्य वामस्य विश्वस्योद्गरितुः। स्रष्टुरित्यर्थः। पलितस्य पालयितुः। स्वसृष्टजगत्पालनशीलस्य होतुरादातुः। स्वस्मिन्संहर्तुरित्यर्थः। परमेश्वरस्य

सृष्ट्यादिकर्तृत्वं श्रुतिस्मृतिपुराणादिषु प्रसिद्धम्। तस्य तादृशस्य परमेश्वरस्य भ्राता तद्भागहारी तदंशभूतः सूत्रात्मा मध्यमः सर्वत्र मध्ये वर्तमानोऽस्ति। जगद्धारकत्वेन वर्तते। स चाश्नो व्यापनशीलः। वायुना वै गौतम सूत्रेणायं लोकः परश्च लोकः सर्वाणि भूतानि संदृब्धानि ( बृ० उ० ३-७-२ ) इति श्रुतेः। वक्ष्यमाणविराडपेक्षया वा मध्यमत्वम्। किञ्चास्य परमेश्वरस्य तृतीयो घृतपृष्ठः। घृतमित्युदकनाम। तेन तत्कार्यं शरीरमुच्यते। तदेव पृष्ठं स्पर्शकं वा वा यस्य स तादृशः। पृष्ठं स्पृशतेः ( नि० ४-३ ) इति निरुक्तम्। यद्वा प्रदीप्तपृष्ठः। पृष्ठशब्दः कृत्स्नशरीरोपलक्षकः। प्रकाशितशरीराभिमानीत्यर्थः। न स्वयं सूक्ष्मशरीराभिमानिसूत्रात्मवत्स्पर्शनाविषयो भवति। अत्रैषु मध्ये विश्पतिम् विशां प्रजानां पतिम्। उपलक्षणमेतद्। सर्वस्य पतिमित्यर्थः। सर्वस्य पतिः सर्वस्येशान इति श्रुतेः। सप्तपुत्रं सप्त लोकाः पुत्रा यस्य तादृशम्। स्वमायया सृष्टसर्वलोकमित्यर्थः। अपश्यम्। पश्येयम्। साक्षात्करोमीत्यर्थः। अयमर्थः। स्वाधीनमायो जगत्कारणभूतः परमेश्वर एकः। तत उत्पन्नौ स्थूलसूक्ष्मशरीराभिमानिनौ द्वौ विराट्सूत्रात्मानौ। तेषु मध्ये द्वयोः साक्षात्कारेण मोक्षाभावात्सृष्ट्यादिकारणं परमेश्वरं ज्ञेयत्वेन प्रसिद्धं श्रवणमननादिसाधनेन साक्षात्करोमीत्यर्थः। एवमुत्तरत्रापि अध्यात्मपरतया योजयितुं शक्यम्। तथापि सरलत्वाभावादत्र विस्तरभयाच्च न लिख्यते। यत्र द्वासुपर्णेत्यादौ स्फुटमाध्यात्मिकोऽर्थः प्रतीयते तत्र प्रतिपादयामः। अयं मन्त्रो यास्केन व्याख्यातः। अस्य वामस्य वननीयस्य पलितस्य पालयितुरित्यादिना। ( नि० ४-२६ )। तच्च व्याख्यानन्तत्रानुसन्धेयम् ॥१॥

अथ द्वितीया। एकचक्रमेकरथाङ्गोपेतम्। यद्यपि सप्त चक्राणि तथापि तेषामेकरूपत्वादेकचक्रमित्युच्यते। रथं रंहणस्वभावं सूर्यस्य सम्बन्धिनं सप्तैतत्सङ्ख्याका अश्वा युञ्जन्ति। अनु वहन्ति। वहन्त्यहोरात्रनिर्वाहाय। किं वस्तुतः सप्त नेत्याह एकोऽश्वः सप्तनामा। एक एव सप्ताभिधानः सप्तधानमनप्रकारो वा। एक एव वायुः सप्त रूपाणि धृत्वा वहतीत्यर्थः। वाय्वधीनत्वादन्तरिक्षसञ्चारस्य। एकचक्रमित्युक्तं कीदृशं तदित्यत आह। त्रिनाभि। वलयत्रयमध्यस्थितनाभिस्थानीयच्छिद्रोपेतम्। अजरम्। अमरणधर्मकम्। अनर्वम्। अशिथिलम्। पुनस्तदेव विशेष्यते। यत्र यस्मिञ्चक्रे इमा विश्वा सर्वाणि भुवना इमानि प्रसिद्धानि जातान्यधि आश्रित्य तस्थुः। तिष्ठन्ति। यद्वा एकचक्रमेकचारिणमसाहाय्येन सञ्चरन्तं रथमादित्यमण्डलं सप्त युञ्जन्ति। सर्पणस्वभावाः सप्त युञ्जन्ति। सप्तसङ्ख्या वा रश्मयः सप्तप्रकारका ऋतवो वा असाधारणाः परस्परविलक्षणाः षडृतव एकः साधारण इत्येवम्। अथवा मासद्वयात्मकाः षट्, अपरोऽधिमासात्मक एक इत्येवं सप्तर्तवो युञ्जन्ति। एतस्य कार्यं निर्वहन्तीत्यर्थः। सचैकोऽसहायोऽश्वो व्यापनशील आदित्यः सप्तनामा सप्तरसानां सन्नमयितारो रश्मयो यस्य तादृशः। स च ऋषिभिः स्तूयमानो वादित्यो वहति। धारयति। भ्रमयतीत्यर्थः। किम्। त्रिनाभि चक्रम्। तिस्रो नाभिस्थानीयाः सन्ध्याः संबद्धा वा त्रय ऋतवो यस्य तत्तादृशम्। के ते। ग्रीष्मवर्षाहेमन्ताख्याः। यद्वा भूतभविष्यद्वर्तमानाख्यास्त्रयः कालास्त्रिनाभयः। तद्विशिष्टं चक्रं चक्रवत्पुनःपुनःपरिभ्रममाणं संवत्सराख्यं चक्रमजममरणम्। न हि कदाचिदपि कालो म्रियते। अनादिनिधनः काल इति स्मृतेः। अनर्वमप्रतिहतम्। ईदृशं संवत्सराख्यं

चक्रं नानाकालावयवोपेतमयमादित्यः पुनः पुनरावर्तयति। संवत्सरादर्वाचीनानां तत्रैवान्तर्भावात्। ततो युगादीनां तदावृत्तिसाध्यत्वात्संवत्सरस्य चक्रत्वेन निरूपणम्। पुनः कीदृशं तत्। यत्र यस्मिंश्चक्रे इमा विश्वा भुवना सर्वाणि भूतान्यधि तस्थुः। आश्रित्य तिष्ठन्ति। कालाधीनत्वात्सर्वस्य स्थितेः। ईदृशस्य कालस्य कारणभूतपरमेश्वरपरिज्ञानेन मोक्षसद्भावात् ज्ञानमोक्षाक्षरप्रशंसा चेत्यनुक्रमण्यामुक्तम्। अयमपि मन्त्रो यास्केन सप्त युञ्जन्ति रथमेकचक्रमेकचारिणमित्यादिना व्याख्यातः ( नि० ४·२७ )। तदत्राप्यनुसन्धेयम् ॥२॥

अथ तृतीया। इममुक्तस्वरूपमादित्यमण्डलाख्यं संवत्सराख्यं वा रथं ये सप्त रश्मयोऽधितस्थुः। अधिष्ठिताः। संवत्सरपक्षेऽयनर्तुमासपक्षदिवसरात्रिमुहूर्ताख्याः सप्तावयवा अधितिष्ठन्ति। कीदृशं रथम्। सप्तचक्रम्। चकनाच्चरणात् क्रमणाद्वा चक्राणि रश्मयः। ते सप्त यस्य रथस्य तादृशमुभयविधं रथं पूर्वोक्ता अधिष्ठिता अश्वा व्यापनशीलाः सप्त वहन्ति। निर्वहन्ति च। तादृशं सप्त स्वसारः स्वयं सरणाः। स्वरादित्यः। तेन सारिताः। परस्परं स्वसृभूता वा सप्तसङ्ख्याका रश्मय ऋतवश्चाभिसन्नवन्ते। आभिमुख्येन सङ्गच्छन्ते। असाधारणाः परस्परविलक्षणकार्याः षड्तवः सर्वसाधारण एक इति सप्तत्वम्। यद्वोक्तमासद्वयात्मकाः षट् त्रयोदशमासात्मकः सप्तम इति सप्तत्वम्। कीदृशो रथ इति तदुच्यते। यत्र यस्मिन्रथ उभयविधे गवां वाचां स्तुतिरूपाणां सप्त सप्तविधानि नाम नमनानि सप्तस्वररूपाणि निहितानि। सप्तस्वरोपेतैः सामभिः स्तुत्यमित्यर्थः। यद्वा गवामुदकानां सप्त सर्पणस्वभावानि नाम नमनानि यत्र यासु स्वसृषु निहिता। स्वसारः परस्परस्वसृभूता देवनद्योऽभिसन्नवन्ते ॥३॥

अथ चतुर्थी। एवं प्रपञ्चस्य कालायत्ततां प्रतिपाद्य तस्य कारणभूतस्य परमेश्वरस्याविषयत्वमाह को ददर्श। को द्रष्टुं शक्नुयात्। कदा। प्रथमम्। सृष्टेः पूर्वम्। अव्याकृतावस्थायामित्यर्थः। किम्। जायमानम्। प्रथमभावविकारापन्नम्। उत्पद्यमानं प्रपञ्चमित्यर्थः। दुर्ज्ञेयत्वे हेतुमाह। यद्यस्मादस्थन्वन्तमस्थिमन्तं सशरीरम्। उपलक्षणमेतत्। कार्यभावमापन्नमित्यर्थः। अनस्थास्थिरहिताशरीरा सांख्यप्रसिद्धा प्रकृतिर्वेदान्तप्रसिद्धेश्वरायत्ता माया बिभर्ति। गर्भवदन्तर्धारयति। अव्याकृतावस्थायामनस्थोऽशरीरः परमेश्वरो बिभर्ति। यदा केवलः परमेश्वरो मायासंवलितः सन्निदं जगन्निर्मितवानुत्पत्तिसमये देहादिसहितस्य कस्यचिदभावात्को ददर्श। तदानीं मनो नित्यमात्मा च नित्यस्तत्संयोगात्कश्चिदात्मा जानातीति चेत्सोऽपि न सम्भवतीत्यत आह। भूम्याः सम्बन्धि पार्थिवं स्थूलं शरीरम्। असुः प्राणः। तदुपलक्षितं सूक्ष्मं शरीरम्। असृक् शोणितम्। एतत्सप्तधातूपलक्षकम्। यद्यपि शरीरं पञ्चभूतात्मकं तथापि भूतद्वयप्रत्यक्षत्वात्तदपेक्षयोक्तम्। आत्मा तैः सम्बद्धश्चेतनः क स्वित्। कुत्रास्ते। न कश्चिदस्तीत्यर्थः। नान्यत्किञ्चनमिषत् ( ऐ० आ० २·४·१ ) इति श्रुतेः। विद्वांसं जगत्कारणविषयज्ञानवन्तमन्यं गुर्वादिकमेतत्कारणं प्रष्टुं कः शिष्योऽल्पमतिरुपगात्। उपगच्छति। तादृशो देहेन्द्रियसंघातरूप आत्मा तस्मिन् समये कुत्रास्ति। प्रष्टा प्रतिवक्ता चोभावपि न स्त इत्यर्थः। न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येदिति श्रुतेः। यद्वा प्रथमं प्रथमभाविनं जगतः कारणभूतं को ददर्श। कः साक्षात्करोति। जायमानमस्थन्वन्तं मनुष्यमनस्थिकः परमेश्वरः शरीरमशरीरो यद्यस्माद्बिभर्ति। द्रष्टुरपि तत्कार्यत्वादिति भावः। शिष्टं समानम् ॥४॥

अथ पञ्चमी। पाकः पक्तव्योऽपक्वमतिरहं मनसा ऽसंस्कृतेनाविजानन्नतिगहनं तत्त्वं विशेषेण ज्ञातुमशक्नुवन्पृच्छामि। प्रश्नं करोमि। अज्ञाने कारणमाह एना एनानि पदानि सन्देहास्पदानि तत्त्वानि देवानां निहितानि। देवानामपि गूढानीत्यर्थः। यद्वा देवानां पदानि तत्त्वानि निधिवद्गोपायित्वा स्थापितानि। अतः पृच्छामि तत्त्वज्ञानोपयोगायेति शेषः। तानि कानीत्युच्यते। वत्से सर्वस्य निवासभूते बष्कये। बडिति सत्यनाम। तत्कयतीति बष्कय आदित्यः। यद्वा बष्कयो नामैकहायनो वत्सः। पुनरपि वत्सशब्दस्य पृथङ्निर्देशाद् बष्कयशब्देन तत्कालमात्रं लक्ष्यते। तस्मिन्नादित्येऽधि अधिकं सप्त तन्तून् तायमानान् सप्त सोमसंस्थारूपान् कवयो मेधाविनो यजमाना ओतवै जगद् पतिर्यक्तन्तून्वेतु वितत्निरे। वितन्वन्ति। यद्वा सप्त तन्तवः सप्त छन्दांसि। तानि वितन्वन्ति। किमर्थम्। ओतवै। सप्तसोमसंस्थारूपतिर्यक्तन्तुसन्तानाय। यज्ञनिर्माणायेत्यर्थः। यज्ञानां स्थितेः सूर्याधीनत्वादिति भावः। ईदृशं तत्त्वं पृच्छामीत्यर्थः ॥५॥

अथ षष्ठी। अचिकित्वान् देवतातत्त्वमजानन्नहं चिकितुषो विशेषेण तत्त्वं जानतः कवीन्क्रान्तदर्शिनोऽधिगतपरमार्थानत्रास्मिन्तत्त्वविषये पृच्छामि। किमर्थम्। विद्मने। वेदनाय। परमार्थज्ञानाय। किं जानन्नेव पराभवार्थं नेत्याह। विद्वान्न पृच्छामि अपि त्वज्ञानादेव। यः परमेश्वरस्तस्तम्भ स्तम्भितवान् नियमितवान्। अथ य आत्मा सेतुर्विधृतिरेषां लोकानामसम्भेदाय ( छा० उ० ८-४-१ ) इति श्रुतेः। किम्। इमा इमानि षड् रजांसि लोकान्नञ्जनात्मकान्। लोका रजांस्युच्यन्ते ( नि० ४-१७ ) इति निरुक्तम्। यद्यपि लोकाः सप्त तथापि सत्यलोकस्य कर्मिणां सर्वेषां साधारणत्वाभावात् षडित्युक्तम्। ननु षडेवोक्ताः सप्तमः किमिति न निर्दिष्ट इति उच्यते। अजस्य जननादिरहितस्य चतुर्मुखस्य ब्रह्मणो रूपे स्वरूप एकं सत्यलोकाख्यं पुनरावृत्तिरहितं स्थानं किमपि स्वित्। किं स्विदेव। तन्न केनाप्यधिगन्तुं शक्यमित्यर्थः। कैश्चिदेवोपासकैरर्चिरादिमार्गेण गन्तव्यत्वादिति भावः। यद्वा षड्रजांसि विलक्षणाः षडृतवः। तान्यस्तम्भयत्तत्स्वम्। अजस्य गमनशीलस्य जन्मरहितस्य वादित्यस्य रूपे रूप्यमाणे दृश्यमाने मण्डल एकमद्वितीयं किमपि स्वित्। यत्किञ्चिद्वाङ्मनसगम्यं तत्त्वमस्ति तत्पृच्छामि। य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते ( छा० उ० १-६-६ ) इत्यादिश्रुतिप्रतिपादितं तत्त्वमित्यर्थः। अथवा षडिमानि रजांसि त्रिविधान्द्योलोकान्भूलोकांश्च यस्तस्तम्भ। तिस्रो भूमीर्धारयन्त्रींरुत द्यून् ( ऋ० सं० २-८७-८ ) इति निगमः। तस्यास्य परब्रह्मणो रूपे नानाविधविकारभाजि जगति किमपि स्विदेकमेकात्मकमस्तीति प्रश्नः। अविशेषमस्तिनाममात्रमेकरूपमस्तीत्युत्तरविवक्षया प्रश्नः। अस्तीत्येवोपलब्धव्यः ( क० उ० २-६-१२ ) इति श्रुतेः ॥६॥

अथ सप्तमी। इहेदानीमेतद्वक्ष्यमाणं तत्त्वमङ्ग क्षिप्रविचारे ब्रवीतु। कः। यो वेद सः। कीदृशं तत्। अस्य पुरतो दृश्यमानस्य वामस्य वननीयस्य वेर्गन्तुरादित्यस्य पदं सर्वैर्गन्तव्यं स्वरूपं निहितं गूढं वर्तते। किञ्चास्यादित्यस्य शीर्ष्णः शिरोवदुन्नतस्य सर्वेषामुत्कृष्टस्य वा गावः केचन वर्षकालीना रश्मयः क्षीरमुदकं दुह्रते। क्षरन्ति। वव्रिम्। रूपनामैतत्। रूपं वसाना आच्छादयन्तोऽतिविस्तरेण तेजसा तपन्तः केचनास्य गावो रश्मय उदकं स्वसृष्टं पदा सृष्टेनैव मार्गेणापुः। पिबन्ति। भूमिं निरुदकां कुर्वन्ति इत्यर्थः। तस्य स्वरूपं ब्रवीत्वित्यन्वयः ॥७॥

अथाष्टमी। माता सर्वस्य निर्मात्री पृथिवी पितरं पालकं द्युलोकं तत्स्थं द्युलोकस्थमादित्यमित्यर्थः। तमाबभाज। आभजते। किमर्थम्। ऋते। उदके यज्ञे वा निमित्तभूते सति। केन द्वारेण। धीती। धीत्या कर्मणा यागादिरूपेण। स्वकीयेनाज्यसोमादिहविषा तर्पयतीत्यर्थः। अग्रे ततः पूर्वं पिता च मनसास्यामभिप्रायवता चेतसा सञ्जग्मे। संश्लिष्टो वर्तते खलु। वृष्टिमकरोदित्यर्थः। अनन्तरं सा माता बीभत्सुर्गर्भबन्धनेच्छावती गर्भरसा गर्भरसेन गर्भोत्पत्तिनिमित्तेन रसेन निविद्धा नितरां विद्धासीत्। यद्वा गर्भे रस ओषध्याद्युत्पादनसमर्थमुदकं यस्याः सा तादृश्युदकेनात्यन्तं क्लिन्ना निविद्धा कृषीवलैर्हलमुखेन नितरां विदारिता भवति बीजवापार्थम्। अत्रायं समाधिः। यथा काचन योषिदपत्यार्थं स्वपतिं युवानं यौति। स च तस्यामनुरागयुक्तः संगतो भवति। सा चान्तर्वत्नी सती पुत्राञ्जनयतीति तद्वदत्रापि। अनन्तरं नमस्यन्त इत् भाविव्रीहि प्रियङ्ग्वाद्यन्नवन्त एवोपवाकमुपेत्य वचनं परस्परं सम्यगभिवृद्धानि सस्यानीति वचनमीयुः। प्राप्नुवन्ति। यद्वा हविर्लक्षणान्नवन्त उपेत्य वचनं प्रैषादिरूपमीयुः। वृष्टौ सत्यां सस्यादिद्वारा यागमनुतिष्ठेयुरित्यर्थः ॥८॥

अथ नवमी। माता। निर्मीयन्तेऽस्यां भूतानीति माता द्यौः। दक्षिणाया अभिमतपूरणसमर्थायाः पृथिव्या धुरि निर्वहणे युक्ताऽऽसीत्। वर्षणाय समर्थाऽभूदित्यर्थः। कथमिति तदुच्यते। गर्भो गर्भस्थानीय उदकसङ्घो वृजनीपूदकवतीषु मेघपङ्क्तिषु अन्तर्मध्येऽतिष्ठत्। तिष्ठति। अनन्तरं वत्सः पुत्रस्थानीय उदकसंघस्त्रिषु योजनेषु मेघरश्मिवायुसंयुक्तेषु सत्स्वमीमेत्। वर्षणसमये शब्दयति। अनन्तरं विश्वरूप्यं विश्वरूपवतीं गामन्वपश्यत्। अनुक्रमेण पश्यति। वर्षतीत्यर्थः। यद्वा त्रिषु योजनेषु सत्सु वत्सो मेघो वर्षणाय गां भूमिं प्रत्यमीमेत्। अनन्तरं सर्वो जनोऽनुक्रमेण विश्वरूप्यं सस्यादिभिर्नानारूपवतीं भूमिमपश्यत्। पश्यति ॥९॥

अथ दशमी। एकः प्रधानभूतोऽसहायो वा पुत्रस्थानीय आदित्यः संवत्सराख्यः कालो वा तिस्रो मातॄः सस्यवृष्ट्याद्युत्पादयित्रीः। क्षित्यादिलोकत्रयमित्यर्थः। तथा त्रीन् पितॄन् जगतां पालयितॄन्। लोकत्रयाभिमानिनोऽग्निवायुसूर्याख्यान्। बिभ्रत् सन् ऊर्ध्वस्तस्थौ। उन्नतोऽत्यन्तदीर्घस्तिष्ठति भूतभविष्यदात्मना। सूर्यपक्षे सर्वेभ्यः उन्नतः। ईमेनं नावग्लापयन्ति। ग्लानं नैव कुर्वन्ति। नहि काल आदित्यो वा अन्येन पराभूयते। दिवः पृष्ठे द्युलोकस्योपर्यन्तरिक्षे मन्त्रयन्ते। गुप्तं परस्परं भाषन्ते देवाः। किम्। विश्वविदं विश्ववेदनसमर्थां विश्ववंदनीयां वा विश्वमिन्वामसर्वव्यापिनीं वाचं गर्जितलक्षणाम्। अमुष्यादित्यस्य सम्बन्धिनीं मन्त्रयन्त इत्यर्थः ॥१०॥

अथैकादशी। ऋतस्योदकस्य सत्यात्मकस्य वादित्यस्य चक्रं पुनः पुनः क्रमणशीलं मण्डलाख्यं रथचक्रं वा वर्वर्ति। पुनः पुनर्वर्तते। सञ्चरति। कुत्र। द्यां परि। द्युलोकस्यान्तरिक्षस्य परितः। कीदृशं तत्। द्वादशारम्। द्वादशसंख्याकमेषादिराश्यात्मकैरारै रथाङ्गावयवैर्युक्तम्। किञ्च तच्चक्रं नहि जराय नैव खलु जरायं भवति। हे अग्ने सर्वदागमनयुक्तादित्य। यद्वा अग्नेरेव स्थानत्रये तत्तदात्मना वर्तमानत्वादसावप्यग्निरित्युच्यते। अत्रास्मिंस्त्वदीये चक्रे मिथुनासः स्त्रीपुंसरूपेण परस्परमिथुनभूताः सप्त शतानि विंशतिश्च विंशत्युत्तरसप्तशतसंख्याकाः पुत्राः पुत्रवदुत्पद्यमानाः प्राणिनः दुःखात्त्रातारो वाऽहोरात्ररूपास्तस्थुः। तिष्ठन्ति। निष्प-

शन्ते। षष्ट्यधिकशतत्रयसंख्याकान्यहानि तावन्त्य एव रात्रय इत्येव तद्विभागः। सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः स एषोऽहः समानः (ऐ० आ० ३-२-१) इत्यारण्यकम् ॥११॥

अथ द्वादशी। पञ्चपादं पञ्चसंख्याकर्त्वात्मकपादोपेतम्। एतद्धेमन्तशिशिरयोरेकत्वाभिप्रायम्। पितरं सर्वस्य प्रीणयितारं द्वादशाकृतिं द्वादश मासा एवाकृतयो यस्य तादृशं पुरीषिणं वृष्ट्युदकेन तद्वन्तं प्रीणयितारं वा। पुरीषमित्युदकनाम। उक्तलक्षणं संवत्सरचक्रं दिवो द्युलोकस्य परेऽर्द्धे। तात्स्थ्यात्ताच्छब्द्यम्। परस्मिन्नर्द्धेऽन्तरिक्षलक्षणेऽवस्थित आदित्य इत्यर्थः। तस्मिन्नर्पितमाहुः। एतदुपरि स्थितमत्राप्यनुषज्यते। यद्यत्रार्पितं तत्तदधीनमतः संवत्सरं परायत्तमाहुरित्यर्थः। अथेमेऽपि चान्ये केचन वेदवादिन एवमाहुः। किमिति। उपरे। उपरमन्तेऽस्मिन्नुपरताः प्राणिनोऽत्रेति वोपरः संवत्सरः। तस्मिन्। कीदृशे। सप्तचक्रे। सप्तादित्यरश्मयस्तद्द्वारेण चक्रस्थानीया यस्य स तथोक्तः। यद्वा। अयनर्तुमासपक्षाहोरात्रिमुहूर्तानि सप्त। सप्त चक्राणि पुनः पुनः क्रममाणानि यस्य तादृशे। षळरे। षडृतव एवारा नाभौ प्रत्यृताः सम्बद्धा यस्य तथोक्तलक्षणे संवत्सरे रथे विचक्षणं विविधदर्शनकरमादित्यमर्पितमाहुः। एतदुक्तं भवति। अमुमादित्यं दक्षिणोत्तररूपभिन्नगतेस्तीव्रमन्दादिभावस्य च कालाधीनत्वात्तदधीनमाहुः। अन्ये तु संवत्सराद्यात्मकस्य कालस्य सूर्यगमनागमनसाध्यत्वात्तदायत्तमाहुरिति ॥१२॥

अथ त्रयोदशी। पञ्चर्तुरूपैररैर्युक्ते चक्रे संवत्सरात्मके परिवर्तमाने संवत्सरपरिवत्सरादिरूपेण पुनः पुनरावर्तमाने सति तस्मिन्कालचक्रे विश्वा भुवनानि सर्वाणि भूतजातानि वर्तन्त इत्यर्थः। किं च तस्य चक्रस्य मध्ये वर्तमानोऽक्षो भूरिभारः सकलभुवनवहनेन प्रभूतभारोऽपि न तप्यते। न पीड्यते। किञ्च सनादेव सनातन एव सनाभिः समाननाभिकः सर्वदैवैकरूपनाभिरसौ न शीर्यते। न भिद्यते। यथा लौकिकरथाक्षो भारेण भग्नो भवति। अक्षघातेन च नाभिर्विशीर्णा भवति तद्वदत्रापि नास्तीत्यर्थः ॥१३॥

अथ चतुर्दशी। सनेमि समाननेम्येकप्रकारबहिर्वलयमक्षीणनेमि चक्रं संवत्सराख्यमजरं सनातनमपि जरारहितं विववृते। पुनः पुनर्विशेषेण वर्तते। उत्तानायामूर्ध्वतनायामीषायामुपरि विस्तृतभूम्यां वा दशेन्द्रादयः पञ्च लोकपाला निषादपञ्चमाश्चत्वारो ब्राह्मणादयो वर्णा मिलित्वा दशसंख्याका युक्ताः स्वस्वव्यापारयुक्ता वहन्ति। निर्वहन्ति। कृत्स्नं जगन्निर्वहन्तीत्यर्थः। तन्निर्वाहार्थत्वात्कालस्य। किञ्च सूर्यस्यादित्यस्य चक्षुः ख्यानस्वभावं सर्वस्य चक्षुःस्थानीयं वा मण्डलम्। चक्षुः ख्यातेर्वा चष्टेर्वेति निरुक्तम् ( नि० ४-३ )। रजसा वृष्ट्युदकेनावृतं व्याप्तमेति। गच्छति। उदकं रज उच्यत इति यास्कः ( नि० ४-१९ )। तादृशे मण्डले विश्वा भुवनानि सर्वाणि भूतजातान्यर्पिता। अर्पितानि। तदधीनत्वात्तेषाम् ॥१४॥

अथ पञ्चदशी। साकञ्जानामेकस्मादादित्यात्सहोत्पन्नानां सहानामृतूनां मध्ये सप्तथं सप्तममृतुम्। थट् च छन्दसि ( पा० ५-२-५० ) इति थट्। एकजमेकोत्पन्नमाहुः। कालतत्त्वविदः। चैत्रादीनां द्वादशानां मासानां द्वयमेलनेन वसन्ताद्याः षडृतवो भवन्ति। अधिमासेनैक उत्पद्यते सप्तमर्तुः। न च तादृशो मास एव नास्तीति मन्तव्यम्। अस्ति त्रयोदशो मास इत्याहुः ( तै० स० ६-५-३-४ ) इति श्रुतेः। तदेवोच्यते। षडिद्यमाः। इच्छब्द एवकारार्थः। षडेव ऋतवो मासद्वयरूपा ऋषयो गन्तारः। ते च देवजाः देवादादित्याज्जाता इत्येवमाहुः। सप्तमाधारस्य

त्रयोदशस्य मासस्य देवाभावः। निःसूर्योऽधिकमासो वै मण्डलं तपते रवेरित्यादिस्मृतेः। तस्मात् षडेव देवजा अदेवज एकः। तेषामृतूनां स्वरूपाणीष्टानि सर्वलोकाभिमतानि धामशस्तत्तत्स्थाने निहितानि पृथक् पृथक् स्थापितानि रूपशो रूपभेदेन विकृतानि विविधाकृतियुक्तानि। स च रूपभेदस्तैत्तिरीयैराम्नातः स रसमह वसन्ताय प्रायच्छद्यवं ग्रीष्माय ( तै० सं० ७-२-१०-१ ) इत्यादि। स्थात्रेऽधिष्ठात्रे तदर्थाय रेजन्ते। चलन्ति। जगद्व्यवहाराय पुनः पुनरावर्तन्त इत्यर्थः ॥१५॥

॥ २४ ॥

२·२५

इन्धान इति पञ्चर्चं तृतीयं सूक्तं गार्त्समदं जागतं ब्राह्मणस्पत्यम्। तथा चानुक्रान्तम्। इन्धानः पञ्च जागतंत्विति। लैङ्गिको विनियोगः।

तत्र प्रथमा। अयमिन्धानो ब्रह्मणस्पतेर्यागार्थमग्निं प्रज्वालयन्यजमानो वनुष्यतो हिंसिष्यतो हिंसां कुर्वतो वा शत्रून्वनवत्। वनुयात् हिंस्यात्। वनुष्यतिर्हिंसाकर्मेति यास्कः ( नि०५-२ )। इदिति चार्थः। कृतब्रह्मा। ब्रह्म स्तोत्रं कृतं येन स तथोक्तः। रातहव्यः। रातं दत्तं हव्यं हविर्येन। एवंभूतः सन् शूशुवत्। वर्धते। टुओश्वि गतिवृद्ध्योः। अस्माण्ण्यन्ताल्लुङि रूपम्। तथा यजमानो जातेन पुत्रेण जातं जनितमुत्पादितं स्वस्य पौत्रमति प्रसर्सते। अतीत्य भृशं प्रसरति। पौत्रमपि पश्यञ्चिरकालं जीवेदित्यर्थः। सर्त्तेर्यङ्लुगन्ताद्व्यत्ययेनात्मनेपदम्। यं यं यजमानं ब्रह्मणस्पतिः स्तोत्रहविषोः स्वीकरणेन युजं सखायं कृणुते। कुरुते। स समान एव भवतीत्यर्थः ॥१॥

अथ द्वितीया। स यजमानो वीरेभिर्वीरैरात्मीयैः पुत्रैर्वनुष्यतो हिंसतो वीरान्शत्रुपुत्रान् वनवत्। वनुयात् हिंस्यात्। अपिच गोभिः सहितं धनं पप्रथत्। प्रथयति विस्तारयति प्रथयतेर्लुङि चङ्येतद्रूपम्। तथात्मना आत्मनैव बोधति। सर्वं जानाति। अनन्याधीनज्ञानो भवतीत्यर्थः। किंच तस्य यजमानस्य तोकं पुत्रस्तनयम्। विभक्तिव्यत्ययः। तनयस्तत्पुत्रश्च वर्धते। प्रवृद्धो भवति। यद्वा तोकं तनयं पुत्रं पौत्रं च ब्रह्मणस्पतिर्वर्द्धयति वृधिरन्तर्भावितण्यर्थो द्रष्टव्यः। अन्यद्गतम् ॥२॥

अथ तृतीया। सिन्धुः स्यन्दनशीला नदी क्षोदो न क्षुद्यमानं कूलं यथा भिनत्ति तथा शिमीवान्। शिमीति कर्मनाम। ब्रह्मणस्पतेः परिचरणात्मना कर्मणा युक्तो यजमान ऋघायतो हिंसतः शत्रूनोजसा बलेनाभिवष्टि। हन्तुमभितः कामयते। वश कान्तौ। इदमपरं निदर्शनम्। वृषेव वध्रीन्। वध्रयो निष्पिष्टमुष्का निर्वीर्या बलीवर्दाः। तान् यथा वृषा सेचनसमर्थः सवीर्यो वृषभोऽभिभवति। तद्वच्छत्रूनभिभवतीत्यर्थः। अपि चासावग्नेरिव प्रसितिः। प्रसीयते बध्यतेऽनयेति प्रसितिर्ज्वाला। षिञ् बन्धने। करणे क्तिन्। यथाग्नेर्ज्वाला प्रतिहतप्रसरा एवमपि न वर्तवे। वारयितुं वा नैव शक्यते। अहशब्दोऽवधारणे। वृणोतेरन्तर्भावितण्यर्थात् वर्ततेर्वा तुमर्थे तवेन् प्रत्ययः। अन्यद्गतम् ॥३॥

अथ चतुर्थी। तस्मै यजमानाय दिव्या दिविभवा वृष्टिलक्षणा आपोऽसश्चतोऽसज्यमाना

अनिरुद्धाः सद्योऽर्यन्ति। गच्छन्ति। प्राप्नुवन्ति। अर्तेर्लटि रूपम्। तथा स यजमानः सत्वभिः। सत्वानः साधकाः परिचारकाः। तैः सहितः प्रथमोऽन्येभ्यो यजमानेभ्यः पूर्वभावी सन् गोषु गच्छति। गवादिधनं प्राप्नोति इत्यर्थः। किञ्च। अनिभृष्टतविषिः। तविषीति बलनाम। अनिभृष्टा परैरबाधिता तविषी बलं यस्य तादृशः सन्नोजसा बलेन हन्ति शत्रून् ॥४॥

अथ पञ्चमी। तस्मा इत् तस्मा एव यजमानाय विश्वे सिन्धवः सर्वाः स्यन्दनशीला नद्यो धुनयन्त। चालयन्ति। एतदभीष्टफलसिद्ध्यर्थं प्रवहन्तीत्यर्थः। तथा अच्छिद्रा अच्छिद्राणि छिद्ररहितानि सन्ततानि पुरूणि बहूनि शर्म शर्माणि सुखानि दधिरे। तस्मा एव धार्यन्ते। सुभगः शोभनधनो देवानां सुखे देवैः प्रत्ते सुखे वर्तमानः सन्नेधते। वर्धते। शिष्टं स्पष्टम् ॥५॥

॥ २५ ॥

३·१७

समिध्यमान इति पञ्चर्चं पञ्चमं सूक्तमाग्नेयं त्रैष्टुभं वैश्वामित्रस्य कतस्यार्षम्। तदुक्तम् समिध्यमानः पञ्च कतो वैश्वामित्रस्त्विति। आजुहोतेत्यादिसूक्तदशकस्य विनियोग उक्तः प्रातरनुवाकाश्विनशस्त्रयोरिति। तत्रेदं चतुर्थम्। वाजपेये बार्हस्पत्ये चरावग्निं सुदीतिमिति स्विष्टकृतो याज्या। वाजपेयेनेत्यादिखण्डे सूत्रितम् ( आ० श्रौ० ९-९ ) अग्निं सुदीतिं सुदृशं गृणन्त इति संयाज्ये इति।

तस्मिन्सूक्ते प्रथमा। कतः स्तौति धर्म। धारणाद्धर्मः। अग्नेर्यज्ञनिर्वाहकतया तद्धारकत्वाद्धर्माग्निः। तथा च मन्त्रः। धर्माणामग्नि विदथस्य साधनम् ( ऋ० सं० १०-९-२-२ ) इति। तादृशोऽग्निः प्रथमा प्रथमं यज्ञोपक्रमे अनु अग्न्यायतनेष्वनुक्रमेण समिध्यमानः सम्यक् प्रज्वाल्यमानः। यद्वा। अनुधर्मं धर्मसाधनभूतेषु यज्ञेषु प्रथमं समिध्यमानो विश्ववारो विश्वैः सर्वैर्यजमानैर्यष्टव्यतया वरणीयः शोचिष्केशः। शोचींषि ज्वालाः केशा यस्य स तथोक्तः। घृतनिर्णिक्। घृतस्य तापनद्वारा विलयनेन शोधकः पावकोऽस्मदीयपापशोधकः सुयज्ञः शोभनयज्ञोपेतः। एवं एवंभूतोऽग्निर्देवानस्माभिर्यजनीयान्देवान्यजथाय यष्टुमक्तुभिरञ्जनसाधनैर्घृतादिभिः समज्यते। सम्यक् सिच्यते। प्रथमा। सुपां सुलुक्० ( पा० ७-१-३९ ) इति सुपो डादेशः। धर्म। धृ धारणे इत्यस्मादन्येभ्योऽपि दृश्यन्ते ( पा० ३-२-७५ ) इति मनिन्। ह्रस्वत्वं छान्दसम्। नित्स्वरः। अक्तुभिः। अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु। अज्यते एभिरिति बाहुलकत्वात् क्तुः करणे। कित्वादुपधालोपः। प्रत्ययस्वरः। अज्यते। स एव धातुः। कर्मणि यक्। अनिदिताम्० (पा० ६-४-२४) इत्युपधालोपः। विश्ववारः। विश्वैर्यजमानैर्होतृद्वारा वारो वरणं यस्येत्यत्र वृञ् वरणे इत्यस्य णयन्तस्य रूपं वारः। बहुव्रीहौ विश्वं संज्ञायाम् ( पा० ६-२-१०६ ) इति पूर्वपदान्तोदात्तत्वम्। घृतनिर्णिक्। निजिर् शौचपोषणयोः। क्विप्। घृतं नेनेक्तीति द्वितीयातत्पुरुषत्वात्पूर्वपदस्वरः। यजथाय। यज देवपूजासङ्गतिकरणमित्रकरणदानेषु। अस्मादौणादिकोऽथप्रत्ययः। तादर्थ्ये चतुर्थी। प्रत्ययस्वरः ॥१॥

अथ द्वितीया। हे अग्ने त्वं यथा पृथिव्या यजमानभूतायाः पृथिवीदेवतायाः पूर्वं होता सन् होत्रं होमसाधनं हविरयजोऽयाजीः। जातवेदो जातप्रज्ञ हे अग्ने चिकित्वान् कर्मविषयकज्ञानवान् त्वं यथा च दिवो यजमानभूताया द्युदेवताया होता भूत्वा हविरयजः। एवं त्वमस्मिन्कर्मणि होता सन्ननेनास्माभिर्दीयमानेन हविषा देवान्यक्षि। यज। किञ्च त्वमद्येदानीमस्माभिः क्रियमाणमिमं यज्ञं प्रतिर। अनुष्ठानसंपूर्त्या पारं नय गमय। तत्र दृष्टान्तो मनुष्वदिति। यथा मनोर्यज्ञमनुष्ठानसंपूर्त्या पारमनैषीस्तद्वदिमं यज्ञं पारं नयेत्यर्थः। यथा। प्रकारवचने थाल् ( पा० ५-३-२३ ) इति थाल्। लिति ( पा० ६-१-१९३ ) इति प्रत्ययात्पूर्वस्योदात्तत्वम्। अयजः। यजेर्लङि रूपम्। यच्छब्दयोगादनिघातः। होत्रम्। हु दानादनयोः। हुयामाश्रुभसिभ्यस्त्रन् (उ० ४-१६६) इति त्रन्प्रत्ययेनान्तोदात्तः। दिवः। ऊडिदम्० (पा० ६-१-१७१) इति विभक्तेरुदात्तत्वम्। चिकित्वान्। कित ज्ञाने इत्यस्य क्वसौ रूपम्। प्रत्ययस्वरः। अनेन। इदंशब्दस्य तृतीयैकवचनेऽनाप्यकः (पा० ७-२-११२) इत्यनादेशः। यक्षि। यजेर्लेटि रूपम्। मनुष्वत्। तत्र तस्येव (पा० ५-१-११६) इति वतिः। नभोङ्गिरोमनुषां वत्युपसंख्यानमिति भत्वाद्रुत्वाभावः। प्रत्ययस्वरः। तिर। तरतेर्लोटि व्यत्ययेन शः। ऋत इद्धातोः ( पा० ७-१-१०० ) इतीत्वम्। निघातः ॥२॥

अथ तृतीया। हे जातवेदो जातप्रज्ञ तव त्रीण्यायूंषि त्रिविधान्याज्यौषधिसोमात्मकान्यन्नान्याहारतया कल्पितानि हे अग्ने तिस्र उषस एकाहाहीनसत्रगता उषोऽभिमानिन्यो देवतास्ते तवाजानीर्जनयित्र्यो मातरः। यद्वा उषोऽभिमानिन्यो देवतास्तवाजानीस्त्वामनुजातास्तिस्रः स्वसारः। तथा च स्वसॄः प्रकृत्य मन्त्रः। प्रजामेका रक्षत्यूर्जमेका राष्ट्रमेका रक्षतीति ( तै० सं० ४-३-११-३ )। ताभिरुषोऽभिमानिनीभिर्देवताभिः सहितस्त्वमवोऽस्माभिर्दीयमानं हविर्लक्षणमन्नं देवानां यक्षि। यष्टव्यदेवानां प्रयच्छ। अथानन्तरं विद्वान् जानंस्त्वं यजमानाय शं भव। सुखहेतुर्भव। योश्च सुखस्य मिश्रयिता च भव। तव। युष्मदस्मदोर्ङसि ( पा० ६-१-२११ ) इत्याद्युदात्तः। तिस्रः। त्रिशब्दस्य स्त्र्यर्थे त्रिचतुरोः स्त्रियाम्० ( पा० ७-२-९९ ) इति तिस्रादेशः। अचि र ऋतः ( पा० ७-२-१०० ) इति रेफादेशः। तिसृभ्यो जसः ( पा० ६-१-१६६ ) इति विभक्तेरुदात्तत्वम्। आजानीः। जन जनने। जनिघसिभ्यामिण् ( उ० ४-१३१ ) इति कर्तरि इण्। णित्त्वादुपधावृद्धिः। वा छन्दसि ( पा० ६-१-१०६ ) इति पूर्वसवर्णदीर्घः। कृदुत्तरपदप्रकृतिस्वरः। अवः। अव रक्षणे। असुनित्यसुन्। नित्स्वरः। यक्षि। यजेर्दानार्थस्य लेटि रूपम्। यजमानाय। पूङ्यजोः शानन् ( पा० ३-२-१२८ ) इति यजेः शानन्। नित्स्वरः। योः। यु मिश्रणे इत्यस्मादन्येभ्योऽपि दृश्यन्ते ( पा० ३-२-७५ ) इति विच्। आर्धधातुकलक्षणो गुणः। कृदुत्तरपदप्रकृतिस्वरः ॥३॥

अथ चतुर्थी। जातवेदो जातस्य सर्वस्य वेदितर्हे अग्ने गृणन्तस्त्वद्विषयां स्तुतिं कुर्वाणा वयमङ्गनादिगुणोपेतं सुदीतिं शोभनदीप्तिम्। अतएव सुदृशं सर्वैः सुदर्शनमीड्यं स्तुत्यं त्वा त्वां नमस्यामः। हविर्भिः पूजयामः। किञ्च। देवा अस्माभिर्यजनीया इन्द्रादयो देवा अरतिम्। न विद्यते विषयेषु रतिः प्रीतिर्यस्यासावरतिः। विषयेष्वसक्तम्। अतएवामृतस्य देवानामन्नभूतायाः सुधाया नाभिं नाभिस्थानं त्वा तादृशं हव्यवाहं दूतमकृण्वन्। हविषां वोढारं दूतमकुर्वन्। दूतो हि द्विविधो वार्ताहारी कार्यकारी चेति। तत्र त्वां कार्यकारिणमकार्षुरिति भावः। सुदीतिम्। दीङ्क्षये। दीयते विनाश्यते आभिस्तम इति करणे क्तिन्। दीतयो दीप्तयः। बहुव्रीहौ

नञ्सुभ्याम् ( पा० ६-२-१७२ ) इत्युत्तरपदान्तोदात्तत्वम्। सुदृशम्। दृशिर् प्रेक्षणे। तस्मा-च्छक्यार्थे खल्। संज्ञापूर्वको विधिरनित्यः इति गुणाभावः। लिति ( पा० ६-१-१९३ ) इति प्रत्ययात्पूर्वस्योदात्तत्वम्। गृणन्तः। गृणातिरर्चतिकर्मा। नमस्यामः। नमस् पूजायाम्। नमोवरिवश्चित्रङः क्यच् ( पा० ३-१-१९ ) इति क्यच्। तदन्ताल्लटि रूपम्। पादादित्वान्न निघातः। दूतम्। टुदु उपतापे। दुतनिभ्यां दीर्घश्च ( उ० ३-८९ ) इति क्तः। तत्सन्नियोगेन धातोर्दीर्घः। दूत इतस्ततः सञ्चारीत्यर्थः। प्रत्ययस्वरः। अरतिम्। रमु क्रीडायाम्। भावे क्तिन्। अकृण्वन्। कृवि हिंसाकरणयोरित्यस्य लङि धिन्विकृण्व्योर च ( पा० ३-१-८० ) इत्युप्रत्ययोऽकारश्चान्तादेशः। निघातः ॥४॥

अथ पञ्चमी। हे अग्ने त्वत् त्वत्तोऽपि पूर्वः प्रथमभावी यजीयान् अतिशयेन यष्टा यो यः कश्चि-द्धोता होमनिष्पादको द्विता द्वेधं मध्यमे चोत्तमे च स्थाने स्वधया सोमाख्येनान्नेन सह सत्ता निषण्णः सन् शम्भुर्यष्टॄणां सुखभूरभूत्। द्वितीयपादमेवं यास्को ( नि० ५-३ ) व्याचख्यौ। द्विता च सत्ता स्वधया च शम्भुः। द्वेधं सत्ता मध्यमे चोत्तमे च शम्भुः सुखभूः इति। चिकित्वो धर्मविषयकचेतनावन् हे अग्ने। तस्य यस्त्वत्तोऽपि पूर्वभावी होता निरूपितस्तस्य होतुरनुधर्मं धर्मानानु तेनानुष्ठितधर्माननुलक्ष्य प्र यज। प्रकर्षेण देवान्पूजय। अथानन्तरं हे अग्ने त्वं नो-ऽस्माकं सम्बन्धिनमध्वरमिमं यज्ञं देववीतौ देवानां प्रीत्यर्थं धाः। विधेहि। यजीयान्। यष्टृ-शब्दस्य तुश्छन्दसि (पा० ५-३-५९) इतीयसुन्। तस्मिन् तुरिष्ठेमेयस्सु (पा० ६-४-१५४) इति तृचो लोपः। नित्स्वादाद्युदात्तः। द्विता। द्विशब्दात्सङ्ख्याया विधार्थे धा ( पा० ५-३-४२ ) इति धाप्रत्ययः। धकारस्य तकारश्छान्दसः। प्रत्ययस्वरः। सत्ता। षद्लृ विशरणगत्यवसादनेषु। अस्य ताच्छीलिकस्तृन्। नित्स्वरः। स्वधया। स्वर्गं लोकं दधाति यजमानस्येति स्वधा। आतोऽनुपसर्गे कः (पा० ३-२-३) इति कप्रत्ययः। कृदुत्तरपदप्रकृतिस्वरत्वम्। शम्भुः। शं सुख-मस्माद्भवतीति भू सत्तायां विप्रसम्भ्यो ड्वसञ्ज्ञायाम् ( पा० ३-२-१८० ) इत्यत्र मितद्र्वादे-रुपसंख्यानाद् डुप्रत्ययः। डित्त्वाट्टिलोपः। यज। यजेर्लोटि रूपम्। चिकित्वः। कित ज्ञान इत्यस्य क्वसो रूपम्। मतुवसो रु सम्बुद्धौ छन्दसि ( पा० ८-३-१ ) इति नकारस्य रुः। अथा नः। निपातस्य ( पा० ६-३-१३६ ) इति दीर्घः। धाः। डुधाञ् धारणपोषणयोरित्यस्य छान्दसे लुङि रूपम्। अडभावश्छान्दसः। देववीतौ। देवानां वीतिरशनं यत्र प्रीतौ सा प्रीतिर्देववीतिः। वी कान्त्यादिष्वस्माद्भावे क्तिन्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः ॥५॥

॥ २६ ॥

४.५४

अभूद्देव इति षडृचं नवमं सूक्तं वामदेवस्यार्षं सावित्रम्। अन्त्या त्रिष्टुप्। शिष्टास्त्रिष्टुबन्त-परिभाषया जगत्यः। तथा चानुक्रमणिका। अभूद्देवः षट् त्रिष्टुबन्तम् इति। अग्निष्टोमे वैश्वदेव-शस्त्रे सावित्रनिविद्धानमिदम्। तथा च सूत्रम् ( आ० श्रौ० ५-१८ )। अभूद्देव एकया दशभिश्च स्वभूते इति। आद्या सावित्रग्रहस्यानुवाक्या। तथा च सूत्रम् ( आ० श्रौ० ५-१८ )। सावित्रेण ग्रहेण चरन्त्यभूद्देवः सविता वन्द्यो नु नः इति।

सैषा प्रथमा। स सविता देवोऽभूत्। प्रादुरासीत्। अतोऽनु क्षिप्रमेव नोऽस्माकं वन्द्यो वन्दनीयो भवति। इदानीं यागकालेऽह्नस्तृतीयसवने नृभिरस्मदीयैर्होतृभिरुपवाच्यः स्तुत्यो भवति। यो देवो मानवेभ्यो मनोरपत्येभ्यो यजमानेभ्यस्तेषामर्थाय रत्ना रमणीयानि धनानि विभजति स देवः श्रेष्ठं प्रशस्यं द्रविणं गवादिलक्षणं धनं नोऽस्मभ्यमत्रास्मिन्कर्मणि यथा दधत्। दद्यादित्यर्थः। तथा वन्द्य उपवाच्यश्चाभूदिति ॥१॥

अथ द्वितीया। प्रथमं देवेभ्यो हि। हिशब्दः प्रसिद्धौ। देवेभ्यो यज्ञियेभ्योऽमृतत्वं तत्साधनमुत्कृष्टतमं भागं सोमादिलक्षणं सुवसि। अनुजानासि। आदिदनन्तरमेव दामानं हविषां दातारं हे सवितर्व्यूर्णुषे। प्रकाशयसि। मनुष्येभ्यो यजमानेभ्यो जीविता जीवितान्यनूचीनानुक्रमयुक्तानि। पितृपुत्रपौत्रा इत्यनुक्रमः। ईदृशानि जीवितानि पश्चाद्व्यूर्णुषे ॥२॥

अथ तृतीया। हे सवितर्वयमचित्ती अप्रज्ञया दैव्ये जने देवे त्वयि दीनैर्दुर्बलैः पुत्रादिभिर्ऋत्विग्भिर्वा तथा दक्षैः प्रवृद्धैर्वा तैः प्रभूती प्रभूत्या। ऐश्वर्यमदेनेति यावत्। पुरुषत्वता पुरुषवत्तया च यदागश्चकृम। न केवलं त्वय्येव कृतमपि तु देवेष्वन्येषु मानुषेषु चाज्ञानादिभिर्यच्चकृम नः कृतवतोऽस्मान् त्वमत्रास्मिन्कर्मणि अनागसः सुवतात्। अनुजानीहि ॥३॥

देवसुवां हविष्षु सवितुः सत्यप्रसवस्य न प्रमिय इति याज्या। सूत्रितं च (आ० श्रौ० ४-११) न प्रमिये सवितुर्दैव्यस्य यद्‌ बृहस्पते प्रथमम् इति। सैषा चतुर्थी। सवितुर्दैव्यस्य देवस्य तत्कर्म न प्रमिये। न प्रमीयेत। न प्रहिंस्येत। हिंसार्हं न भवतीत्यर्थः। कृत्यार्थे केन्प्रत्ययः। यद्वा दैव्यस्येत्यधिकरणे षष्ठी। सा च कर्मार्था। दैव्यं कर्मेत्यर्थः। कथमहिंस्यमित्यत आह। यथा विश्वं भुवनं धारयिष्यति। धारयति। विश्वधारणरूपं यत्कर्मास्ति तन्न प्रमिये। तथा स्वङ्गुरिः शोभनाङ्गुल्युपलक्षितहस्तो यत्‌ यः पृथिव्या वरिमन्ना। आकारश्चार्थे। भूम्या उरुत्वे च सुवति। तथा दिवो द्युलोकस्य वर्ष्मन्नुरुत्वे च सुवति अस्य देवस्य तदुक्तं कर्म सत्यमबाध्यमिति ॥४॥

अथ पञ्चमी। हे सवितरिन्द्रज्येष्ठान्। इन्द्रः परमैश्वर्ययुक्तस्त्वमेवेन्द्रो वा ज्येष्ठो ज्यायान्पूज्यो येषां ते तादृशाः। तानस्मान्बृहद्भ्यो महद्भ्यः पर्वतेभ्योऽप्यधिकान् सुवसि। प्रेरयसि। किञ्च एभ्यो यजमानेभ्यः पस्त्यावतो गृहवतः क्षयान्निवासान् ग्रामनगरादीन सुवसि। प्रेरयसि। यथा यथा पतयन्तो गच्छन्तस्त्वां वियेमिरे विनियम्यन्ते त्वया ते तव सवायानुज्ञाया एवैवमेव नियमनमनतिक्रम्य तस्थुः। तिष्ठन्ति ॥५॥

अथ षष्ठी। ये यजमाना हे सवितस्ते त्वदर्थं सवासः सवाः सोमाः। द्वितीयार्थे प्रथमा। सोमान्। यद्वा सवासः सवनानि प्रातरादीनि प्रति त्रिरहन्नभिषुणवन्ति। न केवलमेकस्मिन्नेवाहनि सवनत्रयेषु अपितु दिवेदिवे प्रतिदिनं सौभगं सौभाग्यजनकमासुन्वन्ति अभिषुणवन्ति तेभ्यो नोऽस्मभ्यमिन्द्रः शर्म यंसत्। यच्छतु। द्यावापृथिव्यौ चाद्भिर्विशिष्टा सिन्धुः सिन्ध्वभिमानी देवता चादित्यैः सहितादितिश्च शर्म यंसत्। सावित्रे सूक्त इन्द्रादीनां निपातमुक्त्वा तेषां प्रार्थना न विरुध्यते ॥६

॥ २७ ॥

५·५६

अग्ने शर्धन्तमिति नवर्चं द्वादशं सूक्तं श्यावाश्वस्यार्षम्। तृतीयासप्तम्यौ सतोबृहत्यौ शिष्टा बृहत्यः। अग्ने नव बार्हतं तृतीयासप्तम्यौ सतोबृहत्याविन्त्यनुक्रमणिका।

तत्र प्रथमा। हे अग्ने शर्धन्तं शत्रूनभिभवन्तं यज्ञायोत्सहमानं वा गणं मरुतां गणमा ह्वयेति शेषः। कीदृशं गणम्। रुक्मेभी रुक्मै रोचमानैरञ्जिभिराभरणैश्च पिष्टमवयवितम्। युक्तमित्यर्थः। अद्यास्मिन्यागदिने मरुतां विशः प्रजाः। गणानित्यर्थः। तान्रोचनाद्रोचमानाद् दिवो द्युलोकात्। अधीति पञ्चम्यर्थानुवादी। चित्पूरणः। अवावस्तादस्मदभिमुखं ह्वये। आह्वयामि ॥७॥

अथ द्वितीया। हे अग्ने त्वं हृदा हृदयेन मरुतो यथा चिन्मन्यसे। चिदिति पूजायाम्। येन प्रकारेणातिपूजितं जानासि। तेष्वादरं करोषीत्यर्थः। तद्वित्तथैव मे मदर्थं जग्मुर्गच्छन्त्वाशस आशंसितार इच्छन्तः शत्रून्हिंसन्तो वा। अनन्तरं ये मरुतो नेदिष्ठमत्यन्तान्तिकं सन्निधावेव ते तव हवनान्याह्वानानि श्रुत्वागमन् आगच्छन्ति। तान् भीमसन्दृशः कालविलम्बासहनेन भयंकरदर्शनान्वर्ध। वर्धय हविःप्रापणेन ॥२॥

अथ तृतीया। मीळ्हुष्मती प्रबलस्वामिका पराहतान्यैरभिभूता पृथवीव। अत्र पृथिवीशब्दस्तदधिष्ठितां प्रजां लक्षयति। सा यथा स्वस्वामिनमुपद्रुताभिगच्छति तद्वदिति। मरुतां साकल्येन सर्वथा प्राप्तेर्दृष्टान्तः। एवं मदन्ती हृष्यन्ती मरुत्सेनास्मत्। अस्मानित्यर्थः। एति। आगच्छति। हे मरुतो वो युष्माकममो बलं गण ऋक्षो न अग्निरिव शिमीवान् कर्मवान् दुध्रो दुर्धरो गौरिव भीमयुर्भीमैर्वृषभेयुक्तो गौरिव। स यथा शिमीवान् कर्मवान् ॥३॥

अथ चतुर्थी। ये मरुत ओजसा स्वीयेन बलेन निरिणन्ति हिंसन्ति शत्रून्वृथानायासेन स्वसञ्चारमात्रेण गावो न दुर्धुरो दुःखेन हिंस्या अश्वा इव। ते मरुतः स्वर्यं शब्दयन्तमश्मानं व्यापं पर्वतं जगत्पूरकोदकवन्तम्। पर्ववान् पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वेति निरुक्तम् (नि० १-२०)। तादृशं गिरिं मेघम्। यद्वा पर्वतमिति विशेष्यं गिरिमिति विशेषणम्। निगिरत्युदकमिति गिरिः। तं यामभिर्गमनैः प्रच्यावयन्त्युदकनिर्गमनार्थम् ॥४॥

अथ पञ्चमी। हे मरुतो यूयमुत्तिष्ठ। उत्तिष्ठत। व्यत्ययेनैकवचनम्। नूनं निश्चयमेषां स्तोमैः स्तोत्रैः समुक्षितानां वर्धितानां मरुताम्। यद्वा स्तोमैरुपह्वय इति सम्बन्धः। तादृशां मरुतां पुरुतमं प्रभूततममपूर्व्यम्। न विद्यते पूर्वो येभ्यस्तेऽपूर्वास्तेषां सम्बन्धी यस्तमपूर्व्यं सर्गं सृष्टं गवामुदकानां प्रसिद्धानां गवां वा सर्गं सृष्टमिव ह्वये। आह्वये ॥५॥

अथ षष्ठी। हे मरुतो यूयं रथे युष्मदीये सर्वेषां साधारणभूतेऽरुषीरारोचमाना वडवा युङ्ध्वम्। योजयध्वम्। तथा रथेषु युष्मदीयेषु रोहितो रोहितवर्णा युङ्ग्ध्वम्। हरी अश्वावजिराऽजिरावाशुगमनौ धुरि वोळ्हवे वहनाय युङ्ग्ध्वम्। आदरार्थं पुनर्वचनम्। वहिष्ठा वोढृतमावश्वौ धुरि वोळ्हवे ॥६॥

अथ सप्तमी। उतापि च स्यः स वाजी वेजनवानरुष आरोचमानस्तुविष्वणिः प्रभूतध्वनिरश्वः। अरुष इत्यनेन रोहित इत्युक्तं भवति। प्रष्टिर्वहति रोहितः। (ऋ० सं० १-३९-६) इति ह्युक्तम्। इहेदानीं दर्शतो दर्शनीयः सन् धायि। रथे नियोजितः। स्मेति पूरणः। हे मरुतो वो यामेषु गमनेषु सोऽश्वश्चिरं विलम्बं मा करत्। मा करोतु। तं रथेषु। रथे युक्तमिति शेषः। प्रचोदत। प्रेरयत। यथा विलम्बं न कुर्यात्तथा प्रेरयत ॥७॥

अथाष्टमी। वयमात्रेया रथं रंहणस्वभावं मारुतं मरुतां सम्बन्धिनं रथं श्रवस्युमन्नेच्छुं नु अथाहुवामहे। आह्वयामः। यस्मिन्रथे सुरणानि सुरमणानि जलानि बिभ्रती धारयन्ती

रोदसी रुद्रस्य पत्नी मरुतां माता यद्वा रुद्रो वायुः। तत्पत्नी माध्यमिकादिवी मरुत्सु सचा सहिता तस्थौ। अवस्थितवती तं रथमाहुवे ॥८॥

अथ नवमी। हे मरुतो वः शर्धं युष्मदीयं बलं गणं रथेशुभं रथे शोभनं त्वेषं दीप्तं पनस्युं स्तुत्यमाहुवे। आह्वये। यस्मिन्छर्धे सुजाता सुष्ठु प्रवृद्धा सुभगा शोभनभाग्यातिमहती मीळ्हुषी। मीढुष्टमशिवतमेत्यादौ दर्शनान्मीढ्वान्रुद्रः। तत्पत्नी मीळ्हुषी। मरुत्सु सचा सह महीयते पूज्यते। तं शर्धमाहुवे। आपस्तम्बोऽपि रुद्रपत्नीं मीळ्हुषीशब्देन व्यवजहार। उत्तरया दक्षिणस्या-मीशानमाह्वयति लौकिक्या वाचोत्तरस्यां मीळ्हुषीं मध्ये जयन्तमिति ( आप० गृ० २०-१-२ )॥९॥

॥ २८ ॥

५·८०

द्युतद्यामानमिति षड्चमष्टमं सूक्तम्। तत्रानुक्रमणिका। द्युतद्यामानं षडिति। सत्यश्रवा ऋषिः। अनुक्तत्वात्त्रिष्टुप्। उषस्यन्त्वित्युक्तत्वादुषा देवता। प्रातरनुवाक उषस्ये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चेदं सूक्तम्। सूत्रितं च ( आ० श्रौ० ४-१४ ) द्युतद्यामानमुषो वाजेन इति।

तत्र प्रथमा। द्युतद्यामानं दीप्तरथां बृहतीं महतीमृतेन सत्येन यज्ञेन वर्तावरीमृतवतीमरुणप्सु-मरुणरूपां विभातीं व्युच्छन्तीं देवीं द्योतमानामुषसं स्वरावहन्तीं सूर्यं गच्छन्तीम्। एवं महानुभावामुषसं विप्रासो मेधाविन ऋत्विजो मतिभिः स्तुतिभिः प्रतिजरन्ते। स्तुवन्ति ॥१॥

अथ द्वितीया। दर्शता दर्शनीयैषोषा बोधयन्ती। कम्। जनम्। प्रसुप्तमित्यर्थः। पथः सुगान् सुगमनान् कृण्वती कुर्वत्यग्रे सूर्यस्य पुरस्तायाति। गच्छति। कीदृश्युषाः। बृहद्रथा प्रभूतरथा बृहती महती विश्वमिन्वा विश्वं व्याप्नुवाना विश्वतर्पणा वा। ईदृग्युषा अह्नामग्रे ज्योतिस्तेजो यच्छति। ददाति ॥२॥

अथ तृतीया। एषोषा अरुणेभिररुणवर्णैर्गोभिर्बलीवर्दै रथं युञ्जाना योजयन्त्यक्षेधन्त्य-शुष्यन्त्यक्षीणा वा। किम्। रयिं धनमप्राव्यप्रगन्तृ अविचलितं चक्रे। करोति। किं कुर्वती पथो मार्गान् रदन्ती प्रकाशयन्ती। किमर्थम्। सुविताय सुष्ठु गमनाय देवी द्योतमाना पुरुष्टुता बहुभिः स्तुता विश्ववारा सर्ववरणीया विभाति। प्रकाशं करोति ॥३॥

अथ चतुर्थी। एषोषा व्येनी भवति विशेषेण श्वेता भवति द्विबर्हा द्वयोः प्रथममध्यमयोः परिवृढोषाः पश्चात्तन्वं स्वीयां तनूमाविष्कृण्वाना प्रकटीकुर्वती। कुत्र। पुरस्तात्। पूर्वस्यां दिशि। किञ्च ऋतस्यादित्यस्य पन्थां पन्थानं साधु सम्यगन्वेति। किञ्च प्रजानतीव विश्वं प्रज्ञापयन्तीव। इवेति संप्रत्यर्थे। न दिशो मिनाति। न हिनस्ति। प्रत्युत दिशः प्रकाशयति। अथवा प्रजानतीवानुगन्तव्यमिति प्रकर्षेणावगच्छन्ती ऋतस्य पन्थामन्वेति ॥४॥

अथ पञ्चमी। एषोषाः शुभ्रा न शुभ्रवर्णा निर्मला स्वलङ्कृता योषिदिव तन्वोऽङ्गानि विदाना प्रज्ञापयन्ती स्नाती स्नानं कुर्वाणोर्ध्ववोस्थता स्नानादुत्तिष्ठन्तीव नोऽस्मदर्थमस्माकं पुरतो वा दृशये सर्वेषां दर्शनायोदस्थात्। पूर्वस्यां दिश्युत्तिष्ठति। किं कुर्वती द्वेषो द्वेष्याणि तमां-स्यपबाधमाना दिवो दुहिता ज्योतिषा तेजसा सहागात्। आगच्छति ॥५॥

अथ षष्ठी। एषोषाः प्रतीच्यभिमुखा सती दिवो दुहिता नॄन्सर्वान्प्राणिनः प्रति भद्रा योषेव कल्याणवेषा योषिदिवाप्सो रूपं निरिणीते। प्रेरयति। किञ्च दाशुषे हविर्दात्रे यजमानाय वार्याणि वरणीयानि धनानि व्यूर्णवती प्रयच्छन्ती युवतिर्नित्ययौवना सर्वत्र मिश्रयन्ती वा पुनरथापि पूर्वथा पूर्वमिव ज्योतिस्तेजोऽकः। करोति ॥५॥

॥ २९ ॥

६·५६

य एनमिति षडृचं सप्तमं सूक्तं भरद्वाजस्यार्षं पौष्णम्। अन्त्यानुष्टुबादौ पञ्च गायत्र्यः। तथाचानुक्रान्तम्। य एनमन्त्यानुष्टुबिति। गतो विनियोगः।

तत्र प्रथमा। यः स्तोतैनं पूषणं पोषकं करम्भात्करम्भाणां घृतमिश्राणां यवसक्तूनामत्त्येत्यादिदेशति अभिष्टौति तेन पुरुषेणान्यो देवो नादिशे। आदेष्टव्यः स्तोतव्यो न भवति। पूष्णा एव सर्वस्याभिमतस्य धनस्य लाभाद्देवतान्तरं न स्तौतीत्यर्थः ॥१॥

अथ द्वितीया। उत घापि च स यः शत्रूणां हन्तृत्वेन प्रसिद्धस्ताद्दृशो रथीतमोऽतिशयेन रथी महारथः सत्पतिः सतां पालयितैवंगुण इन्द्रः सख्या मित्रभूतेन पूष्णा युजा सहायभूतेन युक्तः सन् वृत्राणि शत्रून् जिघ्नते। हन्ति। इन्द्रस्याप्ययमेव साहाय्यकारीत्यर्थः ॥२॥

अथ तृतीया। उतापि च सूरः प्रेरको रथीतमोऽतिशयेन रथी नेतृतमो वा पूषा परुषे परुष्मति पर्ववति भास्वति वा गवि। गच्छतीति गौरादित्यः। तस्मिन् हिरण्ययं हिरण्मयं सुवर्णनिर्मितमदस्तद्रथस्य चक्रं न्यैरयत्। नितरां प्रेरयति स्म ॥३॥

अथ चतुर्थी। हे पुरुष्टुत बहुभिर्यजमानैः स्तुत दस्र दर्शनीय मन्तुमो ज्ञानवन् पूषन् अद्येदानीं यदुद्दिश्य त्वां प्रब्रवाम स्तवाम नोऽस्माकं मन्म मननीयं तद्धनं साधय। उत्पादय ॥४॥

अथ पञ्चमी। हे पूषन् नोऽस्माकं सातये लाभायेमं च गणं मनुष्यसङ्घं गवेषणं गवामेषयितारं सीषधः। साधय। हे पूषन् आराद्दूरदेशेऽपि त्वं श्रुतो विश्रुतः प्रख्यातोऽसि। भवसि ॥५॥

अथ षष्ठी। हे पूषन् ते त्वदीयां त्वया देयां स्वस्ति कल्याणीं रक्षामारे अघाम्। आरे दूरेऽघं पापं यस्यास्तादृशीम्। उपावसुमुपगतधनाम्। ईदृशीं स्वस्तिमद्य चास्मिश्च काले सर्वतातये। सर्वेभ्यस्त्विविभक्तायत इति सर्वतातिर्यज्ञः। तदर्थम्। यद्वा सर्वेषां भोगानां विस्ताराय। श्वश्च परस्मिन्नपि दिने सर्वतातये सर्वतात्यर्थमीमहे। अभियाचामहे ॥६॥

॥ ३० ॥

६·६१

इयमददादिति चतुर्दशर्चं द्वादशं सूक्तं भरद्वाजस्यार्षं सरस्वतीदेवताकम्। आदितस्तिस्रो जगत्यस्त्रयोदश्यपि जगती चतुर्दशी त्रिष्टुप् शिष्टा गायत्र्यः। तथा चानुक्रान्तम्। इयं षड्ना सारस्वतं त्रिजगत्याद्यि जगती त्रिष्टुबन्त्यमिति। अत्र शौनकः। इयमित्येतदाद्यं तु सूक्तं सारस्वतं जपेत्। द्विजः प्रातः शुचिर्भूत्वा वाग्मी भवति बुद्धिमान्॥ (ऋ० वि० २-२३)

इति। पार्ष्ठिके षष्ठेऽहनि प्रउग इयमददादिति सारस्वतस्तृचः। सूत्रितं च (आ० श्रौ० ८-१) इयमददाद्रभसमृणच्युतमिति प्रउगम् इति।

तत्र प्रथमा। इयं सरस्वती रभसं वेगवन्तमृणच्युतं वैदिकस्य देवर्षिपितृसम्बन्धिनो लौकिकस्य च ऋणस्य च्यावयितारं दिवोदासमेतत्सञ्ज्ञं पुत्रं दाशुषे हवींषि दत्तवते वध्र्यश्वायेत-त्सञ्ज्ञकाय ऋषयेऽददात्। दत्तवती। या सरस्वती शश्वन्तं बहुलं पणिं पणनशीलं वणिज-मदातृजनमवसं केवलं स्वात्मन एव तर्पकमाचखाद आजखाद। सेयमददादित्यन्वयः। अथ प्रत्यक्षीकृत्य स्तौति हे सरस्वति देवि ता तानि पुत्रदानादीनि ते त्वदीयानि दात्राणि दानानि तविषा तविषाणि महान्ति भवन्ति ॥१॥

अथ द्वितीया। सरस्वती देवतारूपेण नदीरूपेण च वर्तते। देवतारूपा स्तुता। अधुना-नया नदीरूपां स्तौति। इयं नदीरूपा सरस्वती शुष्मैः शोषकैरात्मीयैर्बलैस्तविषेभिर्महद्भिरूर्मि-भिस्तरङ्गैर्गिरीणां पर्वतानां तीरसम्बद्धानां सानु सानून्यरुजत्। भनक्ति। बिसखाइव। बिसं खनतीति बिसखाः। स यथा बिसार्थं पङ्कं रुजति तद्वत्। तां सरस्वतीं पारावतघ्नीं परावति दूर-देशे विद्यमानस्यापि वृत्रादेर्हन्त्रीं सुवृक्तिभिः स्तुतिभिर्धीतिभिः कर्मभिश्चावसे रक्षणार्थमाविवासेम। परिचरेम। यद्वा पारावतघ्नीं पारावारे पारावाची तीरे तयोर्घातिनीम्। उक्तं च (नि०-२-२४) पारावतघ्नीं पारावारघातिनीम् इति ॥२॥

अथ तृतीया। हे सरस्वति देवनिदो देवानां निन्दकानसुरान्निबर्हय। न्यबर्हयः। अवधीः। तथा विश्वस्य व्याप्तस्य मायिनो मायाविनो बृसयस्य। बृसय इति त्वष्टुर्नामधेयम्। त्वष्टुः प्रजां पुत्रं वृत्रासुरं च न्यवधीः। त्वत्साहाय्यादेवेन्द्रो हतवानित्यर्थः। उतापि च हे वाजिनीवति अन्न-वति सरस्वति त्वं क्षितिभ्यो मनुष्येभ्यो विषमुदकञ्चास्रवः। अक्षारयः। यद्वा क्षितयो-ऽसुरजनाः। तेभ्यः सकाशादवनीर्भूमीरविन्दः। लब्धवत्यसि। तादृश्येतेभ्यश्चासुरेभ्यो विषं मृतिहेतुभूतं गरलमस्रवः ॥३॥

अथ चतुर्थी। देवी दानादिगुणयुक्ता वाजिनीवती। वाजोऽन्नं यस्यां क्रियायां सा वाजिनी। तद्युक्ता। धीनां ध्यातॄणां स्तोतॄणामवित्री रक्षित्री। एवंभूता सरस्वती वाजेभिरन्नैर्नोऽस्मान् प्रावतु। प्रकर्षेण तर्पयतु ॥४॥

अथ पञ्चमी। हे देवि सरस्वति यः स्तोता वृत्रतूर्ये संग्रामे धने हिते निहिते निमित्तभूते सतीन्द्रं न इन्द्रमिव त्वामुपब्रूते स्तौति तं रक्षेति शेषः ॥५॥

अथ षष्ठी। हे देवि दानादिगुणयुक्ते हे वाजिनि। वाजोऽन्नं बलं वा। तद्युक्ते। हे सरस्वति त्वं वाजेषु संग्रामेष्वव। अस्मान्रक्ष। अपि च नोऽस्मभ्यं पूषेव पोषको देव इव सनि सम्भजनीयं धनं रद। विलिख। प्रयच्छेति यावत् ॥६॥

अथ सप्तमी। उतापि च स्या सा प्रसिद्धा सरस्वती घोरा शत्रूणां भयकारिणी हिरण्य-वर्तनिः। वर्ततेऽनेनेति वर्तनी रथः। हिरण्मयो वर्तनिर्यस्याः सा तथोक्ता। वृत्रघ्नी वृत्राणां शत्रूणां हन्त्री। एवंभूता सा सरस्वती नोऽस्मदीयां सुष्टुतिं शोभनां स्तुतिं वष्टि। कामयताम् ॥७॥

अथाष्टमी। यस्याः सरस्वत्या अमो बलमनन्तोऽपर्यन्तोऽपरिमितोऽह्रुतोऽहिंसितोऽकुटिलो

वा त्वेषो दीप्तिश्चरिष्णुश्चरणशीलः। सर्वत्राप्रतिहतगतिरित्यर्थः। अर्णव उदकवान्। उदकप्रद इत्यर्थः। एवंभूतः सन् रोरुवत् भृशं शब्दं कुर्वन् चरति वर्तते। सा नो विश्वा इत्युत्तरत्र सम्बन्धः ॥८॥

अथ नवमी। सरस्वती नोऽस्मान्विश्वाः सर्वा द्विषो द्वेष्टीः प्रजा अतिनयतु। अतितारयतु। तथा स्वसॄः स्वयं सारिणीः सहोत्पन्ना वा ऋतावरीः। ऋतमित्युदकनाम। तद्युक्ता अन्याश्च नदीरस्मानतिनयतु। यद्वा जस्येव वा छन्दसि ( पा० ६-१-१०६ ) इति पूर्वसवर्णदीर्घः। उदकवत्यः स्वसारो भगिन्योऽन्या गङ्गाद्या नद्यश्चास्मान् शत्रूनति नयन्तु। तत्र दृष्टान्तः। सूर्यः सर्वस्य प्रेरक आदित्योऽस्तन् सततं गच्छन्नहेवाहानीव। यथाहानि शीघ्रमतिनयति तद्वत् ॥९॥

दशरात्रे तृतीयेऽहनि प्रउग उत नः प्रियेति सारस्वतस्तृचः। सूत्रितं च ( आ० श्रौ० ७-१० ) उत नः प्रिया प्रियास्वित्यौष्णिहं प्रउगम् इति। पवित्रेष्ट्यामुत नः प्रियेति सारस्वतस्य हविषोऽनुवाक्या। सूत्रितञ्च ( आ० श्रौ० २-१२ ) उत नः प्रिया प्रियास्विमा जुह्वाना युष्मदा नमोभिः इति।

दशमी। उतापि च नोऽस्माकं प्रियासु प्रियाणां मध्ये प्रिया प्रियतमा सप्तस्वसा। गायत्र्यादीनि सप्तच्छन्दांसि स्वसारो यस्यास्तादृशी। नदीरूपायास्तु सप्त गङ्गाद्या नद्यः स्वसारः। सुजुष्टा सुष्ठु पुरातनैर्ऋषिभिः सेविता। एवंभूता सरस्वती देवी स्तोम्या भूत्। स्तोतव्या भवतु ॥१०॥

अथैकादशी। पार्थिवानि पृथिव्याः सम्बन्धीन्युरूणि विस्तीर्णानि रजो रजांसि लोकानन्तरिक्षमन्तरा ज्ञान्तं नभश्चापप्रुषी स्वतेजसा पूरितवती सरस्वती देवी निदो निन्दकाच्छत्रोः पातु। अस्मान्रक्षतु ॥११॥

अथ द्वादशी। त्रिषधस्था त्रिषु लोकेषु सहावतिष्ठमाना त्रिलोकव्यापिनी। सप्तधातुः। सप्त धातवोऽवयवा गायत्र्याद्या गङ्गाद्या वा यस्याः सा तथोक्ता। पञ्च जाता जातानि निषादपञ्चमांश्चतुरो वर्णान्गन्धर्वादीन् वा वर्धयन्त्यभिवृद्धान्कुर्वती। ईदृशी सरस्वती वाजेवाजे युद्धे युद्धे सर्वेषु युद्धेषु हव्या भूत्। ह्वातव्या भवति ॥१२॥

अथ त्रयोदशी। महिम्ना माहात्म्येन महिना महती द्युम्नेभिर्द्युम्नैर्द्योतमानैर्यशोभिरन्नैर्वा युक्ता सत्यास्वासां नदीनां देवतानां मध्ये या सरस्वती प्रचेकिते। प्रकर्षेण ज्ञायते। या चान्या अन्यासाम्। सुपां सुलुक्० ( पा० ७-१-३९ ) इति षष्ठीबहुवचनस्य जस्। अपसां वेगवतीनां नदीनां मध्येऽपस्तमा वेगवत्तमा। या च रथ इव विभ्वने विभुत्वाय बृहती परिवृढा गुणैरधिका कृता प्रजापतिना निर्मिता। सा सरस्वती चिकितुषा जानता स्तोत्रोपस्तुत्या। उपस्तोतव्या भवति ॥१३॥

अथ चतुर्दशी। हे सरस्वति नोऽस्मान् वस्यो वसीयः प्रशस्तं वसु धनमभिनेषि अभिप्रापय। मापस्फरीः। अप्रवृद्धान्माकार्षीः। स्फारो वृद्धिः। उपसर्गवशात्तद्विपरीते वर्तते। तथा पयसोदकेनाधिकेन नोऽस्मान्मा धक्। नाभिदह। न बाधस्व। अपि च नोऽस्माकं सख्या सख्यानि सखिकर्माणि वेश्या प्रवेशनानि च जुषस्व सेवस्व। वयं च त्वत्सकाशाद्दरणानि अरमणानि निकृष्टानि क्षेत्राणि मा गन्म मा प्राप्नवाम। अपि तु रमणीयान्येव ॥१४॥

॥ ३१ ॥

६.६४

उदुश्रिय इति षड्चं तृतीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमुषोदेवताकम्। अनुक्रम्यते च उदुश्रिये षळुषस्यन्त्विति। प्रातरनुवाके उषस्ये क्रतौ त्रैष्टुभे छन्दसि आश्विनशस्त्रे चैतदादिके द्वे सूक्ते। सूत्र्यते हि ( आ० श्रौ० ४-१४ ) उदुश्रिय इति सूक्ते इति।

तत्र प्रथमा। रोचमाना दीप्यमाना रुशन्तः शुक्लवर्णाः। रुशदिति वर्णनामेति यास्कः ( नि० २-२० )। उषसः श्रिये जगतः शोभायै जगद्व्याप्तुमपामूर्मयो न उदकसम्बन्धिन-स्तरङ्गा इवोदस्थुः। उत्तिष्ठन्ति। अनन्तरमेकत्रन्निगमः। उषा विश्वा विश्वानि स्थानानि सुपथा सुमार्गाणि सुगानि सुखेन गम्यानि कृणोति। करोति। अपि च मघोनी धनवत्युषाः वस्वी प्रशस्ता दक्षिणा समर्धयित्री चाभूत् ॥१॥

अथ द्वितीया। हे उषो देवि भद्रा कल्याणी ददृक्षे। दृश्यसे। उर्विया विस्तीर्णा च विभासि। ते तव शोचिः शोचिषः। जसो लुक्। दीप्यमाना भानवो रश्मयो द्यामन्तरिक्ष-मुदपप्तन्। उत्पतन्ति। किञ्च हे उषो देवि महोभिस्तेजोभिः शुम्भमाना शोभमाना रोचमाना दीप्यमाना वक्षस्त्वदीयं रूपमाविष्कृणुषे। प्रकटी करोषि ॥२॥

अथ तृतीया। अरुणासो लोहितवर्णा रुशन्तो दीप्यमाना गावो रश्मयः। किरणा गाव इति ( निघ० १-५ ) रश्मिनामसु पाठात्। सुभगामुर्वियोर्वीं विस्तीर्णां प्रथानां प्रथमानां सीमेनामुषो-देवतां वहन्ति। सेयमुषोदेवता शूरोऽस्तेव क्षेप्तेव शत्रून् तमोऽपेजते। अपगमयति। वोळ्हा सेनाया अजिरो न क्षिप्रगामी शत्रून् यथा बाधते तथा तमांसि बाधते च ॥३॥

अथ चतुर्थी। हे उषो देवि पर्वतेषूत दुर्गेष्वप्यवाते गमनसाधनरहिते देशे सुपथा सुपथानि सुमार्गाणि सुगा सुगानि सुखेन गम्यानि ते तव भवन्ति। स्वभानो हे स्वप्रकाशेऽपोऽन्तरिक्षमाकाशम्। आप इत्यन्तरिक्षनामसु ( निघ० २-१ ) पाठात्। सामुद्रीरपो वा तरसि। पृथुयामन् पृथुरथे ऋष्वे दर्शनीये दिवोदुहितरन्तरिक्षसुते हे उषोदेवि सा त्वमिषे इषयध्यै एषणीयं धनं नोऽस्मभ्यमावह ॥४॥

अथ पञ्चमी। हे उषः सा त्वं वरं धनं मह्यमावह। या त्वमवातामप्रतिगता जोषं प्रीतिमनुक्ष-भिरनड्द्भिरश्वैर्वा स्तोतृभ्यो वरं वहसि। किञ्च हे दिवो दुहितरन्तरिक्षसुते या त्वं देवी द्योतमाना पूर्वहूतौ प्रथमाह्वाने प्रातरनुवाके मंहना पूजनीया भवसि। सा त्वं दर्शना दर्शनीया भूरिति योजना। या दर्शता भूरित्यन्वये यच्छब्देन सामानाधिकरण्याद्भूरित्यस्य निघातो न स्यात् ॥५॥

अथ षष्ठी। हे उषो देवि ते तव व्युष्टौ सत्यां वयश्चित्पक्षिणोऽपि वसतेर्निवासस्थानादुदसन्। उत्पतन्ति। ये पितुभाजो हविषां सम्भक्तारोऽन्नस्योपार्जका वा। पितुरित्यन्ननामसु ( निघ० २-७ ) पाठात्। नरश्च तेऽपि चोत्पतन्ति। किञ्च हे उषो देवि त्वममा समीपे सते वर्तमानाय दाशुषे हविषां प्रदात्रे मर्त्याय भूरि प्रभूतं वामं धनं वहसि ॥६॥

॥ ३२ ॥

७.५०

आमां मित्रावरुणेति चतुर्ऋचं सप्तदशं सूक्तं वसिष्ठस्यार्षम्। चतुर्थ्यतिजगती। व्यूहेन शाक्वरी वा। आदितस्तिस्रो जगत्यः। प्रथमा मैत्रावरुणी द्वितीया आग्नेयी तृतीया वैश्वानरी

चतुर्थी गङ्गादिनदीदेवताका। तथाचानुक्रमणिका आमां मैत्रावरुणयाग्नेयी वैश्वदेवी नदीस्तुतिर्जागतमन्त्यातिजगती शक्वरी वा इति। अस्य सूक्तस्य प्रत्यृचं विषादिहरणे विनियोगो लिङ्गादवगन्तव्यः।

तत्र प्रथमा। हे मित्रावरुणा हे मित्रावरुणौ युवामिहास्मल्लोके माम् आरक्षतम्। आभिमुख्येन पालयतम्। कुलाययत्। कुलायं स्थानम्, तत् कुर्वत्। विश्वयत्। विशेषेण वर्द्धमानं विषं नोऽस्माना आभिमुख्येन मा गन् मा गमत्। मा गच्छतु। तथा अजकावम्। अजका नाम रोगविशेषः। तद्वत्। दुर्दृशीकं दुर्दर्शनं विषं तिरोदधे तिरोधत्ताम्। नश्यत्वित्यर्थः। तथा त्सरुश्छद्मगामी जिह्मगः। सर्प इत्यर्थः। मां पद्येन पादभवेन रपसा। रपिः शब्दकर्मा। शब्देन मा विदत् न जानातु ॥१॥

अथ द्वितीया। वन्दनमेतत्सञ्ज्ञकं यद्विषं विजामन् विविधजन्मनि परुषि वृक्षादीनां पर्वणि भुवत् उद्भवेत्। यच्च विषमष्ठीवन्तौ जानुनो कुल्फौ गुल्फौ च परिदेहत्। दिह उपचये। उपचितं कुर्यात्। अग्निर्देवः शोचन् दीप्यमानः सन् इतोऽस्माज्जनात्तद्विषमपबाधताम्। अपहन्तु। शिष्टं व्याख्यातम् ॥२॥

अथ तृतीया। यद्विषं शल्मलौ एतत्सञ्ज्ञके वृक्षे भवति। यद्विषं नदीषु तत्रस्थास्वप्सु प्रादुर्भवति। परीति पञ्चम्यर्थानुवादी। ओषधीभ्यः सकाशाद्यद्विषं जायते उत्पद्यते। विश्वे सर्वे देवास्तद्विषमितोऽस्माज्जनाद्देशाद्वा निःसुवन्तु। निःशेषेण प्रेरयन्तु। मामामिति शिष्टं व्याख्यातम् ॥३॥

अथ चतुर्थी। या नद्यः प्रवतः प्रवणदेशे गच्छन्त्यः। या निवतो निम्नदेशे गच्छन्त्यः। या उद्वत उन्नतदेशे गच्छन्त्यः। या उदन्वतीरुदन्वत्य उदकयुक्ताः। अनुदकाश्चोदकरहिताश्च या नद्यो यान्ति पयसोदकेन पिन्वमाना विश्वमाप्याययन्त्यो देवीर्देव्यो द्योतमानास्तास्ताः सर्वा नद्योऽस्मभ्यमशिपदाः। शिपदं नाम रोगविशेषः। तदकुर्वत्यः सत्यः शिवाः कल्याण्यो भवन्तु। अपि च सर्वास्ता नद्योऽशिमिदाः। शिमिर्वधकर्मा अहिंसाप्रदा भवन्तु ॥४॥

॥ ३३ ॥

७.८९

मो षु वरुणेति पञ्चर्चमेकविंशं सूक्तं वारुणम्। अन्त्या जगती शिष्टाश्चतस्रो गायत्र्यः। तथाचानुक्रान्तम्। मो षु पञ्च गायत्रं जगत्यन्तम् इति। गतो विनियोगः।

तत्र प्रथमा। हे राजन्नीश्वर वरुण त्वदीयं मृन्मयं मृदादिभिर्निर्मितं गृहं मा उ मेवाहं गमं गतोऽस्मि। अपि तु सुशोभनं सुवर्णमयमेव त्वदीयं गृहं प्राप्नवानि। स त्वं मां मृळ। सुखय। हे सुक्षत्र शोभनधन वरुण मृळय। उपदयां च कुरु ॥१॥

अथ द्वितीया। हे अद्रिव आयुधवन् वरुण यद्यदा प्रस्फुरन्निव शैत्येन प्रविचलन्निव त्वद्भयाद्वेपमानो दृतिर्न दृतिरिव ध्मातो वायुना पूर्णः सन् त्वया बद्धोऽहमेमि गच्छामि। तदानीं मृळ सुखय। हे सुक्षत्र सुधन मृळय। उपदयां कुरु ॥२॥

अथ तृतीया। हे समह सधन शुचे स्वभावतो निर्मल वरुण दीनता दीनतया अशक्ततया क्रत्वः कर्मणः कर्तव्यत्वेन विहितस्य श्रौतस्मार्तादिलक्षणस्य प्रतीपं प्रतिकूलमननुष्ठानं जगम प्राप्तवानस्मि। अत एव त्वया बद्धः। तादृशं मां मृळ सुखय। अन्यद्गतम् ॥३॥

अथ चतुर्थी। अपां सामुद्राणामुदकानां मध्ये तस्थिवांसं स्थितवन्तमपि जरितारं तव स्तोतारं मां तृष्णा पिपासा विदत्। आप्तवती। लवणोत्कटस्य सामुद्रजलस्य पानानर्हत्वात्। अतस्तादृशं मां मृळ सुखय। अन्यद्गतम् ॥४॥

देवसुवां हविःषु वारुणस्य हविषो यत्किञ्चेदम् इति याज्या। सूत्रितं च यत्किञ्चेदं वरुण दैव्ये जन उप ते स्तोमान्पशुपाइवाकरमिति द्वे ( आ० श्रौ० ४·११) इति।

सैषात्र पञ्चमी। हे वरुण दैव्ये देवसमूहरूपे जने यदिदं किञ्चनाभिद्रोहमपकारजातं मनुष्या वयं चरामसि चरामो निर्वर्तयामः। तथा अचित्ती अचित्त्याऽज्ञानेन तव त्वदीयं यद्धर्म धारकं कर्म युयोपिम वयं विमोहितवन्तः। हे देव तस्मादेनसः पापान्नोऽस्मान्मा रीरिषो मा हिंसीः ॥५॥

॥ ३४ ॥

८·६०

सप्तमेऽनुवाके दश सूक्तानि। तत्र अग्न आयाहीति विंशत्यृचं प्रथमं सूक्तं प्रगाथपुत्रस्य भर्गस्यार्षमाग्नेयम्। प्रथमातृतीयाद्ययुजो बृहत्यो द्वितीयाचतुर्थ्यादियुजः सतोबृहत्यः। तथा चानुक्रान्तम्—अग्न आ विंशतिर्भर्गः प्रागाथ आग्नेयं प्रागाथं तु इति। प्रातरनुवाके आग्नेये क्रतौ बार्हते छन्दसि आश्विनशस्त्रे चेदं सूक्तम्। तथाच सूत्रितम् ( आ० श्रौ० ४-१३ ) अयमग्निरग्न आयाहि इति।

तत्र प्रथमा। हे अग्ने अग्निभिर्यष्टव्यैः सहायाहि। आगच्छ। तदर्थं होतारं देवानामाह्वातारं त्वा त्वां वृणीमहे। त्वा त्वामागतं प्रयताध्वर्युहस्ताभ्यां नियता हविष्मती घृतवती यजिष्ठं त्वां बर्हिर्बर्हिष्यासद आसादया सचितोऽनक्तु ॥१॥

अथ द्वितीया। हे सहसः सूनो बलस्य पुत्र। बलेन मथ्यमानत्वात्। हे अङ्गिरोऽङ्गिरसां मध्ये एक। अथवा अङ्गतिर्गतिकर्मा। सर्वत्र सङ्गत त्वा त्वामध्वरे यागेऽच्छाभिमुख्येन स्रुचश्चरन्ति। गच्छन्ति। अत ऊर्जोऽन्नस्य नपातं न पातयितारं रक्षकं बलस्य नप्तारं वा घृतकेशं प्रदीप्तकेतुस्थानीयज्वालं पूर्व्यं पुरातनं पूरकं वा अग्निं यज्ञेष्वस्मदीयेषु ईमहे स्तौमि ॥२॥

अथ तृतीया। हे अग्ने कविर्मेधावी त्वं वेधा विधातासि फलानाम्। हे पावक होता देवानामाह्वाता होमनिष्पादको वा यद्यो यष्टव्योऽसि। हे शुक्र दीप्त मन्द्रो मोदनीयो यजिष्ठो यष्टृतमस्त्वमध्वरेषु यज्ञेषु विप्रेभिर्मेधाविभिर्ऋत्विग्भिर्मननीयैः स्तोत्रैरीड्यः स्तुत्योऽसि ॥३॥

अथ चतुर्थी। अद्रोघमद्रोग्धारं मां प्रति हे यविष्ठ्य युवतम अजस्र नित्य आवह आनय। कान्। उशतोऽस्मदर्थं कामयमानान्देवान्। किमर्थम्। वीतये हविर्भक्षणाय। हे वसो वासकाग्ने सुधिता सुनिहितानि प्रयांस्यन्नानि अभिगाहि अभिगच्छ। आगत्य च धीतिभिः स्तुतिभिर्हितो निहितः सन् मन्दस्व। यद्वा धीतिभिर्मन्दस्वेति सम्बन्धः ॥४॥

अथ पञ्चमी। हे अग्ने त्राता रक्षक ऋतः सत्यभूतः कविः क्रान्तप्रज्ञस्त्वमित्त्वमेव सप्रथाः सर्वतः पृथुरसि। भवसि। हे समिधान समिध्यमान हे दीदिवो दीप्त त्वां विप्रासो विप्रा मेधाविनो वेधसो विधातारः स्तोतारो विवासन्ति परिचरन्ति ॥५॥

अथ षष्ठी। हे शोचिष्ठातिशयेन शोचयितरग्ने शोच। दीप्यस्व। दिदीहि दीपयास्मान्। विशे प्रजायै स्तोत्रे मयः सुखं रास्व देहि। त्वं महानसि। देवानां सम्बन्धिनि शर्मन् शर्मणि सुखे मम सूरयः स्तोतारो मेधाविनोऽस्माकं पुत्रादयो वा सन्तु भवन्तु। शत्रूषाहः शत्रूणामभिभवितारः स्वग्नयः शोभनाग्नयश्च सन्तु ॥६॥

अथ सप्तमी। हे अग्ने क्षमि क्षमायां वर्तमानं वृद्धमतसं शुष्कं काष्ठं यथा येन प्रकारेण सञ्जूर्वसि। जूर्वतिर्हिंसाकर्मा। सम्यग्दहसीत्यर्थः। एवेवं दह हे मित्रमहो मित्राणामस्माकं पूजक पूज्यं तेजो वा यस्य तादृश। कम्। योऽस्मध्रुगस्माकं द्रोग्धा कश्च कश्चिद् दुर्मन्मा दुर्मतिर्वनति कामयतेऽस्मान्द्रोग्धुम्। तं दहेति ॥७॥

अथाष्टमी। नोऽस्मान्मर्ताय मरणधर्माय रिपवे शत्रवे हिंसित्रे रक्षस्विने बलवते मा रीरधः। वशं मा नय। तथाघशंसाय पापशंसकाय मा रीरधः। हे यविष्ठ्य युवतम अस्रेधद्भिरहिंसकैस्तरणिभिस्तारकैः शिवेभिः सुखकरैः पायुभिः पालनैर्नोऽस्मान्पाहि रक्ष ॥८॥

अथ नवमी। हे अग्ने नोऽस्मानेकया ऋचा गिरा पाहि रक्ष। उतापि च। द्वितीयया ऋचा पाहि पालय। पाहि तिसृभिर्गीर्भिरूर्जांमन्नानां बलानां वा पते स्वामिन्। तथा पाहि चतसृभिर्गीर्भिर्हे वसो वासकाग्ने ॥९॥

अथ दशमी। हे अग्ने विश्वस्मात्सर्वस्माद्रक्षसोऽराव्णोऽदातुः सकाशात् पाहि रक्षास्मान्। वाजेषु सङ्ग्रामेषु नोऽस्मान् प्राव प्रकर्षेण रक्ष। स्मेति पूरणः। हि यस्मान्नेदिष्ठमासन्नमापि बन्धुभूतं त्वामित्त्वामेव देवतातये यज्ञाय यज्ञसिद्ध्यर्थं वृधे वर्धनाय नक्षामहे व्याप्नुमः। नक्षतिर्व्याप्तिकर्मा ॥१०॥

अथैकादशी। हे अग्ने पावक शोधक वयोवृधमन्नस्य वर्धकं शंस्यं रयिं धनं नोऽस्मभ्यम्। आहरेति शेषः। आहृत्य च हे उपमाते। उपास्मत्समीपे माति नो धनमित्युपमातिः। हे तादृशाग्ने नोऽस्मभ्यं सुनीती सुनीत्या शोभननयनेन पुरुस्पृहं बहुभिः स्पृहणीयं स्वयशस्तरमत्यन्तं स्वभूतकीर्ति धनं रास्व च देहि ॥११॥

अथ द्वादशी। येन धनेन पृतनमासु संग्रामेषु शर्धतो वेगं कुर्वतोऽर्योऽरीन् शत्रूनादिश आदेष्टॄन् शस्त्रप्रक्षेप्तॄन् तरन्तो वंसाम हिंसाम तद्धनं देहि। हे शचीवसो प्रज्ञया वासयितः। शचिः कर्म धनं वा। स प्रसिद्धस्त्वं नोऽस्मान् वर्ध वर्धय प्रीणय प्रयसाऽन्नेन। त्वं वा वर्ध अस्मदीयेन प्रयसा हविषा। वसुविदो वसूनां लम्भकानि धियः कर्माण्यस्मदीयानि जिन्व प्रीणय ॥१२॥

अथ त्रयोदशी। अयमग्निः शृङ्गे शिशानस्तीक्ष्णीकुर्वन् वृषभो यथा दविध्वत् कम्पयति शिरः एवं शृङ्गस्थानीया ज्वालाः शिशानस्तीक्ष्णी कुर्वन् दविध्वत् कम्पयति शिरः। अस्याग्नेर्हनवो न हनव इव हनुस्थानीया ज्वालास्तिग्मा न प्रतिधृषे प्रतिधर्षितुमशक्याः। योऽग्निः सुजम्भः सुदंष्ट्रः सहसो यहुः सहसः पुत्रोऽस्य हनव इत्यर्थः ॥१३॥

अथ चतुर्दशी। हे वृषभ वर्षक ते तव जम्भासो जम्भा दन्तस्थानीया ज्वाला नहि प्रतिधृषे

प्रतिधर्षितुं न शक्याः। अथास्माद्वितिष्ठसे विविधं गच्छसि। प्रवर्धस इत्यर्थः। हे होतर्होमनिष्पादक स त्वं हविरस्मद्दत्तं सुहुतं कृधि कुरु। नोऽस्मभ्यं वार्या वरणीयानि पुरु बहूनि वस्व देहि ॥१४॥

अथ पञ्चदशी। हे अग्ने वनेषु वर्तमानयोर्मात्रोररण्योः शेषे स्वपिषि वर्तसे। त्वा त्वां तथाभूतं मर्तासो मनुष्या अध्वर्य्वादयो मथनेनोत्पाद्य समिन्धते। पश्चात्प्रबुद्धस्त्वमतन्द्रोऽनलसः सन् हविष्कृतो यजमानस्य हव्या हवींषि वहसि देवान्प्रति। आदित् अनन्तरमेव देवेषु मध्ये राजसि दीप्यसे ॥१५॥

अथ षोडशी। हे अग्ने तमित् तमेव त्वा त्वाम् सप्त होतारो होत्रका ईळते स्तुवन्ति। कीदृशं त्वाम्। सुत्यजं सुत्यागम्। अभिमतधनप्रदमित्यर्थः। अह्रयमक्षीणं प्रवृद्धम्। किञ्च अद्रिं मेघं तपसा तापकेन शोचिषा तेजसा। तपसा शोचिषा चेति वा योज्यम्। विभिनत्सि। हे अग्ने जनानस्मानतीत्य प्रतिष्ठ प्रगच्छ हविरादाय देवान्प्रति। अथवाऽस्मद्विरोधिजनानतिक्रम्य प्रतिष्ठ ॥१६॥

अथ सप्तदशी। अग्निमग्निम्। वीप्सादरार्था। अग्निमेव हे यजमाना वो युष्मदर्थमाहुवे आह्वयामः। अथवा हे देवा वो युष्मदर्थमिति वा व्याख्येयम्। कीदृशा वयम्। वृक्तबर्हिषश्छिन्नदर्भाः। कीदृशमग्निम्। अध्रिगुमधृतकर्माणं सर्वदा गृहे वर्तमानमग्निं हितप्रयसो निहितहविष्का वयमाहुवेमेति शेषः। कीदृशमग्निम्। शश्वतीषु बह्वीषु भूमिषु वर्तमानं होतारं होमनिष्पादकम्। किमर्थम्। चर्षणीनां मनुष्याणामर्थाय। अग्नौ तृप्ते सति वृष्टिलाभात्प्राणयुपकारसिद्धं प्राणयर्थत्वम्। अथवा मनुष्याणां यजमानानां होतारं होमसाधकम् ॥१७॥

अथाष्टादशी। हे अग्ने तुभ्यं चिकित्वना चिकितुषा जनेन होत्रादिना सह यजमानः केतेन प्रज्ञापकेन स्तोत्रेण। यजत इति शेषः। कुत्रेति तदुच्यते। सुषामणि शोभनरथन्तरादिसामोपेते शर्मन् शर्मणि सुखसाधने यज्ञे। अतो हे अग्ने इषण्ययेच्छया स्वीयया नोऽस्मभ्यं पुरुरूपं नानारूपं नेदिष्ठमन्तिके सर्वदा वर्तमानं वाजमन्नमूतये रक्षणाया भर आहर ॥१८॥

अथैकोनविंशी। हे अग्ने देव जरितः स्तोतः। स्त्येत्यर्थः। विश्पतिः प्रजानां पालको रक्षसो राक्षसानां तेपानः सन्तापकोऽसि। अप्रोषिवान् यजमानगृहमत्यजन्। तदेवाह गृहपतिर्यजमानगृहस्य पालकश्च त्वं महानतिशयेन पूज्योऽसि। दिवो द्युलोकस्य पायुः पाता दुरोणयुर्यजमानगृहस्य मिश्रयिता। सर्वदा वर्तमान इत्यर्थः। तादृशस्त्वं महानसीत्यन्वयः ॥१९॥

अथ विंशी। हे आघृणीवसो दीप्तधनाग्ने नोऽस्मान् रक्षो राक्षसादिः। रक्षो रक्षितव्यमस्माद् ( नि० ४·१७ ) इति यास्कः। मा वेशीत् सर्वतो न प्रविशतु। तथा यातुमावताम्। यातुर्यातना पीडा। तद्वतां यातुधानानां यातुः पीडा मा वेशीत्। हे अग्ने अनिराम्। इराक्षम्। अन्नाभावं दारिद्र्यं क्षुधं क्षपयितारं रक्षस्विनो बलवन्ति रक्षांसि च परोगव्यूति क्रोशद्वयादेशात्परस्तात्। एतदुपलक्षणम्। अत्यन्तं दूरदेशे। अपसेध परिहर। अनिरा क्षुद्र बाधानि रक्षांसि च न पीडयन्त्विति ॥२०॥

॥ ३५ ॥

८.९१

कन्या वारिति सप्तर्चमेकादशं सूक्तम्। अत्रेः पुत्र्यपालाख्या त्वग्दोषपरिहारायानेन सूक्तेनेन्द्रं स्तुतवती। अतः सैवर्षिका। प्रथमाद्वितीये पङ्क्त्यौ। शिष्टाः पञ्चानुष्टुभः। इन्द्रो देवता। तथा चानुक्रान्तम्। कन्या वाः सप्तात्रेय्यपालेति हास ऐन्द्रमानुष्टुभं द्विपङ्क्त्यादि इति। विनियोगो लैङ्गिकः। अत्रेतिहासमाचक्षते। पुरा किलात्रिसुतापाला ब्रह्मवादिनी केनचित्कारणेन त्वग्दोषदुष्टा सत्यत एव दुर्भगेति भर्त्रा परित्यक्ता पितुराश्रमे त्वग्दोषपरिहाराय चिरकालमिन्द्रमधिकृत्य तपस्तेपे। सा कदाचिदिन्द्रस्य सोमः प्रियकरो भवति तमिन्द्राय दास्यामीति बुद्ध्या नदीतीरं प्रत्यागमत्। सा च तत्र स्नात्वा पथि सोममप्यलभत। तमादाय गृहं प्रत्यागच्छन्ती मार्ग एव तं चखाद। तद्भक्षणकाले दन्तघर्षणजातं शब्दं ग्राव्णां सोमाभिषवध्वनिमिति मत्वा तदानीमेवेन्द्रः समागमत्। आगत्य तामुवाच। किमत्र ग्रावाणोऽभिषुण्वन्तीति। सा प्रत्यूचे। अत्र कन्या स्नानार्थमागत्य सोमं दृष्ट्वा तं भक्षयति तद्भक्षणजो ध्वनिरेव न तु ग्राव्णां सोमाभिषवध्वनिरिति। तथा प्रत्युक्त इन्द्रः पराङावर्तत। गच्छन्तमिन्द्रं सा पुनरब्रवीत्। किमर्थं निवर्तसे, त्वं तु सोमपानाय गृहं गृहं प्रति गच्छसि, इदानीमत्रापि मम दंष्ट्राभ्यामभिषुतं सोमं पिब, धानादींश्च भक्षयेति। सैवेन्द्रमनाद्रियमाणा सती पुनरप्याह। अत्रागतं त्वामिन्द्र इति न जानामि त्वयि गृहमागते बहुमानं करिष्यामीतीन्द्रमुक्त्वात्र समागत इन्द्र एव नान्य इति निश्चित्य स्वास्ये निहितं सोममाह हे सोम त्वमागतायेन्द्राय पूर्वं शनैस्ततः शनकैः क्षिप्रं परिस्रवेति। तत इन्द्रस्तां कामयित्वा तस्या आस्य एव दंष्ट्राभिषुतं सोममपात्। तत इन्द्रेण सोमे पीते सति त्वग्दोषादहं भर्त्रा परित्यक्ता सतीदानीमिन्द्रेण संगतेत्यपालायामुक्तायामिन्द्रस्तां व्याजहार। किं कामयसे तदहं करिष्यामीत्युक्ते सा वरमचीकमत। मम पितुः शिरो रोमवर्जितं तस्योर्वरं क्षेत्रं फलादिरहितं मम गुह्यस्थानमप्यरोमशमेतानि रोमफलादियुक्तानि कुरु। इत्युक्तेऽयं तत्पितृशिरःस्थितं खलतिमपहाय क्षेत्रं च रोमफलादियुक्तं कृत्वैतस्यास्त्वग्दोषपरिहाराय स्वकीयरथच्छिद्रे शकटस्य युगस्य च छिद्रयोरेतां त्रिवारं निश्चकर्ष। तस्याः पूर्वोपहता या त्वक् सा शल्यको द्वितीया गोधा तृतीया कृकलासोऽभूत्। तत इन्द्रस्तामप्यपालां सूर्यसदृशत्वचमकरोदित्यत्रेतिहासिकी कथा। एतच्च शाट्यायनब्राह्मणे स्पष्टमुक्तम्। तद् ब्राह्मणं तत्तदृग्व्याख्यानसमये दर्शयिष्यते। एषोऽर्थः कन्यावारित्यादिष्वृक्षु प्रतिपाद्यते॥

तत्र सूक्ते प्रथमा। वाःशब्दकं प्रत्यवायती स्नानार्थमभ्यवगच्छन्ती कन्याऽपाला नाम स्त्री स्रुता कृतौ मार्गे सोममप्यविदत्। अलभत। विदॢ लाभे। लङि रूपम्। तं सोममस्तं गृहं प्रति भरन्त्या हरन्ती सा सोममब्रवीत् हे सोम त्वा त्वामिन्द्राय सुनवै। मम दन्तैरेवाभिषुणवै। पुनरहं सोम त्वा त्वां शक्राय समर्थायेन्द्राय सुनवै। इदानीमेवाभिषवं करवै। सोमभक्षणकाले दन्तध्वनिं ग्रावध्वनिमिति मत्वेन्द्रस्तामागमत्। एषोऽर्थः शाट्यायनब्राह्मणे स्पष्टमभिहितः। सा तीर्थमभ्यवयन्ती सोमांशुमविन्दत्तं समखादत्तस्यै ह ग्रावाण इव दन्ता ऊदुः। स इन्द्र आद्रवत् ग्रावाणो वै

वदन्तीति। सा तमभिव्याजहार कन्या वारवायती सोमपि स्रुता विदद्दित्यस्यैत इदं प्रावाण इव दन्ता वदन्तीति विदित्वेन्द्रः पराङावर्तत। तमब्रवीदसौ य एषि वीरक इत्यादिनेति ॥१॥

अथ द्वितीया। सा शक्रमब्रवीत्। हे इन्द्र वीरको वीरः समर्थस्त्वं योऽसौ विचाकशत्। काश्ट दीप्तौ। यङ्लुकि शतरि रूपम्। धातोर्ह्रस्वश्छान्दसः। अत्यर्थं दीप्यमानः सन् गृहं गृहं यजमानगृहं प्रति सोमपानाय त्वमेषि। गच्छसि। अतः स त्वमत्रापि जम्भसुतं मम दन्तैरभिषुतमिमं सोमं पिब। कीदृशम्। धानावन्तम्। धाना भ्रष्टयवाः। तद्वन्तम्। करम्भिणं सक्तुमन्तमपूपवन्तं पुरोडाशादिसहितमुक्थिनं स्तोत्रादियुक्तमेतादृशं सोममत्रैव पिबेति। सा सोमेन सह धानादीनावेदयत्स्तोत्रं चाकार्षीदित्यर्थः ॥२॥

अथ तृतीया। पुनरपि सा तमनादृत्याह हे इन्द्र। चनेति निपातसमुदायोऽवधारणार्थे। त्वा त्वामाचिकित्सामः। ज्ञातुमिच्छाम एव। मम गृहमागतं त्वामिन्द्र इति न जानीम एव। इह मार्ग एवागतं त्वा त्वां न्यधीमसि नाधिगच्छामः। अत्रापि चनेत्यवधारणे। इह त्वामिन्द्र इति न जानीम इत्यपाला तमिन्द्रमुक्त्वा स्वास्ये स्थितं सोमं प्रत्याह हे इन्दो क्षरणशील सोम अस्मा आगतायेन्द्राय तदर्थं पूर्वं शनैर्मन्दं ततः शनकैरिव। कुत्सितार्थेऽकच्। कुत्सितं शनैः शनकैः। क्षिप्रमित्यर्थः। क्षिप्रमेव त्वं परिस्रव। मदीयदंष्ट्राभिरभिषूयमाणः सन् परितः क्षरेति। तथा यज्ञेष्वपि ग्रावभिरभिषूयमाणः सोमः प्रथमं शनैः परिस्रवति ततः शनकैः क्षिप्रमिति। तदभिप्रायेणोक्तम्। तत इन्द्र एतद्वाक्यं श्रुत्वा तदानीमेवमभिषुतं सोमं यज्ञस्थानीयादपालामुखादित्वाधासीत्। उक्तोऽर्थः शाट्यायनकब्राह्मणे स्पष्टमभ्यधायि। अनादियमाणैवमब्रवीत् आ चन त्वा चिकित्सामोऽधि चन त्वा नेमसीति। पुरा मां सर्वयर्चापाला स्तौतीत्युपधायावर्तत शनैरिव शनकैरिवेन्द्रायेन्दो परिस्रवेति ह वा अस्यै मुखात्सोमं निरधयत्सोमपीथ इव वा अस्य भवति य एवं विद्वान्स्त्रीमुपजिघ्रति इति ॥३॥

अथ चतुर्थी। सोमं पीतवानिन्द्रोऽस्मानेवं करोत्वित्याह। स इन्द्रः कुविद् बहुवारमस्माञ्छकत् शक्तान् समर्थान्करोतु। किञ्च कुविद् बहुवारममभ्यं करत् करोतु। किञ्च स एवेन्द्रो नोऽस्मान् कुविद्बहुकृत्वो वस्यसो वसीयसोऽतिशयेन वसुमतः करोतु। करोतेः शक्नोतेश्च लेट्यडागमः। इदानीमात्रेय्यहमेवं करिष्यामीति वदति। पूर्वं कुवित् बहुपतिद्विषस्त्वग्दोषात् पतिभिर्भर्तृभिर्बहुवारं द्विष्टा अत एव यतीः पतिभ्यः सकाशादितो गच्छन्त्यो वयं कैश्चिदप्यनूह्यमानाः सत्यः सम्प्रतीन्द्रेण सह सङ्गमामहै। सङ्गच्छामहै। सर्वत्र पूजार्थं बहुवचनम्। संगमशब्देनेन्द्रोऽपालामचकमतेति ॥४॥

अथ पञ्चमी। इन्द्रेण किं कामयसे तद्दास्यामीत्युक्ता सा वरमनया प्रार्थयते हे इन्द्र इमानि त्रीणि विष्टपा विष्टपानि स्थानानि सन्ति। तानि त्रीणि स्थानानि विरोहय। उत्पादय। कानि तानि। ततस्य मम पितू रोमवर्जितं शिरः। खलतिमित्यर्थः। तच्चापगमय। रोमशं कुर्वित्यर्थः। उर्वरा तस्योषरं क्षेत्रं सर्वसस्याढ्यं कुरु। आदनन्तरं मे ममोपोदरे उप उदरस्य समीपे यदिदं स्थानम्। गुह्यमित्यर्थः। तच्च त्वग्दोषे सत्यजातरोमकं तदपि त्वग्दोषपरिहारेण रोमयुक्तं कुरु। एतानि त्रीणि स्थानानि। एषोऽर्थः शाट्यायनकेऽत्र प्रपञ्चितोक्तः। तामब्रवीद-

पाले किं कामयसीति। साब्रवीत् इमानि त्रीणि विष्टपेति। खलतिर्हास्यै पितास तां हाखलतिं चकारोर्वरा हास्यास सा न जज्ञे सो जज्ञे उपस्ये हास्यै रोमाणि नासुस्तान्यु ह जज्ञिर इत्यस्योत्तरा भूयसे निर्वचनायाश्वौ च या न" इति ॥५॥

अथ षष्ठी। उक्तमेवार्थमनया विवृणोति। नोऽस्माकं पितुर्यासौ उर्वरा यदिदमूषरं क्षेत्रमस्ति। आदनन्तरं ममेमां तन्वमिदं त्वग्दोषदुष्टं गुह्यस्थानम्। अथो अथापि च ततस्य तातस्य यच्छिरो रोमवर्जितमस्ति एतानि सर्वा सर्वाणि तानीमानि त्रीणि स्थानानि रोमशा रोमशानि कृधि कुरु ॥६॥

अथ सप्तमी। अनया अपालां सूर्यसदृशप्रभामकरोदित्याह। हे शतक्रतो हे शतसङ्ख्याकप्रज्ञ बहुविधप्रज्ञ वा हे इन्द्र रथस्य स्वकीयस्य खे पृथुतरे छिद्रे तथा अनसः शकटस्य खे तदपेक्षयाल्पे छिद्रे युगस्य खे चाल्पतरे सूक्ष्मे छिद्रे रथशकटयुगानां छिद्रेषु त्वग्दोषपरिहाराय त्रिश्चिवारं निष्कर्षणेन पूत्वी शोधयित्वा ततोऽपालामेतन्नामिकामत्रिसुतां ब्रह्मवादिनीं सूर्यत्वचं सूर्यसमानत्वचमकृणोरकरोः। कल्याणरूपभाजमकरोरित्यर्थः शाट्यायनकब्राह्मणे स्पष्टमभिहितः। तां खे रथस्यात्यबृहत्सा शल्यकोऽभवत्तां खेऽनसोऽत्यबृहत्सा गोधाऽभवत्तां खे युगस्याबृहत्सा संश्लिष्टकाऽभवत्तदेषाभ्यनूच्यते खे रथस्य खेऽनस इति। तस्यै ह कल्याणतमं रूपाणां तद्रूपमसदिति त्वग्दोषापनयनायाक्षादिच्छिद्रेषु अतिकर्षणमिति। यस्त्वग्दोषदूषितः सन् एतत्सूक्तं पठति तस्य त्वग्दोषमपगमय्य सूर्यसदृशकान्तिमिन्द्रः करोतीति सूक्तं प्रशस्यते इति ॥७॥

॥ ३६ ॥

१०·७५

प्रसु व इति नवर्चं सप्तमं सूक्तम्। प्रियमेधपुत्रस्य सिन्धुक्षित आर्षम्। जागतं नदीदेवताकम्। तथा चानुक्रान्तम्। प्रसु नव सिन्धुक्षित्प्रैयमेधो नदीस्तुतिर्जागतं त्विति। गतो विनियोगः।

तत्र प्रथमा। हे आपो वो युष्माकं महिमानं महत्त्वं स्तोत्रमुत्तममुत्कृष्टतमं कारुः स्तोता सिन्धुक्षिदहं विवस्वतः परिचरणवतो यजमानस्य सदने यज्ञगृहे सु सुष्ठु प्रवोचाति प्रब्रवीमि। ता नद्यः सप्त सप्त भूत्वा त्रेधा पृथिव्यामन्तरिक्षे दिवि चेति त्रेधा त्रिप्रकारं प्रचक्रमुः प्रावहन्। सृत्वरीणामार्णां मध्ये सिन्धुरेतन्नामिका नद्योजसा स्वबलेनाति सर्वा अपि नदीरतिक्रम्य प्रवहतीति शेषः ॥१॥

अथ द्वितीया। हे सिन्धो देवि ते तव यातवे गमनाय वरुणो देवः पथो मार्गान् प्रारदत्। प्राचीनं व्यलिखत् सा हि प्राक् वहति। अथवा प्रकृष्टमितरनदीभ्योऽत्यन्तं विस्तृतं व्यदारयत्। हे सिन्धो वाजानन्नान्यभिलक्ष्य त्वमभ्यद्रवः। अभ्यगच्छः। किंच त्वं भूम्या अधि उपरि सानुना समुच्छ्रितेन प्रवता मार्गेण यासि गच्छसि। सिन्धुः खलु पर्वतान्विभिद्य गता। यद्यप्येवं समुच्छ्रि-

तेन मार्गेण यान्ती गच्छन्ती त्वमेषां सर्वेषां जगतां जङ्गमानां प्राणिनामग्रं प्रत्यक्षमिरज्यसि ईशिषे ॥२॥

अथ तृतीया। भूम्योपरि भूमेरुपरि प्रवर्तमानः स्वनो दिवि यतते गच्छति दिवं प्राप्नोति। सेयं सिन्धुरनन्तमपर्यन्तं शुष्मं वेगं भानुना दीप्तेनोर्मिणोदियर्ति। उद्गमयति। अभ्रादिवान्तरिक्षाद्यथा वृष्टयः प्रस्तनयन्ति तद्वदस्याः शब्दाः प्रादुर्भवन्ति। यद्यदा सिन्धुरियं रोरुवद्भृशं शब्दयन् वृषभो न वृषभ इवैति गच्छति तदैवं भवति ॥३॥

अथ चतुर्थी। हे सिन्धो त्वा त्वां शिशुमित् न मातरः पुत्रमिव वाश्राः शब्दयन्त्य इतरा नद्योऽभ्यर्षन्ति। अभिगच्छन्ति। पयसेव धेनवः पयसा युक्ता नवप्रसूतिका गाव इव। किञ्च युध्वा युद्धकृद्राजेव त्वमित्त्वमेव सिचौ सिच्यमानौ भटौ नयसि। यद्यदासां प्रवतां त्वया सह गच्छन्तीनामपि अग्रमग्र इनक्षसि व्याप्नोषि। सर्वासां पुरतो गच्छसि ॥४॥

अथ पञ्चमी। अत्र प्रधानभूताः सप्त नद्यस्तदवयवभूता नद्यस्तिस्रः संस्तूयन्ते। हे गङ्गे हे यमुने हे सरस्वति हे शुतुद्रि हे परुष्णि हे असिक्न्या अवयवभूतया सहिते मरुद्वृधे हे वितस्तया सुषोमया च सहिते आर्जीकीये त्वं च एवं सप्त नद्यो यूयं मे स्तोमं स्तोत्रमस्मदीयमासचत। आसेवध्वम्। श्रृणुहि श्रृणुत। आर्जीकीयाया वितस्तया सुषोमया च साहित्यं निरुक्ते उक्तम्। वितस्तया चार्जीकीय आश्रृणुहि सुषोमया च इति। अत्र गङ्गा गमनादित्यादि ( नि० ९.२६ ) निरुक्तं द्रष्टव्यम् ॥५॥

अथ षष्ठी। हे सिन्धो त्वं क्रुमुं क्रमणशीलां गोमतीं नदीं यातवे प्रतियातुं पर्वतादवरूढा प्रथमं तृष्टामया नद्या सजूः सङ्गतासि। पश्चात् सुसर्त्वा रसया श्वेत्या त्या कुभया मेहत्न्वा च सह सजूर्भव। याभिस्त्वं सरथं समानं रथमारुह्य यसे। गच्छसि ॥६॥

अथ सप्तमी। ऋजीत्यृजुगामिनी एनी श्वेतवर्णा रुशती दीप्यमाना सिन्धुर्महांसि वेगवन्ति रजांस्युदकानि परिभरते प्रभरति। तादृश्यदब्धा अहिंसिता सिन्धुरपसां कर्म कुर्वतीनां मध्ये अपस्तमा वेगाख्यकर्मवती भवति। अश्वा न वडवेव चित्रा चायनीया वपुषी वपुष्मती योषिदिव दर्शता दर्शनीया भवति ॥७॥

अथ अष्टमी। सेयं सिन्धुः स्वश्वा शोभनाश्वोपेता सुरथा शोभनरथा। सुवासाः शोभनवस्त्रोपेता हिरण्ययी हिरण्मयाभरणा सुकृता वाजिनीवत्यन्नवत्यूर्णावती। तस्याः समीपदेशे हि सन्त्यूर्णा यासां रोमभिः कम्बलाः क्रियन्ते। युवतीर्नित्यतरुणी सर्वदाहीनोदका सीलमावती सीराणि ययौषध्या रज्जुभूतया बध्यन्ते सा सीलमेति निगद्यते कृषीवलैः। तादृगोषध्युपेता। उतापि च सुभगा सिन्धुर्मधुवृधं मधुवर्धकं निर्गुण्ड्यादिकमधिवस्ते आच्छादयति। तस्यास्तीरे निर्गुण्ड्यादीनि बहूनि सन्ति ॥८॥

अथ नवमी। सिन्धुर्देवता सुखं सुखकरं शोभनद्वारं वा अश्विनमश्ववन्तं रथं युयुजे युनक्ति। तेन रथेन वाजमन्नं सनिषत् प्रयच्छतु। अस्मिन्नाजौ संग्रामे यज्ञे वा अस्य सिन्धुरथस्य महिमा महान्हि पनस्यते स्तूयते। कीदृशस्यास्य। अदब्धस्यान्यैरहिंस्यस्य स्वयशसः स्वायत्तकीर्तेर्विरप्शिनः। महन्नामैतत्। महतः ॥९॥

॥ ३७ ॥

१०.९५

तत्र हये जाय इत्यष्टादशर्चं पञ्चमं सूक्तं त्रैष्टुभम्। अत्रानुक्रमणिका हये षूनोर्वशीमैळः पुरूरवाः पूर्वोषितात्कामात्पुनरासाद्यावरोद्धुमैच्छत्सा तमनिच्छन्ती प्रत्याचष्टे हय इषुर्न कदा सुदेवोऽन्तरिक्षप्रां सचेति तिस्रश्चैळवाक्यं शिष्टा उर्वश्या इति। हये जाये, इषुर्न श्रिये, या सुजूर्णिः, कदा सूनुः, सुदेवो अद्य, अन्तरिक्षप्राम्, सचा यदासु जहतीष्वित्याद्यास्तिस्रश्चेति नवर्च ऐळस्य पुरूरवसो वाक्यानि। अतस्तासां स ऋषिः। शिष्टा नवोर्वश्या वाक्यानि। अतस्तासु सर्षिका। उभयोर्वाक्येषु योऽर्थः प्रतिपाद्यते सा देवता। गतो विनियोगः।

ऐळोर्वशीतिहासोऽत्र वैशद्याय प्रवर्ण्यते।
मित्रश्च वरुणश्चोभौ दीक्षितौ प्रेक्ष्य चोर्वशीम् ॥१॥
रेतः सिषिचतुः सद्यस्तत्कुम्भे न्यदधुस्तदा।
तां शप्तवन्तौ मनुजभोग्या भूम्यां भवेति तौ ॥२॥
अत्रान्तर इळो राजा मनोः पुत्रैश्च संयुतः।
मृगयां सञ्चरन् साश्वो देवीक्रीडं विवेश ह ॥३॥
यत्र देवं गिरिसुता सर्वैर्भावैरतोषयत्।
अत्राविशन्पुमान् स्त्री स्यादित्युक्त्वा तत्र चाविशत् ॥४॥
स्त्रीभूत्वा व्रीडितः सोऽगाच्छरणं शिवमञ्जसा।
इयं प्रसाद्यतां राजन्नित्युक्तः शम्भुना नृपः ॥५॥
जगाम शरणं देवीमात्मनः पुंस्त्वसिद्धये।
अकरोत्सा नृपं देवी षण्मासान् प्राप्तपुंस्त्वकम् ॥६॥
ततः कदाचित्स्त्रीकाले बुधः सौन्दर्यमोहितः।
अप्सरोभ्यो विशिष्टां तामिळां संगतवान्मुदा ॥७॥
तदिळायां सोमसुताज्जातो राजा पुरूरवाः।
तमुर्वशी तु चकमे प्रतिष्ठानपुरे स्थितम् ॥८॥
तल्पादन्यत्र नग्नं त्वां दृष्ट्वा यामि यथागतम्।
सुतावुरणकौ त्वं च समीपे कुरु मे द्रुतम् ॥९॥
इति सा समयं कृत्वा रमयामास तं नृपम्।
चतुरब्दे गते रात्रौ देवैरुरणकद्वयम् ॥१०॥
हृतं तस्य ध्वनिं श्रुत्वा नग्न एव स भूपतिः।
उत्थाय जित्वा तौ मा गच्छेत्येवं जल्पकोऽन्वतः ॥११॥
विद्युता दर्शितोऽन्वे स नग्न एव पुरूरवाः।
अथ सा नष्टसमया ह्युर्वशी तु दिवं ययौ ॥१२॥

तत उन्मत्तवद्राजा दिदृक्षुस्तामितस्ततः ।
कुर्वन्नन्वेषणं तीरे सरसो मानसस्य ताम् ॥१३॥
विहरन्तीमप्सरोभिः सहापश्यत्पुरूरवाः ।
पुनः स चकमे भोक्तुमुर्वशीं च पुरूरवाः ॥१४॥
साश्रं सापश्यदुक्ता च प्रत्याचष्टे व्रजेति तम् ।
इत्युर्वश्यैळसंवादमिममेषोऽप्यसूचयद् ॥१५॥ इति ।

अत्र वाजसनेयकम् । उर्वशी हाप्सराः पुरूरवसमैळं चकमे तं ह विन्दमानोवाच त्रिः स्म माह्नो वैतसेन दण्डेन हतादकामाꣳ स्म मा निपद्यासै मो स्म त्वा नग्नं दर्शमेष वै न स्त्रीणामुपाचार इति सा हास्मिञ्ज्योगुवासापि हास्माद्गर्भिण्यास तावज्ज्योग्घास्मिन्नुवास । ततो ह गन्धर्वाः समूदिरे ज्योग्वा इयमुर्वशी मनुष्येष्ववात्सीदुपजानीत यथेयं पुनरागच्छेदिति तस्यै हाविद्व्युरणा शयन उपबद्धास ततो ह गन्धर्वा अन्यतरमुरणं प्रमेथुः । सा होवाचावीर इव बत मेऽजन इव पुत्रꣳ हरन्तीति । द्वितीयं प्रमेथुः । सा ह तथैवोवाचाथ हायमीक्षां चक्रे कथं नु तदवीरं कथमजनꣳ स्याद्यत्राहꣳ स्यामिति स नग्न एवानूत्पपात चिरं तन्मेने यद्वासः पर्यधास्यत ततो ह गन्धर्वा विद्युतं जनयाञ्चक्रुस्तं यथा दिवैवं नग्नं ददर्श ततो हैवेयं तिरोबभूव पुनरैमीत्यैत्तिरोभूताꣳ स आध्या जल्पन् कुरुक्षेत्रꣳ समया चचारान्यतःप्लक्षेति बिसवती तस्यै हाध्यन्तेन वव्राज तद्ध ता अप्सरस आतयो भूत्वा परिपुप्लुविरे तꣳ हेयं ज्ञात्वोवाच अयं वै स मनुष्यो यस्मिन्नहमवात्समिति ता होचुस्तस्मै वा आविरसामेति तथेति तस्मै हाविरासुस्ताꣳ हायं ज्ञात्वाभिपरोवाद हयेजाये मनसेत्यादि ( श० ब्रा० ११.५.१ ) ।

तत्र सूक्ते प्रथमा । पुरूरवसो वाक्यम् । जायां पश्यन् वदति । हये हे घोरे । अस्माकं दुःखजनकत्वाद् घोरकारिणि जाये मनसा अस्मदुपरि अनुरागवता मनसा युक्ता सती तिष्ठ । क्षणमात्रं सन्निधावेव निवस । तिष्ठेत्यस्य निघाताभावश्छान्दसः । किमर्थं संस्थानमिति तत्राह वचांसि वाक्यानि मिश्रा मिश्राणि युक्तिप्रत्युक्तिरूपाणि नु अद्य क्षिप्रं वा कृणवावहै करवावहै । कृवि हिंसाकरणयोः । धिन्विकृण्व्योर च (पा० ३.१.८०) इत्युप्रत्ययः । किमर्थं वचसः करणमिति चेदुच्यते । नावावयोर्मन्त्रा रहस्यार्था एते विवक्षिता अनुदितासोऽव्याहृियमाणाः परस्परमसम्भाष्यमाणा अगुम्फिताः सन्तः परतरे चनाहन् । चनेति निपातसमुदायश्चार्थे । अनेकेषु दिवसेषु चरमेऽप्यहनि मयः । सुखनामैतत् । सुखं न करन् कुर्वन्ति । अतः कृणवावहै इति ॥१॥

अथ द्वितीया । अनया तमुर्वशी प्रत्युवाच । एतेतया वाचा केवलया पुनः सम्भोगरहितया किं कृणव किं करवाव । अहं त्विदानीं त्वत्सकाशात्प्राक्रमिषम् । अतिक्रान्तवत्यस्मि । अतिक्रमे दृष्टान्तः उषसामग्रियेव । बह्वीनामुषसां मध्ये अग्र्या अग्रे भवा पूर्वोषाः प्राक्रमीद्यथा तथाऽहमपीति । यस्मादेवं तस्माद्धे पुरूरवस्त्वं पुनरस्मत्सकाशादस्तं गृहं परेहि परागच्छ । मा ममाभिलाषं कार्षीः । त्वया दुर्ग्रहत्वमाह अहं वात इव वायुरिव दुरापना दुष्प्रापा दुरापा वास्मि । दुरापा वा अहं त्वयैतर्ह्यस्मि पुनर्गृहानिहीति हैवेनं तदुवाचेति वाजसनेयकम् । ( श० ब्रा० ११.५.१-७ ) ॥२॥

अथ तृतीया । अनया पुरूरवाः स्वस्य विरहजनितं वैक्लव्यं तां प्रति ब्रूते । इषुधेः ।

इषवो धीयन्तेऽत्रेति इषुधिर्निषङ्गः। ततः सकाशादिषुरसना असनायै प्रक्षेप्तुं न भवति श्रिये विजयार्थम्। त्वद्विरहाद्युद्धस्य बुद्धावप्यनिधानात्। तथा रंहिर्वेगवानहं शत्रुसकाशाद्गोषास्तेषां शत्रूणां गवां संभक्ता नाभवम्। तथा शतसाः शतानामपरिमितानां शत्रुधनानां संभक्ता नाभवम्। किञ्च अवीरे वीरवर्जिते क्रतौ राजकर्मणि सति न वि दविद्युतत् न विद्योतते मत्सामर्थ्यम्। किञ्च धुनयः कम्पयितारोऽस्मदीया नरा उरा उरौ। सुपां सुलुग्० ( पा० ७.१.३९ ) इति सप्तम्या डादेशः। विस्तीर्णे संग्रामे मायुम्। मीयते प्रक्षिप्यत इति मायुः शब्दः। कृवापाजि० ( उ० १.१ ) इत्यादिनोण्। सिंहनादं न चितयन्त न बुध्यन्ते। चिती संज्ञाने। अस्माण्णिचि संज्ञापूर्वकस्य विधेरनित्यत्वाल्लघूपधगुणाभावः। छान्दसो लङ्॥३॥

अथ चतुर्थी। इदमुत्तरं चोर्वशीवाक्यम्। आद्येन पुरा आत्मना कृतमुषसे निवेदयति। हे उषः सेयमुर्वशी वसु वासकं वयोऽन्नं श्वशुराय भर्तुः पुरूरवसः पित्रे दधती प्रयच्छन्ती तत्र गृहे स्थित्वा यदि पतिं वष्टि कामयते तदान्तिगृहात्। स्वभर्तृभोगगृहान्तिके यच्छ्वशुरस्य भोजनगृहं तदन्तिगृहम्। तस्माद्गृहात्सोर्वश्यस्तं पतिगृहं ननक्षे व्याप्नोति। यस्मिन् गृहे चाकन् कामयते उर्वशी। सा चोर्वशी दिवा नक्तमहनि रात्रौ च वैतसेन। शेपो वैतस इति पुंस्प्रजननस्येति ( नि० ३.११ ) निरुक्तम्। पुंस्प्रजननेन श्नथिता ताडिता च भवति। एवमुर्वश्यात्मानं परोक्षेण निर्दिदेश॥४॥

अथ पञ्चमी। अनेन पुरूरवसमेव सम्बोध्योक्तवती। हे पुरूरवस्त्वं मा मामह्नोऽहनि वैतसेन दण्डेन पुंव्यञ्जनेन त्रिस्त्रिवारम्। द्वित्रिचतुर्भ्यः सुच् ( पा० ५.४.१८ )। श्नथयः स्म। अश्नथयः। अताडयः। कृत्वोऽर्थप्रयोगे० ( पा० २.३.६४ ) इति कालवाचिनोऽहःशब्दादधिकरणे षष्ठी। उतापिच। स्मेति पूरणः। अव्यत्यै सपत्नीभिः सह पर्यायेण पतिमागच्छति सा व्यती। न ताद्दश्यव्यती। तस्यै मे मह्यम् पृणासि पूरयसि। एवं बुद्ध्या हे पुरूरवस्ते तव केतं गृहमन्वायम्। अन्वगमम्। हे वीर राजा त्वं च मे मम तन्वः शरीरस्य तत्तदासीः। अभवः। सुखयितेति शेषः। परमेवं मन्तव्यम्। किमिति कातरो भवसीत्युवाच॥५॥

अथ षष्ठी। पुरूरवसो वाक्यम्। या सुजूर्णिः सुजवेतन्नामिकास्ति। तथा या श्रेणिर्या सुम्नआपिर्या ह्रदेचक्षुः। नकारः समुच्चये। ताभिश्चतसृभिरालिभूताभिर्मानिनीभिः सहिता ग्रन्थिनी ग्रन्थनवती सन्दर्भवती चरणयुञ्जरणशीलोर्वश्याजगाम। यद्वा ग्रन्थिनीत्येतत्सखिभूताप्सरोनामधेयम्। या सुजूर्णिः सुजवोर्वशी सा ताभिः सह जगाम। ता अप्सरसोऽञ्जयः आभरणोपेता अरुणायोऽरुणवर्णा न सस्रुः। पूर्ववन्न गच्छन्ति। श्रिये श्रयणाय धेनवो नवप्रसूता गावो न गाव इव। आश्रयार्थं यथा गावोऽनवन्त शब्दायन्ते तथा न शब्दयन्तीति व्यतिरेके दृष्टान्तः॥६॥

अथ सप्तमी। अनयैताभिः सह संसर्गस्त्वयानुभूत इत्युर्वशी वदति। अस्मिन्पुरूरवसि जायमाने सति ग्ना अप्सरसो देववरया अपि समासत सङ्गता अभवन्। अथवा जायमाने यज्ञार्थं प्रवर्धमाने सति ग्ना देवपत्न्योऽपि समासत समभवन्। उतापिच। ईमेनं पुरूरवसं स्वगूर्ताः स्वयंगामिन्यो नद्यस्तासामाश्रयभूता अवर्धयन्। किञ्च हे पुरूरवो यद्यस्मात्त्वा त्वां महे महते रणाय रमणीयाय सङ्ग्रामाय दस्युहत्याय दस्युहननाय देवास्त्वामवर्धयन्॥७॥

अथ अष्टमी। इदमादित्रीण्यैळवाक्यानि। तत्रादितो द्वाभ्यामुर्वशीमन्याश्च सह स्तौति। यद्यदा सचा सहायभूतः पुरूरवा अत्कं स्वकीयं रूपम्। अत्क इति रूपनाम (निघ० ३.७)। जहतीषु परित्यजन्तीष्वमानुषीषु देवताभूतासु अप्सरस्सु मानुषः सन् निषेवेऽभिमुखं गच्छति तदानीं ता अप्सरसो मत् मत्तोऽपापसुत्रास्त्रसन्। त्रसतिर्गतिकर्मा। गच्छन्ति। पलायन्ते इत्यर्थः। तरसन्ती भुज्युर्न। तरसं नाम मृगः। तस्य स्त्री भुज्युर्भोगसाधनभूता स्त्रीमृगी। सा यथा व्याघ्राद्भीता पलायते। किञ्च रथस्पृशो नाश्वाः। रथे नियुक्ता अश्वा इव। यथा ते पलायन्ते तद्वत्पलायन्त इति। उर्वश्या अनेकाभिरस्माभिः सह भोगमनुभुक्तवानसीत्युक्तः प्रत्याचष्टे ॥८॥

अथ नवमी। यद्यदास्वमृतास्वप्सरस्सु मर्त्यो मनुष्यः पुरूरवा निस्पृक् निःशेषेण स्पृशन् क्षोणीभिर्वाग्भिः क्रतुभिर्न कर्मभिश्च संपृङ्क्ते संपर्कं करोति। नकारः समुच्चयार्थः। ता अप्सरस आतय आतिभूतास्तदानीं स्वास्तन्व आत्मीयानि रूपाणि न शुम्भत न प्रकाशयन्ति। अश्वासो नाश्वा इव क्रीडयः संक्रीडमाना दन्दशाना दन्दशूका जिह्वाभिरात्मीयाः सृक्का भक्षयन्तः। ते यथा चापल्येन धावन्तः स्वरूपं न प्रयच्छन्ति रथिकाय तद्वदिति दुःखाद् ब्रूते ॥९॥

अथ दशमी। अनयोर्वशीं स्तौति। योर्वशी विद्युदिव पतन्ती गच्छन्ती दविद्योद् द्योतते। किं कुर्वती। अप्या। आपः (निघ० १.३) इत्यन्तरिक्षनाम। तत्सम्बन्धीनि व्याप्तानि वा काम्यान्यस्मदभिमतान्युदकानि वा मे मह्यं भरन्ती संपादयन्ती। यदागतायास्तस्याः सकाशादपो व्याप्तः कर्मसु नर्यो नरेभ्यो हितः सुजातः सुजननः पुत्रो जनिष्टो अजनिष्टोत्पद्यते तदानीं ममोर्वशी दीर्घमायुः प्रतिरत। प्रवर्धयति। प्रजामनुप्रजायसे तदु ते मर्त्यामृतम् (तै० ब्रा० १.५.५.६) इति हि मन्त्रः ॥१०॥

अथैकादशी। इत्थेत्थं गोपीथ्याय। गौः पृथिवी। पीथं पालनम्। स्वार्थिकस्तद्धितः। भूरक्षणाय जज्ञिषे हि। जातोऽसि खलु पुत्ररूपेण। आत्मा वै पुत्रनामेति श्रुतेः (आ० गृ० १.१६)। पुनरप्याह हे पुरूरवो मे ममोदरे मय्योजोऽपत्योत्पादनसामर्थ्यं दधाथ। मयि निहितवानसि। तत्तथास्तु। अथापि स्थातव्यमिति चेत्तत्राह अहं विदुषी भाविकार्यं जानती समस्मिन्नहन् सर्वस्मिन्नहनि त्वया कर्तव्यं त्वा त्वामशासं शिक्षितवत्यस्मि। त्वं मे मम वचनं नाशृणोः न शृणोषि। किं त्वमभुगभोक्ता अपालयिता प्रतिज्ञातार्थमपालयन्वदासि इये जाय इत्यादिरूपं प्रलापम्। वदेर्लेट्यडागमः। दिवसे त्रिवारं यभस्व, एडकबालकमस्माकं पुत्रत्वेन परिकल्पय, अपत्योत्पादनपर्यन्तं वसामि, नग्नं त्वां यदाऽद्राक्षं तदा गच्छामीत्येवंरूपो मिथः समयः। उर्वशी ह्यप्सराः पुरूरवसमैळं चकमे तᳬह विन्दमानोवाच त्रिः स्म माह्नो वैतसेन दण्डेन इत्यादि वाजसनेयकमुदाहृतम् ॥११॥

अथ द्वादशी। इदं पुरूरवसो वाक्यम्। कदा कस्मिन्काले सूनुस्तवोदरजातस्सन् पितरं मामिच्छात् इच्छेत्। इषु इच्छायाम्। लेटि शपि इषु गमियमां छः (पा० ७.३.७७) इति छादेशः। लेटो ऽडाटौ (पा० ३.४.९४) इत्यडागमः। कदा वा विजानन् पितरं मामधिगच्छन् चक्रन् क्रन्दमानो नाश्रु वर्तयत्। नेति चार्थे। किञ्च कः किंविधः सन् सूनुः समनसा समनसौ समनस्कौ दंपती जायापती त्वां मां च वियूयोत् वियोजयेत्। यु मिश्रणामिश्रणयोः। यौतेः छान्दसः शपः श्लुः। तु-

जादित्वादभ्यासस्य दीर्घः। अथाधुना यद्यदाग्निस्तव हृदयस्थितस्तेजोरूपो गर्भः श्वशुरेषु दीदयद्दीप्यते। दीदयतिर्दीप्तिकर्मेति नैरुक्तो धातुः ॥१२॥

अथ त्रयोदशी। इदमुर्वशीवाक्यम्। हे पुरूरवः। त्वां प्रति ब्रवाणि। प्रतिवच्मि। त्वदपत्यमश्रु बाष्पं वर्तयते वर्तयिष्यति। आध्ये आध्याते वस्तुनि शिवायै शिवे कल्याणे समुपस्थिते सति चक्रन् रुदत् अश्रूणि विमुञ्चन् क्रन्दतु। नकारश्चार्थे। रोत्स्यति चेत्यर्थः। तत्त्वदपत्यं ते तुभ्यं हिनव प्रहिणोमि यदपत्यं ते तव सम्बन्ध्यस्मे अस्मासु निहितम्। त्वं परेह्यस्तम्। अस्तमिति गृहनाम ( निघ० ३·४ )। स्वं गृहं प्रति गच्छ। हे मूर मूढ मा मां नकापः। न प्राप्नोषि। हिनवेत्यत्र हिनोतेश्छन्दसि लुङ्लङ्लिटः ( पा० ३·४·६ ) इति भविष्यदर्थे लङि मिप अमादेशे गुणः। अन्त्यलोपश्छान्दसः। बहुलवचनादडभावः। आपः। आप्लृ व्याप्तौ। लिटि तिङां तिङो भवन्तीति थलो णल् ॥१३॥

अथ चतुर्दशी। अत्र परिद्यूनः पुरूरवा उवाच। सुदेवस्त्वया सह सुक्रीडः पतिरद्य प्रपतेत्। अत्रैव प्रपततु। अथवानावृदनावृत्तः सन् परमां परावतं दूरादपि दूरदेशं गन्तवै गन्तुं महाप्रस्थानगमनं कुर्यात्। अथाथवा यत्र कुत्रापि गन्तुं समर्थो निर्ऋतेः पृथिव्या उपस्थे शयीत। शयनं कुर्यात्। यद्वा निर्ऋतिः पापदेवता। तस्या उपस्थे उत्सङ्गे सन्निधौ म्रियतामित्यर्थः। अथाथवैनं वृका आरभसाः श्वानो रभसासो वेगवन्तोऽद्युः। भक्षयन्तु। अत्र वाजसनेयकम्। सुदेवोऽद्योद्बध्नीत प्र वा पतेत्तदेनं वृका वा श्वानो वाद्युरिति हैव तदुवाच इति ॥१४॥

अथ पञ्चदशी। तमितरा प्रत्युवाच हे पुरूरवस्त्वं मा मृथाः। मृतिं मा प्राप्नुहि। म्रियतेर्लुङि थासि ह्रस्वादङ्गात् ( पा० ८·२·२७ ) इति सिचो लोपः। तथा मा प्रपप्तः। अत्रैव पतनं मा कार्षीः। पतेर्लुङि लृदित्त्वात्पुषादि० ( पा० ३·१·५५ ) इत्यादिना च्लेरङ्। पतः पुम् ( पा० ७·४·१९ ) इति पुम्। तथा त्वा त्वामशिवासोऽशुभा वृकासो वृका मा उ क्षन्। उ इत्येवकारार्थे। क्षन्। माभ्यवहारयन्तु। किमित्येवमस्मदुपर्याग्रहं करोषि। मा कार्षीरित्यर्थः। अदेर्लुङि लुङ्सनोर्घस्लृ ( पा० २·४·३७ ) इति घस्लादेशः। मन्त्रे घस० ( पा० २·४·८० ) इति च्लेर्लुक्। गमहन० ( पा० ६·४·९८ ) इत्यादिनोपधालोपः। शासिवसि० ( पा० ८·३·६० ) इत्यादिना षत्वम्। खरि च ( पा० ८·४·५५ ) इति चर्त्वम्। बाहुलकादडभावः। अथ स्वस्नेहस्यासारतामाह। स्त्रैणानि स्त्रीणां कृतानि सख्यानि न वै सन्ति। न सन्ति खलु। अभावे कारणमाह। एतानि सख्यानि सालावृकाणां हृदयानि यथा वत्सादीनां विश्वासापन्नानां घातुकानि तद्वत्। अत्र वाजसनेयकम्। नैतदादृथा न वै स्त्रैणꣳ सख्यमस्ति पुनर्गृहानिहीति हैवैनं तदुवाचेति ॥१५॥

अथ षोडशी। यद्यदा विरूपा मनुष्यसंपर्कोद्भिन्नसहजभूतदेवरूपाऽप्यानुकूल्येन नानारूपा सा मर्त्येषु मनुष्येष्ववसं तदानीं रात्रीः पूर्वोक्तसंख्याः शरदोऽवसम्। न्यवसम्। अत्यन्तसंयोगे द्वितीया। तदानीं घृतस्य स्तोकं सकृदह्न आश्नाम्। तादेव तेनैव स्तोकेनाहमिदं संप्रति तातृपाणा तृप्ता सती चरामि ॥१६॥

अथ सप्तदशी। अन्तरिक्षप्रां स्वतेजसान्तरिक्षस्य पूरयित्रीं तथा रजसो रञ्जकस्योदकस्य विमानीं निर्मात्रीं वसिष्ठः समानानां मध्ये अतिशयेन वासयिताहमुपशिक्षामि वशं नयामि।

सुकृतस्य शोभनकर्मणो रातिर्दाता पुरूरवास्त्वा त्वामुपतिष्ठात्। उपतिष्ठतु। मे हृदयं तप्यते। अतो निवर्तस्व। एवं राजोवाच ॥१७॥

अथाष्टादशी। हे ऐळ पुरूरवस्त्वामिमे देवा इत्याहुः। मृत्युबन्धुर्मृत्योर्बन्धको मृत्योर्बन्धुभूतो वा मृत्युवशमाप्नुवंस्त्वं यथेम् यथैतद्भवसि भविष्यसि प्रजा प्रकर्षेण जायमानस्त्वं ते तव सम्बन्धिनो यष्टव्यान्देवान्हविषा यजासि। यजसि। स्वर्ग उ स्वर्ग एव त्वमपि मादयासे। मादयसेऽस्माभिः सह। एवमाहुरित्यर्थः। यस्मादेवं करोषि तस्मादभिलाषं हित्वा सुखी भवेति सेयं पुरूरवसं प्रत्युवाच ॥१८॥

॥३८॥

१०·१२७

रात्रीत्यष्टर्चं पञ्चदशं सूक्तं सोभरिपुत्रस्य कुशिकस्यार्षम्। यद्वा भारद्वाजस्य सुता रात्र्याख्याऽस्य सूक्तस्यर्षिका। गायत्रं रात्रिदेवताकम्। तथा चानुक्रान्तम् रात्री कुशिकः सौभरो रात्रिर्वा भारद्वाजी रात्रिस्तवं गायत्रम् इति। दुःस्वप्नदर्शन उपोषितेन कर्त्रा पायसेन होतव्यम्। तत्रैतत्सूक्तं करणत्वेन विनियुक्तम्। तथा चारण्यके श्रूयते। स यद्येतेषां किञ्चित्पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वा ( ऐ० आ० ४·१० ) इति।

तत्र प्रथमा। आयत्यागच्छन्ती। आङ्पूर्वादितेः शतर्यदादित्वाच्छपो लुक्। इणो यण् ( पा० ६·४·८१ ) इति यणादेशः। उगितश्च ( पा० ४·१·६ ) इति ङीप्। शतुरनुमः० ( पा० ६·१·१७३ ) इति नद्या उदात्तत्वम्। अक्षभिरक्षस्थानीयैः प्रकाशमानैर्नक्षत्रैः। अन्यस्यापि दृश्यते ( पा० ७·१·७६ ) इत्यक्षिशब्दस्यानङादेशः। यद्वा। अक्षभिरञ्जकैस्तेजोभिः पुरुत्रा बहुषु देशेषु देवी देवनशीला देवमनुष्यपुरुषपुरुमर्त्येभ्यः० ( पा० ५·४·५६ ) इत्यादिना पुरुशब्दात्सप्तम्यर्थे त्राप्रत्ययः। रात्रीयं रात्रिदेवता व्यख्यत्। विचष्टे विशेषेण पश्यति। रात्रेश्चाजसौ ( पा० ४·१·३१ ) इति ङीप्। अस्यतेश्छान्दसे लुङि अस्यतिवक्ति० ( पा० ३·१·५२ ) इत्यादिना च्लेरङादेशः। अपि चैषा विश्वाः सर्वाः श्रियः शोभा अध्यधित। अधिधारयति। दधातेर्लुङि स्थाघ्वोरिच्च ( पा० १·२·१७ ) इतीत्वम्। सिचः कित्त्वम्। ह्रस्वादङ्गात् ( पा० ८·२·२७ ) इति सिचो लोपः ॥१॥

अथ द्वितीया। अमर्त्या मरणरहिता देवी देवनशीला रात्रिरुरु विस्तीर्णमन्तरिक्षमाप्राः। प्रथमतस्तमसा पूरयति। प्रा पूरणे। आदादिकः। लङि व्यत्ययेन मध्यमः। तथा निवतो नीचीनान् लतागुल्मादीन् उद्वत उत्थितान्वृक्षादींश्च स्वकीयेन तेजसावृणोति। तदनन्तरं तमोऽन्धकारं ज्योतिषा ग्रहनक्षत्रादिरूपेण तेजसा बाधते पीडयति ॥२॥

अथ तृतीया। आयत्यागच्छन्ती देवी देवनशीला रात्रिः स्वसारं भगिनीमुषसं निरकृत निष्करोति प्रकाशेन संस्करोति। निर्वर्तयतीत्यर्थः। तस्यामुषसि जातायां नेदं तमोऽपेद्धासते। अपैव गच्छति। ओहाङ् गतौ। लेटि अडागमः। सिब्बहुलं० ( पा० ३·१·३४ ) इति सिप् ॥३॥

अथ चतुर्थी। अद्यास्मिन्काले नोऽस्माकं रात्रिदेवता प्रसीदतु। यस्या रात्रेर्यामन्यामनि

प्राप्तौ सत्यां वयं न्यविक्ष्महि निविशामहे। सुखेन गृह आस्महे। विशेर्लङि नेर्विशः (पा० १·३·१७) इत्यात्मनेपदम्। छान्दसः शपो लुक्। तत्र दृष्टान्तः। वयः पक्षिणो वृक्षे न। यथा वृक्षे नीडाश्रये वसतिं रात्रौ निवासं कुर्वन्ति तथा निवसाम इत्यर्थः ॥४॥

अथ पञ्चमी। ग्रामासो ग्रामाः। अत्र ग्रामशब्दो जनसमूहे वर्तते यथा ग्राम आगत इति। सर्व जना न्यविक्षत। तस्यां रात्रावागतायां निविशन्ते। शेरते। निपूर्वाद्विशतेश्छान्दसे लुङि पूर्ववदात्मनेपदम्। शल इगुपधादनिटः क्सः (पा० ३·१·४५)। क्सस्याचि (पा० ७·३·७२) इत्यकारलोपः। तथा पद्वतः पादयुक्ता गवाश्वादयश्च निविशन्ते। तथा पक्षिणः पक्षोपेताश्च निविशन्ते। अर्थिनः। अतेरर्थो गमनम्। शीघ्रगमनयुक्ताः श्येनासश्चिच्छ्येना अपि तस्यां रात्र्यां निविशन्ते। एषा रात्रिः सर्वाणि भूतजातानि अहनि संचारेण श्रान्तानि स्वयमागत्य सुखयतीत्यर्थः ॥५॥

अथ षष्ठी। हे ऊर्म्ये। रात्रिनामैतत्। रात्रे वृक्यं वृकस्य स्त्रियं वृकं चास्मान्हिंसन्तं यवय। अस्मत्तः पृथक्कुरु। अस्मान्बाधितुं यथा न प्राप्नोति तथा स्तेनं तस्करं च यवय। अस्मत्तो वियोजय। अथानन्तरं नोऽस्माकं सुतरा सुखेन तरणीया क्षेमकरी भव ॥६॥

अथ सप्तमी। पेपिशत् भृशं पिंशत् सर्ववस्तुष्वाश्लिष्टं तमोऽन्धकारं कृष्णं कृष्णवर्णं व्यक्तं विशेषेण स्वभासा सर्वस्याञ्जकं स्पष्टरूपं वा ईदृशं नेशं तमो मामुपास्थित। उपागच्छत्। संगतकरण आत्मनेपदम्। हे उष उषोदेवते त्वम् ऋणेव ऋणानीव तत्तमो यातय। अपगमय। स्तोतॄणामृणानि यथा धनप्रदानेनापाकरोषि तथा तमोऽप्यपसारयेत्यर्थः ॥७॥

अथाष्टमी। हे रात्रिदेवते ते त्वां गा इव पयसो दोग्ध्रीर्धेनूरिव उपेत्याकरम्। स्तुतिभिरभिमुखीकरोमि। करोतेश्छान्दसे लुङि कृमृदृरुहिभ्य० (पा० ३·१·५९) इति च्लेरङादेशः। दिवो दुहितः। द्योतमानस्य सूर्यस्य पुत्रि। यद्वा दिवसस्य तनये। परमपि छन्दसीति (पा० २·१·२) परस्य षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावात्पदद्वयसमुदायस्याष्टमिकं सर्वानुदात्तत्वम्। त्वत्प्रसादाज्जिग्युषे शत्रूञ्जिग्युषो मम स्तोमं न स्तोत्रमिव हविरपि वृणीष्व। त्वं भजस्व। जयतेर्लिटः क्वसुः। सन्लिटोर्जेः (पा० ७·३·५७) इति अभ्यासादुत्तरस्य जकारस्य कुत्वम्। षष्ठ्यर्थे चतुर्थी वक्तव्येति चतुर्थी। वसोः संप्रसारणम् (पा० ६·४·१३१) इति सम्प्रसारणम् ॥८॥

॥ ३९ ॥

१०·१२९

एकादशेऽनुवाके त्रयोविंशतिसङ्ख्यानि सूक्तानि। तत्र नासदासीदिति सप्तर्चं प्रथमं सूक्तं त्रैष्टुभम्। परमेष्ठी नाम प्रजापतिर्ऋषिः। वियदादिभावानां सृष्टिस्थितिप्रलयादीनामत्र प्रतिपाद्यत्वात्तेषां कर्ता परमात्मा देवता। तथा चानुक्रान्तम् नासत्सप्त प्रजापतिः परमेष्ठी भाववृत्तं त्विति। गतो विनियोगः।

तत्र प्रथमा। तपसस्तन्महिनाजायतैकमित्यादिनाग्रे सृष्टिः प्रतिपादयिष्यते। अधुना ततः

प्रागवस्था निरस्तसमस्तप्रपञ्चा या प्रलयावस्था सा निरूप्यते। तदानीं प्रलयदशायामवस्थितं यदस्य जगतो मूलकारणं तन्नासत्। शशविषाणवन्निरुपाख्यं नासीत्। न हि तादृशात्कारणादस्य सतो जगत उत्पत्तिः सम्भवति। तथा नो सत्। नैव सत्। आत्मवत्सत्त्वेन निर्वाच्यमासीत्। यद्यपि सदसदात्मकं प्रत्येकं विलक्षणं भवति तथापि भावाभावयोः सहावस्थानमपि न सम्भवति कुतस्तयोस्तादात्म्यमित्युभयविलक्षणमनिर्वाच्यमेवासीदित्यर्थः। ननु नो सदिति पारमार्थिकसत्त्वस्य निषेधस्तर्ह्यात्मनोऽप्यनिर्वाच्यत्वप्रसङ्गः। अथोच्येत न, आनीदवातमिति तस्य सत्त्वमग्रे वक्ष्यते परिशेषान्मायाया एवात्र सत्त्वं निषिध्यत इति। एवमपि तदानीमिति विशेषणानर्थक्यम्। व्यवहारदशायामपि तस्याः पारमार्थिकसत्त्वाभावात्। अथ व्यावहारिकसत्त्वस्य। तदापि व्यावहारिकसत्ता पृथिव्यादीनां भावानां विद्यमानत्वात् कथं नो सदिति निषेधः। तत्राह नासीद्रज इत्यादि। लोका रजांस्युच्यन्ते ( नि० ४·१० ) इति यास्कः। अत्र च सामान्यापेक्षमेकवचनम्। व्योम्नो वक्ष्यमाणत्वात्तस्याधस्तनाः पातालादयः पृथिव्यन्ता नासन्नित्यर्थः। तथा व्योमान्तरिक्षं तदपि नो नैवासीत्। पर इति सकारान्तं परस्तादित्यर्थे वर्तते। परशब्दाच्छान्दसोऽस्तातेरर्थेऽसिप्रत्ययः। परो व्योम्नः परस्तादुपरि देशे द्युलोकप्रभृतिसत्यलोकान्तं यदस्ति तदपि नासीदित्यर्थः। अनेन चतुर्दशभुवनगर्भं ब्रह्माण्डं स्वरूपेण निषिद्धं भवति। अथ तदावरकत्वेन पुराणेषु प्रसिद्धानि यानि वियदादिभूतानि तेषामवस्थानप्रदेशं तदावरणनिमित्तं चाक्षेपमुखेन क्रमेण निषेधति। किमावरीवरिति। किमावरणीयं तत्त्वमावारकभूतजातमावरीवः। अत्यन्तमावृणुयात्। आवार्याभावात्तदावारकमपि नासीदित्यर्थः। वृणोतेर्यङ्लुगन्ताच्छान्दसे लङि तिपि रूपमेतत्। यद्वा किमिति प्रथमैव। किं तत्त्वमावारकमावृणुयात्। आवार्याभावादावियमाणवत्तदपि स्वरूपेण नासीदित्यर्थः। आवृण्वत्तत्त्वं कुह कुत्र देशेऽवस्थायावृणोति। आधारभूतस्तादृशो देशोऽपि नासीदित्यर्थः। किंशब्दात्सप्तम्यर्थे ह्प्रत्ययः। कुतिहोः ( पा० ७·२·१०४ ) इति प्रकृतेः कादेशः। कस्य शर्मन् कस्य वा भोक्तुर्जीवस्य शर्मणि सुखदुःखसाक्षात्कारलक्षणे वा निमित्तभूते सति तदावारकं तत्त्वमावृणुयात्। जीवानामुपभोगार्था हि सृष्टिः। तस्यां सत्यां ब्रह्माण्डस्य भूतैरावरणं प्रलयदशायां च भोक्तारो जीवा उपाधिविलयात्प्रलीना इति कस्य कश्चिदपि भोक्ता न सम्भवतीत्यावरणस्य निमित्ताभावादपि तन्न घटत इत्यर्थः। एतेन भोग्यप्रपञ्चवद्भोक्तृप्रपञ्चोऽपि तदानीं नासीदित्युक्तं भवति। किंशब्दादुत्तरस्य ङसः सावेकाचः० ( पा० ६·१·१६८ ) इति प्राप्तस्योदात्तत्वस्य न गोश्वन्साववर्ण० ( पा० ६·१·१८२ ) इति प्रतिषेधः। सुपां सुलुक्० ( पा० ७·१·३९ ) इति शर्मणः सप्तम्या लुक्। यद्यपि सावरणस्य ब्रह्माण्डस्य निषेधेन तदन्तर्गतमप्सत्त्वमपि निराकृतं तथाप्यापो वा इदमग्रे सलिलमासीदित्यादिश्रुत्या कश्चिदपां सद्भावमाशङ्केत, तं प्रत्याचष्टे अम्भः किमासीद् इति। गहनं दुःप्रवेशं गभीरं दुरवस्थानमगाधम्। ईदृशमम्भः किमासीत्। तदपि नैवासीदित्यर्थः। श्रुतिस्त्ववान्तरप्रलयविषया ॥१॥

अथ द्वितीया। ननूक्तस्य प्रतिसंहारस्य संहर्त्रपेक्षत्वात् स एव संहर्ता मृत्युर्विद्यत इत्याह न मृत्युरासीदिति। ननु यदि नासीत्तर्हि तदभावकृतममरणं प्राणिनामवस्थानं तदानीमपि स्यात् तत्राह अमृतं न तर्हीति। तर्हि तस्मिन्प्रतिहारसमये। अयं भावः। सर्वेषां प्राणिनां

परिपक्वं भोगहेतुभूतं सर्वं कर्म यदोपभुक्तमासीत्तदा भोगाभावान्निष्प्रयोजनमिदं जगदिति परमेश्वरस्य मनसि सञ्जिहीर्षा जायते तदेव स मृत्युः सर्वं जगत्संहरत इति किमनेन मृत्युना संहर्त्रा तदभावकृतं वा कथममरणं स्यादिति। एतदेवाभिप्रेत्य कठैराम्नायते यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनम्। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ( क० उ० २.२५ ) इति। नन्वेतस्य सर्वस्याधिकरणभूतः कालो विद्यत इत्यत आह न रात्र्या इति। न रात्र्या अह्नश्च प्रकेतः संज्ञानमासीत्। तद्धेतुभूतयोः सूर्याचन्द्रमसोरभावात्। एतेनाहोरात्र-निषेधेन तदात्मको मासर्तुसंवत्सरप्रभृतिकः सर्वः कालः प्रत्याख्यातः। कथं तर्हि नो सदासी-त्तदानीमिति कालवाची प्रत्ययः। उपचारादिति ब्रूमः। यथेदानीन्तनस्य निषेधस्य कालो-ऽवच्छेदकस्तथा मायाऽपि तदवच्छेदहेतुरित्यवच्छेदकत्वसाम्येनाकालेऽपि कालवाची प्रत्ययः। यदवादिष्म ब्रह्मणः परमार्थसत्त्वमग्रे वक्ष्यत इति तदिदानीं दर्शयत्यानीदिति। तत् सकल-वेदान्तप्रसिद्धं ब्रह्मतत्त्वमानीत्। प्राणितवत्। नन्वेवं प्राणनकर्तृजीवभावापन्नस्यैव ब्रह्मणः सत्त्वं स्यान्न विवक्षितस्य निरुपाधिकस्य ब्रह्मणः। अप्राणो ह्यमनाः शुद्ध इति तस्य प्राण-सम्बन्धाभावात्। तत्राहानीदवातमिति। अयमाशयः। आनीदित्यत्र धात्वर्थक्रिया तत्कर्ता तस्य च भूतकालसम्बन्ध इति त्रयोऽर्थाः प्रतीयन्ते। तत्र समुदायो न विधीयते, यथाग्नेयोऽष्टाकपाल इति येन ब्रह्मणः सत्त्वं न स्यात्। किन्तर्ह्यनेन कर्तृत्वमनूद्य भूतकालसत्तालक्षणो गुणो विधीयते। यथा दध्ना जुहोतीति। वाक्यान्तरविहिताग्निहोत्रानुवादेन तत्र गुणविधानम्। तत्राप्यनेन कर्तृत्वविशिष्टस्य न पूर्वकालसत्ता विधीयते तन्निषेधानुपपत्तिप्रसङ्गात्। अतोऽनेन कर्तृत्वेनेदानीन्तनेनोपलक्षितं यन्निरुपाधिकं परं ब्रह्म तस्यैव भूतकालसत्ता विधीयत इति न कश्चिद्दोष इति। नन्वीदृशस्य ब्रह्मणो मायया सम्बन्धासम्भवात्साङ्ख्याभिमता स्वतन्त्रा सद्रूपा सत्त्वरजस्तमोगुणात्मिका मूलप्रकृतिरेवाभिमतेति कथं नो सदिति निषेधः। तत्राह-स्वधयेति। स्वस्मिन्धीयते ध्रियत आश्रित्य वर्तत इति स्वधा माया। तया सह ब्रह्मैकम-विभागापन्नमासीत्। सह युक्तेऽप्रधाने ( पा० २.३.१९ ) इति तृतीया। सहशब्दयोगाभावेऽपि सहार्थयोगे भवति वृद्धो यूना० ( पा० १.२.६५ ) इति निपातनाल्लिङ्गात्। अत्र प्रकृतिप्रत्ययाभ्यां तस्याः स्वातन्त्र्यं निवार्यते। यद्यप्यसङ्गस्य ब्रह्मणस्तया सह सम्बन्धो न सम्भवति तथापि, तस्मिन्नविद्यया तत्स्वरूपमिव सम्बन्धोऽप्यध्यस्यते यथा शुक्तिकायां रजतस्य। एतेन सद्रूपत्वमपि तस्याः प्रत्याख्यातम्। ननु यदि माया ब्रह्मणा सहाविभागापन्ना तर्हि तस्या अनिर्वाच्य-त्वाद् ब्रह्मणोऽपि तत्प्रसङ्ग इति कथं नो सदासीदिति सत्त्वप्रतिषेधः। मैवम्। अयुक्तिदृष्ट्यैक्या-वभासेऽपि युक्त्या विविच्य मायांशस्यानिर्वाच्यत्वं ब्रह्मणः सत्त्वं च प्रतिपादितम्। ननु दृग-दृश्याविति द्वावेव पदार्थावानीदवातं स्वधयेति तौ चेदङ्गीक्रियेते तत्किमपरमवशिष्यते यन्नासीदृज इत्यादिना प्रतिषिध्येत तत्राह तस्मादिति। तस्माद्ध तस्मात्खलु पूर्वोक्तान्मायासहिताद् ब्रह्मणो-ऽन्यत्किञ्चन किमपि वस्तु भूतभौतिकात्मकं जगन्नास न बभूव। छन्दस्युभयथा ( पा० ३-४-११७ ) इति लिटः सार्वधातुकत्वादस्तेर्भूभावाभावः। ननु तदानीमन्यस्य सत्त्वे निषेधो न शङ्क्यः। असत्त्वे चाप्रसक्तत्वान्न निषेधोपयोग इत्यत आह पर इति। परः परस्तात्सृष्टेरूर्ध्वं वर्तमानमिदं जगत्तदानीं न बभूवेत्यर्थः। अन्यथोक्तरीत्या कचिदपि निषेधो न स्यादिति भावः ॥२॥

अथ तृतीया। ननूक्तप्रकारेण यदि पूर्वमिदं जगन्नासीत्कथं तर्हि तस्य जन्म। जायमानस्य जनिक्रियायां कर्तृत्वेन कारकत्वात्। कारकं च कारणावान्तरविशेष इति कारणस्य सतो नियतपूर्वक्षणवर्तित्वस्यावश्यंभावात्। अथैतद्दोषपरिजिहीर्षया जनिक्रियायाः प्रागपि तद्विद्यत इत्युच्यते, कथं तस्य जन्म। अत आह तमसा गूळ्हमग्र इति। अग्रे सृष्टेः प्राक् प्रलयदशायां भूतभौतिकं सर्वं जगत्तमसा गूळ्हम्। यथा नैशं तमः सर्वपदार्थजातमावृणोति तद्वत्। आत्मतत्त्वस्यावारकत्वान्मायापरसञ्ज्ञं भावरूपाज्ञानमत्र तम इत्युच्यते। तेन तमसा निगूढं संवृतं कारणभूतेन तेनाच्छादितं भवति। आच्छादकात्तस्मात्तमसो नामरूपाभ्यां यदाविर्भवनं तदेव तस्य जन्मेत्युच्यते। एतेन कारणावस्थायामसदेव कार्यमुत्पद्यत इत्यसद्वादिनोऽसत्कार्यवादिनो ये मन्यन्ते ते प्रत्याख्याताः। ननु कारणे तमसि तज्जगदात्मकं कार्यं विद्यते चेत् कथं नासीद्रज इत्यादिनिषेधः। तत्राह तम आसीदिति। तमो भावरूपाज्ञानं मूलकारणम्। तद्रूपता तदात्मता। यतः सर्वं जगत् प्राक् तम आसीदतो निषिध्यत इत्यर्थः। नन्वावारकत्वादावारकं तमः कर्तृ, आवार्यत्वाज्जगत् कर्म। कथं तयोः कर्मकर्त्रोस्तादात्म्यम्। तत्राह अप्रकेतमिति। अप्रकेतमप्रज्ञायमानम्। अयमर्थः। यद्यपि जगतस्तमसश्च कर्मकर्तृभावो यौक्तिको विद्यते तथापि व्यवहारदशायामिव तस्यां दशायां नामरूपाभ्यां विस्पष्टं न ज्ञायत इति तादात्म्यवर्णनम्। अत एव मनुना स्मर्यते। आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः (म० १-५)॥ इति। कुतो वा न प्रज्ञायते तत्राह सलिलम्। सल गतौ। औणादिक इलच्। इदं दृश्यमानं सर्वं जगत्सलिलं कारणेन सङ्गतमविभागापन्नमाः। आसीत्। अस्तेर्लङि तिपि बहुलं छन्दसि ( पा० ७-३-९७ ) इतीडभावे हल्ङ्याब्भ्यः० ( पा० ६-१-६८ ) इति तिलोपे तिप्यनस्तेः ( पा० ८-२-७३ ) इति पर्युदासाद्दकाराभावः। यद्वा सलिलमिति लुप्तोपमम्। सलिलमिव। यथा क्षीरेणाविभागापन्नं नीरं दुर्विज्ञानं तथा तमसाविभागापन्नं जगन्न शक्यविज्ञानमित्यर्थः। ननु विविधविचित्ररूपभूयसः प्रपञ्चस्य कथमतितुच्छेन तमसा क्षीरेण नीरस्येवाभिभवः। अथ तमोऽपि क्षीरवद् बलवदित्येवोच्यते तर्हि दुर्बलस्य जगतः सर्गसमयेऽपि नोद्भवसम्भव इत्यत आह तुच्छ्येनेति। आ समन्ताद्भवतीत्याभु। तुच्छ्येन। छान्दसो यकारोपजनः। तुच्छेन तुच्छकल्पेन सदसद्विलक्षणेन भावरूपाज्ञानेनापिहितं छादितमासीत्। दधातेः कर्मणि निष्ठा। दधातेर्हिः। गतिरनन्तरः ( पा० ६-४-५९ ) इति गतेः प्रकृतिस्वरत्वम्। एवमेकीभूतं कारणेन तमसाविभागतां प्राप्तमपि तत् कार्यजातं तपसः स्रष्टव्यपर्यालोचनरूपस्य महिना महिम्ना माहात्म्येनाजायत। उत्पन्नम्। तपसः स्रष्टव्यपर्यालोचनरूपत्वं चान्यत्राम्नायते। यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप इति ( मु० उ० १-१-९ )॥३॥

अथ चतुर्थी। ननूक्तरीत्या यदीश्वरस्य पर्यालोचनं जगतः पुनरुत्पत्तौ कारणं तदेव किंनिबन्धनमित्यत आह कामस्तदग्र इति। अग्रेऽस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि कामः समवर्तत। सम्यगजायत। सिसृक्षा जातेत्यर्थः। ईश्वरस्य सिसृक्षा वा किंहेतुकेत्यत आह मनस इति। मनसोऽन्तःकरणस्य सम्बन्धिवासनाशेषेण मायायां विलीनेऽन्तःकरणे समवेतम्। सामान्यापेक्षमेकवचनम्। सर्वप्राण्यन्तःकरणेषु समवेतमित्यर्थः। एतेनात्मनो गुणाधारत्वं प्रत्याख्यातम्। तादृशं रेतो भाविनः प्रपञ्चस्य बीजभूतं प्रथममतीते कल्पे प्राणिभिः

कृतं पुण्यापुण्यात्मकं कर्म यथतः कारणात्सृष्टिसमय आसीत्। अभवत्। भूण्णु वर्धिष्णत्वजायत। परिपक्वं सत्फलोन्मुखमासीदित्यर्थः। तत्ततो हेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षाजायतेत्यर्थः। तस्यां च जातायां स्रष्टव्यं पर्यालोच्य ततः स सर्वं जगत् सृजति। तथा चाम्नायते—सोऽकामयत बहुः स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वेदं सर्वमसृजत यदिदं किञ्च इति श्रुत्यात्मनेत्थमवगमितेऽर्थे विद्वदनुभवमपि अनुग्राहकत्वेन प्रमाणयति सत इति। सतः सत्त्वेनेदानीमनुभूयमानस्य सर्वस्य जगतो बन्धुं बन्धकं हेतुभूतं कल्पान्तरे प्राण्यनुष्ठितं कर्मसमूहं कवयः क्रान्तदर्शिनोऽतीतानागतवर्तमानाभिज्ञा योगिनो हृदि हृदये निरुद्धया मनीषा मनीषया बुद्ध्या। सुपां सुलुक्० ( पा० ७-१-३९ ) इति तृतीयाया लुक्। प्रतीष्य विचार्य। अन्येषामपि० ( पा० ६-३-१३७ ) इति सांहितिको दीर्घः। असति सद्विलक्षणेऽव्याकृते कारणे निरविन्दन्। निष्कृष्यालभन्त। विविच्याजानन्नित्यर्थः ॥४॥

अथ पञ्चमी। एवमविद्याकामकर्माणि सृष्टेर्हेतुत्वेनोक्तानि। अधुना तेषां स्वकार्यजनने शैघ्र्यं प्रतिपाद्यते। येयं नासदासीदित्यविद्या प्रतिपादिता, यश्च कामस्तदग्र इति कामः, मनसो रेतः प्रथमं यदासीदिति कर्मैषामविद्याकामकर्मणां वियदादिभूतजातानि सृजतां रश्मी रश्मि-सदृशो यथा सूर्यरश्मिरुदयानन्तरं निमेषमात्रेण युगपत्सर्वं जगद् व्याप्नोतीति तथा शीघ्रं सर्वत्र व्याप्नुवन् यः कार्यवर्गो विततो विस्तृत आसीत्। स्विदासीदिति वक्ष्यमाणमत्रापि सम्बध्यते। विचार्यमाणानाम् ( पा० ८-२-९७ ) इति प्लुतः। तत्रोदात्त इत्यनुवृत्तेः स चोदात्तः। स्विदिति वितर्के। स कार्यवर्गः प्रथमतः किं तिरश्चीनस्तिर्यगवस्थितो मध्ये स्थित आसीत्। किं वा अधोऽधस्तात् आसीत्। आहोस्विदुपर्युपरिष्टात्किमासीत्। उपरिस्विदासीदिति च ( पा० ८-२-१०२ ) इत्यनुदात्तः प्लुतः। आत्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निः (तै० उ० २-१) इत्यादिकया पञ्चमीश्रुत्या तत उद्गातारं ततो होतारमितिवत्क्रमप्रतिपत्तौ सत्यामपि विद्युत्प्रकाशवत्सर्गस्य शीघ्रव्यापनेन तस्य क्रमस्य दुर्लक्षणत्वादेतेषु त्रिषु स्थानेषु प्राथम्यं कुत्रेति विचार्यते। एवं नाम शीघ्रं सर्वतो दिक्षु सर्गो निष्पन्न इत्यर्थः। एतदेव विभजते। सृष्टेषु कार्येषु मध्ये केचिद्भावा रेतोधा रेतसो बीजभूतस्य कर्मणो विधातारः कर्तारो भोक्तारश्च जीवा आसन् अन्ये भावा महिमानः। स्वार्थिक इमनिच्। महान्तो वियदादयो भोग्या आसन्। एवं मायासहितः परमेश्वरः सर्वं जगत्सृष्ट्वा स्वयं चानुप्रविश्य भोक्तृभोग्यादिरूपेण विभागं कृतवानित्यर्थः। अयमेवार्थस्तैत्तिरीयके तत्सृष्ट्वा तदेवानुप्राविशद् ( तै० उ०२-६ ) इत्यारभ्य प्रतिपाद्यते। तत्र च भोक्तृभोग्ययोर्मध्ये स्वधा। अन्ननामैतत्। भोग्यप्रपञ्चोऽवस्तात् अवरो निकृष्ट आसीत्। प्रयतिः प्रयतिता भोक्ता परस्तात्पर उत्कृष्ट आसीत्। भोग्यप्रपञ्चं भोक्तृप्रपञ्चस्य शेषभूतं कृतवान् इत्यर्थः। विभाषा परावराभ्याम् ( पा० ५-३-२९ ) इति प्रथमार्थेऽस्तातिः। अस्ताति च ( पा० ५-३-४० ) इत्यवरशब्दस्यावादेशः। अवस्तादिति संहितायामीषाअक्षादि-त्वात्प्रकृतिभावः ॥५॥

अथ षष्ठी। एवं भोक्तृभोग्यरूपेण सृष्टिः संग्रहेण प्रतिपादिता। एतावद्वा इदमन्न-ञ्चैवान्नादश्च सोम एवान्नमग्निरन्नाद इतिवत्। अथेदानीं सा सृष्टिर्दुर्विज्ञानेति न विस्तरेणा-भिहितेत्याह। को अद्धेति। कः पुरुषोऽद्धा पारमार्थ्येन वेद। जानाति। को वेहास्मिन्

लोके प्रवोचत् प्रब्रूयात्। इयं दृश्यमाना विसृष्टिर्विविधा भूतभौतिकभोक्तृभोग्यादिरूपेण बहुप्रकारा सृष्टिः कुतः कस्मादुपादानकारणात्कुतः कस्माच्च निमित्तकारणादाजाता। समन्ताज्जाता। प्रादुर्भूता। एतदुभयं सम्यक्को वेद। को वा विस्तरेण वक्तुं शक्नुयादित्यर्थः। ननु देवा आजानतः सर्वज्ञास्ते च वक्तुं शक्नुवन्तीत्यत आह अर्वागिति। देवाश्चास्य जगतो विसर्जनेन वियदादिभूतोत्पत्त्यनन्तरं विविधं यत् भौतिकं सर्जनं सृष्टिस्तेनार्वागर्वाचीनाः कृताः। भूतसृष्टेः पश्चाज्जाता इत्यर्थः। तथाविधास्ते कथं स्वोत्पत्तेः पूर्वकालीनां सृष्टिं जानीयुः। न जानन्ति किल। तद्व्यतिरिक्तः को नाम मनुष्यादिर्वेद तज्जगत्कारणं जानाति यतः कारणात्कृत्स्नं जगदाबभूव। अजायत ॥६॥

अथ सप्तमी। उक्तप्रकारेण यथेदं जगत्सर्जनं दुर्विज्ञानमेवं सृष्टं तज्जगद्धरमपीत्याह। इयमिति। यत उपादानभूतात्परमात्मन इयं विसृष्टिर्विविधा गिरिनदीसमुद्रादिरूपेण विचित्रा सृष्टिराबभूवाजाता सोऽपि किल यदि वा दधे धारयति यदि वा न धारयति। एवं च को नामान्यो धर्तुं शक्नुयात्। यदि धारयेदीश्वर एव धारयेन्नान्य इत्यर्थः। एतेन कार्यस्य धारयितृत्वप्रतिपादनेन ब्रह्मण उपादानकारणत्वमुक्तं भवति। तथाच पारमर्षं सूत्रम् प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ( वे० सू० १-४-२३ ) इति। यद्वाऽनेनार्द्धर्चेन पूर्वोक्तं सृष्टेर्दुर्विज्ञानत्वमेव द्रढयति। को वेदेत्यनुवर्तते। इयं विविधा सृष्टिर्यत आ बभूव समन्तादजायतेति को वेद। न कोऽपि। नास्त्येव जगतो जन्म कदाचिदनीदृशं जगदिति बहवो भ्रान्ता भवन्त्यपि। यतः। जनिकर्तुः प्रकृतिः ( पा० १-४-३० ) इत्यपादानसंज्ञायां पञ्चम्यास्तसिल्। यस्मात्परमात्मन उपादानभूतादाबभूव तं परमात्मानं को वेद। न कोऽपि। प्रकृतितः परमाणुभ्यो वा तज्जन्मेति हि बहवो भ्रान्ताः। तथा स एवोपादानभूतः परमात्मा स्वयमेव निमित्तभूतोऽपि सन् यदि वा दधे विदधे इदं जगद्विससर्ज यदि वा न विससर्ज। असन्दिग्धे सन्दिग्धवचनमेतच्छास्त्राणि चेत्प्रमाणं स्युरिति यथा। स एव विदधे। तं को वेद। अजानन्तोऽपि बहवो जडात्प्रधानादकर्तृकमेव वेदं जगत्स्वयमजायतेति विपरीतं प्रतिपन्नाः। विदधतो विधानमजानन्तोऽपि। स एवोपादानभूत इत्यपि को वेद। न कोऽपि। उपादानादन्यस्तटस्थ एवेश्वरो विदध इति हि बहवः प्रतिपन्नाः। देवा अपि यन्न जानन्ति तदर्वाचीनानामेषां तत्परिज्ञाने केव कथेत्यर्थः। यद्येवं जगत्सृष्टिरत्यन्तदुरवबोधना तर्हि न सा प्रमाणपद्धतिमध्यास्ते इत्याशङ्क्य तत्सद्भावे ईश्वरं वेदः प्रमाणयति यो अस्येति। अस्य भूतभौतिकात्मकस्य जगतो योऽध्यक्ष ईश्वर परम उत्कृष्टे सत्यभूते व्योम व्योमन्याकाश आकाशवन्निर्मले स्वप्रकाशे। यद्वा। अवतेस्तर्पणार्थादन्येभ्योऽपि दृश्यन्ते ( पा० ३-२-७५ ) इति मनिन्। नेड्वशि कृति ( पा० ७-२-८ ) इतीट्प्रतिषेधः। ज्वरत्वर० ( पा० ६-४-२० ) इत्यादिना वकारोपधयोरूठ्। सप्तम्या लुक्। न ङिसम्बुद्ध्योः ( पा० ८-२-८ ) इति नलोपप्रतिषेधः। व्योमनि विशेषेण तृप्ते निरतिशयानन्दस्वरूप इत्यर्थः। यद्वावतिर्गत्यर्थः। व्योमनि विशेषेण गन्तव्ये देशकालवस्तुभिरपरिच्छिन्न इत्यर्थः। अथवाऽवतिर्ज्ञानार्थः। व्योमनि विशेषेण ज्ञातरि। विशिष्टज्ञानात्मनि। ईदृशे स्वात्मनि प्रतिष्ठितः। श्रूयते हि सनत्कुमारनारदयोः संवादे स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि ( छा० उ० ७-२४ ) इति। ईदृशो यः परमेश्वरः सोऽङ्ग। अङ्गेति प्रसिद्धौ। सोऽपि नाम

वेद जानाति। यदि वा न वेद न जानाति को नामान्यो जानीयात्। सर्वज्ञ ईश्वर एव तां सृष्टिं जानीयात् नान्य इत्यर्थः ॥७॥

॥ ४० ॥

१०·१४५

इमामिति षड्चं सप्तदशं सूक्तमिन्द्राण्या आर्षम्। षष्ठी पङ्क्तिः शिष्टा अनुष्टुभः। अनेन सूक्तेन सपत्न्या बाधनं प्रतिपाद्यते। अतएव सूक्तजपादिना सपत्न्या विनाशो भवति। अतस्तद्देवताकमिदम्। तथा चानुक्रान्तम्। इमामिन्द्राण्युपनिषत् सपत्नीबाधनमानुष्टुभं तु पङ्क्त्यन्तम् इति। अस्य सूक्तस्य विनियोगो भगवताऽऽपस्तम्बेन कस्मिंश्चित्सपत्नीघ्नप्रयोगविशेषे दर्शितः—त्रिःसप्तैर्यवैः पाठां परिकिरति यदि वारुण्यसि वरुणात्त्वा निष्क्रीणामि यदि सोम्यासि सोमात्त्वा निष्क्रीणामीति। श्वोभूत उत्थायोत्थाप्योत्तराभिस्तिसृभिरभिमन्त्र्योत्तरया प्रतिच्छन्नां हस्तयोराबध्य शयनकाले बाहुभ्यां भर्तारं परिगृह्णीयात् उपधानलिङ्गया वश्यो भवति सपत्नीबाधनं चेति। अयमर्थः—आद्यया पाठा नामौषधिः खातव्या। ततस्तिसृभिरोषधेरभिमन्त्रणं षष्ठ्या बद्ध्वा सौषधिर्यथा भर्तारं स्पृशति तथा तस्य भर्तुरालिङ्गनमिति।

तत्र प्रथमामाह। इमामोषधिं पाठाख्यां वीरुधं लतारूपां बलवत्तमां स्वकार्यकरणेऽतिशयेन बलवतीं खनामि। उन्मूलयामि। ययौषध्या सपत्नीम्। समान एकः पतिर्यस्याः सा सपत्नी। तामेषा वधूर्बाधते हिनस्ति। यया च पतिं भर्तारं संविदते सम्यगसाधारण्येन लभते ॥१॥

अथ द्वितीया। हे उत्तानपर्णे। उत्तानान्यूर्ध्वमुखानि पर्णानि पत्राणि यस्यास्तादृशि हे सुभगे सौभाग्यहेतुभूते हे देवजूते देवेन स्रष्ट्रा प्रेरिते हे सहस्वत्यभिभवनवति। ईदृशे पाठे मे मम सपत्नीं स्त्रियं पराधम। धमतिर्गतिकर्मा। पतिं च मे ममैव केवलमसाधारणं कुरु ॥२॥

अथ तृतीया। हे उत्तर उत्कृष्टतरे पाठेऽहमुत्तरोत्कृष्टतरा भूयासम्। उत्तराभ्यो लोके या उत्कृष्टतराः सन्ति ताभ्योऽपि अहमुत्तरोत्कृष्टतरैव त्वत्प्रसादाद्भवेयम्। अथानन्तरं मम या सपत्नी साधराभ्यो निकृष्टाभ्योऽपि अधरा निकृष्टतरा भवतु ॥३॥

अथ चतुर्थी। अस्याः सपत्न्या नाम सञ्ज्ञामपि नहि गृभ्णामि नैव गृह्णामि। उच्चारयामि। नो खलु काचिदस्मिञ्जने सपत्न्याख्ये रमते। क्रीडति। अपि च तां सपत्नीं परां परावतमेवातिशयेन दूरदेशमेव गमयामसि। प्रापयामः। अतिशयेन भर्त्रा वियोजयाम इत्यर्थः ॥४॥

अथ पञ्चमी। हे ओषधेऽहं त्वत्प्रसादात्सहमानास्मि। सपत्न्या अभिभवित्री भवामि। अथापि च त्वमपि सासहिरसि। तस्या अभिभवित्री भवसि। आवामुभे अपि सहस्वती अभिभवित्र्यौ भूत्वी भूत्वा मे मम सपत्नीं सहावहै। अभिभवाव ॥५॥

अथ षष्ठी। हे पते ते तव सहमानां सपत्न्या अभिभवित्रीमिमामोषधिमुपाधाम्। शिरस उपाधानं करोमि। सहीयसाभिभवितृतरेण तेनोपधानेन त्वामभ्यधाम्। अभितो धारयामि। ते तव भर्तुर्मनो मामनुलक्ष्य प्रधावतु। प्रकर्षेण शीघ्रं गच्छतु। तत्र निदर्शनद्वयमुच्यते गौरिव।

यथा गौर्वत्सं शीघ्रं गच्छति, यथा निम्नेन मार्गेण वारिव वारुदकं यथा स्वभावतो गच्छति तद्वत्। अनेन निदर्शनद्वयेनौत्सुक्यातिशयः स्वाभाविकत्वं च प्रतिपाद्यते ॥६॥

॥ ४१ ॥

१०·१४६

अरण्यानीति षडृचमष्टादशं सूक्तमिरम्मदपुत्रस्य देवमुनेरार्षम्। महदरण्यमरण्यानी। तद्देवताकम्। आनुष्टुभम्। तथा चानुक्रान्तम्—अरण्यान्यैरम्मदो देवमुनिररण्यानीं तुष्टावेति। गतो विनियोगः।

अथ प्रथमा। हे अरण्यानि। अरण्यस्य पालयित्री काचिदधिदेवतारण्यानीति नैरुक्ताः। वैयाकरणास्तु हिमारण्ययोर्महत्त्वे ( पा० ग० वा० ४-१-४१ ) इत्यरण्यस्य महत्त्वे ङीषं स्मरन्ति। अरण्याधिदेवतेऽरण्यानि कान्ताराणि प्रति याऽसौ त्वं प्रेव नश्यसि। इवः सम्प्रत्यर्थे। नशतिः प्राप्तिकर्मा। अत्र व्यत्ययेन श्यन्। संप्रति रक्षणाय प्राप्नोषि। यद्वा निर्जने देशे वर्तमानत्वा-न्नष्टेव प्रतीयसे। सा त्वं कथा कथं ग्रामं न पृच्छसि। निर्जनेऽरण्ये कथं रमसे। नूनं त्वा त्वां भीर्भयं न विन्दति न लभते किम्। वितर्के प्लुतः। इवः संप्रत्यर्थे परिभयार्थे वा। अत्र निरुक्तम्। अरण्यान्यरण्यस्य पत्नि अरण्यमपार्णं भवति ग्रामादरमणं भवतीति वा। अरण्यानीत्येनामामन्त्रयते यासावरण्यानि वनानि पराचीव नश्यसि कथं ग्रामं न पृच्छसि न त्वा भीर्विन्दतीवेतीवः परिभयार्थे वा (नि० ८-३०) इति ॥१॥

अथ द्वितीया। वृषारवाय। वृषा सेचनसमर्थो रवः शब्दो यस्य सूक्ष्मजन्तुविशेषस्य। झिल्ल्याख्यस्य स तथोक्तः। कटुशब्दवानित्यर्थः। तस्मै वृषारवाख्याय वदते चीचीशब्दं कुर्वते। चिच्चिकश्चीचीशब्दं कुर्वन्यो जन्तुर्यद्यदोपधावति वृषारवाय स्वशब्दस्य प्रत्युत्तररूपेण चीचीशब्दकारिणि उपगच्छति। उपेत्य पालयति वा। तत्र दृष्टान्तः आघाटिभिरिव। आघा-ट्यो घाटालिकाः काण्डवीणाः। ताभिर्धावयन्निषादादिसप्तस्वरान्विशोधयन्गायक इव। तद्वदर-ण्यानिः सारण्यानी महीयते पूज्यते। इन्द्रवरुण० (पा० ४-१-४८) इत्यादिना ङीप्। तत्सन्नि-योगेनानुगागमः। छान्दसो ह्रस्वः। अतएव हल्ङ्यादिसुलोपाभावः ॥२॥

अथ तृतीया। उतापिच गावइव गवयाद्या मृगा अस्यामरण्यान्यामदन्ति। तृणादिकं भक्षयन्ति। उतापिच लतागुल्मादिकं वेश्मेव गृहमिव दृश्यते। उतो अपि चारण्यानिरियम-रण्यानी सायं सायंकाले। इवः संप्रत्यर्थे। संप्रति शकटीः शकटान् दार्वाद्याहरणायागतान् सर्जति। विसर्जयति। यद्वा शकटीः सर्जतीव दृश्यते। अहनि महदरण्यं शकटीभिः प्राप्य सर्वे जना अरण्ये कृत्तं काष्ठादिकं शकटीष्वारोप्य सायंकाले तस्मान्निर्गच्छन्ति। तदभिप्रायेणेदं वचनम् ॥३॥

अथ चतुर्थी। अङ्ग हे अरण्यानि, एष त्वदधिष्ठिते महारण्ये संप्रति वर्तमानो वामाह्वयति। चान्यो दारु काष्ठमपावधीत्। अपहन्ति। तथा सायं सायंकाले रात्रावरण्यान्यां महारण्ये निवसन्मनुष्यो नानाविधपक्षिमृगादिशब्दं शृण्वन्नकश्चित्कश्चित्तस्करादिराक्रोशतीति भीतः सन्मन्यते बुध्यते ॥४॥

अथ पञ्चमी। न वै न खल्वरण्यानिररण्यानी हन्ति। तत्र निवसन्तं हिनस्ति। यद्यन्यो व्याघ्रचौरादिर्नाभिगच्छति। तर्हि स्वादो रसवत आम्रादेः फलस्य। द्वितीयार्थे षष्ठी। फलं जग्ध्वाय भक्षयित्वा तत्र निवसन्पुरुषो यथाकामं यथेच्छं निपद्यते। निगच्छति। वर्तते। क्त्वाप्रत्यये अदो जग्धिर्ल्यप्ति किति (पा० २-४-३६) इति जग्ध्यादेशः। क्त्वो यक् (पा० ७-१-४७) इति यक्॥५॥

अथ षष्ठी। आञ्जनगन्धिम्। अञ्जनस्येदमाञ्जनं कस्तूर्यादि। तस्य गन्ध इव गन्धो यस्यास्तादृशी। उपमानाच्च (पा० ५-४-१३७) इति गन्धस्येदन्तादेशः। अतएव सुरभि सौरभोपेताम्। बह्वन्नां बहुभिरन्नैः अदनीयैः फलमूलादिभिरुपेताम्। अकृषीवलाम्। कृषिरेषामस्तीति कृषीवलाः कर्षकाः। रजःकृषि० (पा० ५-२-११२) इत्यादिना वलच्। वले (पा० ६-३-११८) इति दीर्घः। तैर्वियुक्तां तादृशीं मृगाणां मातरं जनयित्रीमरण्यानिमरण्यानीमहं प्राशंसिषम्। उक्तेन प्रकारेण स्तुतवानस्मि॥६॥

॥ ४२ ॥

१०·१५१

श्रद्धयेति पञ्चर्चं त्रयोविंशं सूक्तमानुष्टुभं श्रद्धादैवत्यम्। कामगोत्रजा श्रद्धा नामर्षिका। तथा चानुक्रम्यते। श्रद्धया श्रद्धा कामायनी श्राद्धमानुष्टुभं त्विति। लैङ्गिको विनियोगः।

तत्र प्रथमा। पुरुषगतोऽभिलाषविशेषः श्रद्धा। तया श्रद्धयाग्निर्गार्हपत्यादिः समिध्यते सन्दीप्यते। यदा हि पुरुषे श्रद्धाग्निगोचर आदरातिशयो जायते तदैव पुरुषोऽग्नीन्प्रज्वालयति नान्यदा। श्रद्धयैव हविः पुरोडाशादिर्हविश्च हूयते। आहवनीये प्रक्षिप्यते। यद्वा अस्य सूक्तस्य द्रष्ट्र्या श्रद्धाख्ययाग्निः समिध्यते। श्रद्धामुक्तलक्षणायाः श्रद्धाया अभिमानिदेवतां भगस्य भजनीयस्य धनस्य मूर्धनि प्रधानभूते स्थानेऽवस्थितां वचसा वचनेन स्तोत्रेणावेदयामसि। अभितः प्रख्यापयामः। इदन्तो मसिः॥१॥

अथ द्वितीया। हे श्रद्धे ददतश्चरुपुरोडाशादीनि प्रयच्छतो यजमानस्य प्रियमभीष्टं फलं कुरु। दिदासतो दातुमिच्छतश्च हे श्रद्धे प्रियं कुरु। मे मम सम्बन्धिषु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु कृतयज्ञेषु जनेषु चेदमुदितमुक्तं प्रियं कृधि कुरु॥२॥

अथ तृतीया। देवा इन्द्रादयोऽसुरेषूग्रेषु बलेषु यथा श्रद्धां चक्रिरेऽवश्यमिमे हन्तव्या इत्यादरातिशयं कृतवन्त एवं श्रद्धावत्सु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु यष्टृष्वस्माकमस्मत्सम्बन्धिषु तेषूदितं तैरुक्तं प्रार्थितं फलजातं कृधि कुरु॥३॥

अथ चतुर्थी। देवा यजमाना मनुष्याश्च वायुगोपाः। वायुर्गोपा रक्षिता येषां तादृशाः सन्तः श्रद्धां देवीमुपासते प्रार्थयन्ते। हृदय्यया। हृदये भवा हृदय्या। तथाविधयाकूत्या संकल्परूपया क्रियया श्रद्धामेव परिचरन्ति सर्वे जनाः। कुत इत्यत आह। यतः कारणाच्छ्रद्धया हेतुभूतयैव धनं विन्दते लभते श्रद्धावाञ्जनः। तत इत्यर्थः॥४॥

अथ पञ्चमी। श्रद्धां देवीं प्रातः पूर्वाह्णे हवामहे। तथा मध्यन्दिनं परि। लक्षणे परेः

कर्मप्रवचनीयत्वम्। मध्यन्दिनं परिलक्ष्य। मध्यन्दिन इत्यर्थः। मध्याह्नेऽपि तां श्रद्धामाह्वयामहे। सूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य निम्रुचस्तमयवेलायां सायंसमयेऽपि तामेव श्रद्धामाह्वयामहे। ईदृग्रूपे हे श्रद्धे नोऽस्मानिह लोके कर्मणि वा श्रद्धापय। श्रद्धावतः कुरु ॥५॥

॥४३॥

१०.१७०

विभ्राडिति चतुर्ऋचमेकोनविंशं सूक्तं सूर्यपुत्रस्य विभ्राटसञ्ज्ञकस्यार्षम्। सूर्यदेवत्यम्। आदौ तिस्रो जगत्यः। द्व्यष्टकद्विद्वादशकत्वात्तास्तारपङ्क्तिश्चतुर्थी। तथा चानुक्रान्तम्—विभ्राड्विभ्राट् सौर्यः सौर्यं जागतमास्तारपङ्क्त्यन्तमिति। विषुवति निष्केवल्ये आद्यस्तृचः स्तोत्रियः। सूत्रितञ्च विभ्राड् बृहत्पिबतु सोम्यं मधु नमो मित्रस्य वरुणस्य चक्षस इति स्तोत्रियानुरूपौ (आ० श्रौ० ८-६) इति। वाजपेयेऽतिरिक्तोक्थस्य विभ्राडित्येषा शस्त्रयाज्या। सूत्यते हि विभ्राड् बृहत्पिबतु सोम्यं मध्विति याज्या तस्य गवां शतानाम् (आ० श्रौ० ८-८) इति।

सैषाद्या। विभ्राड्विभ्राजमानो विशेषेण दीप्यमानः सूर्यो बृहन्महत्परिवृढं सोम्यं सोममयं मधु पिबतु। किं कुर्वन्। यज्ञपतौ यजमानेऽविह्रुतमकुटिलमायुर्दधत् कुर्वन्। यः सूर्यो वातजूतो वातेन महावायुना प्रेर्यमाणः सन् त्मनाऽऽत्मना स्वयमेवाभिरक्षति। सर्वं जगदभिपश्यन्पालयति। राशिचक्रस्य वायुप्रेर्यत्वात्सूर्यस्यापि तत्प्रेर्यत्वम्। स सूर्यः प्रजाः पुपोष वृष्ट्यादिप्रदानेन पोषयति पुरुधा बहुधा विराजति विशेषेण दीप्यते च ॥१॥

अथ द्वितीया। विभ्राड्विभ्राजमानं बृहत्प्रौढं सुभृतं सुपुष्टं वाजसातमं वाजस्यान्नस्य बलस्य वा दातृतमं धर्मन्धर्मणि वायुना धारयितव्ये दिवो लोकस्य धरुणे धारके सूर्यमण्डलेऽर्पितं निक्षिप्तं सत्यमविनश्वरममित्रहामित्राणामप्रियाणां हन्तृ वृत्रहा वृत्राणामावृण्वतां हन्तृ दस्युहन्तमं दस्यूनामुपक्षपयितॄणां हन्तृतममसुरहासुराणां क्षेप्तॄणां घातकं सपत्नहा सपत्नानां सहजशत्रूणामपि घातकमीदृग्भूतं ज्योतिः सौरं तेजो जज्ञे प्रादुर्भवति ॥२॥

अथ तृतीया। इदं सौरं तेजः श्रेष्ठं प्रशस्यतमं ज्योतिषामन्येषां ग्रहनक्षत्रादीनामपि ज्योतिः प्रकाशकम् अतएवोत्तममुत्कृष्टं विश्वजित् विश्वस्य सर्वस्य जेतृ। धनजित् धनस्य च जेतृ बृहत्प्रभूतमुच्यते। एवंगुणविशिष्टमिति सर्वैरभिधीयते। अपि च विश्वभ्राड् विश्वस्य प्रकाशयिता भ्राजो भासमानो महि महान्सूर्यो दृशे दर्शनायोरु विस्तीर्णं सहस्तमसोऽभिभवितृ अच्युतं च्युतिरहितमविनाशमोजस्तेजोरूपं बलं पप्रथे। विस्तारयति ॥३॥

अथ चतुर्थी। हे सूर्य ज्योतिषा तेजसा स्वः स्वयं जगद्विभ्राजन् विभ्राजयन्दिवः सम्बन्धि रोचनं स्थानमगच्छः। प्राप्नोः। विश्वकर्मणा सर्वव्यापारहेतुना विश्वदेव्यावता विश्वेषां देवानां हितो यागादिर्विश्वदेव्यः तद्वता। येन सौरेण तेजसेमेमानि परिदृश्यमानानि विश्वा सर्वाणि भुवनानि उदकानि भौमान्याभृता घर्मकाले आभृतानि भवन्ति। यद्वा सर्वाणि भूतजातान्याभृता समन्ताद्धृतानि पोषितानि भवन्ति तेन ज्योतिषेत्यन्वयः ॥४॥

॥ ४४ ॥

१०·१९१

संसमिति चतुर्ऋचं चत्वारिंशं सूक्तं संवननस्यार्षम्। समानो मन्त्र इति तृतीया त्रिष्टुप् शिष्टास्तिस्रोऽनुष्टुभः। प्रथमाया अग्निर्देवता शिष्टानां सञ्ज्ञानम्। अनुक्रम्यते च संसं चतुष्कं संवननः संज्ञानमाद्याग्नेयी तृतीया त्रिष्टुप् तृतीया त्रिष्टुबिति। आनुष्टुभं त्विति पूर्वमुक्तत्वादवशिष्टानामनुष्टुप्त्वम्। सूक्तविनियोगो लैङ्गिकः।

तत्र प्रथमा। हे वृषन् कामानां वर्षितरग्नेऽर्य ईश्वरस्त्वम्। अर्यः स्वामिवैश्ययोः ( पा० ३-१-१०३) इति यत्प्रत्ययान्तो निपातितः। अर्यस्य स्वाम्याख्यायाम् (फि० १८) इत्यन्तोदात्तत्वम्। स त्वं विश्वानि सर्वाणि भूतजातानि संसम्। प्रसमुपोदः पादपूरणे ( पा० ८-१-६ ) इति समो द्विर्वचनम्। इच्छब्दोऽवधारणे। आ समन्तात्संयुवसे। मिश्रयसि। देवेषु मध्ये त्वमेव सर्वाणि भूतजातानि वैश्वानरात्मना व्याप्नोषि। नान्य इत्यर्थः। किम्बेळ इडायाः पृथिव्याः पदे स्थाने उत्तरवेदिलक्षणे। एतद्वा इलायास्पदं यदुत्तरवेदी नाभिः (ऐ० ब्रा० १-२८) इति ब्राह्मणम्। तत्र त्वं समिध्यसे ऋत्विग्भिः सन्दीप्यसे। स तादृशस्त्वं नोऽस्माकं वसूनि धनान्याभर। आहर ॥१॥

अथ द्वितीया। हे स्तोतारो यूयं संगच्छध्वम्। संगताः सम्भूता भवत। समो गम्यृच्छि० ( पा० १-३-२० ) इत्यादिना गमेरात्मनेपदम्। तथा संवदध्वम्। सहवदत। परस्परं विरोधं परित्यज्यैकविधमेव वाक्यं ब्रूतेति यावत्। व्यक्तवाचां समुच्चारणे ( पा० १-३-४८ ) इति वदेरात्मनेपदम्। वो युष्माकं मनांसि संजानतां समानमेकरूपमेवार्थमवगच्छन्तु। संप्रतिभ्यामनाध्याने ( पा० १-३-४६ ) इति जानातेरात्मनेपदम्। यथा पूर्वे पुरातना देवाः सञ्जानाना ऐकमत्यं प्राप्ता हविर्भागमुपासते यथास्वं स्वीकुर्वन्ति तथा यूयमपि वैमत्यं परित्यज्य धनं स्वीकुरुतेति शेषः ॥२॥

अथ तृतीया। पूर्वोऽर्द्धर्चः परोक्षकृतः। उत्तरः प्रत्यक्षकृतः। एषामेकस्मिन् कर्मणि सहप्रवृत्तानामृत्विजां स्तोतॄणां वा मन्त्रः स्तुतिः शस्त्राद्यात्मिका गुप्तभाषणं वा समान एकविधोऽस्तु। तथा समितिरपि प्राप्तिरपि समान्येकरूपास्तु। केवलमामक० ( पा० ४-१-३० ) इत्यादिना समानशब्दान्ङीप्। उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम्। तथा मनो मननसाधनमन्तःकरणं चैषां समानमेकविधमप्यस्तु। चित्तं विचारजं ज्ञानं तथा सह सहितं परस्परस्यैकार्थ्येनैकीभूतमस्तु। अहं च वो युष्माकं समानमेकविधं मन्त्रमभिमन्त्रये। ऐकविध्याय संस्करोमि। तथा वो युष्माकं स्वभूतेन समानेन साधारणेन हविषा चरुपुरोडाशादिना अहं जुहोमि। तृतीया च होमश्छन्दसि ( पा० २-३-२ ) इति कर्मणि कारके तृतीया। वषट्कारेण हविः प्रक्षेपयामीत्यर्थः ॥३॥

अथ चतुर्थी। हे ऋत्विग्यजमाना वो युष्माकमाकूतिः सङ्कल्पोऽध्यवसायः समान्येकविधोऽस्तु। तथा वो युष्माकं हृदयानि समानान्येकविधानि सन्तु। तथा वो युष्माकं मनोऽन्तःकरणम्। प्रत्येकापेक्षयैकवचनम्। तदपि समानमस्तु। यथा वो युष्माकं सुसह शोभनं साहित्यमसति भवति तथा समानमस्त्वित्यन्वयः। अस्तेर्लेटि बहुलं छन्दसि ( पा० २-४-७३ ) इति शपो लुगभावः ॥४॥

---

# २ । वाजसनेयिसंहिताभाष्यम्

॥ १ ॥

३.६-८

आयं गौः पृश्निः । सार्पराज्ञ्या आर्षम् । गायत्रस्तृचः । आहवनीयाग्न्युपस्थाने विनियुक्तः । अग्निः परापररूपेण स्तूयते । आयं गौः पृश्निरक्रमीत् । आक्रमीत् । आक्रमते । ऐश्वर्यरूपेणायमग्निर्गौर्गन्ता । सर्वासु तासु तासु क्रियासु । पृश्निर्नानारूपः । असदन्मातरं पुरः । इमं लोकमग्निरूपेणानुगृह्य ततः प्रातरादित्यात्मना सीदति मातरं पृथिवीं पुरः पुरस्तात्प्राच्यां दिशि । किञ्च पितरं च प्रयन्त्स्वः । पितरं द्युलोकं च प्रयन् गच्छन् । सीदतीत्यनुवर्तते । स्वः स्वर्ग आदित्यः ॥६॥

एवमादित्यरूपेणाग्निं स्तुत्वा अथेदानीं वायुरूपेण स्तौति । अन्तश्चरति रोचनास्य । द्यावापृथिव्योरन्तरं चरति अग्नेर्वाय्वाख्या शक्तिः । अन्तरिक्षेऽयं तिर्यङ् वायुः पवत इति श्रुतेः । रोचना । रुच दीप्तौ । दीपना अस्याग्नेः । किं कुर्वाणा चरति । प्राणादपानती । अन प्राणने । सर्वप्राणिषु प्राणादनन्तरमपानती चरति । अपानादनन्तरं प्राणती चरतीति सामर्थ्यादयमर्थो लभ्यते । एवं वाय्वादित्याभ्यां स्वशक्तिभ्यामिदं जगदनुगृह्याथ य एतामेवमुपतिष्ठति तस्य किं करोतीत्याह । व्यख्यन्महिषो दिवम् । विविधं तस्य पुरुषस्योपभोगार्थमवलोकयति पश्यति भोग्यत्वेन दिवं द्युलोकम् । महिषः । अग्निर्वै महिषः स हीदं जातो महानिति श्रुतिः ॥७॥

त्रिंशद्धाम । त्रिंशत्सु धामसु इति विभक्तिव्यत्ययः । धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति स्थानान्यत्राभिप्रेतानि । त्रिंशदहोरात्रे मुहूर्तास्त इह गृह्यन्ते । त्रिंशत्सु स्थानेषु मुहूर्ताख्येषु स्तुतिभिरग्निरयं स्तूयते । यज्ञाय वाग्विराजति शोभते स्तूयमाना सा वाक् । पतङ्गाय । पतन्गच्छतीति पतङ्गोऽग्निः । स हि अरण्याः पतन्गार्हपत्यभावं गच्छति गार्हपत्यादाहवनीयमित्यादिना । तादर्थ्ये चतुर्थी । पतङ्गार्थं धीयते । अग्न्यर्थमुच्चार्यत इत्यर्थः । एतदुक्तं भवति । सर्वदेवतासम्बन्धिनीभिः स्तुतिभिरग्निरेव स्तूयते । स हि सर्वस्यात्मा । प्रतिवस्तोरह द्युभिः । वस्तोः द्युरित्यहर्नामसु पठितम् (निघ० १-९) । अहेति निपातो विनिग्रहार्थीयः । न केवलं या त्रिंशत्सु धामसु वाग्विराजति सा पतङ्गाय धीयते किं तर्हि प्रतिवस्तोः प्रत्यहं च या स्तुतिलक्षणा वाक् सा च द्युभिरहोभिरुत्सवभूतैः । उत्सवा यागपारायणादयः । स्तुतिलक्षणा वाक् सा च पतङ्गाय धीयते नान्यस्मै देवाय ॥८॥

॥ २ ॥

५.२३

किं बृहतीमेव केवलां नेत्याह । रक्षोहणम् । रक्षांसि या वागपहन्ति । सा रक्षोहा तां रक्षोहणम् । ब्रह्मभ्रूणवृत्रेषु क्विप् ( पा० ३-२-८७ ) धातूपपदकालप्रत्ययनियमान्न प्राप्नोतीति बहुलं

छन्दसि ( पा० ३-२-८८ ) इति क्विप्प्रत्ययः। वलगहनम्। वलगान् कृत्याविशेषान् भूमौ निखातान् शत्रुभिर्विनाशार्थं हन्तीति वलगहा वाक्। पूर्ववत् क्विप्प्रत्ययः। तां वलगहनम्। वलो वृणोतेः। यस्य वधार्थं क्रियते तं रोगादिभिर्वृण्वन् प्रच्छादयन् गच्छतीति वलगः। वैष्णवीं विष्णुदेवत्यां वाचं वदेदिति सम्बन्धः। उत्किरति। इदमहं यत्करोमि तद्वलगं कृत्याविशेषम्। उत्किरामि। उद्वपामि। यं मे निष्ट्यः। यं वलगं मे मम निष्ट्यः पुत्रः। स हि निर्गत्य शरीरात्ततो विस्तीर्णो भवति। यं च अमात्यो वलगं निचखान निखनति। छन्दसि लुङ्लङ्लिटः सर्वेषु कालेषु भवन्ति। द्वितीयमुत्किरति। यं मे समानः। विद्यादिभिः सदृशः। असमानः। विद्यादिभिरसदृशः। शेषं व्याख्यातम्। तृतीयमुत्किरति। यं मे सबन्धुः। सबन्धुः स्वजनः। असबन्धुस्तद्विपरीतः। शेषं व्याख्यातम्। चतुर्थमुत्किरति। यं मे सजातः। सजातो भ्राता। स हि समानजन्मा भवति। यश्चासजातोऽसमानजन्मा। भ्रातुरसदृशः। शेषं व्याख्यातम्। सर्वमुत्किरति। उत्कृत्यां किरामि। उत्किरामि कृत्याम् ॥२३॥

॥ ३ ॥

१०.४

सूर्यत्वचसः स्थ। सूर्यस्येव त्वक् यासां ताः सूर्यत्वचस आतपवर्ष्याः स्थ। सूर्यवर्चसः स्थ राष्ट्रदाः। सूर्यस्येव वर्चस्तेजो यासां ताः सूर्यवर्चसः। सरस्याः। मान्दाः स्थ। मन्दतेर्मोदनार्थस्य मन्दः सरः। तत्र हि मोदन्ते भूतानि बहूदकत्वात् तत्र भवा आपो मान्दाः। कूप्या गृह्णाति। व्रजक्षितः स्थ। व्रज इति मेघनामसु पठितम्। इह तु उदकवत्त्व-साम्यात्कूप उच्यते। व्रजे क्षियन्ति व्रजक्षितः। वाशाः स्थ। वश कान्तौ। कामिता अभिलषिताः स्थ। ता हि सर्व एव कामयन्ते। अन्नहेतुत्वात्। मधु। शविष्ठाः स्थ। शव इति बलनाम। शविष्ठा बलिष्ठाः। बलिष्ठं हि मधु त्रिदोषशमनत्वात्। उक्तं च त्रिदोषघ्नं मधु प्रोक्तं केचिदिच्छन्ति वातलम् इति। गोरुल्ब्या गृह्णाति। शक्वरीः स्थ। शक्लृ शक्तौ। आतो मनिन् क्वनिब्वनिपश्च ( पा० ३-२-७४ )। शक्नुवन्ति हि गावो जगदुद्धर्तुं वाहदोहादिभिः। पयः। जनभृतः स्थ। जनान्हि पयो बिभर्ति बालभावे। घृतम्। विश्वभृतः। विश्वं सर्वं देवानपि घृतं बिभर्ति। मरीचीः। आपः स्वराजः स्थ। हे आपः या यूयं स्वराजः स्थ स्वकीयमेव राज्यं यासां तास्तथोक्ताः। अनन्याश्रितराज्या इत्यर्थः। व्याख्यातमन्यत्। औदुम्बरपात्रे समासिञ्चत्येता मधुमतीः। मधुमतीर्मधुररसवत्यो मधुररसवतीभिरद्भिः पृच्यन्ताम्। युज्यन्ताम्। महि महत्। क्षत्रं क्षत्रियाय राज्ञे वन्वानाः। वनोतिः संभजनार्थः। संभजमानाः। मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधाति अनाधृष्टाः। अनाधृष्टा अनाधर्षिता रक्षोभिः। सीदत उपविशत। सहौजसः सवीर्याः सह बलेन। किं कुर्वाणाः। महि महत् क्षत्रं क्षत्रियाय राज्ञे दधतीः स्थापयन्त्यः ॥४॥

॥ ४ ॥

१०.२४

अवतरति। हंसः शुचिषत्। सप्रपञ्चपरब्रह्माभिधायिनी अतिच्छन्दा अतिजगती इति श्रुतेः।

हंसः शुचिषत्। हन्त्यध्वानमिति हंसो भगवानादित्यः शुचिषत्। शुचौ दीप्तौ सीदतीति शुचिषत्। य आदित्यरूपेण। यश्च वसुर्वासयिता वायुरूपेणान्तरिक्षे सीदति। यश्च होता आह्वाता अग्निरूपेण वेद्यां सीदति। यश्चातिथिरूपेण दुरोणे गृहे सीदति। यश्च नृषु मनुष्येषु प्राणभावेन सीदति। एवं वरेष्वृतकृत्स्नेषु सीदति। यश्च ऋते सत्ये सीदति। यश्च व्योमसु अन्तरिक्षेषु सर्वेषु सीदति। सर्वत्र स्थितिभावेन स्तुत्वा अथेदानीं सर्वोत्पत्तिद्वारेण स्तौति। यश्चाब्जाः। अप्सु जायत इत्यब्जाः। यश्च गवि पृथिव्यां चतुर्विधभूतग्रामरूपेण जायते। यश्च ऋते सत्ये जायते। यश्चाद्रौ पाषाणेऽग्निरूपेण जायते। मेघोऽप्यद्रिरुच्यते। मेघे वोदकरूपेण जायते। तत् ऋतम्। ऋ गतौ। सर्वतो गतं परब्रह्म। बृहत् परिवृद्धम्। अनन्तमपर्यन्तम्। एवं परब्रह्मवादितास्य मन्त्रस्य। तत् परब्रह्म प्रत्यक्षतरामीति वाक्यशेषः ॥२४॥

॥ ५ ॥

११·६१

अभ्र्या अभ्रं खनति अदितिष्ट्वा। अदितिस्त्वां देवी विश्वादेव्यावती। विश्वैर्देवैः सहिता पृथिव्याः सहस्थानेऽङ्गिरा इव खनतु। हे अवट कूप। उखामवदधाति देवानां त्वा। इत उत्तरं पञ्चसु यजुःषु श्रुत्युक्तान्यभिधेयानि व्याख्यायन्ते इति। ओषधयो वै देवानां पत्न्य इति। दधतु स्थापयन्तु उखे। अग्निना दीपयति धिषणास्त्वाम्। धिषणा वाचः। अभीन्धताम्। इन्धी दीप्तौ। श्रपयति वरूत्रीष्ट्वा। अहोरात्राणि वै वरूत्रयः। तानि हि वृण्वन्ति। पचति द्वाभ्याम्। ग्नास्त्वा। ग्नाश्छन्दांसि। छन्दांसि वै ग्नाश्छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति। जनयस्त्वा। नक्षत्राणि वै जनयः। अच्छिन्नपत्रा अनवच्छिन्नपत्राः ॥६१॥

॥ ६ ॥

१६·१-१६

शतरुद्रियहोमः। अथातो यः शतरुद्रियं जुहोतीत्युपक्रम्य स एषोऽत्राग्निश्चितो बुभुक्षमाणो रुद्ररूपेणावतिष्ठते। तस्य तर्पणं देवैः कृतम्। द्वितीयं दर्शनम्। यद्वै शतरुद्रियं जुहोतीत्युपक्रम्य प्रजापतेर्विस्रस्तादित्यभिधाय मन्त्रार्थानुगुण्येन श्रुतिर्भवति। स एव शतशीर्षा रुद्रः समभवदिति। नमस्ते रुद्र मन्यवे रौद्रोऽध्यायः। परमेष्ठिन आर्षम्। देवानां वा प्रजापतेर्वा। आद्योऽनुवाकः षोडशभिर्ऋग्भिः। तत्रैको रुद्रो देवता एका गायत्री तिस्रोऽनुष्टुभः तिस्रः पङ्क्तयः सप्तानुष्टुभो द्वे जगत्यौ। नमोऽस्तु ते हे रुद्र तव सम्बन्धिने मन्यवे क्रोधाय। उत अपि च। ते तव सम्बन्धिने इषवे काण्डाय नमोऽस्तु। बाहुभ्यामुत अपि ते तव सम्बन्धिभ्यां नमोऽस्तु ॥१॥

याते। या ते तव हे रुद्र शिवा शान्ता तनूः शरीरम्। अघोरा अविषमा। अपापकाशिनी। न पापकाशिनी अपापकाशिनी। पापमसुखं या प्रकाशयति सा पापकाशिनी। तया नोऽस्मान् तन्वा शंतमया सुखतमया सुखयितृतमया अतिशयेन सुखयित्र्या। गिरिशन्त गिरौ पर्वते कैलासाख्येऽवस्थितः शं सुखं तनोतीति गिरिशन्तः। यद्वा गिरि वाच्यवस्थितः शं सुखं तनोतीति।

यद्वा गिरौ मेघेऽवस्थितो वृष्टिद्वारेण सुखं तनोतीति। तस्य सम्बोधनं हे गिरिशन्त। अभिचाकशीहि अभिपश्य। सुखयितुमिति शेषः। चाकशीतिः पश्यतिकर्मा ॥२॥

यामिषुम्। याम् इषुं काण्डम्। हे गिरिशन्त गिरौ पर्वतेऽवस्थितः कैलासाख्ये शं सुखं तनोतीति गिरिशन्तस्तस्य सम्बोधनं हे गिरिशन्त। हस्ते बिभर्षि धारयसि। अस्तवे असितुं क्षेप्तुमित्यर्थः। शिवां गिरित्र गिरौ कैलासेऽवस्थितस्त्रायते भक्तानिति गिरित्रस्तस्य सम्बोधनं हे गिरित्र। तां कुरु। किञ्च मा हिंसीः मा वधीः पुरुषं जगत् जङ्गमं च गवादि ॥३॥

शिवेन वचसा। शिवेन वचसा वचनेन त्वा त्वाम्। गिरिश गिरौ पर्वते कैलासाख्ये शेते इति गिरिशस्तस्य सम्बोधनम्। हे गिरिश। अच्छावदामसि। अच्छाभेराप्तुमिति शाकपूणिः। इदन्तो मसि ( पा० ७-१-४६ )। तथा अभिवदाम। यथा येन प्रकारेण नोऽस्माकम्। सर्वमित्। इच्छन्द एवार्थे। सर्वमेव जगज्जङ्गमादि। अयक्ष्मम्। यक्ष्मा व्याधिः। व्याधिरहितम्। सुमनाश्च शोभनमनस्कश्चासद्भयात् ॥४॥

अध्यवोचत्। अधीत्युपरिभावमैश्वर्यं वा। अधिवदतु ब्रवीतु कश्चित्स्वकीयं पुरुषं भगवान्रुद्रः। अधिवक्ता। ऐश्वर्येणैव यो वदितुं जानाति। प्रथमो दैव्यो भिषक् देवसम्बन्धी भिषग्वैद्यः। किमधिवदत्वित्यत आह। अहींश्च सर्वाञ्जम्भयन्। जभिजृम्भी गात्रविनामे। सर्वान् सर्वप्रकारान्नाशयन्। सर्वाश्च यातुधान्यः। यातना दुःखं कष्टं प्राणिषु धारयन्तीति यातुधान्यो राक्षसीर्जम्भयन्। अधराचीरधोऽञ्चनाः कृत्वा। परासुव पराक्षिप। यद्वा रुद्र एवोच्यते अध्यवोचदधिवदतु अधिवक्ता ईश्वरो वक्ता। प्रथमो देवसम्बन्धी भिषग्वैद्यः। अहींश्च सर्वान् जम्भयन् सर्वाश्च यातुधान्योऽधराचीः कृत्वा परासुव क्षिपतु ॥५॥

असौ यः। आदित्यरूपेणात्र रुद्रः स्तूयते अभिनयेन दर्शयन्नाह असौ यस्ताम्रस्ताम्रवर्णः। उदयकालेऽस्तमयकाले च। अरुणोऽरुणवर्णो रक्तवर्णः। उत बभ्रुः। अपिच बभ्रुवर्णः कपिलवर्णः। सुमङ्गलः। शोभनानि मङ्गलान्यस्येति सुमङ्गलः। अवास्य हेड ईमह इत्यनुषङ्गः। ये चैनं भगवन्तमादित्यं रुद्रा रश्मयः। अभित इतश्चेतश्च। सर्वासु दिक्षु च। श्रिताः स्थिताः। सहस्रशोऽसङ्ख्याताः। अव एषां हेड ईमहे। अवेमहे अवनयामः। एषां सम्बन्धी हेडः क्रोधः। हेड इति क्रोधनामसु पठितम्। यद्वा रुद्र एवोच्यते असौ यस्ताम्रवर्णोऽरुणवर्णोऽपिच बभ्रुवर्णः सुमङ्गलः। अनेकानि हि रूपाणि रुद्रः करोति कार्यवशात्। सममन्यत् ॥६॥

असौ य आदित्योऽवसर्पति। अवाचीनं सर्पति। गच्छति। अस्तमयकाले। नीलग्रीवः। नीलग्रीव इवास्तं गच्छन् लक्ष्यते। विलोहितः। धारणा। ध्यानमात्रेणाप्राप्तविलोहितमण्डलाभिप्रायम्। उतैनं गोपा अदृश्रन्। अथैनं गोपाला अभिपश्यन्ति गवां प्रवेशनकालं मन्यमानाः। अदृश्रन्नुदहार्यः। दृशे रुडागमश्छान्दसः। पश्यन्ति चोदकहार्यः कुम्भदास्यः। आगोपालाङ्गनादिप्रसिद्ध इत्यर्थः। स दृष्टो दृष्टमात्रो मृडयाति। मृड सुखने। सुखयति। नोऽस्मान्। अत्यन्तं मृदुहृदयतम इत्यभिप्रायः। यद्वा रुद्र एवोच्यते। श्रविराह। असौ योऽवाचीनं सर्पति। अभिमुखं गच्छति नीलग्रीवो नीलकण्ठो विलोहितो विगतकल्मषभावः। उतैनं गोपा अदृश्रन्नुदहार्य इति गोपालाङ्गनादिप्रसिद्धिं दर्शयति। समञ्जसमन्यत् ॥७॥

नमोऽस्तु नमस्कारोऽस्तु। नीलग्रीवाय नीलकण्ठाय सहस्राक्षाय बह्वक्षाय। मीढुषे। मिह

सेचने। सेक्त्रे तरुणाय। अविपरिणामीति स्तूयते। अथो अपिच येऽस्य सत्वानः सत्त्वभूता रुद्रा अहं तेभ्योऽकरमकरवं करोमि। नमस्कारम् ॥८॥

प्रमुञ्च धन्वनः धनुषस्त्वमुभयोरार्त्न्योर्धनुरन्तरयोर्ज्यां गुणाम्। याश्च ते तव हस्ते इषवः। परा ता भगवो वप परावप पराक्षिप ता हे भगवन् महैश्वर्ययुक्त ॥९॥

विज्यं धनुर्विगतगुणं धनुः। कपर्दोऽस्यास्तीति कपर्दी। कपर्दोऽस्य जटाबन्धः। विशल्यः शल्यरहितः। बाणवान् इषुधिः। उत अपिच। अनेशन्। णश अदर्शने। नष्टा अस्य या इषवः। आभू रिक्तः। अस्य निषङ्गधिः। खड्गनिक्षेपः। निषज्यत इति निषङ्गः खड्ग उच्यते। तद्-स्मिन्धीयते स निषङ्गधिः। न्यस्तसर्वशस्त्र इत्यभिप्रायः ॥१०॥

या ते। या ते तव हेतिरायुधं हे मीढुष्टम। मिह सेचने। सेक्तृतम युवतम। परिणाम-निषेधद्वारेण स्तुतिः। अस्मात्सर्वं भवति। हस्ते बभूव भूता। ते इति निरर्थकः। धनुरिति हेतिविशेषणम्। तया हेत्या अस्मान् विश्वतः सर्वतस्त्वमयक्ष्मया। यक्ष्मा व्याधिः। व्याधि-रहितया परिभुज परिपालय ॥११॥

परि ते। परिवृणक्तु परिवर्जयतु ते तव धन्वनो धनुषः सम्बन्धिनी हेतिरायुधं काण्डलक्षणम्। अस्मान् विश्वतः सर्वतः। अथो अपिच। य इषुधिर्बाणवान् तव आरे दूरे अस्मत् अस्मत्तो निधेहि स्थापय तमिषुधिम् ॥१२॥

अवतत्य अवतार्य धनुस्त्वं हे सहस्राक्ष शतेषुधे। शतशब्दो बहुपर्यायः। निशीर्य शल्यानां मुखा शातयित्वा फलानां मुखानि। शिवः शान्तो नोऽस्माकं सुमनाः शोभनमनस्कश्च भव ॥१३॥

नमस्ते। नमोऽस्तु ते तव आयुधाय अनाततायावतारिताय धृष्णवे धर्षणशीलाय प्रगल्भाय। उभाभ्याम्। उत अपिच। ते तव नमोऽस्तु। बाहुभ्याम्। तव धन्वने धनुषे। नम इत्यनुवर्तते ॥१४॥

मा नो। मा वधीर्नोऽस्माकं महान्तं वृद्धं वयःप्रभृतिभिः। उत मा नो अर्भकम्। अपिच मा वधीर्नोऽस्माकमर्भकमल्पम्। मा न उक्षन्तम्। मा वधीर्नोऽस्माकमुक्षन्तम्। उक्ष सेचने। सिञ्चन्तं तरुणमिति यावत्। उत मा न उक्षितम्। अपिच मा वधीर्नोऽस्माकमुक्षितं सिक्तम्। गर्भस्थमित्यर्थः। मा नो वधीः पितरम्। मा वधीर्नोऽस्माकं पितरम्। आदरार्थं पुनर्वचनम्। महान्तमिति सिद्धत्वात्। मोत मातरम्। मा वधीरपिच मातरम्। मा नः प्रियास्तन्वो रुद्र रीरिषः। रिषतिर्हिंसार्थः। मा रीरिषो मा हिंसीर्नोऽस्माकं प्रियास्तन्वः प्रियाणि शरीराणि पुत्रपौत्रलक्षणानि। हे रुद्र ॥१५॥

मा नः। मा रीरिषः। रिषतिर्हिंसाकर्मा। मा हिंसीर्नोऽस्माकं तोके पुत्रविषये मा हिंसी-स्तनये पौत्रविषये। मा हिंसीर्नोऽस्माकमायुषि विषयभूते। मा नो गोषु मा हिंसीर्नोऽस्माकं गोषु विषयभूतासु। मा नो अश्वेषु। मा हिंसीर्नोऽस्माकमश्वेषु विषयभूतेषु। यद्वा विभक्ति-व्यत्ययेन व्याख्यानम्। मा रीरिषोऽस्माकं तोकं तनयमायुर्गा अश्वानिति। मा नो वीरान् रुद्र भामिनो वधीः। मा वधीर्नोऽस्माकं वीरान् हे रुद्र भामिनः। भाम क्रोधे। क्रोधयुक्तान्। कः प्रत्युपकार इति चेत्। हविष्मन्तो हविषा संयुक्ताः सदं सदाकालम्। इत्थं एवार्थे। त्वामे-वाह्वयामहे आह्वयामो यागार्थम्। अनन्यशरणा वयमित्यभिप्रायः ॥१६॥

॥ ७ ॥

१७·८०-८६

मारुताञ्जुहोति शुक्रज्योतिरिति षड्भिर्ऋग्भिर्मारुतीभिः। तत्र चैकैकस्यामृचि सप्त मरुतः। प्रथमा उष्णिक् चतुर्थी च। द्वितीयातृतीये गायत्र्यौ। पञ्चमी जगती। षष्ठी गायत्र्युष्णिक् वा। शुक्रज्योतिः पुरोडाशस्य स्वमंशं भक्षयतु। चित्रज्योतिः सत्यज्योतिर्ज्योतिष्मांश्च। शुक्रश्च ऋतपाश्चात्यंहाश्च। अथैकपदनिरुक्तम्। शुक्रं शुक्लं ज्योतिर्यस्य शुक्रस्येव वा ज्योतिरस्य स शुक्रज्योतिः। चित्रं ज्योतिः सत्यं ज्योतिर्यस्य स तादृशः। ज्योतिष्मान् ज्योतिषा तद्वान्। शुक्रः शुक्लः। ऋतपा ऋतं सत्यं यज्ञं वा पाति। अत्यंहाः। अतीत्यांहः पापं वर्तत इत्यत्यंहाः ॥८०॥

ईदृङ् च। अनेनानेन च समानदर्शन ईदृङ्। ईदृङ् च पुरोडाशस्य स्वमंशं प्रतिगृह्णातु। अन्यादृङ् च। अन्येनान्येन समानदर्शनोऽन्यादृङ्। सदृङ् च प्रतिसदृङ् च। तेन तेन समानदर्शनः सदृङ्। तं तं प्रतिसदृशः प्रतिसदृङ्। मितश्च। उत्तमाधममध्यमैस्तुल्यो मितः। सम्मितश्च। एकीभावेन मितः सम्मितः। सभराश्च। सह बिभर्ति सभराः ॥८१॥

ऋतश्च। ऋतश्च स्वमंशं पुरोडाशस्य प्राश्नातु। सत्यश्च ध्रुवश्च धरुणश्च धर्ता च विधर्ता च विधारयः। विविधं धारयतीति विधारयः। ऋजुः ॥८२॥

ऋतजिच्च सत्यजिच्च सेनजिच्च। सुषेणश्च शोभनसेनश्च। अन्तिमित्र आसन्नमित्रः। दूरेअमित्रश्च गणः। ऋजुः ॥८३॥

ईदृक्षासः। व्यवहितपदप्रायोऽयं मन्त्रः। सादृश्येनात्र मरुतः स्तूयन्ते। ये यूयमीदृक्षास इदन्दर्शनाः सर्व एव। ये च एतादृक्षास एतद्दर्शनाः सर्व एव। ऊ षु णः। त्रीणि पदानि छन्दःपूर्तिं कुर्वन्ति। ये च यूयं सदृक्षासः समानदर्शनाः सर्व एव। ये च यूयं प्रतिदृक्षासः प्रतिसमानदर्शनाः सर्व एव। ये च यूयं मितासः मिताः प्रमाणतः सर्व एव। ये च यूयं संमितासः सङ्गत्य मिताः सर्व एव। ये च यूयं सभरसः समानमलङ्कारादि बिभ्रतः। तान् ब्रवीमि। एतन नो अद्य मरुतो यज्ञे अस्मिन् एतन आगच्छन्तु नोऽस्माकमद्यास्मिन्यज्ञे। हे मरुतः, यज्ञे अस्मिन् एवं व्यवहितानि पदानि पश्चात्सर्वैरेव सम्बन्धनीयानि ॥८४॥

स्वतवांश्च। स्वकीयं तवो बलं यस्य स स्वतवान्। स्वतवांश्च स्वमंशं पुरोडाशस्य भक्षयतु। प्रघासी च। घस्लृ अदने। प्रकर्षेण अदनशीलः। सान्तपनश्च गृहमेधी च क्रीडी च। पञ्च चातुर्मास्यदेवताः। शाकी च शक्तः। उज्जेषी चोज्जयनशीलः ॥८५॥

महीधरभाष्यम्। विमुखमन्त्रोऽपि प्रसङ्गाद्व्याख्यायते। उग्र उत्कृष्टः। बिभेत्यस्मादिति भीमः। भीमादयोऽपादाने (पा० ३-४-७४) इति निपातः। ध्वान्तयति शत्रूनन्धीकरोतीति ध्वान्तः। ध्वान्तशब्दात्तत्करोतीति णिजन्तात्पचाद्यच्। धूनयति कम्पयति शत्रूनिति धुनिः। सहतेऽभिभवते शत्रूनिति सासह्वान्। सहेः क्वसुः। अभ्यासदीर्घः। अभियुनक्ति। अभियुग्वा। अन्येभ्योऽपि दृश्यन्ते (पा० ३-२-७५) इति अभिपूर्वाद्युजेः क्वनिप्। भक्तानां सखयोक्ता। विक्षिपति प्रेरयति शत्रूनिति विक्षिपः शत्रुक्षेप्ता। चकारः समुच्चयार्थः। स्वाहा एतेभ्यो मरुद्भ्यः स्वाहुताः पुरोडाशाः सन्तु ॥८६॥

॥ ८ ॥

१९·१३-१९

दीक्षायै रूपम्। शष्पाणि नवप्ररूढानि व्रीहयः। प्रायणीयस्य तोक्मानि। नवप्ररूढा यवास्तोक्मानि। क्रयस्य रूपं सोमस्य। सोमक्रयस्येति समासे प्राप्ते पदयोर्व्यत्ययो रूपशब्देन व्यवधानं च छान्दसम्। सोमक्रयरूपं लाजाः सोमांशवश्च लाजा एव मधुरस्वादाः ॥१३॥

आतिथ्यरूपं मासरम्। व्रीहिश्यामाकौदनाचामचूर्णसंसर्गो मासरम्। महावीरस्य नग्नहुः। किण्वो नग्नहुः सौरिकाणां प्रसिद्धः। रूपमुपसदामेतत्क्रियते यस्मिंस्तिस्रो रात्रीः सुरा अभिषुता तिष्ठति ॥१४॥

सोमस्य रूपम्। सोमस्य क्रीतस्यैतद्रूपं यत्परिस्रुत् परिषिच्यते पयसा। केन पयसा। यदश्विभ्यां दुग्धं भेषज चेन्द्राय। यच्चाश्विभ्यां दुग्धमिन्द्रायैव भेषजम्। यच्च सरस्वत्या दुग्धं पय इन्द्राय भेषजम् ॥१५॥

आसन्दी रूपम्। यजमानाभिषेकरूपम्। राजासन्द्यै सोमासन्द्याः। वेद्यै कुम्भी सुराधानो। सौमिकया वेदे रूपम्। वेद्योरन्तरो मध्य उत्तरवेद्या रूपम्। कारोतरः सुरापावटं भिषगिन्द्रस्य यजमानस्य च ॥१६॥

अनया वेद्या सौमिकी वेदिः समाप्यते। बर्हिषा च बर्हिः समाप्यते। इन्द्रियं वीर्यम्। यूपेन हृत्येन च यूप आप्यते। प्रणीतश्चाग्निरग्निनाप्यते ॥१७॥

हविर्धानं यदश्विना। यदश्विदेवतं तेन हविर्धानमाप्यते। यत्सरस्वतीदेवतं तेनाग्नीध्रमाप्यते। यदिन्द्राय हविस्तेनेन्द्रसदः कृतमाप्यते। पत्नीशालं च गार्हपत्यस्य आप्यते ॥१८॥

प्रैषेभिः प्रैषान्। प्रैषैः प्रैषानाप्नोति। आप्रीभिराप्रीः यज्ञस्य सोमयज्ञस्य प्रियाः प्रयाजयाज्याः। प्रयाजेभिरनुयाजान्। प्रयाजैः प्रयाजाननुयाजैरनुयाजानाप्नोति। वषट्कारेभिराहुतीः। वषट्कारैर्वषट्कारानाप्नोति। प्रयाजेभिरित्यादिचतुर्णां वाक्यानामर्धलोपः ॥१९॥

॥ ९ ॥

२२·२२

जपति। आब्रह्मन् आजायतां हे ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी। यज्ञाध्ययनशीलो ब्राह्मण आजायतामित्यर्थः। आराष्ट्रे। आजायतां च राष्ट्रे राजन्यः शूर इषव्यः। इषुभिर्विध्यति इषव्यः। इषुषु वा साधुरिषव्यः। अतिव्याधी महारथः। अतिविध्यति द्विषन्तमित्यतिव्याधी। महारथश्च। दोग्ध्री धेनुः। राष्ट्रे आजायतामिति सर्वत्र सम्बन्धः। वोढा अनड्वान्। आशुः शीघ्रः सप्तिरश्वः। पुरन्धिर्योषा। पुरं शरीरं रूपगुणादिसमन्वितं धारयति इति पुरन्धिः। जिष्णू रथेष्ठाः। जयनशीलो रथे तिष्ठतीति रथेष्ठा युयुत्सुः। सभेयो युवा। सभामर्हति विद्यागुणचरित्रैः सभेयो युवा। आ अस्य यजमानस्य। आजायतां चास्य यजमानस्य वीरः पुत्रः। किञ्च निकामेनिकामे नः पर्जन्यो वर्षतु। प्रार्थनायामवश्यं भवतीति निकामः। अभ्यासो वीप्सार्थः। अस्माकं राष्ट्र इत्यर्थः। फलवत्यः। अतिशयेन फलयुक्ता नोऽस्माकं राष्ट्र ओषधयः पच्यन्ताम्। योगक्षेमो नः कल्पताम्।

योगो द्रव्यादीनां संयोगः। क्षेमस्तेषामेव परिपालनम्। योगश्च क्षेमश्चास्माकं कल्पतो भवतु। योगश्च क्षेमश्चेति द्वन्द्वः। तत्र नपुंसकलिङ्गता वा स्यात् द्विवचनं वा इति। तत्र छान्दसो विसर्जनीयो द्रष्टव्यः ॥२२॥

॥ १० ॥

२३.४५-४८

इत उत्तरं ब्रह्मोद्यमष्टादशर्चम्। तत्राद्याश्चतस्रोऽनुष्टुभः। का स्विदासीत्पूर्वचित्तिरित्याद्याश्च चतस्रोऽनुष्टुभस्त्रिष्टुभोऽन्याः। होताध्वर्युं पृच्छति कः स्विदेकाकीति ॥४५॥

तं प्रत्याह सूर्य एकाकी चरति। अन्ये व्याख्यातौ ॥४६॥

अध्वर्युर्होतारं पृच्छति। किं स्वित्सूर्यसमं ज्योतिः। किञ्च समुद्रसमं सरः। किं स्वित्पृथिव्यै पृथिव्याः वर्षीयो महत्तरम्। कस्य च मात्रा परिमाणं न विद्यते नास्ति ॥४७॥

तं प्रत्याह ब्रह्म सूर्यसमम्। ब्रह्म त्रयीलक्षणं परं वा। सूर्यसमं ज्योतिः। द्यौः समुद्रसमं सरः। इन्द्रः पृथिव्यै वर्षीयान् महत्तरः। गोस्तु मात्रा न विद्यते। गवा हि यज्ञो धार्यते। स जातः कारणं भवतीत्येतदभिप्रायम्। पृथिवी वा गौः ॥४८॥

॥ ११ ॥

२४.१-६

इत उत्तरं श्रुतिरूपा मन्त्रा आश्वमेधिकानां पशूनां देवतासम्बन्धाभिधायिनोऽध्यायेनोच्यन्ते। अश्वस्तूपरो गोमृगस्ते प्राजापत्या इति। शतपथोऽपि एतमध्यायं श्रुतीकृत्याह अश्वस्तूपरो गोमृग इति। तन्मध्ये यूप आलभत इत्यादिना ग्रन्थेन दिङ्मात्रं प्रदर्शयन्। सूत्रकृता चायमध्यायः सूत्रीकृतः। येनेवमाह अग्निष्टे अश्वस्तूपरो गोमृगान्नियुनक्ति। यथोक्तमश्वादौ देवता इति। तत्र वैष्णवो वामन इत्यन्ताः पर्यङ्ग्याः। अश्वः, तूपरो निःशृङ्गः, गोमृगो गवयः। एते प्रजापतिदेवत्याः। कृष्णग्रीवश्छाग आग्नेयः। पुरस्ताल्ललाटे अश्वस्य बन्धनीय इति शेषः। एवं सारस्वती मेषी अधस्ताद्धन्वोः। आश्विनावधोरामौ। अधःशुक्लौ छागौ पूर्वपादयोः। सोमापूषदेवत्यो नाभ्यां बन्धनीय इति शेषः। सूर्यदेवत्यः श्वेतो यमदेवत्यः कृष्णश्च पार्श्वयोः। लोमयुते सक्थिनी ययोस्तौ त्वष्टृदेवत्यौ सक्थ्नोः। वायव्यः श्वेतः पुच्छे। स्वपस्याय शोभनकर्मणे इन्द्राय वेहत्। विष्णुदेवत्यो वामनश्च पशुः अश्वस्य पुच्छ एव। एते पर्यङ्ग्याः। एवमग्रेऽपि देवतासम्बन्धो ज्ञेयः। ललाटादिषु पशुबन्धनायाश्वशरीरे रज्जुभिः परिवेष्टनीयम्। एते मध्यमयूपे ॥१॥

रोहितो धूम्र रोहित इत्यादयः श्वेता वायव्याः श्वेताः सौर्या इत्येवमन्ताः। इतरेषु यूपेषु रोहितादिषु ये गुणवचनाः शब्दास्ते गुणिनं पशुं लक्षयन्ति ॥२॥

महीधरोक्तोऽर्थः। शुद्धवालः शुभ्रवालः। सर्वशुद्धवालः मणिशुद्धवालो मणिवर्णकेशः। ते त्रयोऽश्विदेवत्या द्वितीये श्येतः श्वेतवर्णः, श्येताक्षः श्वेतनेत्रोऽरुणो रक्तः। ते त्रयो रुद्राय पशुपतये पशुपतिरुद्रदेवताका द्वितीये। कर्णास्त्रयः पशुविशेषाः। कर्णाश्चन्द्रे च वृक्षे च इति

विश्वोक्तेः। कर्णाश्चन्द्रसदृशश्वेतकर्णास्त्रयः पशवः। बहुवचनस्य त्रित्वे पर्यवसानात्। यामा यमदेवता द्वितीये। अवलिप्ताः सगर्वास्त्रयो रौद्राः। एते द्वितीये पञ्चदश। अथ तृतीययूपे। नभोरूपा आकाशवन्नीलवर्णाः पार्जन्याः पर्जन्यदेवताः पशवस्तृतीये नियोज्याः ॥३॥

पृश्निर्विचित्रवर्णा। तिरश्चीनानि पृश्नीनि बिन्दवो यस्य सः। एवमूर्ध्वानि पृश्नीनि यस्य सः। ते त्रयो मारुता मरुद्देवत्यास्तृतीये। फल्गूरपुष्टशरीरा लोहितोर्णी रक्तरोमवती पलक्षी श्वेता। पलक्षशब्दो वलक्षार्थः श्वेतपर्यायः। तास्तिस्रोऽजाः सारस्वत्यः सरस्वतीदेवतास्तृतीये। प्लीहाकर्णः। प्लीहा रोगविशेषस्तद्युक्तौ कर्णौ यस्य स प्लीहाकर्णः। अन्येषामपि दृश्यते (पा० ६-३-१३७) इति संहितायां दीर्घः। शुण्ठाकर्णः, ह्रस्वकर्णः, अध्यालोहकर्णो रक्तवर्णकर्णास्ते त्रयस्त्वाष्ट्रास्त्वष्टृदेवतास्तृतीये। कृष्णग्रीवः शितिकक्षः, अञ्जिसक्थः। अञ्जि पुण्ड्रं सक्थ्नोरुर्वोर्यस्य सः। एते त्रय ऐन्द्राग्नाः इन्द्राग्निदेवतास्तृतीये। पञ्चदश पूर्णाः। कृष्णाञ्जिः कृष्णपुण्ड्रः। अल्पाञ्जिर्महाञ्जिः। अल्पमञ्जि यस्य महदञ्जि यस्य तथा। ते त्रय उषस्या उषोदेवताश्चतुर्थ यूपे नियोज्याः ॥४॥

विचित्रवर्णास्तिस्रस्त्रीपशवो वैश्वदेव्यो विश्वदेवदेवताश्चतुर्थे। रोहिण्यो रक्तवर्णास्त्र्यवयः सार्द्धसंवत्सरास्तिस्रोऽजा वाचे वाग्देवताश्चतुर्थे। अविज्ञाताः कृष्णग्रीवादिचिह्नविज्ञानशून्यास्त्रयः पशवोऽदित्या अदितिदेवताश्चतुर्थे। सरूपाः समानरूपास्त्रयः पशवो धात्रे धातृदेवताश्चतुर्थे। एवं पञ्चदश। अथ पञ्चमे यूपे तिस्रो वत्सतर्यो बालच्छाग्यो देवानां पत्नीभ्यः तद्देवताः पञ्चमे ॥५॥

कृष्णग्रीवाः कालकण्ठास्त्रयः पशव आग्नेया अग्निदेवताः पञ्चमे। शितिभ्रवः श्वेतवर्णभ्रयुक्तास्त्रयो वसूनां वसुदेवताः पञ्चमे। रोहिता रक्तवर्णास्त्रयो रुद्राणां रुद्रदेवताः पञ्चमे। श्वेता अवरोकिण अवलोकिनः। यद्वाधस्ताद्रोकं छिद्रं येषां ते। छिद्रं निर्व्यथनं रोकः। ते त्रय आदित्यानां तद्देवताः पञ्चमे। अथ षष्ठे यूपे। नभोरूपाः पार्जन्यास्त्रयः षष्ठे ॥६॥

॥ १२ ॥

२९.३८-४४

जीमूतस्येव। वर्म स्तूयते। जीमूतो मेघस्तस्येव भवति। प्रतीकमनीकं मुखमिति पर्यायः। यथा मेघस्य मुखं विद्युत्स्फुरितस्तनयित्नुधारानिकरैरसह्यं भवत्यन्तःसरणः, एवं हस्त्यश्वपदातिमुखं निशितास्त्रगंभीरतूर्यनिनादशरधाराभिरसह्यं भवति। कस्मिन्काले कस्य चेत्यत आह यद्वर्मी। यदा वर्मास्य विद्यत इति वर्मी। याति गच्छति समदाम्। संमायन्ति सह वा माद्यन्ते आसु योद्धार इति समदः। समदशब्दः सङ्ग्रामवचनः। समदां सङ्ग्रामाणामुपस्थे उपकाले। यत एवमतो ब्रवीमि। अनाविद्धया तन्वा जय त्वं हे वर्मिन्। अनाविद्धयाऽक्षतया तन्वा त्वं जयमाप्नुहि। किं च स त्वा वर्मणो महिमा पिपर्तु पालयतु ॥३८॥

धन्वना गाः। धनुः स्तूयते त्रिष्टुभा। धन्वना धनुषा जयेम। धनुषा चाजिं मार्गं जयेम। धनुषा च तीव्राः पटव उग्रायुधाः। समदः सङ्ग्रामान्। जयेम। धनुश्च शत्रोरपकामं कृणोति। अपनयति कामम्। कर्तृत्वं विवक्षयात्र धनुषः। धनुषा च सर्वाः प्रदिशः जयेम ॥३९॥

वक्ष्यन्तीवेत्। ज्या अभिधेया त्रिष्टुप्। या ज्या वक्ष्यन्तीव वचनोत्सुकेव योषित्। इच्छब्दः पादपूरणार्थः। आगनीगन्ति आगच्छन्ती अत्यर्थमागच्छति वा कर्णं धानुष्क-कर्णमूलम्। या च प्रियमिव सखायमिपुं परिषस्वजाना आलिङ्गयन्ती। योषेव शिङ्क्ते। शिजि अव्यक्ते शब्दे। यथा मुग्धा योषित्कामुकरञ्जनार्थमव्यक्तं कूजितं करोति एवमिय-मव्यक्तं शब्दं करोति। प्रसारिता चाधि उपरि धनुषि निबद्धा। सेयं ज्या समने संग्रामे पारयन्ती विजयं कुर्वती संग्रामात्तारयन्ती स्तूयतेऽस्माभिरिति शेषः ॥४०॥

ते आचरन्ती। धनुषः कोटी स्तूयेते। त्रिष्टुप्। ये इमे आर्त्नी आत्न्यौ धनुषः कोटी। समना इव। समने इति वचनव्यत्ययः। समानभर्तृगतमनस्के योषे पतिमागच्छन्त्यौ तथा ते आचरन्ती आगच्छन्त्यौ धानुष्कम्। मातेव पुत्रं बिभृतामुपस्थे। यथा माता उपस्थे उत्सङ्गे पुत्रं धारयति एवं बिभृतां धारयतां शरम्। अपशत्रून् विध्यताम्। व्यध ताडने। अपविध्यतां च शत्रून् संविदाने सुखमनुभवन्त्यौ। विष्फुरन्ती अमित्रान् शत्रून् विष्फुरन्त्यौ ॥४१॥

बह्वीनां पिता। इषुरभिधेयः। त्रिष्टुप्। यो बह्वीनामिषूणां पिता पालयिता। तेन सहिताः पाल्यन्ते स हि ताः सन्निदधाति। यत्र चास्य बहुरिपुकलापः पुत्रः पुत्रस्थानीयः। स हि तेनेषुकलापेन त्रायते बहु वा तदर्थं हितं करोति। चिश्चा कृणोति। शब्दानुकरणमेतत्। इषोर्निष्क्रम्यमाणश्चिश्चेत्येवं शब्दं करोति। समनावगत्य। समना संग्रामान् अवगत्य ज्ञात्वा। स इषुधिः संकाः। सचन्ते अस्मिन्योधा इति सङ्काः। संकीर्यन्तेऽस्मिन्नरय इति सङ्काः। शत्रुसङ्कटम्। पृतनाश्च सर्वाः। पृतनाः स्पर्धनीयतमाः। सङ्ग्रामभक्तीः सर्वाः। पृष्ठे निनद्धः। धानुष्कस्य पृष्ठे बद्धः। प्रसूतः धानुष्केणाभ्यनुज्ञातः सञ्जयति। अत्रेषुधेः कर्तृत्वम्। विवक्षातः कारकाणि भवन्तीति वैयाकरणाः ॥४२॥

रथे तिष्ठन्। जगत्या अर्धेन सारथिः स्तूयतेऽर्धेन रश्मयः। सुसारथिः। रथे तिष्ठन्नयति वा-जिनः प्रापयत्यश्वान्पुरः पुरतोऽवस्थितान्। यत्र यत्र कामयते। तं वयं स्तुम इति शेषः। अभी-शूनां प्रग्रहाणां महिमानं महाभाग्यं पनायत पूजयत हे जनाः। ये मनः अश्वसम्बन्धि चित्तं पश्चात्सन्तोऽनुगच्छन्ति। अनुगम्य गृह्णन्ति रश्मयः। यन्तारः ॥४३॥

तीव्रान् घोषान्। अश्वा स्तूयन्ते त्रिष्टुभा। तीव्राञ्जय जयेत्युग्रान्। घोषान् शब्दान् कृण्वते कुर्वन्ति। वृषपाणयः। वृषा अश्वाः पाणौ येषां संग्रहीतृप्रभृतीनां योक्तॄणां ते तथोक्ताः। युक्ताः श्वसन्तोऽश्वा रथेभी रथैः। सह वाजयन्तः पूजयन्तो रथिनः। तीव्रानेव घोषान्हेषिता-दीन् कृण्वते। अवक्रामन्तः प्रपदैः खुरैरमित्रान्छत्रून् क्षिणन्ति क्षिणवन्ति हिंसन्ति। अनपव्य-यन्तः। व्यय क्षये। अपपूर्वादस्माच्छतृप्रत्ययः। अव्ययन्तो नश्यन्तः। न अपव्ययन्तोऽ-नपव्ययन्तो न नश्यन्तः। अपरित्यजन्तो वा स्वामिनम् ॥४४॥

॥ १३ ॥

३१·१७-२२

अङ्गाद्यः सम्भूतः। त्वष्टा प्रजापतिर्ब्रह्मा यद्रूपमेकांशभूतं विदधत्कृतवान्। तदेव मर्त्यस्य मर्त्यं भूलोके देवत्वं प्रभुत्वमाजानमाग्रमित्यर्थः। किंभूतोऽसौ। अद्भ्यः सकाशात्संभूतः

पिण्डीभूतः पृथिव्या रसाच्च। विश्वकर्मणोऽग्रे प्रथमतः समवर्तत संयोगरूपेण कृतः। तस्यैव नान्यस्य तदेव कारणान्मर्त्यं प्राप्तवान्। सतु पालनीयपालनाय दानवादिविनाशायेति ॥१७॥

वेदाहम्। ऋषेः प्रतिवचनम्। अहमेतं पुरुषं वेद। महान्तं देशकालाद्यवच्छेदरहितम्। आदित्यवर्णं स्वप्रकाशम्। तमसः परस्तात्। अविद्यया भेददर्शनम्। तमेव विदित्वाऽति-मृत्युमेति अतिक्रम्य मृत्युं तं पुरुषमनुप्रविशति। नान्यः पन्था मार्गस्तस्यायनाय गमनाय विद्यते ॥१८॥

प्रजापतिः। किंभूतं तं विशिष्यते। स एव पुरुष एकांशभूतः प्रजापतिरस्य गर्भस्यान्तर-जायमानश्चरति चतुर्विधेषु भूतेषु। स एव जायमानो बहुधानेकप्रकारं विजायते। ये धीरा योगिनस्ते तस्य योनिं परि पश्यन्ति सर्वत्यागेन परिहरन्ति। विश्वे त्रैलोक्यभुवनानि तस्मिन्नातस्थुः ॥१९॥

यो देवेभ्यः। योगिनस्तं नमन्ति ध्यायन्ति। यो देवेभ्यः सर्वेभ्य आतपति अतिशयेन तेजसा तपति आदित्यरूपेणेत्यर्थः। यश्च देवानां पुरोऽग्रे इन्द्रत्वेन स्थितः। यश्च पूर्वोऽग्रे ब्रह्मरूपेण देवेभ्यो जातः। तस्मै रुचाय तेजसे ब्राह्मये ब्रह्मपुरुषादित्याय नमः ॥२०॥

रुचं ब्राह्मम्। रुचं देदीप्यमानं ब्राह्मं ब्रह्मणा उत्पन्नं जनयन्तः सृष्ट्यर्थं देवा योगिनस्तेजसा दीप्यमाना यदब्रुवन्यदब्रुवुरग्रे प्रथमतः। किमूचुः। अपरोऽपि यो ब्राह्मणः स ब्रह्म त्विया-ज्जानीयात् तस्य देवा असन्वशे। सोऽपि सनकादीनां स्थानं गच्छतीत्यर्थः ॥२१॥

श्रीश्च ते। अस्य पुरुषस्यैतेऽवयवाः। श्रीश्च लक्ष्मीश्च पत्न्यौ भार्ये। अहश्च रात्रिश्च ते पार्श्वे। नक्षत्राणि रूपम्। अश्विनौ व्यात्तं मुखम्। इष्णन् इषाण स्वर्गस्य लोकस्येशानः। एतद्गुणविशिष्टो नाम मोक्षस्येशानः स्वर्गलोकस्य च स एव देवानामीशानः ॥२२॥

॥ १४ ॥

३४·१-६

यज्जाग्रतः षट् कण्डिकास्त्रिष्टुभो मनोदेवत्याः। अस्मिन्नध्याये लैङ्गिको विनियोगः। लिङ्गं च सामर्थ्यमुच्यते। अभिधानशक्तिः। यज्जन्मनो जाग्रतः पुरुषस्य दूरमुदेति उद्गच्छति चक्षुः प्रभृतीन्यपेक्ष्य। यच्च दैवं देवो विज्ञानात्मा सोऽनेन गृह्यत इति दैवम्। उक्तं च मनसैवानु-द्रष्टव्यमेतदप्रमेयं ध्रुवमिति। तदु सुप्तस्य। तदः स्थाने यदो वृत्तिः। उकारः समुच्चयार्थीयः। यच्च मनः सुप्तस्य तथैव तेनैव प्रकारेणैति। यच्च दूरङ्गमम्। दूरं गच्छतीति दूरंगमम्। अतीता-नागतवर्तमानव्यवहितविप्रकृष्टपदार्थान्। ज्योतिषां श्रोत्रादीनां विज्ञाननेतॄणां मध्य एकमेव ज्योतिः। तन्मे मनः शिवसङ्कल्पमस्तु। सङ्कल्पः काममूलपदार्थस्य स्त्र्यादेः सुरूपताज्ञानवतः कामप्रभृति शान्तसङ्कल्पमस्तु भवतु ॥१॥

येन कर्माणि। येन मनसा सता कर्माणि। अपसः। अप इति कर्म नाम। तद्धितलोपः। अपस्विनः कर्मवन्तो मनीषिणो मेधाविनः। यज्ञे कृण्वन्ति कुर्वन्ति विदथेषु वेदनेषु यज्ञविधिविधा-नेषु धीरा धीमन्तः। यच्चापूर्वं न विद्यते पूर्वमिन्द्रियं यस्मात्तदपूर्वम्। यद्वा अपूर्वमनपरम्। यच्च यक्षं पूज्यम्। यच्चान्तर्मध्ये प्रजानामास्ते तन्मे मन इति व्याख्यातम् ॥२॥

यत्प्रज्ञानम्। यन्मनः प्रज्ञानं विशेषप्रतिपत्तिप्रज्ञाम्। उतापि च। चेतः सामान्यप्रतिपत्ति-चेतः। धृतिश्च प्रसिद्धा। यन्मनोऽन्तर्ज्योतिरमृतं च प्रजासु। यस्मान्न ऋते येन च विना न किञ्चन कर्म क्रियते। तन्मे मन इति व्याख्यातम् ॥३॥

येनेदम्। येन मनसा इदं भूतं भूतकालं भुवनं वर्तमानकालं भविष्यद् भविष्यत्कालं परिगृहीतममृतेन सर्वम्। येन च मनसा यज्ञस्तायते तन्यते। सप्त होतारो ह्यग्निष्टोमे भवन्ति। तन्मे मन इति व्याख्यातम् ॥४॥

यस्मिन्नृचः। यस्मिन्मनसि ऋचः प्रतिष्ठिताः। यस्मिन्सामानि प्रतिष्ठितानि। यस्मिन्यजूंषि प्रतिष्ठितानि। कथमिव। रथनाभाविवाराः। यस्मिंश्चित्तं सञ्ज्ञानं सर्वं तस्य तस्यार्थस्य। ओतं निक्षिप्तं तन्तुसन्ततमिव कृतं प्रजानाम्। तन्मे मन इति व्याख्यातम् ॥५॥

सुषारथिः। यन्मनः मनुष्यान्। नेनीयतेऽत्यर्थं नयति। कथमिव। सुषारथिः कल्याणसारथिरश्वानिव यन्मनुष्यान्। यच्च मनः सुषारथिरिवाभीशुभिः प्रग्रहैर्वाजिन इव वेजनवतोऽश्वानिव यमयतीति शेषः। द्वे उपमे। एकत्र नयनम्, अन्यत्र नियमनमर्थः। यच्च हृत्प्रतिष्ठम्। तत्रोपलब्धेः। यच्चाजिरं जरारहितम्। यच्च जविष्ठम् अतिशयेन गन्तृ। तन्मे मनः शिवसङ्कल्पमस्तु ॥६॥

## ३। तैत्तिरीयसंहिताभाष्यम्

॥ १ ॥

१.४.९

कल्पः। तं प्रत्नथेति मन्थिनं गृहीत्वा सक्तुभिः श्रीणात्येष ते योनिः प्रजाः पाहीति सादयतीति। पाठस्तु तं प्रत्नथेत्यादिः। इन्द्रायाजुहवुरिति ब्राह्मणादयं मन्त्र ऐन्द्रः। तमिन्द्रं स्तुम इति शेषः। प्रत्नथेत्यादौ थाप्रत्यय उपमार्थः। प्रत्नाः पुरातना भृग्वादयो यथा त्वामस्तुवंस्तथा वयमपि त्वां स्तुमः। पूर्वथा पित्रादय इव। विश्वथाऽतीताः सर्वे यजमाना इव। इमथा वर्तमाना इमे यजमाना इव। कीदृशमिन्द्रम्। ज्येष्ठतातिम्। स्वार्थे तातिप्रत्ययः। बर्हिषदं यागे सन्निहितत्वेन तिष्ठन्तम्। सुवर्विदम्। यजमानाय दातव्यत्वेन स्वर्गं वेत्तीति सुवर्विद्। तम्। हे इन्द्र यस्त्वं प्रतीचीनं प्रतिगमनमस्मत्प्रतिकूलं वृजनं वर्जनीयमालस्याश्रद्धादि दोहसे रिक्तीकरोषि विनाशयसि। तादृशं त्वां स्तुमः। क पुनः स्तुमः। यासु क्रियासु त्वमाशुं क्षिप्रकारिणं जयन्तं सम्यगनुष्ठानेन यजमानान्तरादतिशयेनोपेतं यजमानमनु सोमपानेन स्तुत्या च वर्धसे तासु क्रियासु तमिन्द्रं स्तुमः। हे मन्थिग्रह त्वमुपयामगृहीतोऽसि शुक्रपुत्राय मर्कनामकाय त्वां गृह्णामि एष खरप्रदेशस्तव स्थानम्। त्वं यजमानस्य प्रजाः पालय। मन्त्रानुपेत्य ग्रहौ विधत्ते। बृहस्पतिर्देवानां पुरोहित आसीच्छण्डामर्कावसुराणां ब्रह्मण्वन्तो देवा आसन्ब्रह्मण्वन्तोऽसुरास्तेऽन्योऽन्यं नाशक्नुवन्नभिभवितुं ते देवाः शण्डामर्का-

बुपामन्त्रयन्त तावब्रूतां वरं वृणावहै ग्रहावेव नावत्रापि गृह्येतामिति। ताभ्यामेतौ शुक्रामन्थिनावगृह्णन्ततो देवा अभवन्परासुरा यस्यैवं विदुषः शुक्रामन्थिनौ गृह्येते भवत्यात्मना परास्य भ्रातृव्यो भवतीति। ब्रह्मवन्तः पुरोहितानुष्ठितमन्त्रसामर्थ्योपेताः। उपामन्त्रयन्त रहस्यमुपच्छन्दितवन्तः। यद्यप्यन्यत्र शण्डामर्कयोरावयोर्यज्ञभागो नास्ति तथाप्यत्राग्निष्टोमे सोऽस्तु। तत्रापि ग्रहावेव न तु लेपादिः। अत्र गृह्येतामित्येतावदेव शण्डामर्काभ्यां वृतं न तु हूयेतामिति। ततो देवा ग्रहपात्रेण स्वकार्यं साधितवन्तः। अर्थवादेन ग्रहयोरधस्ताल्लग्नानां पांसूनामपध्वंसनं विधातुं विधिमुन्नयति। तौ देवा अपनुद्यात्मन इन्द्रायाजुहवुरपनुत्तौ शण्डामर्कौ सहामुनेति ब्रूयाद्यं द्विष्यात्तमेव द्वेष्टि तेनैनौ सहापनुदत इति। देवाः स्वकार्यसिद्धेरूर्ध्वं तौ शण्डामर्कावपसाय स्वकीयायेन्द्राय तौ शुक्रामन्थिनग्रहावजुहुवुः। तस्माद्ग्रहयोरधोलग्नां धूलिमपध्वंसयन्नन्यत्र समाम्नातमपनुत्ताविति मन्त्रं ब्रूयात्। अमुनेत्यत्र द्वेष्यस्य द्वेष्टुश्च नाम ध्यायेत्। अत्र सूत्रम्। तौ प्रोक्षिताभ्यां शकलाभ्यामपिधायाप्रोक्षिताभ्यामधस्तात्पांसूनपध्वंसयतोऽपनुत्तौ शण्डामर्कौ सहामुनेत्यपनुत्तः शण्ड इति वाध्वर्युर्द्वेष्यं मनसा ध्यायन्नपनुत्तो मर्क इति तं प्रतिप्रस्थातेति। अन्यत्राम्नातेन मन्त्रेण ग्रहहोमस्य विधिमर्थवादेनोन्नयति। स प्रथमः संकृतिर्विश्वकर्मेत्येवैनावात्मन इन्द्रायाजुहवुरिन्द्रो ह्येतानि रूपाणि करिक्रदचरत्। इति। मन्त्रपाठस्तु स प्रथमः संकृतिर्विश्वकर्मा। स प्रथमो मित्रो वरुणो अग्निः। स प्रथमो बृहस्पतिश्चिकित्वान्। तस्मा इन्द्राय सुतमाजुहोमि। इति। स इन्द्रः प्रथमो देवानां मुख्यः सर्वाधिपतित्वात्। समीचीना कृतिर्निर्माणं यस्यासौ संकृतिः। तादृशो विश्वकर्मनामको देवोऽपि स इन्द्र एव। मित्रो वरुणोऽग्निः स एव। चिकित्वानभिज्ञो बृहस्पतिरपि स एव। तादृशायेन्द्रायाभिषुतं सोमं सर्वतो जुहोमि। यस्मादिन्द्र एतानि विश्वकर्मत्वादीनि रूपाणि करिक्रदत्यर्थं कुर्वञ्जगदचरत्तस्मात्तत्प्रतिपादकेनानेनैव मन्त्रेण होमो युज्यते। होमात्पुरा ग्रहावादायाच्छाद्याध्वर्युप्रतिप्रस्थातारौ प्राङ्मुखौ निर्गच्छेतामिति विधत्ते। असौ वा आदित्यः शुक्रश्चन्द्रमा मन्थ्यपिगृह्य प्राञ्चौ निष्क्रामतस्तस्मात्प्राञ्चौ यन्तौ न पश्यन्ति। इति। पश्चिमदिश्यस्तं गत्वा पुनरुदयाय प्राङ्मुखतया गच्छन्तौ सूर्याचन्द्रमसौ द्रष्टुं केऽपि न शक्नुवन्ति। तस्माद्ग्रहयोराच्छादनं युक्तम्। होमाय प्रत्यङ्मुखत्वं विधत्ते। प्रत्यञ्चावनावृत्य जुहुतस्तस्मात्प्रत्यञ्चौ यन्तौ पश्यन्ति। इति। उदयादूर्ध्वं प्रत्यङ्मुखतया गच्छन्तौ सूर्याचन्द्रमसौ सर्वे पश्यन्ति। अतो ग्रहयोराच्छादनमपनीय प्रत्यङ्मुखत्वेनावृत्तिर्होमार्था युक्ता। उत्तरवेदेरभितः परिक्रमणं विधत्ते। चक्षुषी वा एते यज्ञस्य यच्छुक्रामन्थिनौ नासिकोत्तरवेदिरभितः परिक्रम्य जुहुतस्तस्मादभितो नासिकां चक्षुषी तस्मान्नासिकया चक्षुषी विधृते सर्वतः परिक्रामतो रक्षसामपहत्यै। इति। अत्र सूत्रम्। उत्तरवेदिं परिक्रामतः सुवीराः प्रजाः प्रजनयन्परीहि। शुक्र शुक्रशोचिषेति दक्षिणेनाध्वर्युः प्रतिपद्यते सुप्रजाः प्रजाः प्रजनयन्परीहि। मन्थिन् मन्थिशोचिषेत्युत्तरेण प्रतिप्रस्थाता। इति। तदेतत्सर्वतः परिक्रमणं रक्षोवधाय सम्पद्यते। अत्र चमसहोमे प्राङ्मुखत्वं ग्रहहोमे प्रत्यङ्मुखत्वं च विधत्ते। देवा वै याः प्राचीराहुतीरजुहवुर्ये पुरस्तादसुरा आसन्ताꣳस्ताभिः प्राणुदन्त याः प्रतीचीर्ये पश्चादसुरा आसन्ताꣳस्ताभिरपानुदन्त प्राचीरन्या आहुतयो हूयन्ते प्रत्यञ्चौ शुक्रामन्थिनौ पश्चाच्चैव पुरस्ताच्च यजमानो भ्रातृव्यान्प्रणुदते

तस्मात्पराचीः प्रजाः प्रवीयन्ते प्रतीचीर्जायन्ते। इति। अत्र सूत्रम्। पुरस्तात्प्रत्यञ्चावध्वर्यू जुहुतः पश्चात्प्राञ्चमसंक्रममसाध्वर्यवो जुह्वति। इति। वाक्यं तु धिष्ण्यप्रस्तावेऽपि गतम्। सूत्रकारेणोदाहृतौ परिक्रमणमन्त्रौ प्रदेशान्तर आम्नाताविह व्याचष्टे। शुक्रामन्थिनौ वा अनु प्रजाः प्रजायन्तेऽत्तीश्चाद्याश्च सुवीराः प्रजाः प्रजनयन्परीहि शुक्र शुक्रशोचिषा सुप्रजाः प्रजाः प्रजनयन्परीहि मन्थिन् मन्थिशोचिषेत्याहैता वै सुवीरा या अत्तीरेताः सुप्रजा या आद्याः। इति। अत्तीर्भोक्त्र्य उत्तमजातयो ब्राह्मणादय आद्या भोग्या नीचजातयो भृत्यकर्मकरादयः। मन्त्रार्थस्तु। शोभना वीरा उत्तमा यासां ताः सुवीराः। शोभनाः सेवाकुशलाः प्रजाः पुत्रादयो यासां ताः सुप्रजाः। हे शुक्रग्रह त्वं यजमानस्य शोभनभोक्तृयुक्ताः प्रजा उत्पादयन्नुत्तरवेदेर्दक्षिणतः परीहि। शुक्रग्रह त्वं शुक्रदेवतासम्बन्धिना तेजसा रक्षसामपघातं कुर्विति शेषः। हे मन्थिग्रह त्वं यजमानस्य शोभनसेवकरूपाः प्रजा उत्पादयन्नुत्तरवेदेरुत्तरतः परीहि। मन्थिग्रह त्वं मन्थिदेवतासम्बन्धिना तेजसा रक्षांस्यपजहि। एता वै सुवीरा इत्यादिकं मन्त्रव्याख्यानम्। वेदनं प्रशंसति। य एवं वेदात्त्यस्य प्रजा जायते नाद्या। इति। मन्थिपात्रस्य विकङ्कतवृक्षत्वं सक्तुमेलनं च विधत्ते। प्रजापतेरक्ष्यश्वयत्तत्पराऽपतत्तद्विकङ्कतं प्राविशत्तद्विकङ्कते नारमत तद्यवं प्राविशत्तद्यवेऽरमत तद्यवस्य यवत्वं यद्वैकङ्कतं मन्थिपात्रं भवति सक्तुभिः श्रीणाति प्रजापतेरेव तच्चक्षुः सम्भरति। इति। सक्तवो यवपिष्टानि। आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि सोमं भक्षयन्तीति वचनादितरपात्रवन्मन्थिपात्रस्यापि सदःप्रवेशः प्राप्नोति तन्निषेधं प्रश्नोत्तराभ्यामुन्नयति। ब्रह्मवादिनो वदन्ति कस्मात्सत्यान्मन्थिपात्रं सदो नाश्नुत इत्यार्तपात्रꣳ हीति ब्रूयाद्यदश्नुवीतान्धोऽध्वर्युः स्यादार्तिमार्च्छेत्तस्मान्नाश्नुते। इति। आर्तपात्रं रोगयुक्तचक्षुःस्वरूपमिदं पात्रम्। अथ मीमांसा। दशमाध्यायस्य पञ्चमे पादे चिन्तितम्।

स्वस्थाने प्रतिकर्षो वा शुक्रादेः पूर्ववद्भवेत्।
स्थाने मैवं तदग्रत्वाप्राप्तेः स प्रतिकृष्यताम्॥ इति।

ज्योतिष्टोमे श्रूयते। शुक्राग्रान् गृह्णीयादभिचरतो मन्थ्यग्रान् गृह्णीयादभिचर्यमाणस्येत्यादि। ऐन्द्रवायववन्यायेन शुक्रादीनां स्वस्थाने ग्रहणमिति प्राप्ते ब्रूमः। ऐन्द्रवायवस्य धाराग्रहाग्रत्वं स्वस्थाने पाठादेव प्राप्तम्। शुक्रादीनां तु नेति वैषम्यम्। तथा सति विधीयमानमग्रत्वं पाठक्रमबाधमन्तरेणानुपपन्नत्वात्प्रतिकृष्यते। तत्रैवान्यच्चिन्तितम्।

स सर्वादावैन्द्रवायवादौ वाऽत्राविशेषतः।
सर्वादावाश्रयादैन्द्रवायवादौ श्रुतेरपि॥

स पूर्वोक्तः प्रतिकर्षः सर्वेषामुपांश्वादीनां ग्रहाणामादौ युक्तः। कुतः। विशेषाश्रवणात्। सामान्यतः श्रुतमग्रत्वमनपेक्षितत्वात्सर्वादौ मुख्यम्। नैतदेवम्। प्राकृतान्धाराग्रहानाश्रित्य फलाय शुक्राग्रत्वविधानात्। किञ्च। धारयेयुस्तं कामाय गृह्णीयुरैन्द्रवायवं गृहीत्वा सादयेत्। इति श्रूयते। तत्र काम्यस्य शुक्रादेर्धारणाद्वाऽनन्तरमैन्द्रवायवग्रहणं विवक्षितार्थं लिङ्गम्। तस्मादैन्द्रवायवादौ प्रतिकर्षः। तत्रैवान्यच्चिन्तितम्।

नापकर्षोऽपकर्षो वा सादनस्याश्रुतत्वतः।
न मैवं ग्रहशेषत्वात्तच्चाशक्तेर्ग्रहान्तरे॥ इति।

सर्वत्र ग्रहो गृहीत्वा साद्यते। तथा सति यत्र काम्यस्य ग्रहस्यापकर्षस्तत्र सादनस्यापकर्षो न शङ्कनीयः। अश्रुतत्वात्। शुक्राग्रानित्यग्रशब्देन यथा ग्रहस्यापकर्षः श्रूयते न तथा सादनापकर्षप्रतिपादकः कश्चिच्छब्दोऽस्ति। तस्मान्नापकर्षः। नैतद्युक्तम्। सादनस्य ग्रहशेषत्वात्। तच्च शेषत्वमशक्तेरेवगम्यते। न हि पूर्वग्रहमसादयित्वा ग्रहान्तरं ग्रहीतुं शक्यम्। अतोऽत्र ग्रहाणामपकर्षं तच्छेषभूतं सादनमप्यपकृष्यते। अथ च्छन्दः। अयं वेन इति त्रिष्टुप्। तं प्रत्नथेति जगती ॥८॥

कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके नवमोऽनुवाकः।

॥ २ ॥

१.५.९

नवमेऽनुवाके पूर्वोक्तोपस्थानस्याग्निहोत्राङ्गता प्रदर्श्यते। तत्र तावदग्निहोत्रं विधत्ते अग्निहोत्रमिति। वाक्यान्तरविहितेन पयोदधियवाग्वादिद्रव्येणाग्निहोत्रनामकं होमं कुर्यात्। यजमानस्य क्षीरप्रकृतिकं यत्स्वमग्नौ हुतं न तद्विनश्यति किन्तु तस्यैव यजमानस्य तत्स्वं भूत्वाऽवतिष्ठते। तदवस्थानं दृष्टान्तेनोपपादयति रेत इति। यथा प्रजोत्पादके योनौ सिक्तं रेतोऽवतिष्ठते तथाग्नेः प्रजननरूपत्वात्तस्मिन्हुतमवतिष्ठते। ननु वह्निसमीपे प्राप्तानां द्रव्याणां दाहः प्रत्यक्षेणोपलभ्यते इत्याशङ्क्याह। अथेति। यद्यपि घर्मकाले दावाग्निः स्वसमीपं प्राप्ता ओषधीर्दहति तथाऽपि दग्धास्ता ओषधयो वृष्टिकाले भूयस्यः प्रजायन्ते। तस्मात्प्रजननोऽग्निः। कालद्वयं विधत्ते। यत्सायमिति। सायंकालीनहोमेन सेचनम्। प्रातःकालीनेन होमेनोत्पादनम्। विहितस्याग्निहोत्रस्याङ्गमुपस्थानं विधत्ते। रेत इति। लोके योनौ सिक्तं रेतो विश्वकर्मणा यदि न विक्रियेत तदा नैव प्रजोत्पत्तिरस्ति। स च त्वष्टा यावन्ति रूपाणि उद्दिश्य रेतो विविधं करोति तावन्त्युत्पद्यन्ते। अत्रापि यजमानो देवैरनुगृहीतस्त्वष्टा ततो विविधरूपकरणाय बह्वीभिरुपतिष्ठते। अयमुपस्थानकर्मविधिः। एतदनुवादेन षड्भिरुपतिष्ठत इत्यादिमन्त्रविधिः। उपस्थानं प्रशंसति। स इति। उपस्थाता प्रजामुत्पाद्य प्रतिदिनमुत्तरोत्तरं धनादिभिर्वर्धते। प्रकारान्तरेण प्रशंसति। अहरिति। वित्ति पूर्वलब्धं पशुरूपं धनं वेद्यमतः परं लब्धुं योग्यं तदुभयं देवद्रव्यमपहृत्य तेन सहासुरा रात्रिं प्राविशन्। अन्धकारे क्वापि गताः। ततः पशुहीना वयमिति खिद्यन्तो देवा उपायमपश्यन्। रात्रावग्नेः प्रकाशाधिक्याद्रात्रिराग्नेयी। अग्नेः पशुस्वामित्वात्पशवोऽप्याग्नेयाः। स्तुतः सोऽग्निरेभ्यो देवार्थं रात्रेरध्याहृत्याहरभिलक्ष्य तान्पशून्निरार्जन्निरगमयत्। कामान्भोगान्। पुनः प्रकारान्तरेण प्रशंसति। आदित्य इति। पुनरपि प्रकारान्तरेण प्रशंसति। अभीति। एतावाहवनीयगार्हपत्यौ य उपतिष्ठते एषोऽग्नी उभावभ्यारोहति स्ववशौ करोति। यथा लोके कश्चित्पूर्वमधमः सन्नेवं कामयतेऽहं विद्यादिना श्रेष्ठ उत्तमं पदमभ्यारूढो भविष्यामीति तथाऽयं यजमान उपस्थानेन स्वस्योत्तमं पदं करोति। तस्मादुपस्थानं प्रशस्तमित्यर्थः। अत्र केचित्प्रातरग्निर्नोपस्थेय इत्याहुः। अन्ये तु न कदाचिदप्युपस्थेय इति। सिद्धान्तिनस्तु सर्वदाऽप्युपस्थेय इति। तत्र पूर्वपक्षं प्रथमं दर्शयति।

नक्तमिति। रात्रौ व्रतान्यनुष्ठेयानि कर्माणि संवृज्यन्ते संकीर्णानि भवन्ति। अन्धकारे केन कथमनुष्ठितमिति न ज्ञायते। यथाशास्त्रमनुष्ठितो व्रतविशेषः श्रेयांस्तद्विपरीतश्चेत्पापीयान्। तावुभौ सहैव तिष्ठतः। तत्राग्नावुपस्थिते सत्यग्निना ज्योतिषा रात्रिप्रयुक्तं तमोदोषं तरति। तस्मान्नक्तमुपस्थेयः। अहनि तु तमोदोषाभावान्नोपस्थेय इत्येकः पूर्वपक्षः। द्वितीयं पूर्वपक्षं विचारपुरस्सरं दर्शयति। उपस्थेय इति। प्लुतिर्विचारार्था। लोके मनुष्यायैव तावद्राज्ञे यः कोऽपि दरिद्रो यत्किञ्चिज्जम्बीरफलादिकमुपायनमाहृत्य ततः प्रतिदिनमेनं राजानं प्रति क्षेत्रधनादिकं यदि याचति तदा स याचकस्तं राजानं पीडयत्येव। तथा सति को नाम महाप्रभावान्देवान्प्रतिदिनं याचितुमर्हति। याच्ञारूपं चेदमुपस्थानम्। आयुर्दा अग्नेऽस्यायुर्मे देहीत्यादिमन्त्रेषु तत्प्रतीतेः। तस्मादग्निः कदाचिदपि नोपस्थेय इति द्वितीयः पूर्वपक्षः। सिद्धान्तं दर्शयति। अथो इति। अथोशब्दः पूर्वपक्षव्यावृत्त्यर्थः। आशिषे वै स्वापेक्षितं सर्वमाशासितुमेव कं प्रजापतिसदृशं सर्वदेवात्मकमग्निं प्रति यजमानो यजत इत्यभिज्ञा आहुः। लोकेऽपि राज्ञश्चित्तवृत्तिमविज्ञायाकाण्डे देहि देहीत्युक्ते सत्युपरोधो भवति। यदा तु प्रशंसया विनोदेन वा परितोषमुत्पाद्य याचते तदानीमुत्साहयुक्तो याचितादप्यत्यन्तमधिकमेव ददाति। तद्वदाहिताग्नेर्मन्त्रैरुपस्थानमेव याच्ञा। सा च बहुविधप्रशंसापूर्वकत्वान्नोपरोधाय भवति किन्त्वत्यन्तपरितोषायैव। तस्मात्सायं प्रातश्च वह्निरुपस्थेय एव। ऋग्भिरुपस्थानं प्रशंसति। प्रजापतिरिति। अहोरात्रदेवताभ्यामन्तर्धापिताः पशवश्छन्दोयुक्तमन्त्रैरन्विष्टाः सन्तो लब्धाः। तस्माच्छन्दोभिरुपस्थानं विनष्टवस्त्वन्वेषणाय भवति। तदुपस्थानस्य प्रतिदिनकर्तव्यतामुन्नयति। न तत्रेति। उपस्थातुरभीष्टप्रार्थनासद्भावादुपस्थेयस्य स्तुतिसद्भावाच्च तत्रोपस्थाने कस्यापि जाम्यालस्यं नास्ति। उपस्थानवेलायामीषत्तिरश्चीनमुखत्वं विधत्ते। यो वा इति। प्रत्यङ् प्रत्यङ्मुखः। तथा सत्यग्निरेनं यजमानं प्रत्योषति प्रातिकूल्येन दहति। पराङ् पराङ्मुखः। तथा सति यजमानः प्रजया पशुभिश्च विष्वङ्ङेति वियुक्तो भवति। कत्रातिर्यङ्ङिवेषत्तिरश्चीन इव ॥९॥

कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः।

॥ ३ ॥

१·६·८

सप्तमे देवतापरिग्रहादिरुक्तः। अष्टमे यज्ञायुधसम्भृतिरुच्यते। तत्र प्रथमं तावदपां प्रणयनं विधातुं प्रस्तौति। यो वा इति। यो यजमानो मनसि देवताविषयां श्रद्धामसन्निधाप्य यष्टुं प्रयुङ्क्ते तदीयमिष्टं देवा ऋत्विजश्च न विश्वसन्ति। विधत्ते। अप इति। अपां श्रद्धाहेतुत्वमैतरेयिणः समामनन्ति। आपो ह्यस्मै श्रद्धां संनमन्ते पुण्याय कर्मण इति। प्रत्यक्षं चैतत्स्नानाचमनादियुक्तस्य देवपूजादावैकाग्र्यातिशयदर्शनात्। अतोऽपां प्रणयनेन श्रद्धाया उपस्थापितत्वाद्देवानामृत्विजां चैतदीये यज्ञे विश्वासो युक्तः। यद्यपि पौरोडाशिककाण्डेऽध्वर्युकर्तृकमिदं प्रणयनं विहितं तथापि शाखाभेदादपुनरुक्तिः। शाखाभेदश्चापस्तम्बेन तत्रत्यमन्त्राणां साकल्ये-

नानुवादाद्विधिपुनरुक्तिबाहुल्याच्चावगन्तव्यः। पृथिवीं च मनसा ध्यायतीति सूत्रकारेण प्रणयनकाले ध्यानमुक्तं तदिदं विधातुं प्रशंसति। तदाहुरिति। तत्त्रापां प्रणयने केचिदभिज्ञा आहुः। किमिति। एता आपो वज्रं शरीरस्य वृत्तिमतिनेदन्त्यतिक्रामन्ति। वाचमप्यतिक्रामन्ति। न खलु प्रवहन्तीनां नद्यादिगतानामपां निवारणं शरीरेण वाचा वा कर्तुं शक्यते। मन एवैकमेता आपो नातिक्रामन्तीति। तदुत्तरत्र स्पष्टीकरिष्यते। विधत्ते। मनसेति। पृथिवीं ध्यायन्निति शेषः। ब्राह्मणान्तरमनुसृत्य सूत्रकारेणोक्तत्वात्। अनतिक्रमणमुपपादयति। इयमिति। मनसः पृथिवीवद्व्याप्तुं शक्यत्वात्पृथिवीत्वम्। न हि नद्यादिगता आपः पृथिव्या अतिक्रमणे शक्ताः। मनसा प्रणयनस्य वेदनं प्रशंसति। अस्कन्नेति। विधत्ते। यज्ञायुधानीति। वक्ष्यमाणानि स्फ्यकपालादीनि यज्ञस्य साधनत्वादायुधानीत्युच्यन्ते। तान्यध्वर्युः संपादयेत्। साध्यसाधनयोरभेदोपचाराद्यज्ञस्यैव तदायुधत्वम्। तत्तेनायुधसम्पादनेन यज्ञमेव संपादयति। अत्रायुधानां प्रयोगस्त्रिविधः। एकैकस्य प्रयोगः सर्वेषां सह प्रयोगो द्वयोर्द्वयोः प्रयोगश्चेति। तत्र तृतीयं विधातुमितरपक्षौ निन्दति यदेकमिति। ईदृशौ पैतृकमानुषपात्रप्रयोगौ गृह्यकारेण प्रदर्शितौ। द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति देवसंयुक्तानि सकृदेव मनुष्यसंयुक्तान्येकैकशः पितृसंयुक्तानीति। विधत्ते। द्वे द्वे इति। द्वित्वसाम्येन याज्यानुवाक्यारूपत्वम्। स्त्रीपुरुषात्मकमिथुनत्वञ्च। संपादनीयानां यज्ञायुधानां स्वरूपविशेषं विधातुं तद्वेदनं प्रशंसति। यो वा इति। यो यजमानो मुखतो यज्ञारम्भे दशैतानि संपादनीयानीत्यनुसन्धत्तेऽस्य यज्ञो निर्विघ्नेनानुष्ठानक्षमो भवति। आयुधविशेषस्वरूपाणि विधत्ते। स्फ्यश्चेति। स्फ्यो नाम बाहुमात्रः खड्गाकारः काष्ठविशेषः। कपालानि भग्ननूतनमृद्भाण्डलेशसदृशानि। अग्निहोत्रहवणीलक्षणं सूत्रकार आह वैकङ्कत्यग्निहोत्रहवणी बाहुमात्र्यरत्निमात्री वा प्रसृताकृतिरिति। शम्या बाहुमात्रो गदाकृतिः काष्ठविशेषः। शिष्टानि शूर्पादीनि लोकप्रसिद्धानि। पुनरपि दशायुधवेदनप्रशंसनमुपसंहारार्थम्। चकाराः परस्परसमुच्चयार्था अनुक्तदशायुधसमुच्चयार्था वा। तानि सर्वाण्यापस्तम्बो दर्शयति। उत्तरेण गार्हपत्याहवनीयौ दर्भान्त्सꣳस्तीर्य द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति दशापराणि दश पूर्वाणि स्फ्यश्च कपालानि चेति यथासमाम्नातमपराणि प्रयुज्य स्रुवं जुहूमुपभृतं ध्रुवां वेदं पात्रीमाज्यस्थालीं प्राशित्रहरणमिडामात्रं प्रणीताप्रणयनमिति पूर्वाणि तान्युत्तरेणावशिष्टान्यन्वाहार्यस्थालीमश्मानमुपवेषं प्रातर्दोहपात्राणीति। यजमानस्याभिमन्त्रणं विधातुं प्रस्तौति। यो वा इति। प्रतिप्रोच्य होष्यामीति प्रतिश्रुत्य। विधत्ते। हविरिति। अग्निꣳ होतारमित्यादिमन्त्रः पूर्वप्रपाठके ममनामेत्यनुवाके समाम्नातो व्याख्यातश्च। देवानामाह्वातारं तमग्निमिह यज्ञेऽहमाह्वयामि। आयन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्येत्युत्तरार्द्धं देवेभ्यः प्रतिश्रवणं विस्पष्टम्। अस्य हविषो वियन्तु इदं हविरश्नन्त्वित्यर्थः। इदमभिमन्त्रणं पुनः प्रशंसति एष वा इति। एष मन्त्रप्रयोगो यज्ञस्वीकाररूपः। हविषो वियन्त्वित्यनेन देवतामुद्दिश्य द्रव्यत्यागस्य सूचितत्वात्। यजमानस्य मौनं विधत्ते। तदुदित्वेति। तदभिमन्त्रणवाक्यम्। मौनेन यज्ञो बहिरप्रकाशितत्वाद्धुतो भवति। पुनरपि मौनं प्रशंसति। अथो इति। सति वाग्व्यापारे विवक्षितशब्दविशेषतदर्थचिन्तया तत्प्रसक्तानुप्रसक्तचिन्तया च विक्षिप्तं मनः प्रकृताद्यज्ञात्स्खलति। अतः प्रजापतिरविक्षेपाय मनसैव यज्ञमकरोत्। तद्वद्यजमानोऽपि तत्तेन मौनेन

मनसैव यज्ञं तनुते तथा सति स्खलनाभावाद्यज्ञसामत्र प्रचारो न भवति। यज्ञयोगविधिमुन्नेतुं प्रस्तौति। यो वा इति। यो यजमानो यज्ञयोगकाले समागते सत्यप्रमत्तो यज्ञं युनक्ति स एव युञ्जानेषु यजमानेषु युङ्क्त इति व्यपदेशमर्हति। अकाले तु योगः कृतोऽप्यकृत एव स्यात्। योग-विध्युन्नयनमभिप्रेत्य तत्र कारणभूतं मन्त्रमुदाहृत्य व्याचष्टे। कस्त्वेति। अयमपि मन्त्रः पूर्वप्रपाठके समाम्नातः। यः प्रजापतिः सर्वदा सर्वेषां यजमानानां यज्ञं युनक्ति स एवाद्य मदीयं यज्ञं युनक्तु रथेऽश्वमिव मयि सम्बध्नातु। अनेन मन्त्रेण यज्ञं युञ्ज्यादित्युन्नीतो विधिः। अथ मीमांसा। तृतीयाध्यायस्य प्रथमपादे चिन्तितम्।

द्रव्यस्य स्फ्यकपालादेः साङ्कर्यं वा व्यवस्थितिः।
यज्ञायुधत्वं सर्वाङ्गसमं तेनात्र सङ्करः॥
वाक्यस्योद्धननादेः स्याद्वैयर्थ्यं सङ्करे सति।
अनुवादो ह्यायुधोक्तिर्व्यवस्था तेन पूर्ववत्॥

दर्शपूर्णमासयोः श्रूयते स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पञ्च कृष्णाजिनञ्च शम्या चोलूखलं च मुसलञ्च दृषच्चोपला चैतानि वै दश यज्ञायुधानीति। स्फ्यशब्देन खड्गाकारं काष्ठमुच्यते। अग्निहोत्रहवणी हविर्निर्वापसाधनं काष्ठपात्रम्। शम्या गदाकारं काष्ठम्। तत्र व्रीह्यादिद्रव्येष्ववघातादिसंस्काराणां साङ्कर्ये निराकृतेऽपि स्फ्यकपालादिद्रव्याणामुद्धननपुरोडाशश्रपणाद्यङ्गक्रियासु साङ्कर्यं निराकर्तुमशक्यम्। येन केनापि द्रव्येण यस्यां कस्यांचित्क्रियायां कृतायामपि श्रूयमाणस्य यज्ञायुधत्वस्या-विरोधात्। न चाव्यवस्थामात्रेण यज्ञसाधनत्वमपैतीति प्राप्ते। ब्रूमः। स्फ्येनोद्धन्ति। कपालेषु श्रपयति। अग्निहोत्रहवण्या हवींषि निर्वपति। शूर्पेण विविनक्ति। कृष्णाजिनमधस्तादुलूखलस्यावस्तृणाति। शम्यायां दृषदमुपदधाति। उलूखलमुसलाभ्या-मवहन्ति। दृषदुपलाभ्यां पिनष्टीत्येतेषां विशेषसंयोगबोधकानां वाक्यानां वैयर्थ्यं साङ्कर्य-पक्षे प्रसज्येत। व्यवस्थापक्षेऽपि सम्बन्धसामान्यबोधकं यज्ञायुधवाक्यमनर्थकमिति चेन्न। उद्धननादिवाक्यसिद्धार्थानुवादित्वात्। न च वैपरीत्येनोद्धननादिवाक्यानामेवानुवादत्वमिति वाच्यम्। बहुवैयर्थ्यस्य जघन्यत्वात्। न चात्यन्तं यज्ञायुधानुवादस्य वैयर्थ्यम्। यज्ञायुधानि सम्भरतीत्यासादनविधानायोपयुक्तत्वात्। तस्मादवघातादिसंस्कारा इव स्फ्यकपालादिद्रव्याणि व्यवस्थितानि। चतुर्थाध्यायस्य प्रथम पादे चिन्तितम्।

दश यज्ञायुधानीति हविष्ट्वेन विधिर्न वा।
आद्येऽप्राप्तेः पुरोडाशे समुच्चयविकल्पने।
साद्गुत्पत्तिशिष्टेन विकल्पादिर्न युज्यते।
स्फ्येनोद्धन्तीति यत्प्राप्तं तदत्रानूद्य संस्तवः।

दर्शपूर्णमासयोः स्फ्यश्च कपालानि चेत्याद्यनुक्रम्यैतानि वै दश यज्ञायुधानीत्याम्नातम्। तानि चात्र हविष्ट्वेन विधीयन्ते। कुतः। मानान्तरेरप्राप्तत्वेनापूर्वार्थत्वात्। यदि तत्र पुरोडाशो हविर्भवेत्तदा तेन सहैतेषां समुच्चयो विकल्पो वाऽस्तु। इति प्राप्ते ब्रूमः। आग्नेयोऽष्टाकपाल इत्युत्पत्तिशिष्टेन पुरोडाशेन सह पश्चाच्छिष्टानामायुधानां

विकल्पः समुच्चयो वा न संभवति ॥ आयुधत्वं यज्ञसाधनत्वम्। तच्च स्फ्येनोद्धन्ति कपालेषु श्रपयतीत्यादिशास्त्रसिद्धमेवात्रानूद्य यज्ञायुधानि सम्भरतीत्येष सम्भरणविधिः स्तूयते। तस्मान्नास्ति हविष्ट्वम्। एकादशाध्यायस्य तृतीयपादे चिन्तितम्।

देशपात्रर्त्विजोऽन्यस्मिन्प्रयोगेऽन्य उतैच्छिकाः।

भुक्त्यर्थपर्णवत्तेऽन्ये वासोवत्ते स्युरैच्छिकाः॥

समे यजेतेत्युक्तो देशः। जुह्वादीनि पात्राणि। अध्वर्युप्रमुखा ऋत्विजः। ते चैकस्मिन्प्रयोग उपयुक्ता निरिष्टकत्वान्न प्रयोगान्तरमर्हन्ति। इष्टान्निर्गता निरिष्टाः। कुत्सिता निरिष्टा निरिष्टकाः दुष्टाः पुनः प्रयोगानर्हा इत्यर्थः। यथा भोजन उपयुक्तं कदलीपलाशादिपर्णं प्रज्ञास्यापि न पुनः शिष्टास्तत्स्वीकुर्वन्ति तथाऽत्रापि अन्ये देशादयः प्रयोगान्तरे सम्पाद्या इति प्राप्ते ब्रूमः। यथा वस्त्रं पूर्वदिने प्रावरणायोपयुक्तमपि दिनान्तरे निरिष्टकं न भवति। शिष्टास्तद्वाऽन्यद्वा स्वेच्छया दिनान्तरे स्वीकुर्वन्ति तद्वदत्रापि द्रष्टव्यम्। इदं निरिष्टकमिदं नेत्यत्र शिष्टाचार एव प्रमाणम्। शिष्टाश्च देशादीन्न नियमेन परित्यजन्ति। तस्मादैच्छिकाः। तत्रैवान्यच्चिन्तितम्।

मा भूदन्यत्वनियमः पात्रे तन्त्रं किमैच्छिकम्।

नियतं वाप्रिमो देशवन्नैवं प्रतिपत्तितः॥

देशपात्रर्त्विजां साधारण्येनान्यत्वनियमे निवारिते सति पुनः पात्रेषु नियमान्तरसदसद्भावश्चिन्त्यते। प्रथमप्रयोगे यान्युपयुक्तानि पात्राणि तान्येव प्रयोगान्तरेष्विति नियमो नास्त्युतास्तीति संशयः। यथा देशकर्तृषु त एवेति नियमो नास्त्यैच्छिकत्वस्योक्तत्वात्तथा पात्रेष्वपीति चेन्नैवम्। आमरणं पात्राणां धारणीयत्वात्। आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति प्रतिपत्तिविधानेनामरणं धारणमेव गम्यते। ननु पात्रैरिति तृतीयया गुणभावावगमाद्दर्थकर्मेदं न प्रतिपत्तिः। तथा सति पात्रान्तरैरपि दाहसिद्धेर्न धारणनियम इति चेन्मैवम्। दक्षिणे पाणौ जुहूमासादयतीति द्वितीयया प्रतिपाद्यत्वावगमात् पूर्वेषामेव धारणम्। तस्मात्सर्वेषु प्रयोगेषु तन्त्रम्। तत्रैवान्यच्चिन्तितम्।

किं पौर्णमासीमारभ्य यद्वाऽऽधानमियं धृतिः।

प्रकृत्यर्थतयाऽऽद्यः स्यान्मरणानियमात्परः॥

अनारभ्याधीतानां पात्राणां प्रकृतिगामितया पौर्णमासीमारभ्य धारणमिति प्राप्ते ब्रूमः। आधानकाले पवमानेष्टिषु चोदकप्राप्तत्वात्पात्राण्याधानमारभ्य धारयितव्यानि। अन्यथाऽधानपौर्णमास्योर्मध्ये यजमानस्य कदाचिन्मरणे पात्राभावेन दाहाभावप्रसङ्गात्। तस्मादाधानमारभ्य धारणमित्ययं परः पक्षोऽभ्युपगन्तव्यः॥८॥

कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठकेऽष्टमोऽनुवाकः।

॥ ४ ॥

१.८-१८

सप्तदशे संसृपां हवींष्युक्तानि। अष्टादशे दशपेय उच्यते। तत्र दीक्षासोमक्रययोश्चोदकप्राप्तं दिनभेदमपवदितुं विधत्ते सह इति। प्रकृतास्वप्सु स्नात्यपोऽश्नातीति यद्विहितं तदपवदितुं विधत्ते।

पुण्डरीति। तदेतत्सूत्रकारः स्पष्टीचकार। अपो दीक्षायाः स्थाने द्वादशपुण्डरीकां स्रजं प्रति-मुञ्चते इति। प्रतिमोचयेदित्यर्थः। तदेतत्प्रशंसति। जामि वा एतत्कुर्वन्ति। यत्सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति। पुण्डरिस्रजां प्रयच्छत्यजामित्वाय। अङ्गिरसः सुवर्गं लोकं यन्तः। अप्सु दीक्षातपसी प्रावेशयन्। तत्पुण्डरीकमभवत्। यत्पुण्डरिस्रजां प्रयच्छति। साक्षादेव दीक्षा तपसी अवरुन्धे इति। चोदकप्राप्तानि हिरण्यवासःप्रभृतीनि दशविधक्रयद्रव्याण्यपवदितुं विधत्ते। दशभिरिति। वत्सतरा उपरतस्तनपानाः। अत एव सूत्रकारो विशिनष्टि। दशभि-र्वत्सतरैः सोमं क्रीणाति। इति। अत्र सङ्ख्यां प्रशंसति। दशभिर्वत्सतरैः सोमं क्रीणाति। दशाक्षरा विराट्। अन्नं विराट्। विराजैवान्नाद्यमवरुन्धे इति। साण्डत्वं विधाय प्रशंसति। मुष्करा भवन्ति सेन्द्रत्वाय। इति। सेन्द्रत्वम्। इन्द्रियसामर्थ्यसहितत्वम्। प्रधानं कर्म विधत्ते। दशेति। दशसु वैकङ्कतचमसेषु पातव्यः सोमरसो यस्मिन्क्रतौ स क्रतुर्दशपेयः। यद्वा। एकैकस्मिन्पात्रे दशभिर्ब्राह्मणैः पातव्यः सोमो यस्मिन्स दशपेयः। एतदेवाभिप्रेत्य सूत्रकार आह। श्वोभूते पात्रसंसादनकाले दश चमसानधिकान्प्रयुनक्ति तानुन्नयनकाल उन्नयति भक्षण-काले दश दशैकैकस्मिंश्चमसे ब्राह्मणाः सोमपाः सोमं भक्षयन्ति। इति। तं विधिं प्रशंसति। दशपेयो भवति। अन्नाद्यस्यावरुद्ध्यै। इति। विधत्ते। शतमिति। एकैकस्मिन्पात्रे दश दश ब्राह्मणा इति मिलित्वा शतं ब्राह्मणाः पिबन्ति। प्रशंसति। शतं ब्राह्मणाः पिबन्ति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति। इति। विधत्ते। सप्तेति। अस्मिन्क्रतौ यद्यत्स्तोत्रं तस्य सर्वस्य सप्तदशस्तोमत्वमेव कुर्यात्। प्रशंसति। सप्तदशꣳ स्तोत्रं भवति। सप्तदशः प्रजापतिः। प्रजापतेराप्त्यै। इति। विधत्ते। प्राकाशाविति। प्राकाशौ सुवर्णदर्पणौ। प्रशंसति। प्राकाशावध्वर्यवे ददाति। प्रकाशमेवैनं गमयति। इति। हिरण्यस्रजो दानं विधत्ते। स्रजमिति। तथा च सूत्रकारः। दक्षिणाकाले हिरण्यप्राकाशावध्वर्यवे ददाति हिरण्यस्रजमुद्गात्रे। इति। प्रशंसति। स्रजमुद्गात्रे। व्येवास्मै वासयति। इति। अस्य यजमानस्य व्येव विशिष्टमेव दुकूलादिकं वासयति उत्तरीयत्वेनाच्छादयति। वर्तुलस्य स्वर्णाभरणस्य दानं विधत्ते। रुक्म-मिति। प्रशंसति। रुक्मं होत्रे। आदित्यमेवास्मा उन्नयति। इति। उदयं प्रापयतीत्यर्थः। विधत्ते। अश्वमिति। ददातीत्यनुवर्त्यते। द्वाभ्यामेकद्रव्यप्रदानं वाचनिकम्। प्रशंसति। अश्वं प्रस्तोतृप्रतिहर्तृभ्याम्। प्राजापत्यो वा अश्वः। प्रजापतेराप्त्यै। इति। अश्वमेधप्रकरणे प्रजा-पतेरक्ष्यश्वयत्तत्परापतदिति श्रुतेरश्वस्य प्राजापत्यत्वम्। बालगर्भिणीनां गवां दानं विधत्ते। द्वादशेति। वत्सद्वाराऽभिवृद्धिसूचनादायुष्याभिवृद्ध्या प्रशंसति। द्वादश पष्ठौहीर्ब्रह्मणे। आयुरेवावरुन्धे। इति। वन्ध्याया गोर्दानं विधत्ते। वशामिति। वशाशब्देन बुद्धिस्थं वशित्व-मभिप्रेत्य प्रशंसति। वशां मैत्रावरुणाय। राष्ट्रमेव वश्यकः। इति। रेतःसेचनसमर्थस्य गोर्दानं विधत्ते। ऋषभमिति। ऋषभं ब्राह्मणाच्छꣳसिने। राष्ट्रमेवेन्द्रियाव्यकः। इति। द्वाभ्यां प्रत्येकं वस्त्रदानं विधत्ते वाससी इति। धौतवस्त्रयोः शुद्धिहेतुत्वमभिप्रेत्य प्रशंसति। वाससी नेष्टापोतृभ्याम्। पवित्रे एवास्यैते। इति। स्थूलस्य यवपूर्णशकटस्य दानं विधत्ते स्थूरीति। वारुणं यवमयं चरुमिति श्रुतत्वाद्यवप्रियं वरुणं स्वकीयभागप्रदानेन स्वकीयदेशान्ता-द्बहिर्निस्सारितवान्भवतीत्यभिप्रेत्य प्रशंसति। स्थूरि यवाचितमच्छावाकाय। अन्तत एव

वरुणमवयजते। इति। विधत्ते। अनड्वाहमिति। वह्नित्वगुणोभयोः सम्बन्धेन प्रशंसति। अनड्वाहमग्नीधे। वह्निर्वा अनड्वान् वह्निरग्नीत्। वह्निनैव वह्निं यज्ञस्यावरुन्धे। इति। दर्शपूर्णमासयोराग्नेयहविर्युक्तस्य शकटस्य वहनादनड्वान्वह्निः। अग्नेरिन्धनादाग्नीध्रोऽपि वह्निः। उभयोः सम्बन्धे सति वह्निरूपेणानडुहा यज्ञस्य वह्निं वाहकमाग्नीध्राख्यृत्विग्जातं स्वाधीनं करोति। चोदकप्राप्तं होतृसामान्यादिकं बाधितुं विशेषान्विधत्ते भार्गव इति। प्रकृतौ यः कोऽपि होतेत्यत्रापि तत्प्राप्तौ भृगुगोत्रोत्पन्न एवेति विशेष्यते। प्रकृतौ ब्राह्मणाच्छंसिनं प्रत्याज्यस्तोत्रे गायत्रसाम्नो विहितत्वात्तदपवादाय आयन्तीयं सामात्र विधीयते। आयन्त इव सूर्यमित्यस्यामृच्युत्पन्नं साम आयन्तीयम्। प्रकृतौ यज्ञायज्ञियस्याग्निष्टोमसामत्वात्तदपोद्य वारवन्तीयं साम विधीयते। अश्वं न त्वा वारवन्तमित्यस्यामृच्युत्पन्नं वारवन्तीयं साम। प्रकृतौ वहन्तीनां गृह्णातीति प्रवाहमात्रगतानामपां वसतीवरीत्वादत्रापि तत्प्राप्तौ सरस्वतीगता एवापो विधीयन्ते। इन्द्रवीर्यत्वेन त्रयं प्रशंसति। इन्द्रस्य सुषुवाणस्य मेधा वीर्यं परापतत्। भृगुस्तृतीयमभवत्। आयन्तीयं तृतीयम्। सरस्वती तृतीयम्। भार्गवो होता भवति। आयन्तीयं ब्रह्मसाम भवति। वारवन्तीयमग्निष्टोमसाम। सारस्वतीरपो गृह्णाति। इन्द्रियस्य वीर्यस्यावरुद्ध्यै। इति। वारवन्तीयस्येन्द्रवीर्यत्वाभावेनात्रास्तुतेरप्रतीतत्वात्तेन सह आयन्तीयमपि पुनरुपादत्ते। आयन्तीयं ब्रह्मसाम भवति इन्द्रियमेवास्मिन्वीर्यꣳ श्रयति। वारवन्तीयमग्निष्टोमसामम्। इन्द्रियमेवास्मिन्वीर्यं वारयति। इति। सामनाम्नि श्रयतिधातोः प्रतीतत्वाद्यजमानेन वीर्यमाश्रीयते। द्वितीयनाम्नि वारयितृत्वप्रतीतेरस्मिन्यजमाने प्रयुक्तं वैरिवीर्यं निवारितं भवति।

अथ मीमांसा। एकादशाध्यायस्य द्वितीयपादे चिन्तितम्।

दशपेये चाभिषेचनीये तन्त्रं भिदाऽथवा।
क्रयसाहित्यतस्तन्त्रं कालभेदेन भिन्नता॥

राजसूये दशपेयाभिषेचनीयसञ्ज्ञकौ द्वौ सोमयागौ। तयोरङ्गानुष्ठानं तन्त्रेण कार्यम्। कुतः। क्रयस्य भिन्नत्वात्। सह सोमौ क्रीणाति। इति। अभिषेचनीयस्य यदा सोमक्रयस्तदैव दशपेयस्यापि सोमे क्रीतऽह्ने सति क्रयात्पूर्वभाविनां दशपेयाङ्गानामपकर्षात्तन्त्रं स्यादिति प्राप्ते ब्रूमः। भिन्नकालीनयोरभिषेचनीयदशपेययोरङ्गानां भेदो युक्तः। संसृपशब्दवाच्याभ्यो दशभ्य इष्टिभ्य ऊर्ध्वमपराह्णे दशपेयस्योपक्रमः। ताभ्यः प्राचीनेऽत्यन्तव्यवहिते कालेऽभिषेचनीयः। न च क्रयसाहित्यमस्ति। सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति इति दशपेये क्रयस्य सद्यस्कालस्याभिधानात्। सह सोमाविति वचनेन क्रयार्थसंवादे साहित्यं विवक्षितम्। तस्मादुभयोरङ्गानां भेदः। तृतीयाध्यायस्य पञ्चमपादे चिन्तितम्।

राजसूये क्वचित्कर्तृश्चमसो दशभिर्जनैः।
भक्ष्यः किं तत्र राजन्या भक्षका ब्राह्मणा उत॥
आद्यो भानात्सङ्ख्ययैकजातेर्विप्राः शतं दश।
चमसानयुरित्युक्त्या राजपात्रं च विप्रगम्॥

राजसूये दशपेयनामके सोमयागे श्रूयते दश दशैकैकं चमसमनुसर्पन्तीति। तत्र यजमानस्य राजन्यस्य यश्चमसः सोऽयं राजन्यैरेव दशभिर्भक्षणीयः। दशेति सङ्ख्यया जात्येकत्वप्रतिभानात्।

तथा हि दशपेयस्य ज्योतिष्टोमविकृतित्वात्प्राकृतं धर्मजातं चोदकेन प्राप्तम्। प्रकृतौ च यजमानचमसस्य भिन्नजातिभिर्भक्षणं नास्तीत्यत्रापि तथैव प्राप्तम्। यद्यत्र दशेति विशेषो विधीयते तर्हि प्राकृतं भक्षसङ्ख्यामात्रं निवर्त्यतां न त्वेकजातित्वम्। तस्माद्राजन्यो यजमानो राजन्यैर्नवभिः सह भक्षयेदिति प्राप्ते ब्रूमः। प्रकृतितः प्राप्तेषु दशसु चमसेषु भक्षणायानुषर्पतां पुरुषाणां दश दशेति वीप्सया प्रतिचमसं दशसङ्ख्यां विधायार्थसिद्धां शतसङ्ख्यामनूद्य सङ्ख्येयानां सर्वेषां ब्राह्मण्यं विधीयते शतं ब्राह्मणाः पिबन्तीति। तथा सति यजमानस्यापि राजन्यस्य यत्र भक्षो नास्ति तत्र कुतोऽन्ये राजन्या भक्षयेयुः। तस्माद् ब्राह्मणा एव भक्षकाः। दशमाध्यायस्य तृतीयपादे चिन्तितम्।

किं प्राकाशौ बाधकौ स्तः कृत्स्नस्याध्वर्यवस्य वा।
ददातियोगात्कृत्स्नस्य न विशिष्टेन योगतः॥

राजसूये श्रूयते। हिरण्मयौ प्राकाशावध्वर्यवे ददातीति। प्राकाशौ दीपस्तम्भावित्येके। दर्पणावित्यपरे। तौ किं प्राकृतस्य दक्षिणाद्रव्यस्य बाधकौ उताध्वर्युभागस्यैव। तत्र प्राकाशौ ददातीति कर्मकारकवाचिद्वितीयाश्रुतिकृतेन दानसम्बन्धेन प्राकाशावध्वर्यव इति वाक्यकृते पुरुषसम्बन्धेऽपोदिते सति देयद्रव्यप्रतीतेर्देयान्तरस्य कृत्स्नस्य बाध इति पूर्वः पक्षः। अध्वर्यवे ददातीति सम्प्रदानकारकवाचिचतुर्थीश्रुतिकृतस्य दानक्रियासम्बन्धस्यापवदितुमशक्यत्वात्संप्रदानविशिष्टदानक्रियासम्बन्धेऽपि द्वितीयाश्रुतेरविरोधादध्वर्युभागस्यैव बाध इति राद्धान्तः॥१८॥

कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठकेऽष्टादशोऽनुवाकः।

॥ ५ ॥

२·४·१

प्रपाठके द्वितीये च तृतीये चेष्टयः क्रमात्।
प्रोक्तास्तत्रावशिष्टास्तु वक्ष्यन्तेऽत्र चतुर्थके॥

चतुर्थस्य प्रथमानुवाके भ्रातृव्यवतः स्पर्धमानस्य त्रिहविष्कां कांचिदिष्टिं विधातुं प्रस्तौति देवा इत्यादिना। देवानामसुरादीनां च सैन्यद्वयं युद्धाय सन्नद्धमासीत्। असुराणां रक्षसाञ्चास्त्येवावान्तरजातिभेदः। तदीये युद्धे स्वल्पप्रहारेण देवानां शरीरे यल्लोहितमितरेऽकुर्वंस्तल्लोहितस्थानं रक्षांसि प्रतिदिनं रात्रिष्वागत्य केनचिद्विषादिप्रयोगेण क्षुभ्नन्क्षुभितं कृतवन्तः। तदानीमेव तेन क्षोभेण देवा म्रियन्ते। तान्मृतानभिलक्ष्य पश्चाद् व्यौच्छद्रात्रिः प्रभातं प्राप्तवती। ततो देवा रक्षसां कृत्यमिदमिति अवगत्य रक्षांस्युपामन्त्रयन्तोक्तोच प्रतिश्रुत्य स्वाधीनानि कृतवन्तः। ततो रक्षांसि विजयफले भागं संप्रार्थ्य स्वसैन्यान्निर्गत्य देवसैन्ये प्रविष्टानि। ततो देवा असुराञ्जित्वा रक्षांस्यपनोदितवन्तः। तानि रक्षांसि देवा अनृतमकुर्वन्निति निश्चित्य प्रहर्तुं परितो वेष्टनमकुर्वन्। तदानीं देवा अग्नौ स्वकार्यसिद्धिमयाचन्त। याचित्वा त्रिहविष्कामिष्टिं निरवपन्। तत्र प्रथमस्य हविषः प्रवानग्निर्देवता। याज्यापुरोऽनुवाक्ययोः

प्रप्रायमग्निर्भरतस्येत्यादिकयोः श्रुतः प्रशब्दो यस्याग्नेरस्ति सोऽयं प्रवान्। द्वितीयस्य हविषो विबाधवानग्निर्देवता। विपाजसा पृथुनेत्यस्मिन्मन्त्रे श्रूयमाणो विबाधशब्दो यस्याग्नेरस्ति सोऽयं विबाधवान्। तृतीयस्य हविषः प्रतीकवानग्निर्देवता। स त्वमग्ने प्रतीकेनेति मन्त्रे प्रतीकशब्दो यस्याग्नेरस्ति सोऽयं प्रतीकवान्। तत्र प्रवतोऽग्नेरिष्ट्या पूर्वस्यां दिशि रक्षांसि प्रणोदितवन्तः। विबाधवतोऽग्नेरिष्ट्या दक्षिणोत्तरयोः पार्श्वयो रक्षांसि विबाधितवन्तः। प्रतीकवतोऽग्नेरिष्ट्या च प्रतीच्यां दिशि रक्षांस्यपनोदितवन्तः। ततो देवा विजयिनोऽभवन्नसुराः पराजिता अभवन्। इष्टि विधत्ते य इति। त्रिविधो हि भ्रातृव्यः प्रबलः समानबलो हीनबलश्चेति तेषां त्रयाणां क्रमेण त्रिभिर्हविर्भिरपाकरणं भवति। वेदनं प्र शंसति प्र श्रेयांसमिति। भ्रातृव्यं श्रेयांसं प्रणुदते सदृशमतिक्रामति पापीयांस्तु न प्राप्नोत्येव ॥१॥

कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः।

॥ ६ ॥

२-४-१२

त्रैधातवीयातद्द्रव्ये एकादश उदीरिते। अथ द्वादशे तस्य द्रव्यस्येन्द्राविष्णुदेवताकत्वं सहस्रदक्षिणां च विधास्यन्नादौ कर्मनाम्नि त्रिधातुत्वसम्पादनायोपाख्यानं दर्शयति त्वष्टेति। विश्वरूपनाम्नस्त्वष्टृपुत्रस्येन्द्रेण कृतो वध उपरितनप्रपाठकस्य प्रथमानुवाके स्पष्टीभविष्यति। स च हतपुत्रस्त्वष्टा कोपादिन्द्ररहितं सोमयागं कर्तुमुद्यतः। तस्मिन्यागे मामाह्वयेत्येवमिन्द्रोऽब्रवीत्। स तु त्वष्टा त्वं पुत्रं मेऽवधीरित्यवदत्। तमिन्द्रं नोपाह्वयत। स चेन्द्रो यज्ञस्य विघातं कृत्वा बलात्कारेण सोमं पीतवान्। अथ त्वष्टुरभिचारहोमेनेन्द्रवधहेतोः पुरुषस्योत्पत्तिं दर्शयति तस्येति। तस्येन्द्रेण बलात्पीतस्य सोमस्य सम्बन्धि रसरूपं यदल्पमत्यशिष्यत तद्गृहीत्वा त्वष्टाऽभिचारं कर्तुमाहवनीयमुपेत्य होमेनाग्नि वैर्युत्पादनाय प्रवृत्तमकरोत्। तस्मिन्होमे मन्त्रमिममुच्चरितवान्स्वाहेन्द्रशत्रुर्वर्धस्वेति। तस्यायमर्थः। हे अग्ने तुभ्यमिदं स्वाहुतं पुनरिन्द्रस्य शातयिता कश्चित्पुरुषो भूत्वा वर्धस्वेति। सोऽग्निर्यावता कालेनोर्ध्वज्वालारूपो भूत्वेन्द्रं पराभूतं कर्तुं विध्यामीत्युद्यतो भवति तावति काले वह्निः स्वयमेव विरतोऽभूत्। ज्वाला शान्तेत्यर्थः। तत्र मन्त्रगतस्वरापराधो निमित्तम्। तथा हि इन्द्रस्य शातयितेन्द्रशत्रुरिति विवक्षायां तत्पुरुषसमासस्यान्तोदात्तत्वेन भवितव्यम्। आद्युदात्तस्त्वयं शब्दः प्रयुक्तः। स च बहुव्रीहितां द्योतयति। बहुव्रीहौ प्रकृत्या पूर्वपदम् (पा० ६.२.१) इति पूर्वपदाद्युदात्तत्वविधानात्। सति बहुव्रीहौ इन्द्रः शातयिता यस्येत्यर्थो भवति। सोऽयं मन्त्रगतः स्वरापराधः। अपराधाभावे सत्युन्नतया ज्वालया यजमानस्य कार्यसिद्धिः सूचिता भवति। अपराधे त्ववनतया ज्वालया यजमानस्य कार्यसिद्ध्यभावः सूच्यते। यद्यत्र कार्यसिद्ध्यभावसूचनायाग्नेः प्रवणमवनतमासीत् यदि वा कार्यसिद्धेः सूचनार्थमग्नेर्ज्वालाया अधिका वृद्धिरभूत् यथा तथा वा तिष्ठतु। स त्वग्निः पुरुषरूपेण सम्भवन्नेवाग्नीषोमावभिव्याप्य समुत्पन्नो होमाधाराङ्गाराभिमानिनमग्निदेवं हूयमान-

रसाभिमानिनं सोमदेवं च स्वमुखे प्रक्षिप्योभयोः पार्श्वयोरूर्ध्वाधोदन्तपङ्क्तिभ्यां दष्टवानित्यर्थः। एतच्चोपरितनप्रपाठके तावन्तु तामभिसन्दष्टौ वै स्त इत्यत्र स्पष्टीभविष्यति। एतस्योत्पन्नस्य पुत्रस्य वृत्रत्वं दर्शयति। स इषुमात्रमिति। इषुपातो यावति देशे भवति तावन्तं सर्वासु दिक्षु व्याप्य प्रतिदिनमवर्द्धत। तेन सर्वलोकावरणादस्य वृत्रत्वम्। अथास्य वृत्रस्य वधाय साधनभूतस्य वज्रस्योत्पत्तिं दर्शयति। तस्मादिति। तस्मात्सर्वलोकावारकाद्वृत्रादिन्द्रोऽबिभेत्। यथेन्द्रस्तथा त्वष्टाप्यबिभेत्। त्रिष्वपि लोकेष्वनेनावृतेषु त्वष्टुरिन्द्रस्य चोभयोः समान एव स्थानाभावः। ततस्त्वष्टा तं वृत्रं हन्तुं तेनेन्द्रेण सह मैत्रीं कृत्वा तस्मा इन्द्राय वज्रमसिञ्चत्। अप्सुरूपत्वाया-भिमन्त्रितेन जलेन तदीयं वज्रं प्रक्षाल्य तस्मै दत्तवानित्यर्थः। सोऽयमिन्द्रसम्बन्धी वज्रोऽभिमन्त्रितत्वात्तपोरूप एवासीत्। तपोरूपस्य तस्य वज्रस्योद्यमनाय विष्णुसहकार्यपेक्षामिन्द्रस्य दर्शयति। तमिति। यदेन्द्र उद्यमने शक्तो नाभूत्तदानीं तस्येन्द्रस्य पुरतो विष्णुर्नाम काचिद्देवताऽऽसीत्तं विष्णुमेवं प्रार्थितवान्वृत्रस्य वीर्यं स्मृत्वा भयमापन्नस्य मम हस्तो वज्रमुद्यन्तुं न प्रभवति। येन वीर्येणायं वृत्र इदं जगद्व्याप्तवान् तादृशं वीर्यमावामुभावस्माद्वृत्रादाहरिष्यावः। अतो हे विष्णो मम सहकारित्वमागच्छेति। प्रार्थितस्य विष्णोः साहाय्याचरणप्रकारं दर्शयति। स विष्णुरिति। विष्णुर्मूर्तित्रयं संपाद्य रक्षणाय लोकत्रितये स्थापितवान्। यस्मादस्य वृत्रस्याभिपर्यावर्तात्सर्वदिग्व्यापिरूपाया वृद्धेरिन्द्रोऽबिभेत्तस्मादिन्द्रभीतिनिवारणाय मूर्तित्रयस्थापनं युक्तमित्यभिप्रायः। मूर्तित्रयस्थापनादूर्ध्वं प्रवृत्तमिन्द्रव्यापारं दर्शयति। यत्पृथिव्यामिति। विष्णुना स्वकीयवक्ष्यमाणद्वयापेक्षया तृतीयं शरीरं पृथिव्यां यत्स्थापितमासीत्तेन युक्तः स इन्द्रस्तस्य विष्णोः पृष्ठतः स्थितस्तं वज्रमुदयच्छत्। तदानीं स वृत्रो भीतः सन्निन्द्रमिदमब्रवीत्। हे इन्द्र मे शरीरं मा प्रहारस्ति वा इदं किञ्चन मयि वीर्यं पृथिवीव्याप्तिक्षमं सर्वं तुभ्यं दास्यामीत्युक्त्वा तदिन्द्राय दत्तवान्। स चेन्द्रस्तत्स्वीचकार। स्वीकृत्य च मां धारयेति ब्रुवन्विष्णवे तद्वीर्यंवरेण प्रायच्छत्। स च विष्णुरस्मासु मध्येऽयमिन्द्रो वीर्यं धारयत्वित्यभिप्रेत्येन्द्रार्थं तद्वीर्यं प्रत्यगृह्णात्। ईदृशमिन्द्रकृत्यं द्वितीयपर्याये दर्शयति यदिति। हे विष्णो पूर्वं सकृद्वीर्यग्रहणेन मां धारितवानसि तद्वदेव द्विमां धारयेति ब्रुवन्वीर्यं प्रायच्छत्। तृतीयपर्याये तस्येन्द्रस्य कृत्यं दर्शयति। यद्विवीति। येन वीर्येणाहमिदं जगद्व्याप्तवानस्मि तत्सर्वं ते प्रदास्यामीत्युक्त इन्द्रोऽङ्गीचकार। अङ्गीकारार्थोऽयं स्वीशब्दः। अस्तु तथेत्यर्थः। तस्य वीर्यस्य प्रदानात्प्रागेवेन्द्रवृत्रयोः सन्धिं दर्शयति सन्धामिति। तुशब्दो वक्तव्यशेषसद्भावद्योतनार्थः। तत्सर्वं वीर्यं तुभ्यं दास्यामि किन्त्वन्यच्चैवं वक्तव्यमस्ति। तावदुभौ सन्धानं करवाव कीदृशं सन्धानमिति तदुच्यते। हे इन्द्र त्वामेवाहं प्रविशानीति तत इन्द्र एवमब्रवीद्यदि त्वं मां प्रविशेस्तदा किं मामेव भोक्ष्यस इति। ततो वृत्र इदमब्रवीन्नाहं त्वां भोक्ष्ये किन्तु त्वामिन्धीयोदराग्निपाटवेन प्रकाशयेयं दीपयेयम्। तच्च तव बहुविधान्नभोगायोपयुज्येत। ततस्त्वां प्रविशामीत्युक्त्वा तमिन्द्रं वृत्रः प्राविशत्। प्रविष्टश्च वृत्रो बह्वन्नपूरणक्षममवकाशरूपमुदरमभवत्। लोकेऽपि मनुष्यस्योदरे वर्तमाना क्षुदेवात्यन्तबाधकत्वात्सहजो भ्रातृव्यः। एतद्वेदनस्य क्षुदुपघातः फलम्। तस्य वृत्रस्य प्रवेशात्पूर्वं द्युलोकगतवीर्यदानं यदस्ति तदिदानीं दर्शयति तदस्मा इति। पूर्ववद् व्याख्येयम्। इदानीं त्रिधातुनिर्वचनं दर्शयति यत्त्रिरिति। वृत्रस्य त्रिवारप्रदानेनेन्द्रस्य त्रिवार-

प्रतिग्रहेण च वीर्यरूपस्य पुरोडाशस्य हविषस्त्रिधा भिन्नस्य त्रिधातुनाम सम्पन्नम्। त्रयो धातवश्चतुष्कपालरूपा भेदा यस्य द्वादशकपालपुरोडाशस्य सोऽयं त्रिधातुः। त्रिसङ्ख्यातस्य हविषो व्यासक्तदेवतां विधत्ते यद्विष्णुरिति। यस्माद्विष्णुरनुकूलत्वेन स्थितस्तस्मै च विष्णवेऽयमिन्द्रोऽप्यादरेण प्रायच्छत्तस्माद् व्यासक्तयोरिन्द्राविष्णवोस्तत्र देवतात्वम्। त्रिवारं प्रत्तं तद्वीर्यरूपं हविर्वेदत्रयरूपेण प्रशंसति यद्वा इति। अत्र च या हिरण्यदक्षिणा पूर्वमुक्ता तस्याः सङ्ख्याविधिमुन्नयति सहस्रं वेति। यस्मात्सहस्रभेदभिन्नं वीर्यं दत्तवांस्तस्मात्सहस्रदक्षिणाकमिदं कर्म द्रष्टव्यम् ॥१२॥

कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः।

॥ ७ ॥

२.५.१

द्वितीयादिचतुर्थान्तैस्त्रिभिरेतैः प्रपाठकैः। उक्ताः काम्येष्टयः काण्डे द्वितीये परतस्तु यत् ॥
आद्ये दर्शपूर्णमासमन्त्रव्याख्यानमीरितम्। विषयो मन्त्रसम्बद्धा बहवः प्रतिपादिताः ॥
तच्छेषविषयो वाच्या व्याख्येया हौत्रमन्त्रकाः। अतोऽनुब्राह्मणं त्वत्र वर्ण्यते पाठकद्वये ॥
प्रपाठके पञ्चमेऽनुवाका द्वादश संस्थिताः। आध्वर्यवं पूर्वपट्के याज्या उत्तर ईरिताः ॥
हौत्रमन्त्रविधिव्याख्याघारादिप्रायमन्तरे। अग्नीषोमीयहविषो विधिस्तत्राद्ययोर्द्वयोः ॥

तत्र द्वितीयानुवाके पौर्णमासीगतमग्नीषोमीयपुरोडाशं विधित्सुस्तदुपोद्घातत्वेन प्रथमानुवाके काञ्चिदाख्यायिकामाह। विश्वरूप इति। विश्वानि बहुविधानि रूपाणि यस्यासौ विश्वरूपः। त्रिभिः शिरोभिरुपेतत्वाद्विश्वरूपत्वम्। यो विश्वरूपनामकस्त्वष्टुः पुत्रः स देवानां पुरोहितो न तु शरीरसम्बन्धी। असुराणां तु भागिनेयः। स च सात्त्विकेन शिरसा सोमं पिबति। राजसेनान्नमत्ति। तामसेन सुरां पिबति। स च यज्ञमण्डपेषु गत्वा सर्वेषां श्रोत्रप्रत्यक्षं यथा भवति तथा देवेभ्यो हविर्भागो युक्त इति वदति। सर्वेषां परोक्षं यथा भवति तथा रहस्यम् ऋत्विग्भिः सहायं हविर्भागोऽसुरेभ्यो युक्तोऽतस्तानेवोद्दिश्य प्रयच्छतेति स एवं वदति। तेषामृत्विजां तस्मिन्परोक्षवादे विश्वास उत्पन्नः। तस्य परोक्षवादस्य हृदयपूर्वकत्वात्। लोकेऽपि तवायं भाग इति सर्वस्मै पुरुषाय प्रीतिमुत्पादयितुं तत्समीपे सर्वे वदन्ति। हृदयपूर्वकत्वाभावान्न स उदितो भवति। परोक्षं यदयं तु भाग उच्यते तस्यैव भागो हृदयपूर्वकत्वादुदितो भवति। एवं वृत्तान्तं श्रुत्वा तस्माद्विश्वरूपादिन्द्रोऽबिभेत्। किमिति। ईदृक्स्वामिद्रोहं सर्वथा कृत्वा राष्ट्रं विपर्यावर्तयतीति। अस्मत्तोऽपनीयासुरेभ्यः समर्पणं विपर्यावृत्तिः। ततस्तस्य द्रोहिणः शिरस्त्रं छिन्नेषु तानि शिरांसि पक्षित्रयरूपेणोत्पन्नानि। तस्येन्द्रस्य प्रत्यवायं जनापवादं च दर्शयति तस्येति। तस्यासुरस्य वधेन निष्पन्ना या ब्रह्महत्या तामञ्जलिना स्वीचकार। पापिनां शिक्षायामीश्वरेण नियुक्तानां यमचित्रगुप्तादीनां पुरतोऽञ्जलिं कृत्वा निर्भयः सन्ब्रह्महत्या मया बुद्धिपूर्वकमेव कृतेत्येवमङ्गीचकारेत्यर्थः। प्रायश्चित्तमकृत्वा संवत्सरं निरन्तरं ब्रह्महत्यामङ्गीकृत्यैव तस्थौ। आत्म-

तत्त्वज्ञानेन पापलेपाभावाद्भीत्यभावस्तस्य युक्तः। अतएव कौषीतकिन इन्द्रवाक्यमेतदामनन्ति। यन्मां हि विजानीयास्त्रिशीर्षाणं त्वाष्ट्रमहमहनमरुन्मुखान्यतीन्त्सालावृकेभ्यः प्रायच्छमित्यादि। दुरिताभावेऽपि सर्वप्राणिनस्तमिन्द्रं ब्रह्महन्नित्येवं सम्बोध्याभितस्तस्याक्रोशं कृतवन्तः। ततस्तस्य जनापवादस्य परिहारायेन्द्रेणानुष्ठितमुपायविशेषं दर्शयति स पृथिवीमिति। उपासीद-दुपेत्य प्रार्थितवान्। खातात्पराभविष्यन्ती मन्ये जनाः स्वेच्छया तत्र तत्र भूमिं खनन्ति तदुपद्रवा-त्पराभूता पीडिता भविष्यामीति मनसा चिन्तयामि। खातप्रदेशः संपूरणमन्तरेण पांसुप्रक्षेपा-त्तृणाद्युत्पत्तेर्वाऽपिरोहात्पूरितो भूयादिति वरः। तदिदमस्यै वारेवृतमस्याः पृथिव्याः खातपूरणं वरेण लब्धम्। पृथिव्या स्वीकृतस्तृतीयो ब्रह्महत्याया भागः स्वकृतमिरिणमभवत्। इतस्तत आनीय प्रक्षिप्तं न भवतीति स्वतःसिद्धमूषरक्षेत्रमासीत्। यस्मादिरिणं ब्रह्महत्यायाः स्वरूपं तस्मादाहिताग्निः श्रद्धादेवस्तस्मिन्निरिणे कदाचिदपि न तिष्ठेत्। यद्वा देवयजनत्वेन नाध्यव-स्येत्। श्रद्धैव देवो यस्यासौ श्रद्धावानित्यर्थः। एकस्य ब्रह्महत्याभागस्य परिहारोपायमुक्त्वा-ऽपरस्य तं दर्शयति। स वनस्पतीनिति। वृक्षाणाच्छेदनाद् आव्रश्चनाच्छिन्नप्रदेशाद्भूयांसो बह्वङ्कुरा उत्तिष्ठन्त्विति वरः। वृक्षान्निर्गत्य घनीभूतो रसो निर्यासः। ब्रह्महत्यास्वरूप-त्वान्निर्यासस्य स्वरूपं भोज्यं न भवति। अपि च पक्षान्तरमस्ति। न सर्वोऽपि निर्यासो निषिद्धः किन्तु यो लोहितवर्णो यश्च छिन्नवृक्षप्रदेशान्निर्गतस्तदेवोभयं निषिद्धम्। अन्यस्य तु निर्यासस्य स्वरूपमाश्यमिच्छायां सत्यामशितुं योग्यम्। त्रिषु ब्रह्महत्याभागेषु द्वयोः परिहार-मुक्त्वा तृतीयस्यावशिष्टस्य परिहारं दर्शयति। स इति। स्त्रियः सम्यक् सीदन्ति विश्रम्भेणो-पविशन्ति यस्यां सभायामिति स्त्रीसभाविशेषः स्त्रीषंसादः। ऋत्वियाद्दतुसम्बन्धाद्वीर्यात्प्रथम-सम्भोगादेव गर्भे जातेऽपि काममुद्दिश्याविजनितोरा प्रसवात्पुरुषेण सङ्गच्छेमहि। गर्भोपद्रवः प्रत्यवायश्च निषिद्धदिनकृतोऽस्माकं मा भूदिति वरः। अतएव याज्ञवल्क्यस्मृतिः। „यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्। इति। यो ब्रह्महत्यायास्तृतीयो भागः सा मलवद्वासा रजस्वला योषिद्भवत्। यस्मादियं ब्रह्महत्याया रूपं शरीरे कञ्चुकवत्प्रतिमुच्यास्ते तस्मात्तया सह सम्भाषणं न कुर्यात्। तया सहैकस्मिन्गृहे वासो न कर्तव्यः। तत्स्वामिकं तत्स्पृष्टं वान्नं नाश्नीयात्। अपि चाभिज्ञाः केचिदेवमाहुः स्त्रियाः शृङ्गारोपयोगित्वेनाभ्यञ्जनमेवान्नस्थानीयं तदीयं तैलादिक-मेव न गृह्णीयात्। तया वा स्वशरीराभ्यञ्जनं न कारयेत्। अन्यदन्नं सत्यामिच्छायां भोक्त-व्यमिति। प्रसङ्गाद्रजस्वलाव्रतानि विधत्ते यामिति। अभिशस्तो मिथ्यापवादयुक्तः। यामरण्ये मलवद्वाससं सम्भवन्तीत्यनुवर्तते। पराचीमुच्चारणभीत्या लज्जया वा पराङ्मुखीम्। सभायाम-वाङ्मुखो वक्तुमशक्तो ह्रीतमुख्यप्रगल्भ इत्युच्यते। मारुको मरणशीलः। दुश्चर्मा कुष्ठी। प्रलिखते भित्तौ चित्रादिकं करोति। खलतिः केशशून्यः। अपमारी दुर्मरणयुक्तः। काणः कुण्ठिताक्षः। श्यावदन्मलिनदन्तः। कृणत्ति तृणादि छिनत्ति। उद्बन्धुको रज्जुं बध्वा मरणशीलः। खर्वेण वह्निपके न शरावादिना। खर्वो वामनः। यस्मादुक्ता दोषा वर्तन्ते तस्मात्तत्परिहाराय रजस्वला-व्रतं सम्भवादिवर्जनरूपं नियममाचरेत्। भोजनेऽञ्जलिरदग्धशरावादिर्वा साधनमस्तु। व्रता-चरणमुत्पत्स्यमानायाः प्रजायाः रक्षणार्थं भवति। अत्र मीमांसा। तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्।

न संवदेत मलवद्वाससेत्यपि पूर्ववत् ।
पुमर्थः स्यात् क्रतौ कापि संवादस्याप्रसक्तितः ॥

दशपूर्णमासप्रकरणे श्रूयते मलवद्वाससा न संवदेत । इति । अस्य निषेधस्य प्रकरणात्क्रत्वङ्गत्वमिति चेन्न । अप्रसक्तप्रतिषेधप्रसङ्गात् । यस्य व्रत्येऽहन्पत्न्यनालम्भुका भवति तामपरुध्य यजेत इति रजस्वलाया निःसारणान्न क्रतौ संवादप्रसक्तिः । तस्मात्केवलपुरुषार्थस्यास्य प्रकरणादुत्कर्षः ॥१॥

कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः ।

॥ ८ ॥

३·१·४

पदाञ्जनं पशोः पाकवह्निश्चोक्तौ तृतीयके । अथ चतुर्थे पशूपाकरणमन्त्रा आम्नायन्ते । कल्पः । बर्हिर्भ्यां प्लक्षशाखया च पुरस्तात्प्रत्यञ्चं पशुमुपाकरोत्युपो देवान्दैवीर्विशः प्रजापतेर्जायमाना इति चैताभ्यामुपस्पृशन् । ( आप० श्रौ० ७-१२-८ ) इति । प्रजापतेरित्यादिके द्वे ऋचौ । तत्रेयं प्रथमा । प्रजापतेरिति । याः प्रजा इदानीं जायमाना याश्चेमाः पूर्वं जातास्ताः सर्वाः प्रजापतेरेव यत्प्रसूता अतस्तस्मै प्रजापतये प्रति प्रत्येकं रहसि गत्वा प्रवेदय हे पशो त्वदीयं वृत्तान्तं कथय । स च प्रजापतिश्चिकित्वांस्त्वदीयां स्वर्गप्राप्तिं जानन्ननुमन्यताम् । अथ द्वितीया । इममिति । हे पशुपतेऽग्ने यदस्मिन्दिने सुकृतस्य मध्ये सम्यगनुष्ठितस्य ज्योतिष्टोमस्य मध्य इमं पशुं बध्नामि अतस्त्वमनुमन्यस्व । वयं सुयजा शोभनेन यज्ञेन यजाम । इदं द्रव्यं देवानां जुष्टं प्रियमस्तु । कल्पः । प्रजानन्तः प्रतिगृह्णन्ति पूर्वं इति पञ्च हुत्वा (आप० श्रौ० ७-१२-१०) इति । तत्रेयं प्रथमा । प्रजानन्त इति । हे पशो,पूर्वं देवास्त्वदीयं वृत्तान्तं जानन्तोऽङ्गेभ्यः परि त्वदीयावयवेभ्य ऊर्ध्वमाचरन्तं ते त्वदीयं प्राणं प्रतिगृह्णन्ति । अस्माकमधीनोऽयमिति स्वीकुर्वन्ति । त्वं तु देवा येषु पथिषु यान्ति तैः पथिभिः स्वर्गं याहि । प्राणरूपेण स्वर्गं गत्वाऽवशिष्टैः शरीरावयवैरोषधीषु प्रतितिष्ठ । पुरोडाशादिवद्धविर्भवेत्यर्थः । अथ द्वितीया । येषामिति । पशुस्वामी रुद्रो द्विपदां चतुष्पदां च येषां पशूनामीशे स्वामित्वेन वर्तते तेषां पशूनां मध्ये स्वामिनः सकाशादस्माभिर्निष्क्रीतोऽयं पशुर्यज्ञियं यज्ञयोग्यं भागमेतु भागत्वं प्राप्नोतु । यजमानस्य रायस्पोषा धनपुष्टयः सन्तु । अथ तृतीया । य इति । अस्य पशोः पितृमातृभ्रातृसगर्भ्यसयूथ्यरूपा ये पशव एतदीयेन स्नेहेन स्वयमपि बध्यमानमेनं पशुमनु बध्यमानाः सन्तो मनसा चक्षुषा चाभित ऐक्षन्त तान्पशूनग्निरग्रे प्रकर्षेण मोचयतु । ततः प्रजापतिर्देवः स्वकीयया प्रजया संविदान ऐकमत्यं गतस्तान्पशून्मोचयतु । अथ चतुर्थी । य इति । जातिभेदैर्विश्वरूपा वर्णभेदेनोचनीचत्वादिभेदैश्च बहुधा विविधरूपाः सन्तोऽपि पशुत्वेनैकरूपाः । शेषं पूर्ववत् । अथ पञ्चमी । प्रमुञ्चमाना इति । हे देवा भुवनस्य हेतोर्जगद्धारेणोत्पत्तिहेतुमिमं पशुं प्रमुञ्चमानाः प्रकर्षेण

प्राणमातृपित्रादिभ्यो यज्ञार्थं मोचयन्तो यजमानस्य गातुं धत्त स्वर्गलोकप्राप्तिं धत्त । उपाकृतमुपाकरणक्रियया संस्कृतं शशमानं हविर्भुजु देवेषु व्याप्रियमाणं यदस्त्या यज्ञजातमस्मिन्पशौ स्थितं तत्पाथोऽन्नं भूत्वा देवानां जीवमेतु । जीवनार्थमुपकरोतु । अपिशब्दाद्यजमानस्य स्वर्गं ददात्विति गम्यते । कल्पः । नाना प्राणो यजमानस्य पशुनेत्यध्वर्युर्जपति (आप० श्रौ० ७-१५-११) इति । पाठस्तु । नानेति । यजमानस्य प्राणः पशुना सह नाना पृथग्भवतु । अयमनुष्ठीयमानो यज्ञो देवेभिर्देवनशीलैः पशुप्राणैः सह देवयानो भवतु हविर्भुजो देवान्प्रति गच्छतु । पाथः पशुरूपमन्नं देवानां जीवमप्येतु । जीवनहेतुत्वं प्राप्नोतु । तेन यजमानस्य कामाः सत्याः सन्तु । कल्पः । यत्पशुर्मायुमकृतेति संज्ञप्ते सञ्ज्ञसहोमं जुहोति (आप० श्रौ० ७-१७-२) इति । पाठस्तु । यत्पशुरिति । अयं पशुर्मारणवेलायां मायुं दुःखहेतुकं शब्दमकुरुत । अथवा यतस्ततश्चाल्यमानैः पादैरुरस्ताडयति । तत्र यदेनो निष्पन्नं तस्मादेनसोऽग्निर्मां मोचयतु । किञ्चान्येनापि बन्धनाद्युपद्रवेण यद्यदंहो निष्पन्नं तस्मात्सर्वस्मादंहसो मां मोचयतु । कल्पः । शमितार उपेतनेति वपाश्रपणीभ्यां पशुमुपेतोऽध्वर्युर्यजमानश्च (आप० श्रौ० ७-१७-४) इति । पाठस्तु । शमितार इति । हे शमितारो विशसनस्य कर्तारो देवा देवेभिरन्वितं देवैर्व्याप्तं यज्ञमुपेतन । प्राप्नुत । प्रवर्तयतेत्यर्थः । इमं पशुं पाशाद्बन्धनरज्ज्वा यज्ञे प्रमुञ्चत । यज्ञपतिञ्च बन्धनजन्याद्दोषात्परिमुञ्चत । अनेन मन्त्रेणाध्वर्युयजमानौ वपाश्रपणहेतुभ्यां काष्ठनिर्मिताभ्यामेकशूलाद्विशूलाभ्यां युक्तौ सन्तौ शामित्रदेशं समागच्छतः । कल्पः । पशोः पाशं प्रमुञ्चत्यदितिः पाशं प्रमुमोक्त्वेतम् ( आप० श्रौ० ७-१७-५ ) इति । पाठस्तु । अदितिरिति । अदितिः पृथिवी पशोरेतं पाशं प्रमुञ्चतु । अहं च पशुभ्यः पशुपतये च मदपराधनिवृत्त्यर्थं नमस्करोमि । कल्पः । यद्यभिचरेदरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशमिति तया वृक्षं स्थाणुं स्तम्बं वाऽपि दध्यात् ( आप० श्रौ० ७-१७-७ ) इति । पाठस्तु । अरातीयन्तमिति । यः पुरुषोऽस्माकमरातित्वं कर्तुमिच्छति तमधरं मत्तोऽवरं करोमि । यस्त्विदानीमरातित्वं नेच्छति तथापि कालान्तरे तत्सम्भावनया वयमिदानीं तं द्विष्मः । तस्मिन्पुरुषे पाशमिमं प्रतिमुञ्चामि । अनया रशनया तं बध्नामीत्यर्थः । कल्पः । त्वामु ते दधिरे हव्यवाहमिति स्रुवेण वपामभिजुहोति ( आप० श्रौ० ७-२०-२ ) इति । पाठस्तु । त्वामिति । हे अग्ने देवेभिरन्वितमिति पूर्वोक्ता ये देवास्ते त्वां दधिरे त्वामेव कार्यकरत्वेन निश्चितवन्तः । कीदृशं त्वाम् । हव्यवाहम् । देवान्प्रति हविषो वोढारं शृतं कर्तारमार्द्रकं हविः पक्वं कुर्वन्तम् । अपि च यज्ञियं यज्ञसंपादनार्हम् । हे जातवेदो हि यस्मात्त्वं सतनु दृढशरीरो भूत्वा सद्नः सोत्साहोऽथ तस्मात्कारणाद्धव्या जुषस्व हवींषि वोढुं प्रीतियुक्तो भव । कल्पः । जातवेदो वपया गच्छ देवानिति वषट्कृते हुत्वा ( आप० श्रौ० ७-२०-५ ) इति । पाठस्तु । जातवेद इति । हे जातवेदस्त्वं वपया सह देवान्गच्छ । हि यस्मात्त्वं प्रथमो होता बभूथ मनुष्यहोतुः पूर्वभावी बभूविथ । तस्मात्त्वं घृतेन देवानां तनूर्वर्धयस्व । ते च देवाः स्वाहाकारेण समर्पितमिदं हविर्भक्षयन्तु । कल्पः । स्वाहा देवेभ्य इति पूर्वं परिवप्यं हुत्वा (आप० श्रौ० ७-२०-६) इति । देवेभ्यः स्वाहेत्युत्तरं परिवप्यं हुत्वा इति च । पाठस्तु । स्वाहेति । ये देवाः पुरस्तात्स्वाहाकारास्तेभ्य इदमाज्यं वपाहोमात्पूर्वं स्वाहाकृतमस्तु । तस्य च होमस्य वपाहोमाङ्गत्वाद्रूप्यत्वम् । ये तु देवा उपरिष्टात्स्वाहाकारास्तेभ्यो वपाहोमादूर्ध्वमिदमाज्यं हुतमस्तु ।

वपाया उभयपार्श्वस्थितानां स्वाहाकारेण वपासामीप्यविच्छेदो मा भूदिति स्वाहाकारस्य पुरस्तादुपरिष्टाच्च प्रयोगः। अत्र विनियोगसङ्ग्रहः।

प्रजापतेरिति द्वाभ्यां स्यादुपाकरणं पशोः।
प्रजा पञ्च जुहोत्यग्नौ नाना तन्नयने जपेत्।
यत्पशुर्मृतहोमः स्याच्छमिता गच्छतः पशुम्।
अध्वर्युयजमानौ द्वावपि पाशप्रमोचनम्।
अरा वृक्षादिषु क्षेयं स्वां जुहोति वपोपरि।
या वपाहुतिरेतस्याः स्वाहा इत्यभितो हुतिः।
अनुवाके चतुर्थेऽस्मिन्मन्त्राः षोडश वर्णिताः।

अत्र मीमांसा। नवमाध्यायस्य तृतीयपादे चिन्तितम्।

पाशं पाशान्द्वयोः पश्वोरेको मन्त्रोऽथवा द्वयम्।
एकत्वे च द्वयत्वे किमेकस्योहोऽथवा द्वयोः।
एकेनैव कृतार्थत्वादेको मन्त्रस्तदापि च।
अविकारेण बह्वर्थ एकार्थासमवायतः।
प्राकृतत्वादुभावूह्यावेकार्थोऽत्र विवक्षया।
बह्वर्थोऽप्यूहनीयोऽत्र द्वयोः शक्तेरक्लृप्तितः।

ज्योतिष्टोमेऽग्नीषोमीयपशावेकवचनान्तबहुवचनान्तौ द्वौ पाशमन्त्रौ भिन्नयोः शाखयो-राम्नातौ। अदितिः पाशं प्रमुमोक्त्वेतमित्येकत्र। पाशान्प्रमुमोक्त्वेतानित्यपरत्र। तावुभौ पशुद्वयोपेतायां विकृतौ चोदकेनातिदिष्टौ। सा च विकृतिरेवमाम्नायते। मैत्रं श्वेत-मालभेत वारुणं कृष्णमपां चौषधीनां च सन्धावन्नकामः। इति। तत्रैकेनैव मन्त्रेण चरितार्थ-त्वान्न द्वयोरतिदेश इत्याद्यः पक्षः। तदाप्यविकृतस्य प्रयोक्तुं शक्यत्वाद्बहुवचनान्तो मन्त्रो युक्तः। प्रकृतावेकस्मिन्पशावसमवेतार्थत्वाद्बहुवचनस्य विकृतावूहनीयत्वादेकः पक्षः। तादृग्बहुवचनो-पेतत्वादेव मन्त्रोऽप्यसावसमवेतार्थः प्रकृतौ भवति। एकवचनान्तस्तु प्रकृतौ समवेतार्थत्वाद्विकृता-वतिदिश्यताम्। स च द्विवचनान्तत्वेनोहनीय इति पक्षान्तरम्। प्रकृतौ विद्यमानयोरुभयो-र्मन्त्रयोर्विकृतावतिदेशस्य वारयितुमशक्यत्वादेकमन्त्रपक्षस्यावान्तरत्वेनोपन्यस्तत्वादुभावपि पक्षा-वयुक्तौ। मन्त्रद्वयातिदेशपक्षे तु एकवचनान्तः प्रकृतौ समवेतार्थतया विकृतौ ऊहनीयः। बहुवचनान्तो यथास्थित एव पठनीय इति पूर्वपक्षः। लोके वेदे वा बहुवचनस्य द्वयोरर्थयोरक्लृप्त-शक्तित्वाद्द्विवचनान्ततया सोऽप्यूहनीय इति सिद्धान्तः। तत्रैवान्यच्चिन्तितम्।

उत्कृष्टव्यो न वा मन्त्रो बह्वर्थोऽसंगतत्वतः।
उत्कर्षो न विकल्पोऽसौ गुणे त्वन्याय्यकल्पना॥

योऽयं पूर्वोदाहृतो बहुवचनान्तः पाशमन्त्रस्तस्य प्रकरणादुत्कर्षो बहुपशुयुक्तेषु पशुगणेषु कर्तव्यः। कुतः। एकस्मिन्पशौ प्रकृते तस्यानन्वितत्वादिति चेत्। नासावुत्कृष्टव्यः किन्तु एकवच-नान्तेन मन्त्रेण सह विकल्पनीयः। न हि पाशानित्यत्र प्रधानस्यांशस्यानन्वितत्वमस्ति। प्रातिप-दिकविभक्त्योः प्रातिपदिकं प्रधानं धर्मिवाचकत्वात्। विभक्तिस्तु कर्मत्वकरणत्वादिधर्मवाच-

त्त्वाद्गुणभूता। तथा विभक्तिवचनयोर्विभक्तेः कर्मादिकारकवाचित्वात्प्राधान्यं वचनस्य कारकसङ्ख्याभिधायित्वाद्गुणत्वम्। तथा सति बहुवचनान्तपाशशब्दे प्रातिपदिकं कर्मकारकविभक्तिश्चैकस्मिन्नपि पाशे सङ्गच्छेते। गुणभूते तु बहुवचने लक्षणावृत्तिः कल्पनीया। पाशावयवगतं बहुत्वं लक्ष्यत इति। तस्माद्गुणभूतं वचनमात्रमनुसृत्य कृत्स्नस्य मन्त्रस्य प्रकरणपाठो न बाधनीयः। किन्तु प्रधानानुसारेण मन्त्रयोः समानबलत्वाद्विकल्पः कर्तव्यः ॥४॥

कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः।

॥ ९ ॥

४·३·११

दशमेऽनुवाके सृष्टिनामिका इष्टका उक्ताः। अथैकादशे व्युष्टिनामिका उच्यन्ते। कल्पः। इयमेव सा या प्रथमा व्यौच्छदिति षोडश व्युष्टीः ( आप० श्रौ० १७-२-१२ ) इति। तत्र प्रथमामाह। इयमेवेति। अत्रोपधीयमाना येष्टकास्ति इयमेव सा तथाविधव्युष्टिरूपा तच्छब्देन परामृश्यमाना पुनर्विविच्यते। सेयं व्युष्टिरूपा कालानां प्रथमभूता सती व्यौच्छद्विशेषेण प्रकाशरूपाऽभूत्। आदिसृष्टिकाले प्रथमो यः प्रभातकालस्तद्रूपेयमिष्टकेत्यर्थः। सा सृष्टिकालीना प्रथमा व्युष्टिरादित्येनानुप्रविष्टा स तस्यां दैनन्दिनप्रभातरूपेण चरति। तत्र दृष्टान्तः। वधूर्जजान नवगज्जनित्री। नवं वरं गच्छतीति नवगन्नूतनविवाहवती वधूर्जनित्री उत्तरोत्तरप्रजोत्पादिका यथा जजान जाता। तद्वदियमपि व्युष्टिरुत्तरोत्तरप्रभातनिष्पादिकेत्यर्थः। त्रयस्त्रिंसङ्ख्याका महिमानो महिमोपेता अग्निसूर्यचन्द्ररूपा देवा एनां व्युष्टिं सचन्ते समवयन्ति। देवतात्रयप्रकाशकानुग्रहादस्याः प्रभातरूपत्वमित्यर्थः। एवंविधव्युष्टिरूपामिष्टकामुपदधामीत्यभिप्रायः॥ अथ द्वितीयामाह। छन्दस्वती इति। द्वे ह्युषसावेका सृष्टिकालीना प्रथमेति पूर्वमन्त्रोक्ता। अपरा प्रतिदिनसञ्चारिणी। साप्यस्यां चरति प्रविष्टेति पूर्वमन्त्रोक्ता। एवं सति उषसा विचरतो द्वे अप्युषसौ विविधं चरतः। रात्राविव प्रलयकाले तिरोहितजगत आविर्भावलक्षणसृष्टिरूपा सती दिवससादृश्यमापादयति। तदिदमेकस्या व्युष्ट्याचरणम्। शार्वरतमोनिवर्तकत्वमपरस्याचरणम्। कीदृश्यावुषसौ। छन्दस्वती। छन्दोयुक्तैर्मन्त्रैस्स्तूयमानतया छन्दस्वत्यौ। पेपिशाने। भृशं प्रकाशयन्त्यौ। समानं योनिमनु सञ्चरन्ती। उभयोः कालविशेषत्वात्कालसामान्यमेव तयोर्योनिर्हेतुः। स चोभयोः समानः। महाप्रभातं सृष्टिरूपमल्पप्रभातं दैनन्दिनं चेत्युभौ कालविशेषौ। तौ च स्वकीयं कालसामान्यमनुसृत्य वर्तते इत्यनुसञ्चरन्त्यावुषसौ। ते च सूर्यपत्नी। सूर्यस्य जाये। प्रजानती। स्वयं देवतारूपत्वेन प्रज्ञावत्यौ। केतुं कृण्वाने। ज्ञानं कुर्वत्यौ। प्रकाशप्रदानेन हि प्राणिनां रूपज्ञानं जनयन्त्यौ। अजरे। कदाचिदपि जरारहिते। भूरिरेतसा। प्रभूतरेतस्के। बहुव्यापारकारणभूते इत्यर्थः॥ अथ तृतीयामाह। ऋतस्येति। तिस्र उषस ऋतस्य यज्ञस्य पन्थां मार्गमन्वगुरनुप्राप्ताः। यज्ञरक्षकत्वेन व्यक्ताः। व्यवस्थिता इत्यर्थः। त्रयो घर्मासो दीप्तिरूपा अग्निचन्द्रादित्या ज्योतिषा प्रकाशप्रदानेन यज्ञमार्गमन्वगुरनुप्राप्ताः।

तिसृणामुषसां देवीनां मध्ये यजमानस्य प्रजामेका रक्षति। यजमानस्योजं बलमेका रक्षति। देवयूनाम्। देवानात्मन इच्छतां यजमानानां व्रतं कर्मानुष्ठानमेका रक्षति॥ अथ चतुर्थीमाह। चतुष्टोम इति। यद्यप्येकैवोषास्तथापि जगद्रक्षणाय योगैश्वर्यादनेकशरीरस्वीकारे सति बहव उषसो भवन्ति। या तत्र तुरीया चतुर्थी। सा चोषाश्चतुष्टोमस्त्रिवृदादिस्तोमचतुष्टय-युक्ताग्निष्टोमरूपाऽभवत्। कीदृशी। यज्ञस्य पक्षौ प्राच्यप्रतीच्याङ्गरूपौ पक्षसदृशौ द्वाववयवौ भवन्ती भावयन्ती जनयन्तीत्यर्थः। तथर्षय ऋषीन्यज्ञनिष्पादकानृत्विजो जनयन्ती। तथा बृहदर्कं प्रौढमचनरूपं स्तोत्रं युञ्जाना सम्पादयन्ती। गायत्र्यादिदेवताश्चतस्रः सुवः फलभूतं स्वर्गमिदं कर्म चाभरन्सर्वतो भरन्ती पोषयन्तीत्यर्थः॥ अथ पञ्चमीमाह। पञ्चभिरिति। यदिदं जगदस्ति तत्सर्वं धाता स्रष्टा प्रजापतिः पञ्चभिरुषोदेवीभिर्विदधौ निर्मितवान्। तासां पञ्चानामुषसां प्रत्येकं पञ्च पञ्च स्वसॄरजनयत्। एवं सति पञ्चसङ्ख्याका ज्येष्ठा उषसस्तासां स्वसारः पञ्चविंशति-सङ्ख्याका इत्येकस्मिन्मासि प्रतिपदादितिथिरूपास्त्रिंशदुषसः सम्पद्यन्ते। तासामु तासा-मप्युषसां प्रयवेण प्रकृष्टरूपेण मिश्रणेन पञ्च मुख्या उषसः क्रतवः क्रतुनिष्पादिका वसाना आच्छा-दयन्त्यः। क्रत्वङ्गानि सर्वाणि व्याप्नुवत्यो नानारूपाणि बहुविधस्वरूपाणि यन्ति प्राप्नुवन्ति। तत्रैका दैनन्दिनमग्निहोत्रं निष्पादयति। ततोऽन्ये दर्शपूर्णमासौ निष्पादयतः। औपवसथ्यदिन-कृत्यमेका निष्पादयति। सुत्यादिनकृत्यमेकेत्येवं पञ्चानामुपयोगात्प्रकृष्टमिश्रणानां प्रकृष्टोपकारित्वम्। क्रत्ववान्तरभेदनिष्पादकत्वेन नानारूपत्वम्॥ अथ षष्ठीमाह। त्रिंशत्स्वसार इति। त्रिंशन्मास-गततिथिरूपेण त्रिंशत्सङ्ख्याकाः स्वसारो भगिन्य उषसो देव्यो निष्कृतमजस्रं कृतमग्निहोत्रा-दिकर्मोपयन्ति प्राप्नुवन्ति। कीदृश्यः। समानं केतुं सदृशं चिह्नं प्रकाशरूपं प्रतिमुञ्चमानाः कञ्चुकवद्धारयन्त्यः। ताश्च कवयो विद्वत्पुरुषसमानाः। प्रजानतीः। तत्तद्दिनसम्पादनीयं प्रजानन्त्यः। ऋतूंस्तन्वते। स्वयमेव पुनः पुनरावर्तनेन वसन्तादीनृतून्सम्पादयन्ति। छन्दसां वेदानां मध्ये तिष्ठतीति मध्येछन्दाः सूर्यः। तथा चान्यत्राम्नायते (तै० ब्रा० ३-१२-९-१)। ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते। वेदैरशून्यस्त्रिभिरेति सूर्यः॥ इति। तस्य मध्येच्छन्दसः सूर्यस्य परिपार्श्वेषु भास्वतीर्भास्वत्यः प्रकाशमानाः। यन्ति गच्छन्ति वर्तन्त इत्यर्थः॥ अथ सप्तमीमाह। ज्योतिष्मतीति। इयमुषा ज्योतिष्मती। ज्योतीरूपैर्नक्षत्रै-र्युक्तत्वात्। रात्री चेयं सूर्योदयात्पूर्वभावित्वात्। देवी दीप्यमाना। तादृगुषा नभो नभस्थस्य सूर्यस्य व्रतानि सूर्यसम्बन्धित्वेन व्रतवन्नियतानि रश्मिजालानि प्रतिमुञ्चते। कञ्चुकमिव स्वीक-रोति। तस्यामुषसि नानारूपा गोमहिषादिजातिभेदभिन्नाः पशवो जायमाना जन्मसदृशं निद्रायाः प्रबोधं प्राप्नुवन्तो मातुर्मातृसमानाया अस्या भूम्या उपस्थ उत्सङ्गे विपश्यन्ति। विविध-मरण्यगमनादिव्यवहारमवलोकयन्ति॥ अथाष्टमीमाह। एकाष्टकेति। एकाष्टकेति माघकृष्णाष्टमी कथ्यते। तथा चापस्तम्बः। या माघ्याः पौर्णमास्या उपरिष्टाद्व्यष्टका तस्यामष्टमी ज्येष्ठया सम्पद्यते। तामेकाष्टकेत्याचक्षते (आप० गृ० ८-२१-१०) इति। सेयमेकाष्टका तपसा तप्यमाना पुत्रार्थं तपश्चरन्ती महिमानं महिमोपेतं गर्भं स्वोदरवर्तिनमिन्द्रं जजानोत्पादयामास। तेनेन्द्रेण देवाः सर्वं दस्यूंस्तस्कररूपान्राक्षसान्व्यसहन्त विशेषेणाभिभूतवन्तः। स चेन्द्रः शचीभिः स्वकीयश-क्तिभिरसुराणां हन्ताभवत्॥ अथ नवमीमाह। अनानुजामिति। हे एकाष्टका देव्यो मां यजमानं

पूर्वमननुज्ञां सन्तमिदानीमनुज्ञामकर्त कृतवत्यः। आ समन्तात्कर्मानुष्ठानस्यानुकूलत्वेन जायत इत्यनुज्ञाः। तद्विपरीतस्त्वननुज्ञाः। अननुष्ठानरहितं मामनुष्ठानोपेतं कृतवत्य इत्यर्थः। कीदृश्य एकाष्टकाः। सत्यं वदन्त्योऽवितथं धर्मं वदन्त्यः। हे यजमान त्वमेतं धर्ममनुतिष्ठेत्येवं बोधयन्त्य इत्यर्थः। अतस्त्वत्प्रसादात्सन्मार्गवृत्तिरहमेतदन्विच्छे। वक्ष्यमाणमपेक्षितं प्रार्थये। किं तदपेक्षितमिति। तदुच्यते। हे एकाष्टका यूयमस्य युष्मत्पुत्रस्येन्द्रस्य सुमतौ कल्याण्यां बुद्धौ यथा स्थिता एवमहमप्यस्येन्द्रस्य सम्यगनुग्रहचित्ते भूयासम्। वो युष्माकं मध्येऽन्या काचिदन्यामितरामतिलङ्घ्य मा प्रयुङ्क्ते प्रयोगं व्यवहारं न करोति। किन्तु परस्परानुकूल्येनैव व्यवहरति। तद्वदहमप्यृत्विजामनुकूलव्यवहारयुक्तो भूयासम्॥ अथ दशमीमाह। अभूदिति। मम यजमानस्य सुमतौ भक्तियुक्तायां बुद्धौ। विश्ववेदाः सर्वज्ञवदभिज्ञेयमुषाः। अभूः स्थितवती। सा च प्रतिष्ठमाना अस्मदनुग्रहे स्थैर्यं व्याप्तवती। हि यस्मादियमुषा गाधं प्रतिष्ठानिमित्तभूतं यजमानमविदल्लब्धवती। तस्मान्मदनुग्रहे स्थैर्यवतीत्यर्थः। भूयासमित्यादि पूर्ववत्॥ अथैकादशीमाह। पञ्चेति। अग्निहोत्रदर्शपूर्णमासौपवसथ्यसुत्याख्यकर्मनिष्पादिकाः पञ्च मुख्या उषसो याः पूर्वमुक्तास्ताः पञ्चव्युष्टीरनु पञ्चात्मकं सर्वमिदमुत्पन्नम्। किमुत्पन्नमिति तदुच्यते। पञ्च दोहा उत्पन्नाः। तमिस्राज्योत्स्नासन्ध्याद्वयमहरित्येते पञ्च दोहाः। ते च होतृब्राह्मणे इदं वा अग्रे नैव किञ्चनासीदित्यनुवाके यास्य सा तनूरासीत् तामपाहत सा तमिस्राऽभवदित्यादिना समाम्नाताः। तत्रैव तेभ्यो मृन्मये पात्रेऽन्नमदुहदित्यादिना दोहा आम्नाताः। आम्नाय चान्ते तदुपसंहृतम्। एते वै प्रजापतेर्दोहा इति। त एते पञ्च दोहाः पञ्चव्युष्टीरनूत्पन्नाः। येयं गौः पृथिवी तां पञ्चनाम्नीं पञ्चविधनामोपेतामपि पञ्चव्युष्टीरनूत्पन्नां विद्यात्। वसन्तर्तौ पुष्पवतीति नाम। ग्रीष्मर्तौ तापवतीति नाम। वर्षर्तौ वृष्टिमतीति नाम। शरदि जलप्रसादवतीति नाम। हेमन्तशिशिरयोः शैत्यवतीति नाम। सैषा पञ्चनाम्नी पृथिवी व्युष्टीरनूत्पन्ना। तथा हेमन्तशिशिरयोरैक्येन पञ्चर्तवो व्युष्टीरनूत्पन्नाः। तथा प्राच्यादयः सहोर्ध्वया पञ्च दिशो व्युष्टीरनूत्पन्नाः। पञ्चदशाख्यस्तोमेन क्लृप्ताः संपादिताः पञ्चविधवृत्त्युपेताः स्तोत्रियाः पञ्चव्युष्टीरनूत्पन्नाः। तस्य स्तोमस्य निरूपके ब्राह्मणे पञ्चभ्यो हिंकरोतीत्येवं त्रिवारमाम्नातम्। एताः पञ्च व्युष्टयः। एकं लोकमभिसमानमूर्ध्नीः। लोक आलोकः प्रकाशस्तमेकं प्रति समानस्वभावाः। मूर्धशब्द उत्तमाङ्गवाची सन्मुख्यं स्वभावमुपलक्षयति। मुख्यस्वभावश्च व्युष्टीनां प्रकाशकत्वम्। एवंविधव्युष्टिरूपेयमिष्टकेति स्तूयते॥ अथ द्वादशीमाह। ऋतस्येति। याः पूर्वोक्ताः पञ्चोषसो मुख्यास्तासां मध्ये प्रथमा या व्युष्टिरुषःकालरूपाऽस्ति सा तस्य सत्यस्य गर्भो गर्भसदृशी तेनादित्येन सहैव वर्तते। एका काचिदुषा रश्मिसहकारिण्यपां महिमानं बिभर्ति। घर्मकाले रश्मिद्वारा जलमानीय मेघोदरे गर्भरूपं महत्त्वं पोषयति। एका काचिदन्योषाः। सूर्यस्य सम्बन्धिषु निष्कृतेषु संस्कृतेषु प्रदेशेषु चरति प्रकाशं कुर्वती वर्तते। एका काचिदन्योषा घर्मस्य दीप्यमानस्याग्नेः सम्बन्धिषु चरति प्रकाशं करोति। एकां काञ्चिदन्यामुषसं सविता नियच्छति दैनन्दिनप्रकाशकारित्वेन नियतां करोति॥ अथ त्रयोदशीमाह। या प्रथमेति। मुख्यासु पञ्चसूषःसु या प्रथमोषा व्यौच्छत् तमो व्यवासयत्। प्रकाशोत्पादनेन तमो निराकरोदित्यर्थः। सा तादृगुषा यमे धेनुरभवद्यमस्वामिके लोके प्रकाशदानेन धेनुवत्प्रीतिहेतुरभवत्। तथाविधे हे उषः सा त्वं

पयस्वती वृष्ट्युदकयुक्ता सती नोऽस्मदर्थमुत्तरामुत्तरां समामुत्तरोत्तरेषु सर्वेष्वपि संवत्सरेषु निरन्तरं धुक्ष्व दोहनं कुरु। यथा धेनुः क्षीरं प्रयच्छति तथा त्वं व्युष्टिं प्रकाशं च प्रयच्छेत्यर्थः ॥ अथ चतुर्दशीमाह। शुक्रर्षभेति। येयमुषाः शुक्रर्षभा शुक्रेषु प्रकाशरूपेषु नक्षत्रादिषु मध्ये श्रेष्ठा सेयमुषा नभसा ज्योतिषाऽऽकाशवर्तिप्रकाशेन युक्ता सत्यागादिह समागता। कीदृशी। विश्वरूपा। सर्वाणि रूपाणि प्रकाश्यानि यस्याः सा विश्वरूपा। शबलीः। सूर्योदयात् पूर्वमन्धकारलेशानुवृत्तेर्मिश्रवर्णा। अग्निकेतुः। अग्निहोत्रिभिरुषःकाले विहृत्य प्रज्वालिता येऽग्नयस्त एव केतवो ध्वजस्थानीया यस्याः साग्निकेतुः। समानमर्थं बिभ्रती। सूर्यस्य यत्प्रयोजनमन्धकारनिवारणरूपं तदेवोषसोऽपि प्रयोजनमतः सूर्येण सह समानप्रयोजना। स्वपस्यमाना। शोभनान्यपांसि कर्माणि तान्यात्मन इच्छतीति स्वपस्यमाना। हेऽजर उषस्त्वं जरामागाः। वलीपलितादिरूपजरारहिताऽपि सृष्ट्यादिमारभ्य प्रवृत्तत्वाच्चिरकालावस्थानलक्षणां जरां प्राप्ताऽसि। तादृगुणोरूपेयमिष्टकेत्यर्थः ॥ अथ पञ्चदशीमाह। ऋतूनामिति। इयं प्रथमोषा आगादिह कर्मण्यायाता। कीदृशी। ऋतूनां वसन्तादीनां पत्नी पालयित्री। उषःकालस्यासकृदावृत्त्या ह्यृतवः सम्पद्यन्ते। अह्नां नेत्री। नयनस्य हेतुः। प्रकाशप्रदानेन निष्पादिकेत्यर्थः। प्रजानां जनित्री उत्पादयित्री। उषःकालावृत्त्या नवमासगर्भधारणादिना प्रजोत्पद्यते। हे उषस्त्वं स्वरूपेणैका सती बहुधा दिनभेदेन बहुप्रकारा भूत्वा व्युच्छसि तमो विवासयसि। निष्कासयसीत्यर्थः। ईदृशी त्वमजीर्णा वलीपलितादिजरारहिता सर्वमन्यन्मनुष्यशरीरादिकं जरयसि जीर्णं करोषि। इत्थं पञ्चदशाम्नाताः ॥ षोडशी त्वन्यत्र द्रष्टव्या ॥ एतैर्मन्त्रैः साध्यमुपधानं विधत्ते। न वा इदं दिवा न नक्तमासीदव्यावृत्तं ते देवा एता व्युष्टीरपश्यन्ता उपादधत ततो वा इदं व्यौच्छद्यस्यैता उपधीयन्ते व्येवास्मा उच्छत्यथो तम एवापहते। इति। इदं कालस्वरूपं दिवारात्र्योर्व्यावर्तिकयोषसा रहितत्वादव्यावृत्तमासीत्। तथा सति दिवाऽपि नासीन्नक्तमपि नासीत्। अव्यावृत्तस्वरूपस्य निश्चेतुमशक्यत्वात्। तदानीं देवा व्यावृत्तिकारिणीर्व्युष्टिसञ्ज्ञका एता इष्टका अपश्यन्। विशेषेणोच्छति तमो विनाशयतीति व्युष्टिरुषःकालस्तद्वाचकशब्देनोपेतैर्मन्त्रैरुपधेया इष्टका व्युष्टयः। ता दृष्ट्वोपादधत। तत ऊर्ध्वमिदं कालस्वरूपं व्यौच्छद्व्यावर्तिकया व्युष्ट्या दिवानक्तभेदेन व्यावृत्तमासीत्। तस्माद्व्युष्टीरुपदध्यात्। तदुपधाने हि यजमानार्थं व्युच्छत्येव परलोकापरलोकप्रकाशं करोत्येव। अपि च बुद्धिगतभ्रान्तिरूपं तमो विनाशयति ॥ अत्र विनियोगसंग्रहः। इयं व्युष्टीरुपादध्यान्मन्त्राः पञ्चदशेरिताः ॥११॥

कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके एकादशोऽनुवाकः।

॥ १० ॥

५·६·१

उक्ता वायव्यपशावायाः पञ्चमे हि प्रपाठके। कुम्भेष्टकामन्त्रणादि षष्ठे मन्त्रैरुदीर्यते ॥ यदुक्तं सूत्रकारेण। हिरण्यवर्णा इत्युपहिता अभिमन्त्रयते (आप० श्रौ० १६-३३-२)। इति। तत्र कुम्भेष्टकाभि-

मन्त्रगणार्थानां त्रयोदशानामृचां मध्ये प्रथमामाह। हिरण्यवर्णा इति। आपस्तावन्निर्मलत्वेन भास्वरत्वाद्धिरण्यसदृशवर्णोपेताः। तथा शुचयः स्वयं शुद्धाः पावकाः स्नानादिना शरीरादिशुद्धिहेतवश्च। यास्वप्सु कश्यपाख्यः प्रजापतिरुत्पन्नः। यास्वप्सु इन्द्रोऽप्युत्पन्नः। अग्निं च या आपो गर्भत्वेन दधिरे। तदेतत्त्रयं शाखान्तरगतेभ्योऽर्थवादेभ्यो द्रष्टव्यम्। अत्राप्यग्ने गर्भो अपामसीति चतुर्थकाण्डे मन्त्रान्तरं समाम्नातम्। ईदृश्यो या आपस्ताः स्योनाः सुखकारिण्यो नोऽस्मान्सुखं भवन्तु। सुखं प्रापयन्तु॥ अथ द्वितीयामाह। यासामिति। वरुणाख्यो राजाऽपामधिपतिर्यासामपां मध्ये याति गूढः सञ्चरति। किं कुर्वन्। जनानां सत्यानृते अवपश्यन् स्नानपानादौ यो यथाशास्त्रमाचरति तत्सर्वं पश्यन्। ताश्चापो मधुरसं श्चोतन्ति सारयन्तीति मधुश्चुतः। शुचय इत्यादि पूर्ववत्॥ अथ तृतीयामाह। यासामिति। दिवि द्युलोके देवा यासामपां सम्बन्धि सारं भक्षं कृण्वन्ति। स्वभोज्यं कुर्वन्ति। पीयूषं हि देवैः सेव्यते। तच्चापां सारभूतम्। याश्चापोऽन्तरिक्षे वृष्टिधारारूपेण बहुप्रकारा भवन्ति। याश्चापः पृथिवीं सर्वां पयसा स्वकीयेन द्रवेणोन्दन्ति क्लेदयन्ति। शुक्रा निर्मलाः। ता न आप इत्यादि पूर्ववत्॥ अथ चतुर्थीमाह। शिवेन मेति। हे आपो यूयं शिवेन चक्षुषा शान्तया दृष्ट्या मा पश्यत मामवलोकयत। तथा शिवया तनुवा शान्तेन युष्मदीयशरीरेण मे त्वचमुपस्पृशत। अहमप्यप्सुषदो जलेषु स्थितान्सर्वानप्यग्नीन् हुवे जुहोमि। होमेन तर्पयामि। वो युष्मदीयं यद्वर्चः कान्तिर्यच्च बलं यदप्योजो बलहेतुरष्टमो धातुस्तत्सर्वं मयि निधत्त। स्थापयत॥ अथ पञ्चमीमाह। यदद इति। यद्यस्मात्कारणाददो द्युलोकस्थानात्संप्रयतीः सम्यक् प्रकर्षेण गच्छन्त्यो हे आपो यूयम्। अहिशब्दो मेघनामधेयम्। तस्मिन्हते युष्माभिस्ताडिते सत्यनदत नादं कृतवत्यः। प्रवाहगतपाषाणेष्विव मेघेषु जलाघातेन शब्दो जायते। यस्मान्नादं कृतवत्यस्तस्मादा समन्तात्सर्वेष्वपि स्थानेषु नद्यो नाम स्थ नदीति नामधेयं प्राप्ताः। हे सिन्धवः स्यन्दनशीला आपो वो युष्माकं ता नामानि तादृशानि निर्वचनसाध्यानि नामानि विद्यन्ते॥ अथ षष्ठीमाह। यत्प्रेषिता इति। हे आपो यद्यस्मात्कारणाद्वरुणेन प्रेषितास्ता यूयं शीभं समवल्गत शीघ्रं यथा भवति तथा सम्यग्वल्गनवन्नृत्तं हर्षेण कृतवत्यस्तदानीं यतीः प्रसरन्तीर्वो युष्मानिन्द्र उत्सुकः सन्द्रष्टुमाप्नोत्तस्मात्कारणादाप्यन्त इति व्युत्पत्त्याऽऽप इति नामधेयं प्राप्यानु स्थन सर्वेषामनुकूलाः स्थ॥ अथ सप्तमीमाह। अपकाममिति। देवीर्हि आपो देव्योऽपकामं स्यन्दमानाः प्रयोजनविशेषमनपेक्ष्य स्वभावत एव प्रवहन्तीर्वो युष्मानिन्द्रः परितोषाद्वीवरत वृतवान्। स्यन्दनेऽपि युष्माकं न साधनान्तरापेक्षा किन्तु वः शक्तिभिर्युष्मदीयशक्तिवशादेव स्यन्दनम्। हिकमित्यव्ययं प्रसिद्धिवाचकम्। उदकस्य स्वशक्त्यैव स्यन्दनं सर्वलोकप्रसिद्धमित्यर्थः। यस्मादिन्द्रेण वृतास्तस्माद्वो युष्माकं वारित्येतन्नाम हितं संपन्नम्॥ अथाष्टमीमाह। एको देव इति। यथावशं स्वेच्छयैव स्यन्दमाना अप एको देव इन्द्रोऽध्यतिष्ठत्। स्वाधीनाः कृतवान्। इन्द्रेणाधिष्ठितास्ता आपो महीर्महत्यः प्रभूताः सत्य उदानिषुरुत्कर्षेण चेष्टितवत्यः तस्मादुदानादुदकमिति नामोच्यते॥ अथ नवमीमाह। आपो भद्रा इति। एता आपो भद्राः कल्याणरूपा आप इदाप एव घृतमासन्गोशरीरद्वारा घृतरूपेण परिणताः। ता आप इत्याद्य आप एवाग्नीषोमौ देवौ बिभ्रति धारयन्ति। अग्निं या गर्भमित्यग्निधारणं पूर्वमेवोक्तम्। सोमधारणमप्यमृतकारणद्वारा द्रष्टव्यम्। मधुपृचां माधुर्ययुक्तानामपां रसः सारां-

शस्तीव्रोऽत्यन्तस्वादुररंगमोऽलं संपूर्णं यथा भवति तथा गच्छति प्राप्नोति। सर्वजनपुष्टिकारीत्यर्थः। तादृशो रसः प्राणेन श्वासवायुना वर्चसा बलेन सह मा मां प्रत्यागन्नागच्छतु। यावदपां रसोऽन्नादिरूपेण शरीरे तिष्ठति तावत्प्राणो नातिगच्छति बलं च न विनश्यति॥ अथ दशमीमाह। आदिदिति। आदिदनन्तरमेव पश्यामि अपां रसे मच्छरीरमागते सति तदानीमेव चक्षुषा द्रष्टुं शक्तोऽस्मि। उत वा शृणोमि। अपि च श्रोतुमपि शक्तोऽस्मि। आसामपां घोषो नाद आगच्छति। मच्छरीरे वर्तते। स एव घोषो नोऽस्माकं वाक्। हे हिरण्यवर्णास्तेजस्विन्य आपो यदा वो युष्माकं सेवयाऽतृपमहं तृप्तोऽभवं तर्हि तस्मिन्कालेऽमृतस्य भेजानो मन्ये पीयूषं सेवितवानस्मि इति तर्कये॥ अथैकादशीमाह। आप इति। हिशब्द एवकारार्थः। प्रसिद्ध्यर्थो वा। आपो यूयमेव मयोभुवः स्थ सुखयित्र्यो भवत। स्नानपानादिहेतुत्वेन सुखोत्पादकत्वं प्रसिद्धम्। तास्तादृश्यो यूयं नोऽस्मानूर्जे रसाय भवदीयरसानुभवार्थं दधातन स्थापयत। किञ्च महते रणाय रमणीयाय चक्षसे दर्शनाय दधातनास्मान्परतत्त्वसाक्षात्कारयोग्यान्कुरुतेत्यर्थः॥ अथ द्वादशीमाह। यो व इति। वो युष्माकं शिवतमः शान्ततमः सुखैकहेतुर्यो रसोऽस्ति इहास्मिन्कर्मणि नोऽस्मान्। तस्य भाजयत तं रसं प्रापयत। तत्र दृष्टान्तः। उशतीरिव मातरः। कामयमानाः प्रीतियुक्ता मातरो यथा स्वकीयं स्तन्यरसं शिशुं पाययन्ति तद्वत्॥ अथ त्रयोदशीमाह। तस्मा इति। यस्य रसस्य क्षयाय क्षयेण निवासेन जिन्वथ यूयं प्रीता भवथ। तस्मै रसाय वो युष्मानरंगमामालं भृशं प्राप्नुमः। किञ्च हे आपो यूयं नोऽस्माञ्जनयथ प्रजोत्पादकान्कुरुत॥ कल्पः। दिवि श्रयस्वेति बार्हस्पत्यं नैवारं पयसि चरुं मध्ये कुम्भेष्टकानामुपदधाति (आप० श्रौ० १६-३३-२)। इति। पाठस्तु। दिवीति। हे नैवारचरो दिवि श्रयस्व द्युलोक आश्रितो भव। अन्तरिक्षेऽपि यतस्व प्रयत्नवान् भव। पृथिव्यां संभव संयुक्तो भव। ब्रह्मवर्चसमसि तत्साधनत्वात्तद्रूपमसि। अतो ब्रह्मवर्चसाय त्वामत्रोपदधामि॥१॥

कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः।

॥ ११ ॥

५·७·१

उपानुवाक्यं यत्प्रोक्तं द्वयोः पञ्चमषष्ठयोः। ततोऽवशिष्टं तत्सर्वं सप्तमेऽत्राभिधीयते॥ तत्रादौ तावन्मन्त्रविशेषैश्चितीनामभिमर्शनं विधत्ते यो वा इति। यस्याश्चितेर्या देवता तामतिक्रम्य चयनमयथादेवतमनतिक्रमणं यथादेवतम्। अतो यथादेवतमनुष्ठायाग्नेयगायत्र्यादिभिस्तां तां चितिमभिमृशेत्। अग्ने देवां इहावहेत्याग्नेयी गायत्री। अगन्म महा मनसा यविष्ठमिति त्रिष्टुप्। मेधाकारमिति जगती। मनुष्वत्त्वा निधीमहीत्यनुष्टुप्। अग्निर्हि वाजिनमिति पङ्क्तिः। ता एता नाचिकेतचयनप्रकरणे यत्ते चित्तमित्यनुवाके समाम्नास्यमानत्वात्तत्रैव व्याख्यास्यन्ते। एवमभिमर्शने सति नोक्तदोषः कश्चिदप्यस्ति। एकैकचितिस्पर्शने योऽयं मन्त्रविभागस्तमिमं प्रशंसति। इडाया इति। विभक्तिर्गायत्र्यादिमन्त्रविभागः। स चात्रेडार्थं क्रियते। इडा हि नाम पशवः। पशवो वा इडेति श्रुत्यन्तरात्। गायत्र्यादिच्छन्दांसि च पशुस्वरूपाणि पशवो वै

छन्दांसि इति श्रुत्यन्तरात्। अतो गायत्र्यादिरूपैः पशुभिरेनमग्निं चितवान्भवति। एतच्च ब्राह्मणं पशुर्वा एष यदग्निरित्यनुवाके प्रथमचित्यवसाने द्रष्टव्यम्। अथोपधानेऽश्वस्पर्शनं विधत्ते। या वा इति। प्रजापतिरग्निं प्रति स्रष्टृत्वात्प्रथमं चेतृत्वाच्चाग्नेः स्वामी। अतस्तस्मै कथयित्वा तदनुज्ञया चयने कृते सति न विनाशं प्राप्नोति। अतः कथनीयम्। पार्श्वयोर्द्वावश्वाववस्थाप्य तौ स्पृष्ट्वा पश्चादुपदध्यात्। एतदश्वाख्यं शरीरं प्रजापतेः स्वरूपम्। प्रजापतेरक्षिजन्यत्वेन तस्य प्राजापत्यत्वात्। अतोऽश्वस्पर्शनमेव प्रजापतये कथनं तेनासौ न विनश्यति। तत्र स्पर्शने विषयव्यवस्थां विधत्ते। एतद्वा इति। श्वेतोऽश्व इष्टकाश्चेत्युभयमह्नो रूपम्। अत इष्टका उपधास्यन्श्वेतमश्वमभिमृशेत्। कृष्णोऽश्वः पुरीषञ्चेत्युभयं रात्रेः स्वरूपम्। तत्स्वरूपे वर्णसाम्यं हेतुः। यदा पुरीषमुपधास्यति तदा कृष्णमभिमृशेत्। एवं सत्यहोरात्राभ्यामेवैनमग्निं चितवान्भवति। एतच्च ब्राह्मणमग्ने तव श्रवो वयमित्यनुवाके द्रष्टव्यम्। यदुक्तं सूत्रकारेण दक्षिणाकाले हिरण्यपात्रं मधोः पूर्णं शतमानस्य कृतं चित्रं देवानामित्यवेक्ष्याश्वेनावघ्राप्य ब्रह्मणे ददाति ( आप० श्रौ० १७-२३-५ )। इति। तत्र दानं विधत्ते। हिरण्येति। परलोके मधुभोग्यद्रव्ययुक्तो भविष्यामीत्यभिप्रेत्य मधुना पूर्णं सुवर्णपात्रं दद्यात्। दात्रा च दानात्पूर्वकालीनमवेक्षणं विधत्ते। सौर्येति। मध्याह्नस्य दक्षिणाकालत्वात्तदानीं दातुमादौ मधुपूर्णं पात्रं मन्त्रेण अवेक्षेत। चित्रं देवानामित्येषा सौरी चित्रशब्दयुक्ता च। तयाऽवेक्षणे सति चित्रमेवैश्वर्यं प्राप्नोति। अवेक्षणादूर्ध्वं घ्रापणं विधत्ते। अश्वमवेति। योऽयं चित्रत्वया प्रतिपाद्य आदित्यः स एव परमैश्वर्योपेतत्वादिन्द्रः। प्रजानां परिपालकत्वात्प्रजापतिः। अवघ्रातोऽश्वः प्राजापत्यः। अतोऽश्वावघ्रापणेन तं प्रजापतिमिन्द्रमादित्यमेव साक्षात्समृद्धं करोति। तदिदं ब्राह्मणमन्ते द्रष्टव्यम् ॥१॥

कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके प्रथमोऽनुवाकः।

## ४। मैत्रायणीयसंहिता-

भाष्यं नोपलभ्यते।

## ५। अथर्ववेदसंहितासायणभाष्यम्

॥ १ ॥

१·१६

"येऽमावास्यां रात्रिम्" इति सूक्तेन द्वेष्यमरणार्थमभिमन्त्रितसीसचूर्णमिश्राक्षप्रदानम्। तद्वात्रस्याभरणसंस्पर्शनम्। स्वयंछिन्नवेणुयष्ट्या ताडनं च कुर्यात्। सूत्रं च येऽमावास्यां रात्रिमिति सन्नह्य सीसचूर्णानि ( कौ० ६-१ ) इत्यादि। अत्र सीसशब्देन सीसनदीसीसे अयोरजांसि कृकलासशिरः सीसानि ( कौ० १-८ ) इति परिभाषासूत्रोक्तानि प्रत्येतव्यानि। अत्र नदीसीसमिति नदीफेनमुच्यते ॥ तत्र

प्रथमा। ये प्रसिद्धा अत्त्रिणोऽदनशीला रक्षःपिशाचादयः। अद भक्षणे इत्यस्मात् अदेस्त्रिनिश्च ( उ० ४-६८ ) इत्यौणादिकस्त्रिनिप्रत्ययः। अमावास्याम्। अमा सह वसतोऽस्यां तिथौ सूर्याचन्द्रमसाविथममावास्या। वस निवासे। अस्माण्ण्यति अमावस्यदन्यतरस्याम् (पा० ३-१-१२२) इति वृद्ध्यभावनिपातनस्य पाक्षिकत्वादत्र वृद्धिः। तस्येदमर्थे विहितस्याणः छान्दसो लुक्। तित्स्वरितम् (पा० ६-१-१८५) इति अन्तस्वरितत्वम्। अमावास्यासम्बन्धिनीमित्यर्थः। यद्वा। सुपां सुपो भवन्तीति षष्ठ्या अमादेशः। अमावास्याया इत्यर्थः। रात्रिं रजनीं भ्राजं भ्राजमानां तारकादिभिर्दीप्यमानाम्। भ्राजृ दीप्तौ। भ्राजभास० (पा० ३-२-१७७) इत्यादिना क्विप्। रात्रिमिति कालाध्वनोरत्यन्तसंयोगे ( पा० २-३-५ ) इति द्वितीया। सर्वस्यां रात्रौ। उदस्थुरुत्तिष्ठन्ति। मनुष्यान् हिंसितुं रात्रौ सञ्चरन्तीत्यर्थः। यद्वा। भ्राजं भ्राजमानं रोगाद्यभावेन पुष्टाङ्गं पुरुषं हिंसितुमुदस्थुः। अत एवामावास्यासम्बन्धिन्यां रात्रौ रक्षसां सञ्चरणं निमित्तीकृत्य रक्षोघ्नेष्टिर्विहिता—अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालममावास्यायां निशायां निर्वपेत्॥ इति। तथैव तेषां सञ्चरणमेव निमित्तीकृत्य तस्यां रात्रावात्मरक्षा कर्तव्येति तेनैवापस्तम्बेनोक्तम्—दिवाऽऽदित्यः सत्त्वानि गोपायति नक्तं चन्द्रमास्तस्मादमावास्याया निशायां स्वाधीन आत्मनो गुप्तिमिच्छेत् ( आप० ध० १-३१ ) इति। अस्थुरिति। ष्ठा गतिनिवृत्तौ। छन्दसि लुङ्लङ्लिटः ( पा० ३-४-६ ) इति वर्तमाने लुङ्। अत्र चोर्ध्वगमनस्य विवक्षितत्वात् उदोऽनूर्ध्वकर्मणि ( पा० १-३-२४ ) इत्यूर्ध्वकर्मणः पर्युदस्तत्वादात्मनेपदाभावः। गातिस्था० ( पा० २-४-७७ ) इति सिचो लुक्। आत (पा० ३-४-११०) इति झेर्जुस्। उस्यपदान्तात् (पा० २-४-७७) इति पररूपत्वम्। यत एवं रक्षांसि अस्यामुत्तिष्ठन्त्यतः कारणात्तुरीयश्चतुर्थोऽग्निः। पूर्वं देवानां हव्यवाहकास्त्रयोऽग्नयो मृताः। तदपेक्षयाऽस्य वर्तमानस्य तुरीयत्वम्। श्रूयते हि तैत्तिरीयके—अग्नेस्त्रयो ज्यायांसो भ्रातर आसंस्ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त ( तै० स० २-६-६-१ ) इति। यद्वा। वैतानाग्नयस्त्रयः। तदपेक्षया गार्ह्योऽग्निश्चतुर्थः। अथवा वैतानिको गार्ह्यः सांग्रामिकश्चेति त्रयोऽग्नयः। तदपेक्षयाऽऽङ्गिरसोऽग्निश्चतुर्थः। पूरणेऽर्थे चतुरश्छयतावाद्यक्षरलोपश्च ( पा० वा० ५-२-५१ ) इति छप्रत्ययः। तत्सन्नियोगेन चकारस्य लोपः। सोऽग्निर्यातुहा यातूनां रक्षसां हन्ता। अग्निः खलु वै रक्षोहा (तै० स० ६-१-४-६ ) इति तैत्तिरीयकम्। हन हिंसागत्योरस्माद्यातुशब्दोपपदाद् बहुलं छन्दसि ( पा० ३-२ ८८ ) इति क्विप्। स तथाविधोऽग्निरस्मभ्यमस्मदर्थमधिब्रवत्। अधिब्रवीतु। अस्मान्स्वकीयत्वेन स्वीकृत्य तेभ्यो रक्षःपिशाचेभ्यः प्राणं भीतिं निवर्तयत्वित्यर्थः। ब्रूञ् व्यक्तायां वाचि। अस्माल्लेट्यडागमः॥१॥

द्वितीया। अनया प्रयोगसाधनं द्रव्यं स्तूयते। सीसाय प्राक् सूत्रपरिभाषया प्रदर्शिताय नदीफेनरूपाय। तादर्थ्ये चतुर्थी। तदर्थम्। वरुणो जलाधिपतिर्देवोऽध्याहाधिब्रवीति। मदीयमेतदित्यभिमन्यते। अस्य सीसस्य रक्षःपिशाचाद्यनभिमतनिवृत्तिसाधनत्वेन इतरपदार्थेभ्यो विशिष्टत्वादत्रैवासाधारण्येन पक्षपातं करोतीत्यर्थः। आहेति। ब्रूञ् व्यक्तायां वाचि। ब्रुवः पञ्चानामादित आहो ब्रुव (पा० ३-४-८४) इति तिपो णलादेशस्तत्सन्नियोगेन प्रकृतेराहादेशश्च। यथा सीसाय उक्तद्रव्यार्थम्। अग्निरञ्जनादिगुणयुक्तो देव उपावति। उपरक्षति। निरन्तरमेतत्सीसं समीपे

स्थापयित्वा रक्षोनिबर्हणसामर्थ्याधानेन पालयतीत्यर्थः। यद्वा। सीसायेति क्रियाग्रहणं कर्तव्यम् इति कर्मणः सम्प्रदानत्वाच्चतुर्थी। सीसमुक्तप्रकारेण रक्षतीत्यर्थः। उदीरितसामर्थ्योपेतं सीसं मे मह्यम् द्वेष्यादिनिरसनकामायेन्द्रः परमेश्वर्ययुक्तो देवानां पतिः प्रायच्छत्। प्रादात्। अनेन त्वदभिमतं साधयेति प्रदत्तवानित्यर्थः। दाण् दाने। लङि पाघ्राध्मा० ( पा० ७-३-७८ ) इति यच्छादेशः। सत्स्वन्येषूत्कृष्टेषु द्रव्येषु किमनेन निकृष्टेन द्रव्येणेत्यत आह तदङ्गेति। अङ्गेत्याभिमुख्यकरणे। हे साधक देवदत्त तत् खलु उक्तसामर्थ्योपेतं सीसं यातुचातनम्। यातूनां रक्षःपिशाचादीनां नाशकम्। चातयतिर्नाशन इति हि यास्कः ॥२॥

तृतीया। अपि चेदं सीसं विष्कन्धं गतिप्रतिबन्धनम्। रक्षःपिशाचादिकृतं विघ्नजातमित्यर्थः। सहते अभिभवति निःसारयति। षह अभिभवे इति धातुः। विष्कन्धमिति। स्कन्दिर् गतिशोषणयोः। भावे घञ्। प्रादिसमासे वेः स्कन्देरनिष्ठायाम् (पा० ८-३-७३) इति षत्वम्। व्यत्ययेन धकारः। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। तथेदं सीसमत्त्रिणोऽदनशीलान्राक्षसान्बाधते हिनस्ति। न केवलं रक्षःपिशाचादिकृतं विघ्नं निवर्तयति अपि तु विघ्नोत्पादकान्रक्षःप्रभृतीनपि विनाशयतीत्यर्थः। यत एवमतोऽनेनोक्तप्रभावोपेतेन सीसेन विश्वा विश्वानि सर्वाणि। शेश्छन्दसि बहुलम् ( पा० ६-१-७० ) इति शेर्लोपः। ससहे। अभिभवामि। षह अभिभवे लटि उत्तमैकवचने बहुलं छन्दसि ( पा० २-४-७६ ) इति शपः श्लुः। कानि पुनस्तानीत्याह। पिशाच्याः पिशिताशिन्या राक्षस्याः। अस्याः सकाशाज्जातानि उत्पन्नानि या यानि पीडाकराणि उपद्रवजातानि। सन्तीति शेषः। तानीति पूर्वेण सम्बन्धः। पिशितमश्नातीति पिशिताशः। पृषोदरादीनि यथोपदिष्टम् ( पा० ६-३-१०९ ) इत्यत्र गणे पिशाचशब्दस्य पाठात् पिशिताशशब्दस्य पिशाचादेशः। जातिलक्षणो ङीष् ॥३॥

चतुर्थी। हे शत्रो त्वं नोऽस्माकं सम्बन्धिनीं गां गोजातं यदि हंसि मारयसि। हन हिंसागत्योः। लटि शपि अदादित्वाच्छपो लुक्। तथा अश्वं हंसि। पुरुषमस्मदीयं भृत्यादिरूपं यदि हंसि। अत्र सर्वत्र यदिशब्दप्रयोगादपकर्तुरेव हिंस्यत्वं नानपकर्तुरिति द्योत्यते। तं तथाविधं मदीयगवाश्वादिहननेनापकर्तारं त्वा त्वां शत्रुभूतम्। त्वामौ द्वितीयाया ( पा० ८-१-२३ ) इति युष्मदस्त्वादेशः। अनुदात्तं सर्वमपादादौ ( पा० ८-१-१८ ) इत्यनुवृत्तेरनुदात्तत्वम्। सीसेनोक्तमहिमोपेतेन विध्यामस्ताडयामो मारयामः। व्यध ताडने। दिवादित्वाच्छ्यन्। ग्रहिज्यावयिव्यधि० ( पा० ६-१-१६ ) इत्यादिना संप्रसारणम्। शत्रुणा घातितानां गवादीनां पुनरुद्भवासम्भवात्किमिति शत्रुहिंसा क्रियत इत्यत आह यथेति। इतः परमपि यथा येन प्रकारेण हे शत्रो त्वं नोऽस्माकमवीरहा। वीर्याज्जायन्त इति वीराः पुत्रास्तेषां हन्ता वीरहा। न वीरहा अवीरहा। असो भवसि। अस्तेर्लेट्यडागमः। इतः परमपि अस्मदीयान्पुत्रपश्वादीन्यथा न बाधसे तथा ताडयाम इति पूर्वेण सम्बन्धः ॥४॥

॥२॥

१·३४

परिषज्जपकर्मणि सभाप्रवेशात्पूर्वमियं वीरुदिति सूक्तेन मधुकाख्यां वीरुधं भक्षयेत्। सूत्रितं

हि इयं वीरुदिति मधुकं खादन्नपराजितां परिषदमा व्रजति ( कौ० ५-२ ) इति। विवाहकर्मण्यप्येतेन सूक्तेन मधुकमणिं रक्तसूत्रेण बध्वाङ्गुल्यां बध्नीयात्। सूत्रितं च इयं वीरुदिति मधुकमणिं लाक्षारक्तेन सूत्रेण विपथ्यानामिकायां बध्नाति ( कौ० १०-२ ) इति। विवाह एव चतुर्थिकाकर्मणि शयनकाले मधुकमणिं पिष्टौक्ते प्रक्षिप्यानेन सूक्तेनाभिमन्त्र्य वधूवरौ परस्परं सङ्गच्छेयाताम्। मधुकमणिमौक्तेऽपनीयेयं वीरुन्मधोऽहमिति संस्पृशतः (कौ० १०-५) इति सूत्रितत्वात्। अश्वमेधे ब्रह्मोद्यवदनेऽप्येतत्सूक्तम्॥ तत्र

प्रथमा। इयं पुरोवर्तिनी सभाजयादिकर्मणि विनियुज्यमाना वीरुत् विरोहणशीला लता मधुकाख्या मधुजाता। मधुनि मधुररसोपेते भूतले जातोत्पन्ना। यद्वा। मधुनि मध्वर्थमुपभोक्तृणां वचसि माधुर्यसंपादनाय जातोत्पन्ना। अथवा मधुना क्षौद्रेण रसेन जातोत्पन्ना। तस्या उत्पत्तौ क्षौद्रो रस एव जलवत्कारणमित्यर्थः। जनी प्रादुर्भावे। कर्तरि निष्ठा। हे वीरुत् त्वा त्वां स्वभावतो मधुरां वयमपि मधुना मधुरूपेण खनित्रादिना खनामसि खनामोऽवदारयामः। खनु अवदारणे। इदन्तो मसिः (पा० ७-१-४६) इति मस इदन्तत्वम्। यद्वा। मधुना। इत्थंभावे तृतीया। मधुरेण प्रकारेण खनामः। माधुर्यरसोपेतामेव त्वां खनामि न तु केवलामित्यर्थः। तथा त्वं मधोर्मधुनः। लिङ्गव्यत्ययः। जनिकर्तुः प्रकृतिः ( पा० १-४-३० ) इति पञ्चमी। मधुरूपादुपादानकारणात्। अधिः पञ्चम्यर्थानुवादी। प्रजाता प्रकर्षेण जाता। असि भवसि। या त्वमुक्तप्रकारेणाश्रयतः स्वभावत उपादानतश्च मधुमयी भवसि सा त्वं नोऽस्मान्मधुमतो मधुररसोपेतान् कृधि कुरु। कायिकवाचिकमानसरूपोऽस्मदीयः सकलो व्यापारो मधुररसोपेतः सन् सर्वैरुपादेयो भवत्वित्यर्थः। डुकृञ् करणे। मध्यमैकवचने छान्दसो विकरणस्य लुक्। श्रुशृणुपृकृवृभ्यश्छन्दसि ( पा० ६-४-१०२ ) इति हेर्धिरादेशः। कःकरत्करतिकृधिकृतेष्वनदितेः ( पा० ८-३-५० ) इति विसर्जनीयस्य सत्वम्॥१॥

द्वितीया। मधुकलते त्वं जिह्वाया रसनाया अग्रेऽग्रभागे मधु क्षौद्रं यथा भवति तथा वर्तस्व। तथा जिह्वामूले रसनाया मूलभागे मधूलकं मधुररसबहुलं जलमधूलकवृक्षपुष्पं यथा भवति तथा तदात्मिका वा वर्तस्व। जिह्वाया मध्वादिसन्निधानेन तन्निर्वर्त्या वागपि मधुरा सर्वेषां श्रव्या भवत्वित्यर्थः। तथा हे लते त्वं मम। इदित्यहेति च निपातावबधारणार्थौ। उभाभ्यामन्ययोगायोगव्यवच्छेदौ क्रियेते। ममैव नान्यस्येत्यर्थः। क्रतौ कर्मणि शरीरे व्यापारेऽसो भव। अस भुवि। लेटि अडागमः। यथा मम चित्तमन्तःकरणमुपायस्युपागच्छ। मदीयः शारीरो मानसो व्यापारश्च त्वत्सन्निधानान्माधुर्यरसोपेतः सर्वश्लाघ्यो भवत्वित्यर्थः॥२॥

तृतीया। हे मधुकलते त्वद्धारणे मे मम निक्रमणं निकटगमनं सन्निहितार्थेषु प्रवर्तनं मधुमन्मधुयुक्तं स्वस्य परेषां च प्रीतिकरम्। भवत्विति शेषः। तथा मे मम परायणं परागमनं दूरगमनं मधुमत् भवतु। तथा वाचा वागिन्द्रियेण यद् वदामि कथयामि तत् सर्वं मधुमत् भवतु। इत्थं त्वदीयानां सर्वेषां व्यापाराणां मधुमयत्वात्तथाविधव्यापारयुक्तोऽहमपि मधुसन्दृशः मधुवत् सन्द्रष्टुः सर्वस्य पुरुषस्य मधु मधुमत् प्रीतिविषयो भूयासम्। संपूर्वाद्दृशेः क्विप् च ( पा० ३-२-७६ ) इति क्विप्॥३॥

चतुर्थी। हे मधुकलते त्वत्सन्निधानान्मघोर्मधुनः क्षौद्रात्। लिङ्गव्यत्ययः। मधुतरोऽतिशयेन मधुररसोपेतोऽस्मि भवामि। मधुशब्दात्तरप्। मदुघान्मधुदुघात्। दुह प्रपूरणे। मधुशब्दोपपदादस्मात् दुहः कब् घश्च (पा० ३-२-७०) इति कप्प्रत्ययस्तत्सन्नियोगेन घत्वं च। मधुशब्दे धलोपश्छान्दसः। मधुमत्तरो ऽतिशयेन मधुमानस्मि। पदार्थविशेषान्मधुमत्तरोऽतिशयेन मधुमानस्मि। मधुशब्दान्मतुप्। तदन्ताद् द्विवचनविभज्योपपदे तरबीयसुनौ (पा० ५-३-५७) इति तरप्। स्वस्यातिशयेन मधुमत्त्वे हेतुमाह मामिदिति। हे मधुकलते त्वं मामित्। इच्छब्दोऽवधारणे। किलशब्दः प्रसिद्धौ। मामेव खलु वनाः सम्भजेः। यतस्त्वं मय्येव सन्निहिताऽतोऽहं सर्वस्मान्मधुतर इत्यर्थः। वन षण सम्भक्तौ। अस्माल्लेटि मध्यमे लेटोऽडाटौ (पा०३-४-९४) इत्याडागमः। तत्र दृष्टान्तः। मधुमतीमिव मधुयुक्तां शाखां वृक्षसम्बन्धिनीं यथा जनः सेवते तद्वदित्यर्थः ॥४॥

पञ्चमी। हे जाये त्वा त्वां परितत्नुना परिततेन सर्वतो व्याप्तेन। तनु विस्तारे। तनिपत्योश्छन्दसि (पा० ६-४-९९) इत्युपधालोपः। तथाविधेनेक्षुवदतिशयितमाधुर्यरसोपेतेन मधुकेनाविद्विषे। आवयोः परस्परं विद्वेषणाभावाय पर्यगां परितः प्राप्तवानस्मि। इण् गतौ। इणो गा लुङि (पा० २-४-४५) इति गादेशः। व्यवहिताश्च (पा० १-४-८२) इति परेर्व्यवहितप्रयोगः। परिगमनस्य न केवलमविद्वेषमात्रं फलमपि तु यथा येन प्रकारेण हे जाये त्वं मां पति कामिनी कामयमाना। असो भवेः। अस्तेर्लेट्यडागमः। यथा च मत् मत्तः सकाशात्। एकवचनस्य च (पा० ७-१-३२) इति अस्मद उत्तरस्य ङसेरदादेशः। त्वमावेकवचने (पा० ७-२-९७) इति मपर्यन्तस्य मादेशे शेषे लोप (पा० ७-२-९०) इति लोपः। अपगा अपहाय गच्छन्ती नासो न भवेः। गाङ् गतौ। अस्मादपपूर्वादातो मनिन्क्वनिब्वनिपश्च (पा० ३-२-७४) इति विच् प्रत्ययः। तथा त्वां पर्यगामिति पूर्वेण सम्बन्धः ॥५॥

॥ ३ ॥

२·३०

यथेदं भूम्यामिति सूक्तेन स्त्रीवशीकरणकर्मणि वृक्षत्वक्शरखण्डतगराञ्जनकुष्ठादिद्रव्याणि पेषयित्वाऽऽज्येनालोड्य स्त्रिया अङ्गमनुलिम्पेत्। यथेदं भूम्याम् अधि यथा वृक्षमिति प्रक्रम्य सूत्रितम्। संस्पृष्टयोर्वृक्षलिबुजयोः शकलावन्तरेषु तगराञ्जनकुष्ठतृणमाज्येन सन्नीय संस्पृशति (कौ० ४-११) इति ॥ तत्र

प्रथमा। भूम्यां पृथिव्याम्। अधिरुपर्यर्थः। भूम्या उपरि इदं परिदृश्यमानं तृणं वातो वात्यालक्षणो वायुर्यथा येन प्रकारेण मथायति मथ्नाति। अनवस्थितं कृत्वा भ्रामयति। छन्दसि शायजपि (पा० ३-१-८४) इत्यत्र शायच्छन्दसि सर्वत्र इति वचनाद्धावपि श्नः शायजादेशः। शायचश्चित्त्वादन्तोदात्तत्वम्। यावद्यथाभ्याम् (पा० ८-१-३६) इति निघातप्रतिषेधः। हे स्त्रि एव एवं ते मनो मथ्नाम्यालोडयामि। यथा येन प्रकारेण मां कामयमानं कामिनी काङ्क्षिष्यन्ती असो भवेः। यथा येन प्रकारेण मत् मत्तः सकाशात् अपगा अपसृत्यान्यत्र गन्त्री नासो न भवेः। तथा मथ्नामीति पूर्वत्र सम्बन्धः। कामिनीति। कमेर्णिङन्तादौणादिक इनिप्रत्ययः। तस्य भविष्यति गम्यादय (पा० ३-३-३) इति भविष्यदर्थकत्वम्। ततो ङीप्। अकेनोर्भविष्यदाधमर्ण्ययोः (पा० २-३-७०) इति कर्मणि षष्ठीप्रतिषेधः। तस्मान्मामिति द्वितीया। अपगा इति। जनसनखनक्रमगमो विट् (पा० ३-२-६७) इति गमेर्विट्प्रत्ययः। विड्वनोरनुनासिकस्यात् (पा० ६-४-४१) इत्यात्वम् ॥१॥

द्वितीया। अश्विना हे अश्विनौ कामनाविषयीभूतां स्त्रियम्। इदित्यवधारणे। सन्नयाथो मत्समीपं प्रापयतम्। नयतेर्लेट्याडागमः। चवायोगे प्रथमा ( पा० ८-१-५९ ) इति प्रथमा तिङ्विभक्तिर्न निहन्यते। आनीय च कामिना मया संवक्षथः संयोजयतम्। वहेर्लेट्य-डागमः। सिब्बहुलम्० ( पा० ३-१-३४ ) इति सिप्। परस्परसमुच्चयार्थौ चकारौ। वां युवयोर्भगासो भगा भाग्यानि। आज्जसेरसुक्। समग्मत संगच्छन्ताम्। मयेति शेषः। समो गम्यृच्छि० ( पा० १-३-२९ ) इत्यात्मनेपदम्। छान्दसे लुङि च्लेर्लुक्। गम हन० ( पा० ६-४-९८ ) इत्युपधालोपः। तथा चित्तानि ज्ञानानि। समग्मतेत्यनुषङ्गः। एवं व्रता व्रतानि। कर्मनामैतद्। उशब्दोऽप्यर्थे। विविधानि कर्माण्यपि। समग्मतेति सम्बन्धः ॥२॥

तृतीया। सुपर्णाः शोभनपक्षाः पारावतादयः पक्षिणो यत् स्त्रीविषयं वाक्यं विवक्षवो वक्तु-मिच्छवो भवन्ति, अनमीवा अरोगिणो दृप्ताः कामिजनाश्च यद्विवक्षवो भवन्ति तत्र विषये क्रियमाणं मे मम संबन्धिनं हवमाह्वानं कुल्मलं यथा कुत्सितमलोपेतं मृदुलं शरीरावयवविशेष-मिव सा कामिनी शल्यो बाण इव गच्छतात्। प्राप्नोतु। मद्वाक्यं श्रुत्वा मत्परवशा भवत्वि-त्यर्थः। विवक्षवः। ब्रुवः सनि वच्यादेशे सनाशंसभिक्ष उः ( पा० ३-२-१६८ ) इत्युप्रत्ययः। न लोकाव्ययनिष्ठा० ( पा० २-३-६९ ) इति षष्ठीप्रतिषेधे यदिति द्वितीया। सुपर्णा अनमीवा इत्युभयत्र नञ्सुभ्याम् ( पा० ६-२-१८२ ) इत्युत्तरपदान्तोदात्तत्वम्। यथेति पादान्ते (फि० ८४) इति यथाशब्दो निहन्यते ॥३॥

चतुर्थी। यदर्थजातमन्तरमभ्यन्तरं मनो विषयीकरोति तदेव बाह्यं बहिष्ठं वाग्विषयो भवति। यद्वाह्यमुक्तलक्षणं च तदेवान्तरं मानसं भवति। अनेन वाङ्मनसयोः परस्परं विसंवादो निरस्तः। बाह्यमिति। बहिषष्टिलोपो यञ् च (वा० वा० ४-१-८५) इति यञ्प्रत्ययष्टिलोपश्च। एवं निर्दिष्टं विश्वरूपाणामनवद्यसंपूर्णावयवानां कन्यानामभुक्तपूर्वाणां मनो हे ओषधे तृणादिरूपे गृभाय गृहाण। त्वदनुलेपनेन तां मदनुरक्तचित्तां कुर्वित्यर्थः। कन्यानामिति। तिल्यशिक्यमर्त्यकाश्मर्यधान्य-कन्याराजन्यमनुष्याणामन्तः (फि० ७६) इत्यन्तस्वरितत्वम्। गृभाय। ग्रहेर्लोटि छन्दसि शायजपि ( पा० ३-१-८४ ) इति श्नः शायजादेशः। हृग्रहोर्भश्छन्दसि ( पा० वा० ३-१-८४) इति भत्वम् ॥४॥

पञ्चमी। इयं काम्यमाना स्त्री पतिकामा भर्तारमभिलष्यन्ती अत्र मत्समीपमागमत्। गमेर्लुङि तिपि च्लेर्लुकि मो नो धातोः ( पा० ८-२-६४ ) इति नत्वम्। पतिकामेति। शीलि-कामिभक्ष्याचरिभ्यो णः ( पा० वा० ३-२-१ ) इति णप्रत्ययान्तत्वान्ङीप् न भवति। अहमपि जनिकामो जनिर्जाया तां कामयमानः सन्नागमम्। तां प्राप्तवानस्मि। किञ्च कनिक्रदद् भृशं हेषाशब्दं कुर्वन्नश्वो यथा वडवया संगच्छते तथाहं भगेनागमम्। कनिक्रददिति। क्रन्देरा-ह्वानार्थाद् दाधर्ति०( पा० ७-४-६५ ) इत्यादिसूत्रे इतिशब्दस्य प्रकारवाचित्वात्कनिक्रदच्छब्दोऽपि शत्रन्तो निपातितो द्रष्टव्यः ॥५॥

॥ ४ ॥

४·१६

चतुर्थानुवाके पञ्च सूक्तानि। तत्र बृहन्नेषामित्याद्येन सूक्तेनाभिचारकर्मणि शत्रुं कोशन्तमनु-मन्त्रयेत्। धूमकेतूत्पाताशान्तौ वारुणपशुप्रयोगे उतेयं भूमिरित्येषा। तत्र

प्रथमा। बृहन्महान्परिवृढो वा वरुण एषां दुरात्मनां शत्रूणामधिष्ठाता नियन्ता सद्भिस्तैः कृतं सर्वमन्यान्यमन्तिकादिव पश्यति समीपदेशादिव जानाति। न तस्य व्यवधायकं किञ्चिदस्तीत्यर्थः। यो वरुणस्तायत्सान्तत्येन वर्तमानं स्थिरवस्तु चरञ्चरणशीलं नश्वरं च वस्तु मन्यते। स्थावरजङ्गमात्मकं सर्वं जानातीत्यर्थः। स बृहन्निति सम्बन्धः। तायदिति। ताय् संतानपालनयोरस्माल्लटः शत्रादेशः। ईदृग्विधज्ञानसद्भावं वरुणस्योपपादयति सर्वमिति। व्यवहितं विप्रकृष्टं स्थिरं नश्वरं स्थूलं सूक्ष्ममित्येतादृगिदं सर्वमतिरोहितज्ञानत्वाद्देवा विदुर्जानन्ति। विद ज्ञाने। विदो लटो वा ( पा० ३-४-८३ ) इति झेरुसादेशः ॥१॥

द्वितीया। पूर्वस्यामृचि एषामित्युक्तम्। तत्रेदमा के पुनः प्रतिनिर्दिश्यन्त इति तान्निर्दिशति यस्तिष्ठतीति पूर्वार्धेन। यः शत्रुस्तिष्ठत्यभिमुखमवतिष्ठते यश्चरति गच्छति यश्च वञ्चति कौटिल्येन प्रतारयति यः शत्रुर्निलायं निलयनेनानिर्गमनेन चरति। यद्वा निलीनोऽदृश्यः संचरति। अयतेर्निस्पूर्वाण्णमुल्। निपूर्वाल्लीयतेर्वा। उभयथापि समानोऽर्थः। उपसर्गस्यायतौ (पा० ८-२-१९) इति लत्वम्। यः शत्रुः प्रतङ्कं प्रकर्षेण कृच्छ्रजीवनं प्राप्य चरति वर्तते। तकि कृच्छ्रजीवने। अस्मात्प्रपूर्वाण्णमुल्। एषां शत्रूणामिति पूर्वेण सम्बन्धः। अन्तिकादिव पश्यतीति यदुक्तं तदपि समर्थयते द्वौ संनिषद्येत्युत्तरार्द्धेन। द्वौ पुरुषौ रहसि संनिषद्योपविश्य यत्कार्यं मन्त्रयेते गुप्तं भाषेते। मन्त्रि गुप्तभाषणे इति धातुः। तयोर्गुप्तं भाषणं भाषमाणयोस्तृतीयस्त्रित्वसङ्ख्यापूरकः सन् राजेश्वरो वरुणः स्वसार्वज्ञ्येन तत्सर्वं वेद जानातीत्यर्थः। ततश्चाकार्यचिन्तावसर एव तान् निग्रहीतुं वरुणः शक्नोतीत्यर्थः। त्रेः सम्प्रसारणं च (पा० ५-२-५५) इति पूरणार्थे तीयप्रत्ययः सम्प्रसारणं च ॥२॥

तृतीया। उतशब्दोऽप्यर्थे। इयं सर्वाधिष्ठानत्वेन निहिता भूमिरपि राज्ञ ईश्वरस्य दुष्टनिग्रहेऽधिकृतस्य वरुणस्य वशे वर्तते। उतापि च असौ विप्रकृष्टा बृहती महती दूरेअन्ता दूरे विप्रकृष्टे देशे अन्तेऽन्तिके च भवतीति दूरेअन्ता। यत एवं व्याप्य वर्ततेऽतो बृहतीति भावः। एवंरूपा द्यौश्च वरुणस्य राज्ञो वशे वर्तते। बृहती दूरेअन्तेति विशेषणद्वयं भूम्या अपि योज्यम्। अत एव दूरेअन्ते इति द्यावापृथिव्योर्नामसु पठितम्। उतो अपिच समुद्रौ पूर्वपश्चिमौ वरुणस्य राज्ञः कुक्षी दक्षिणोत्तरपार्श्वभेदेनावस्थिते द्वे उदरे। एवं भूम्यादिकं कृत्स्नं जगद्व्याप्य वर्तमानोऽपि अस्मिन्नल्पेऽपि उदके तटाके निलीनोऽन्तर्हितो भवति ॥३॥

चतुर्थी। उतापि च यः शत्रुरनर्थकारी अस्माकं पुरस्तात् द्यामन्तरिक्षप्रदेशमतिसर्पात् अतिक्रम्य सर्पेद् गच्छेत्। यद्वा सुकृतप्राप्यं द्यां स्वर्गमतिक्रम्यापथे प्रवर्ततेत्यर्थः। स शत्रुर्वरुणस्य राज्ञः पाशेभ्यो न मुच्यातै न मुच्येत। तद्बद्ध एव वर्ततामित्यर्थः। मुचेः कर्मणि लेट्याडागमः वैतोऽन्यत्र (पा० ३-४-९६ ) इत्यैकारः। कथं द्युलोकस्थो वरुणो मनुष्यकृतमपराधं जानातीति तत्राह दिवः स्पश इति। दिवो द्युलोकान्निर्गताः अस्य स्पशश्चारा इदं पार्थिवं स्थानं प्राप्य सञ्चरन्ति। ते च सहस्राक्षाः सहस्रसङ्ख्याकैर्दर्शनोपायैर्युक्ताः सन्तो भूमिमतिपश्यन्ति। भूलोकवृत्तान्तं सर्वमतिशयेन साक्षात्कुर्वन्तीत्यर्थः ॥४॥

पञ्चमी। रोदसी अन्तरा द्यावापृथिव्योर्मध्ये यत्प्राणिजातं वर्तते तथा पुरस्तात्स्वस्य पुरोभागे यत्प्राणिजातमस्ति तत्सर्वं वरुणो राजा विचष्टे विशेषेण पश्यति। तस्मात्तेषां जनानां

प्राणिनां निमिषो निमेषणव्यापारस्य। उपलक्षणमेतद्। अक्षिस्पन्दोपलक्षितस्य अस्य साध्वसाधुकर्मणः सङ्ख्याता परिमाणयिता वरुणस्तानि पापिनां शिक्षाकर्माणि तत्तत्पापानुसारेण निमिनोति निक्षिपति। डुमिञ् प्रक्षेपणे। तत्र दृष्टान्तः। अक्षानिवेति। श्वघ्नी स्वघ्नी स्वमात्मानं स्वकीयं धनं च हन्तीति स्वघ्नी। तथा च यास्कः श्वघ्नी कितवो भवति स्वं हन्ति (नि० ५-२२) इति। यथा कितवोऽक्षानात्मजयार्थं निक्षिपति तद्वदित्यर्थः ॥५॥

षष्ठी। हे वरुण ये त्वदीयाः पाशाः सप्त सप्त उत्तममध्यमाधमभेदेन प्रत्येकं सप्तसङ्ख्याकास्त्रेधा त्रिप्रकारं विसितास्तत्र तत्र पापिनां निग्रहाय जालवद्बद्धाः। एतच्च त्रैविध्यम् उदुत्तमं वरुण (ऋ० १-२४-१५) इति मन्त्रान्तरादध्यवसितम्। स्थान्तस्तत्तत्पापानुसारेण पापिष्ठान् हिंसन्तस्तिष्ठन्ति सर्वे ते पाशा अनृतं वदन्तं पापकृतमस्मदीयं शत्रुं छिनन्तु छिन्दन्तु। यस्तु सत्यवादी सत्यवदनशीलः पुण्यकृत् तमतिसृजन्तु विमुञ्चन्तु ॥६॥

सप्तमी। हे वरुण शतेन शतसङ्ख्याकैस्त्वदीयैः पाशैरेनमनृतवादिनं शत्रुमभिधेहि बधान। बध्वा निगृहाणेत्यर्थः। अभिपूर्वो दधातिर्बन्धने वर्तते। यथा अश्वाभिधानीमादत्ते (तै० स० ५-१-२-१) इति। हे नृचक्षो नृणां मनुष्याणां साध्वसाधुचरित्राणां विवेकेन द्रष्टः। ईदृश हे वरुण अनृतवागनृतं ब्रुवन् पुरुषस्ते त्वत्तो मा मोचि विमुक्तो विसृष्टो मा भूत्। किन्तु जाल्मोऽसमीक्ष्यकारी स्वकीयमुदरं श्रंशयित्वा स्रंसयित्वा जलोदररोगेण स्रस्तं कृत्वाऽबन्धो बन्धरहितः प्रान्तेष्वकृतबन्धनोऽसेः कोश इव परिकृत्यमान आस्ताम्। त्वत्पाशबद्ध एव वर्तताम्। अत एवान्यत्राम्नातम् अनृते खलु वै क्रियमाणे वरुणो गृह्णाति (तै० ब्रा० १-७-२-६) इति। परिकृत्यमान इति। कृती छेदने। अस्मात् कर्मणि यक् ॥७॥

अष्टमी। समानमामयति व्याधितो भवति पुरुषोऽनेनेति समाम्यः। ईदृशो यो वरुणः। लुप्ततद्धितोऽयं निर्देशः। वारुणः पाश इत्यर्थः। विगमनेन विविधं वा आमयति पुरुषोऽनेनेति व्याम्यो यः पाशः। तथा यो वरुणो वरुणसम्बन्धी पाशः सन्देश्यः समानदेशे भवः यश्च विदेश्यो विदेशे भवो यश्च वरुणो वरुणसम्बन्धी पाशो दैवो देवेषु भवो यश्च वरुणपाशो मानुषो मनुष्येषु प्रयुक्तः। तैस्त्वा सर्वैरिति वक्ष्यमाणेन सम्बन्धः ॥८॥

नवमी। असावित्यस्य स्थाने सम्बुद्ध्या शत्रुनामग्रहणम्। आमुष्यायणेतिगोत्रतो निर्देशः। अमुष्याः पुत्रेति। अदःशब्दस्थाने मातृनामनिर्देशः। तदयमर्थः—हे देवदत्तायाः पुत्र गार्ग्य यज्ञशर्मन् त्वा त्वां तैः पूर्वस्यामृचि उक्तैः सर्वैः पाशैरभिष्यामि अभिदधामि। बध्नामीत्यर्थः। तथा हे शत्रो ते तुभ्यं तान् सर्वान् पाशाननुलक्षीकृत्य सन्दिशामि संप्रयच्छामि ॥९॥

॥ ५ ॥

४.१७

स्त्रीशूद्रकापालादिकृताभिचारदोषनिवृत्त्यर्थं दर्भापामार्गसहदेव्याद्या मन्त्रोक्ता ओषधीः शान्त्युदके प्रक्षिप्य तदनुमन्त्रणविनियुक्ते महाशान्तिगणे ईशानां त्वेत्यादिसूक्तत्रयमावपनीयम्। सूत्रितं हि तृष्टा तृष्टिरसि ये पुरस्तात् ईशानां त्वा समं ज्योतिः उतो अस्य बन्धुकृत् सुपर्णस्त्वा यां ते चक्रुः अयं प्रतिसरः यां कल्पयन्ति इति महाशान्तिमावपते इति। (कौ० ५-२)

एतत्सूक्तसङ्घस्य कृत्याप्रतिहरणगणत्वादस्य यत्र यत्र विनियोगस्तत्र सर्वत्रास्य सूक्तत्रयस्यापि विनियोगो द्रष्टव्यः। तत्र

प्रथमा। हे सहदेव्याख्य ओषधे भेषजानां तत्तद्रोगशान्तये भेषजत्वेन प्रयुज्यमानानामन्यासामोषधीनामीशानामीश्वरीं त्वा त्व।मुज्जेषे शत्रुकृताभिचारदोषमुज्जेतुं निवर्तयितुमारभामहे स्वृशामः। ईशानामिति। ईश ऐश्वर्ये। अस्माल्लटः शानच्। आदादित्वाच्छपो लुक्। अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः। उज्जेष इति। तुमर्थे सेसेन्० (पा० ३-४-९) इति सेप्रत्ययः। ईश्वरत्वमेवास्या उपपादयति हे ओषधे सहदेवि त्वा त्वां सर्वस्मै अभिचारजनितज्वरादिदोषनिवृत्तये सहस्रवीर्यं चक्रेऽपरिमितसामर्थ्ययुक्तां करोमि। यस्मादेवं तस्मात्त्वमोषधीनामधिपतिरसीत्यर्थः ॥१॥

द्वितीया। सत्यजितं सत्येन याथार्थ्येनाभिचारादिदोषं जयति निवर्तयतीति सत्यजित्। तां शपथयावनीं शपथस्य परकृतस्याक्रोशस्य पृथक्कर्त्रीं नाशयित्रीं वा सहमानामभिभवनशीलां पुनःपुनराभीक्ष्ण्येन बहुतरव्याधिनिवृत्तये सरति प्रवर्तत इति पुनःसरा तामीदृशीमोषधिमन्याः सर्वा ओषधीरोषध्य इतोऽस्मादभिचारदोषशमनाद्धेतोर्नोऽस्मान्पारयात्। पारतीर कर्मसमाप्तौ। अस्मत्कर्तव्यं समापयेत् इत्यनेनाभिप्रायेण समभिगच्छन्तीति उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। अत्र समह्वीति पाठः ॥२॥

तृतीया। एषा प्रथमकाण्डे व्याख्याता। अक्षरार्थस्तु या पिशाची शपथेनाक्रोशेन शशाप या च मूरं मूर्च्छाप्रदमघं पापमादधे। या च शरीरगतासृगादिरसस्य हरणाय जातं पुत्रादिमारेभे आलिङ्गति सा सर्वा मद्विषयेऽभिचरतः शत्रोस्तोकं पुत्रं भक्षयन्त्विति ॥३॥

चतुर्थी। हे कृत्ये ते त्वां यामामेऽपक्वे मृत्पात्रे चक्रुः कृतवन्तोऽभिचारकाः। यद्वा नीललोहिते। धूमोद्गमेन नीलो ज्वालया च लोहितोऽग्निर्नीललोहितः। तादृशेऽग्नौ अग्न्यायतने यां चक्रुः कृतवन्तः। आमेऽपक्वे मांसे कुक्कुटादिप्राणिशरीरे यां कृत्यां चक्रुः कृतवन्तः। आमपात्रमग्न्यायतनं कुक्कुटादिशरीरं सभास्थलमित्येवमादीनि हि कृत्यानिधानस्थानानि। एवं कृत्याकृतः कृत्यायाः प्रयोक्तॄन् हे कृत्ये त्वया। विभक्तिव्यत्ययः। त्वं जहि नाशय। यद्वा ओषधिः सम्बोध्यते। हे ओषधे त्वया कृत्याप्रयोक्तारो हन्तव्या इत्यर्थः। कर्मणि प्रत्ययः ॥४॥

पञ्चमी। दुष्टः स्वप्नो दुःस्वप्नस्तत्र भवमरिष्टदर्शनं दौष्वप्न्यम्। दौर्जीवित्यम्। दुष्टा जीवता जीवभावो यस्य दुर्जीवतस्तस्य भावो दौर्जीवित्यम्। ब्राह्मणादेराकृतिगणत्वात् ष्यञ्। रक्षो राक्षसजातिरभ्वम्। महन्नामैतत्। यच्चाभिचारक्रियाजनितमन्यत् महद्भयकारणम्। अस्तीत्यर्थः। यद्वा अभ्वं महत् रक्षो ब्रह्मराक्षसादिरिति रक्षोविशेषणत्वेन योज्यम्। अत एव द्यावा रक्षतं पृथिवी नो अभ्वात् (ऋ० १-१८५-२) इत्यभ्वस्य भयहेतुता श्रुता। अराय्योऽसमृद्धिहेतवः पापलक्ष्म्यस्तथा दुर्णाम्नीः। छेदिका भेदिका इत्येवं दुष्टनामोपेता याः पिशाच्यो दुर्वाचो नाशयामि च्छेदयामि भक्षयामीत्येवं दुःशब्दा याभिः सततं प्रयुज्यन्ते तास्तथोक्ताः। इत्थं या इमाः कृत्या अनुक्रान्तास्ताः सर्वा अस्मिन्नभिचर्यमाणपुरुषविषये नाशयामसि नाशयामः ॥५॥

षष्ठी। क्षुधामारं क्षुधा क्षुत्पीडया पुरुषस्य मारणं तृष्णामारं तृष्णया पिपासातिशयेन पुरुषस्य मारणम्। यद्वा क्षुत्पिपासयोः पुरुषे स्वरूपतो नाशनमत्र विवक्षितम्। तद्विरहे पुरुषस्य स्वत

एव मरणासम्भवात्। अगोतां गोराहित्यम् अनपत्यताम् अपत्यराहित्यं च। एतत्सर्वं हे अपामार्ग त्वया वयमपमृज्महेऽपमार्जयामो विनाशयामः ॥६॥

सप्तमी। क्षुत्तृष्णानाशयोरत्र विपर्यास एव विशेषः। अथो अपिच अक्षपराजयमन्त्रैर्यूत-साधनैर्यूतक्रियानिमित्तः पराजयः। एतत्सर्वं हे अपामार्गेत्यादि पूर्ववत् ॥७॥

अष्टमी। सर्वासामन्यासामोषधीनामपामार्ग एक एव वशी वशयिता सर्वा अस्य वशे वर्तन्त इत्यर्थः। हे अभिचारदोषगृहीत ते तवास्थितं कृत्यादिभिरापतितं रोगादिकं तेनापामार्गेण मृज्मो मार्जयामोऽपगमयामः। अथानन्तरं त्वमगदो व्याधिरहितश्चिरं चिरकालं वर्तस्व ॥८॥

॥ ६-७ ॥

नेह भाष्यम्।

॥ ८ ॥

६.३२

चतुर्थेऽनुवाके पञ्च सूक्तानि तत्रान्तर्दाव इति प्रथमं सूक्तम्। तत्राद्येन तृचेन पिशाचरक्षो-जनितभयनिवृत्तये सूत्रोक्तप्रकारेणाग्निं त्रिः प्रदक्षिणं कृत्वा पुरोडाशं जुहुयात्। सूत्रितं हि अन्तर्दाव इति समन्तमग्नेर्जपन्त्रिः परिक्रम्य पुरोडाशं जुहोति ( कौ० ४-७ ) इति। तत्र

प्रथमा। हे ऋत्विजो यातुधानक्षयणं रक्षोनिबर्हणमेनद्धविर्घृतेन सह दावे दावाग्ना-वन्तर्मध्ये सुष्ठु जुहुत। हे अग्न आहुत्याधारभूतस्त्वं रक्षांस्यस्मदुपद्रवकारिणो राक्षसानारा-द्दूरे प्रतिदह भस्मसात्कुरु। नोऽस्माकं गृहाणां नोपतीतपासि उपतापकरो मा भूः ॥१॥

द्वितीया। हे पिशाचाः पिशिताशना वो युष्माकं ग्रीवा गलावयवान् रुद्रः संहर्ता देवः शरै-श्छिनत्तु। हे यातुधाना वो युष्माकं पृष्टीः पार्श्वास्थीनि स एव रुद्रोऽपिश्रृणातु हिनस्तु। विश्व-तोवीर्या सर्वतः प्राप्तवीर्या वीरुदोषधिश्च वो युष्मान्यातुधानान्यमेन मृत्युना समजीगमत् संगमयतु ॥२॥

तृतीया। हे मित्रावरुणौ नोऽस्माकमिहास्मिन्देशेऽभयं भयराहित्यमस्तु। अर्चिषा तेजसा-ऽत्त्रिणोऽदनशीलान्राक्षसान् प्रतीचः प्रत्यङ्मुखानस्मत्तः पराङ्मुखान्नुदतं निरस्यतम्। ते च निरस्ता ज्ञातारमभिज्ञं स्वामिनं मा विदन्त मा लभन्ताम्। तथा प्रतिष्ठामावासभूमिं मा लभन्ताम्। निराश्रया भवन्त्वित्यर्थः। ते च मिथः परस्परं विघ्नाना विहन्यमाना मृत्युं मरण-मुपयन्तु उपगच्छन्तु ॥३॥

॥ ९ ॥

१९.५३ (१-१०)

कालो अश्वो वहतीति सूक्तद्वयस्य सौवर्णभूमिदाने आज्यहोमे विनियोगः। उक्तं च परिशिष्टे अन्वारभ्य जुहुयात्कामसूक्तं कालसूक्तं पुरुषसूक्तमिति ( प० ११-१ )। कालप्रतिपादकत्वात्काल-सूक्तमुच्यते। तत्र

प्रथमा। अनेन सूक्तद्वयेन सर्वजगत्कारणभूतः कालरूपः परमात्मा स्तूयते। तत्र प्रथमया कालोऽश्वात्मना रूप्यते। सप्तरश्मिः। सप्तसङ्ख्याका रश्मयो रज्जवो मुखग्रीवापादा-

वबद्दा यस्य सः। सहस्राक्षः सहस्रलोचनः। अजरो जरारहितो नित्ययुवा भूरिरेताः। रेतः शुक्ररूपः सप्तमो धातुः। प्रभूतवीर्यः। रेतःसेचनसमर्थोऽपत्योत्पादनशक्तः कालः कलयिताश्वो वहति स्वारोहकानभिमतं देशं प्रापयति। तमश्वं विपश्चितोऽश्वावरोहणारोहणादिषु कुशला अश्वशास्त्रनिष्णाताः कवयो धीमन्त आरोहन्ति। तस्याश्वस्य चक्रा चक्राणि। चङ्क्रमणाच्चक्रमिति ( नि० ४-२७ ) यास्कः। गन्तव्यानि स्थानानि विश्वा विश्वानि भुवनानि। इति अश्वपक्षेऽर्थः। विवक्षितस्तु। अश्नोऽश्नुते व्याप्नोति भूतभविष्यद्वर्तमानकालवर्तीनि वस्तूनीत्यश्वः। कालः कलयिता सर्वस्य जगतोऽनवच्छिन्नकालरूपः परमेश्वरः। सप्तरश्मिः। रश्मिशब्देन ऋतव उच्यन्ते। सप्तर्तुः। एकैक ऋतुर्मासद्वयात्मकः सप्तमस्तु त्रयोदशो मासः। तथा च दाशतय्यामाम्नायते साकञ्जानां सप्तथमाहुरेकजं षलिद्यमा ऋषयो देवजा इति ( ऋ० १-१६४ ) इति। अत्रापि समाम्नातं प्राक्। सहस्राक्षः। अत्राक्षिशब्देन दिनानि रात्रयश्च उच्यन्ते। सहस्रसङ्ख्याकाहोरात्रयुक्तः। अजरो जरारहितः सर्वदैकरूपः। भूरिरेताः प्रभूतजगत्सर्जनसमर्थशक्तिसम्पन्नः। एवंरूपः कालो वहति प्राणिजातं स्वस्वकर्मसु प्रापयति। तं कालं कवयः क्रान्तदर्शिनो विपश्चितो विद्वांस आरोहन्ति स्वाधीनं कुर्वन्ति। स्वाधीनकाला भवन्तीत्यर्थः। तस्य कालात्मकस्य रथस्य चक्रा चक्राणि विश्वा विश्वानि भुवनानि भूतजातानि। लोकान् अभिगच्छन्तीति शेषः। अथवा अश्वशब्देनादित्य उच्यते। तथा च यास्कः—एको अश्वो वहति सप्तनामा। आदित्यः सप्तास्मै रश्मयो रसानभिसन्नामयन्ति सप्तैनमृषयः स्तुवन्तीति वा इति ( नि० ४-२७ )। कालात्मकोऽश्वः सूर्यः सप्त रश्मयः प्रधानभूता यस्य। ते चैव सप्तसूर्या उच्यन्ते। देवा आदित्या ये सप्त तेभिः सोमाभिरक्ष न इति निगमः। ( ऋ० ९-११४-३ )। तेषां च नामानि तैत्तिरीया अधीयते। आरोगो भ्राजः पटरः पतङ्गः स्वर्णरो ज्योतिषीमान् विभास इति ( तै० आ० १-७-१ )। असौ तु प्रधानभूतः कश्यपाख्य आदित्यः। कश्यपोऽष्टमः स महामेरुं न जहाति इति श्रुतेः ( तै० आ० १-७-१ )। यद्वा रश्मिशब्देन छन्दांस्यभिधीयन्ते। गायत्र्यादीनि छन्दांसि यस्य। तथा च निगमः। ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मध्ये अह्नः॥ सामवेदेनास्तमये महीयते। वेदैरशून्यस्त्रिभिरेति सूर्यः॥ ( तै० ब्रा० ३-१२-९-१ ) इति। यद्वा रश्मिमन्तोऽश्वा रश्मिशब्देनोच्यन्ते। मत्वर्थीयस्य लोपः। सप्ताश्वः। सप्त युञ्जन्ति रथमेकचक्रमिति निगमः ( ऋ० १-१-१६४ )। सहस्राक्षः। अक्षिवत् अक्षीणि किरणाः। सहस्रकिरणोपेतोऽजरोऽविनश्वरो नित्यो भूरिरेताः। उदकवाची रेतःशब्दः। यदा खल्वसावादित्यो न्यङ् रश्मिभिः पर्यावर्ततेऽथ वर्षतीति श्रुतिः ( तै० सं० २-४-१०-२ )। एवंरूप आदित्यो वहति कालचक्रं धारयति। तं कालात्मकं सूर्यं विद्वांसोऽधिगतपरमार्था आरोहन्ति सूर्यमण्डलं भित्त्वोपगच्छन्ति। द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राट् योगयुक्तश्च रणे चाभिमुखाहतः॥ इति स्मृतेः। यद्वा स्वात्मभावेनाधितिष्ठन्ति। अतएवादित्यं पुरुषं प्रकृत्य श्रूयते। तद्योऽहं सोऽसौ योऽसौ सोऽहं तदुक्तमृषिणा सूर्य आत्मा जगतस्तस्थुषश्च इति ( ऐ० आ० २-२-४ )। तस्य सूर्यस्य चक्रा चक्राणि चङ्क्रमणानि व्याप्तिस्थानानि जगन्तीति ॥१॥

द्वितीया। अनया संवत्सररूपकालचक्रं वर्ण्यते। तस्य संवत्सरकालस्य चक्राणि एकं त्रीणि पञ्च षट् सप्त द्वादशेति तत्र तत्राम्नायन्ते। सप्त युञ्जन्ति रथमेकचक्रम्। त्रिणाभिचक्रम्। सप्त-

चक्रे पञ्चारे। द्वादशारं नहीत्यादिषु। तथाच शौनकोऽप्याह। त्रिधा द्वादशधा षोढा पञ्चधा सप्तधा तथा। संवत्सरं चक्रवच्च पराभिः कीर्तयत्यृषिः॥ (बृ० ४-३२) इति। एवं सर्वजगत्कारणत्वेनानुभूयमानः कालः परमात्मा सप्त चक्रा चक्राणि सप्तऋतूननु अनुक्रमेण वहति धारयति। अस्य संवत्सरस्य सप्त नाभीर्नाभयः। नह्यतेर्नाभिः। अक्षबन्धकानि मध्यच्छिद्राणि सप्त ऋतुसन्धिकालाः। अस्याक्षो नु सन्ततं सूक्ष्ममम्रृतममरणधर्मकमविनश्वरं तत्त्वम्। सप्तचक्रच्छिद्रेषु प्रोतोऽनुस्यूतोऽक्षः सत्यमबाध्यं तत्त्वम्। स पूर्वोक्तः संवत्सररूपः प्रथमः सर्वस्यादिभूतो देवो द्योतमानो नित्यज्ञानरूपः कालः परमात्मा इमा इमानि नामरूपात्मना व्याकृतानि विश्वा विश्वानि भुवनानि भवनवन्ति चराचरात्मकानि जगन्ति अञ्जत् अञ्जन्। अनक्तेः शतरि अनित्यमागमशासनमिति नुमभावः। व्यक्तीकुर्वन् स्वेन कालेनावच्छिन्नानि कुर्वन्नुत्पादयन्सः। स्यति संहरतीति सः। षोऽन्तकर्मणि। कर्तरि कप्रत्ययः। आतो लोपः। संहरंश्चेयते गच्छति व्याप्नोति सर्वमावृत्य वर्तते। ईङ् गतौ। दैवादिकः। नुशब्दः प्रसिद्धौ। यद्वा अध्यात्मपरत्वेन योज्यः। कालः कलयिता सर्वेन्द्रियव्यापारकर्ता शरीराभिमानी देवः। बन्धका विषया रूपादयः। नु सूक्ष्म दुर्दर्शम्। अमृतं चैतन्यम्। अक्षः सर्वेन्द्रियेषु तद्विषयेषु चानुगतः। एवं सर्वप्राणिजातानञ्जन् प्रेरयन्नीयते। स उपसंहरंश्च स काल ईयते तत्त्वज्ञैर्ज्ञायते। इण् गतौ। कर्मणि यक्प्रत्ययः॥२॥

तृतीया। काले सर्वजगत्कारणभूते नित्येऽनवच्छिन्ने परमात्मनि स्वस्वरूपे। अधिशब्दः सप्तम्यर्थानुवादी। पूर्णः सर्वत्र व्याप्तः कुम्भः कुम्भवत्। कुम्भोऽहोरात्रमासर्तुसंवत्सरादिरूपोऽवच्छिन्नो जन्यः काल आहितो निहितो वर्तते। सर्वस्य कार्यस्य स्वकारणेऽवस्थानात्। अत्र विद्वदनुभवं श्रुतिः प्रमाणयति। तं जन्यं कालं सन्तः सत्पुरुषा बहुधा नानाप्रकारमहोरात्रभेदेन पश्यामो नु अनुभवामः खलु। अथवा तं जन्यकालाधारं परमात्मानं बहुधा बहुभिः श्रवणमननिदिध्यासनैः पश्यामः साक्षात्कुर्मः सन्तः सद्रूपब्रह्मोपासका वयम्। अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति हि श्रुतिः (तै० आ० ८-६)। वैनुशब्दौ प्रसिद्ध्यर्थौ। स काल इमा इमानि परिदृश्यमानानि विश्वा विश्वानि व्याप्तानि भुवनानि भूतजातानि प्रत्यङ् प्रत्यञ्चनः। अभिमुखाञ्चन आव्याप्नुवन् भवति। तं कालं परमे उत्कृष्टे सांसारिकसुखदुःखादिद्वन्द्वदोषरहिते व्योमन् व्योमनि आकाशवन्निर्लेपे सर्वगते विविधं रक्षके परमानन्दप्रदायके स्वस्वरूपे वर्तमानमाहुर्विद्वांसः। व्योमन्निति। सुपां सुलुक्० (पा० ७-१-३९) इति सप्तम्या लुक्। नङि सम्बुद्ध्योः (पा० ८-२-८) इति नलोपप्रतिषेधः॥३॥

चतुर्थी। स एव कालो भुवनानि भूतजातानि समाभरत् आहरत् आहरति उत्पादयति। हृग्रहोर्भः। यद्वा। भृञ् भरणे भौवादिकः। स्वेनोत्पादितानि भुवनानि समन्तात् पुष्णाति। स एव कालो भुवनानि समैरत्। सम्यक् परिगच्छति। व्याप्नोति। इण् गतौ छान्दसे लङि आडजादीनाम् (पा० ६-४-७२) इत्याडागमः। आटश्च (पा० ६-१-९०) इति वृद्धिः। स एव पिता एषां भुवनानां जनकः सन्नेषां पुत्रो भवति। काल एव पितृत्वेन पुत्रत्वेन च व्यवह्रियते। यः पूर्वजन्मनि पितृत्वेन ज्ञातः स एतास्मिञ्जन्मनि पुत्रत्वेन व्यवह्रियते। व्यवह्रियते। यः पूर्वजन्मनि पितृत्वेन ज्ञातः स एतस्मिञ्जन्मनि पुत्रत्वेन व्यवह्रियते। अज्ञावच्छेदककालाधीनत्वात्सर्वस्य। अथवा एकस्मिञ्जन्मन्येव पितुः पुत्रत्वमाम्नायते। अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे। आत्मा वै पुत्रनामासि स जीव शरदः शतम्॥

( कौ० उ० २-११ )। तस्मात्सर्वोत्पादकात्सर्वगतात् पुत्रादिरूपेण भविष्यतश्च तस्मात्कालादन्यत्परमुत्कृष्टं तेजो नास्ति। वैशब्दः प्रसिद्धौ। तेजो नास्तीति निषेधात्स्वस्यापि तेजोरूपत्वमर्थसिद्धम्। तस्य भासा सर्वमिदं विभातीति श्रुतेः ( क० व० ५-१५ )। ॥४॥

पञ्चमी। कालः परमात्मामुं विप्रकृष्टां दिवं द्युलोकमजनयदुत्पादितवान्। उतापि च इमाः परिदृश्यमानाः सर्वप्राण्याधारभूताः पृथिवीः। व्यत्ययेन बहुवचनं कल्पाभेदेन वा। तथाच मन्त्रवर्णः। यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थ (ऋ० १-१०८-९) इति। तथाहशब्द एवार्थे। काल एव भूतं भूतकाले आधारेऽवच्छिन्नं भव्यं भविष्यच्चेषितमिष्टमिष्यमाणं वर्तमानकालावच्छिन्नं च जगद्वितिष्ठते विशेषेणाश्रितं वर्तते। समवप्रविभ्यः स्थः ( पा० १-३-२२ ) इत्यात्मनेपदम् ॥५॥

षष्ठी। कालः कालरूपः परमात्मा भूतिं भवनवज्जगदसृजत। सृज विसर्गे। तौदादिकः। व्यत्ययेनात्मनेपदम्। दैवादिकादात्मनेपदिनो व्यत्ययेन शः। काले प्रेरके सति सूर्य आदित्यस्तपति जगत्प्रकाशयति। काल एवाश्रये विश्वा विश्वानि वर्तन्ते। काले चक्षुः। उपलक्षणमेतत्। चक्षुरादीनीन्द्रियाणि। विपश्यति। इदमप्युपलक्षणम्। दर्शनादिकर्माणि कुर्वन्ति। यद्वा चक्षुः। चक्षुःशब्दो लुप्तमत्वर्थीयः। चक्षुष्मान्सर्वेन्द्रियाधिष्ठाता विपश्यति स्वस्वेन्द्रियव्यापारं करोति ॥६॥

सप्तमी। काले परमात्मनि मनः जगत्सिसृक्षानिमित्तभूतं मनो वर्तते। तस्मिन्नेव प्राणः सूत्रात्मा सर्वजगदन्तर्यामी वर्तते। अन्तर्यमनोपाधित्वेन काले वर्तत इत्याधारव्यपदेशः। यद्वा मनः। जात्येकवचनम्। सर्वेषां प्राणिनां मनांसि। प्राणः पञ्चवृत्तिकः। प्राणा अपि परमात्मन्येव वर्तन्ते। तथा नाम नामधेयं सर्वेषां वस्तूनां सञ्ज्ञा अपि तत्रैव समाहितम्। स्त्रीपुरुषादिसञ्ज्ञाभिः काल एवोच्यत इत्यर्थः। यद्वा सर्वेषां रूपाणि कृत्वा तेषां नामान्यपि स्वयमेव व्यवहरतीत्येतदभिप्रायेण काले नाम समाहितमित्युक्तम्। सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्य आस्ते इति हि श्रुतिः ( तै० आ० ३-१२-८ )। कालेन वसन्तादिरूपेण आगतेन सर्वा इमाः प्रजा नन्दन्ति सन्तुष्यन्ति। स्वस्वकार्यसिद्धेः ॥७॥

अष्टमी। काले परमात्मनि तपः सर्वजगत्सर्जनविषयं पर्यालोचनम्। तप पर्यालोचने। अस्मादसुन्। तपसा चीयते ब्रह्म ( मु० १-१-८ ) इत्यादौ तपःशब्दः पर्यालोचनार्थत्वेन व्याख्यातः। तथा ज्येष्ठं सर्वस्यादिभूतं हिरण्यगर्भाख्यम्। यद्वा तपः कृच्छ्रचान्द्रायणादिकम्। तत्फलदातृत्वात्तत्रैव वर्तनम्। एकः कालशब्दो यौगिकः। कलयितरि काले ज्येष्ठं ब्रह्म हिरण्याख्यम्। ज्येष्ठं ब्रह्म श्रेष्ठं ब्रह्म इति हि श्रुत्यन्तरम्। ह शब्दोऽवधारणे। कालः सर्वस्य जगत ईश्वरः स्वामी। यः कालः प्रजापतेः प्रजानां स्रष्टुश्चतुर्मुखस्य ब्रह्मणः पिता जनक आसीत् ॥८॥

नवमी। तेन कालेनेषितमिष्टं सर्वं स्रष्टव्यं जगत्। कामितमित्यर्थः। तीष सह० ( पा० ७-२-४८) इतीडागमः। इति तेनैव जातमुत्पादितं जगत्। तत् तज्जगत्। हशब्दोऽवधारणे। तस्मिन्नेव काले प्रतिष्ठितम्। कालो ह काल एव ब्रह्म देशकालावच्छिन्नं सच्चित्सुखचित्तृरसमवाध्यं परमार्थतत्त्वं भूत्वा परमेष्ठिनं परमे स्थाने सत्यलोके तिष्ठन्तं चतुर्मुखं बिभर्ति ॥९॥

दशमी। कालोऽयं सृष्ट्यादौ प्रजापतिं ब्रह्माणमसृजतोदपादयत्। कालः प्रजाश्चासृजत। स्वयम्भूः। स्वयमात्मना भवतीति स्वयम्भूः। कालव्यतिरिक्तकालान्तरनिषेधकः स्वयंशब्दः।

कश्यपः। आरोगभ्राजादिसप्तसूर्यापेक्षयाऽष्टमः सूर्यः। कश्यपोऽष्टमः स महामेरुं न जहातीति (तै० आ० १-७-१) श्रुत्यन्तरमुदाहृतम्। कश्यपशब्दनिर्वचनं च यास्केनैवं कृतम् कश्यपः पश्यको भवति यत्सर्वं परिपश्यतीति सौक्ष्म्यादिति। तादृशः सर्वस्य द्रष्टा सूर्यः तपः सन्तापकं तेजश्च कालादाजायते ॥१०॥

# ७। वाररुचो निरुक्तसमुच्चयः

एकत्रिंशद्विधं मन्त्रं यो वेत्त्यृक्षु स मन्त्रवित्। इति वचनादेकत्रिंशद्विधा मन्त्रा व्याख्यायन्ते।

दैव्येति प्रैषः। विश्वामित्रस्यार्षम्। दैव्या देवानां स्वभूता अध्रिगुप्रभृतयः। हे शमितारः। उत मनुष्या अध्वर्युप्रभृतयः। सर्व एव यूयमिमं पशुं मारयितुमारभध्वम्। आरभ्याथोपनयतोपगच्छत। मेध्याः। मेध इति यज्ञनाम। तत्र भूताः। दुरो द्वाराणि यज्ञगृहद्वाराणि। चात्वालोत्करयोर्मध्यमित्यर्थः। आशासानाः कामयमानाः। स्वं स्वं भागमिति शेषः। मेधपतिभ्याम्। मेधो यज्ञः। तत्साधनभूतः पशुरपि मेध उच्यते। तस्य पती स्वामिनावग्नीषोमौ तयोरर्थाय मेधं मेधसाधनं पशुम्। प्रशब्दः पुरस्तादर्थे वर्तते। अनेकार्थत्वादुपसर्गाणाम्। कुत एतज्ज्ञायते। तस्योल्मुकं पुरस्ताद्धरन्तीति श्रुतेः। पुरस्तात्। अस्मै। तादर्थ्ये चतुर्थ्येषा। अग्निमुल्मुकं भरत हरत। स्तृणीत बर्हिर्यत्रैष निहन्यते तत्र बर्हिर्दर्भान् स्तृणीत। अनुशब्दो मन्यतामित्येतेन सम्बध्यते। एनं माताऽनुमन्यतां वधार्थम्। अस्योत्क्रमार्थम्। अनु पिता। पिता च। अनुमन्यतामित्यनुषङ्गः सर्वत्र। अनु भ्राता। भ्राता चानुमन्यताम्। कीदृशो भ्राता सगर्भ्यः। समाने गर्भे भवः सगर्भ्यः। स हि महान्सगर्भ्यः। अनु सखा। सखा चानुमन्यताम्। कीदृशोऽसौ सयूथ्यः। यूथशब्दः सङ्घातवचनः। समाने यूथे भवः सयूथ्यः। उदीचीनां अस्य मार्यमाणस्य पशोः पदः पादान्निधत्तात्। तस्य तादिति तादादेशः सर्वत्र। निधत्त। सूर्यं चक्षुर्गमयतात्। सूर्यप्रभवत्वात्सूर्यमेवास्य चक्षुर्गमयत। सर्वेन्द्रियाणामेवन्धर्मत्वेऽपि वचनं यथान्यायं कारणपरिग्रहार्थम्। सर्वं हि विनश्यत् कारणं गच्छति। वातं प्राणमन्ववसृजतात्। मुखनासिकाभ्यां यो वायुर्निःसरति सोऽस्य प्राणोऽभिप्रेतः। दिशः प्रति श्रोत्रम्। अन्तरिक्षं प्रति असुं प्राणं शरीरधारणम्। पृथिवीं प्रति शरीरम्। अवसृजतेत्यनुषङ्गः सर्वत्र। एकधा एकेन प्रकारेण। अखण्डिताम्। अस्य त्वचमाच्छ्यतात्। पुरा नाभ्या नाभेरपिशस आवर्तरूपात् वपामुदखिदतात् उद्धरत। अन्तरेवोष्माणं वारयतात्। मुखनासिकासञ्चारिणं वायुमस्य वारयत। निरुच्छ्वासं सञ्ज्ञपयतेत्यर्थः। श्येनादयः शब्दा उपमानार्थत्वे नोपादीयन्ते। श्येनं श्येनाकारमस्य वक्षः कृणुत कुरुत। प्रशसा। द्विवचनस्य सुपां सुलुगिति सूत्रेणाकारः। प्रकर्षेण शस्यते हन्यते अनेनेति प्रशः शस्त्रमुच्यते। स्वधिती वा शस्त्राकाराविल्येके। अथवा प्रशसा प्रशस्तौ बाहू। कृणुतेत्यनुषङ्गः सर्वत्र। शलादोषणी

शलाकारे दोषणी। दीर्घे इत्यर्थः। कश्यपा इवांसौ। अच्छिद्रे श्रोणी। साकल्यमेवाच्छिद्रत्वम्। कवषोरु। कवषा ऊरू। स्रेकपर्णा अष्ठीवन्ता। स्रेकः करवीरः। तत्पर्णाकारौ अष्ठीवन्तौ। तौ च कृत्स्नावित्यर्थः। षड्विंशतिरस्यवङ्क्रयः पर्शवः। ता अनुष्ठ्या अनुष्ठानेन यत्नेन। कृत्स्ना उच्च्यावयतात् उत्कृन्तत। एवं गात्रं गात्रमस्य अनूनमनतिरिक्तं च कृणुतात् कृणुत। ऊवध्यगोहम्। भक्षितं तृणादि यदजीर्णं पशोरुदरे तिष्ठति तदूवध्यम्। तद्यस्मिन्गूह्यते स ऊवध्यगोहः। तं च पार्थिवं पृथिव्यां भवं गतम्। खनतात्। अस्ना। असृक्शब्दस्य लोहितवचनस्य पदादिसूत्रेणासन्नादेशः। अस्ना। लोहितेन। रक्षः संसृजतात् संयोजयत। तद्धि रक्षसां भागः। वनिष्ठुमस्य वपासमीपे सन्तं वपाखनने मा राविष्ट लाविष्ट। उरूकं विस्तीर्णम्। वपालक्षणं चैतदित्येवं मन्यमानाः। एवञ्च कुर्वतां नेत्। इच्छन्दोऽवधारणार्थः। न इत् नेव। वो युष्माकम्। तोके तनये। द्वे अप्येते अपत्यनामनी। पौनरुक्त्यपरिहारार्थं तोकशब्देन पुत्रोऽभिधीयते। तनयशब्देन च पौत्रः। बह्वर्थमेकवचनम्। पुत्रेषु पौत्रेषु च। पुत्राणां पौत्राणां च मध्ये कश्चित् रविता शब्दकरः। रवत्। रु शब्दे। शब्दयिष्यति। हे शमितारः। एतज्ज्ञात्वा हे अध्रिगो। प्रदर्शनार्थमिदमध्रिगुग्रहणम्। अध्रिगुप्रभृतयः शमितारः। शमीध्वं शमयत। सुशमि शमीध्वम्। शमितं च शमयत मा शङ्कां कुरुध्वमिति। धर्म एव सा हिंसा। शास्त्रेण विहितत्वात्। अस्य च पशोरुत्कर्षो भवति। तथा च स्मर्यते श्रूयते च। यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितिं पुनरिति। हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेतीति ॥१॥

एह्यू षु। इत्याह्वानम्। भरद्वाजस्यार्षम्। आकारः सन्निकर्षार्थः। एहि आगच्छ। यज्ञमिति शेषः। उकारः पदपूरणः। सुब्रवाणि शोभनं सूनृतं वचनं ब्रवाणि वदानि। ते त्वद्गुणसंयुक्ताम्। स्तुतिमिति शेषः। अत एव हे अग्ने त्वं तेभ्यः शृणु इत्यभिप्रायः। कस्मादिति चेत्। यस्मात् इत्था। इत्थेति सत्यनाम। सत्यवचनमस्मदीयम् सत्यरूपत्वात्तुष्टिकरमित्यभिप्रायः। अन्येषां तु इतरा असत्याः। सत्याद्विपरीतवृत्तयः। गिरो वाचः। विपरीतत्वान्न प्रीतिकरा इत्यभिप्रायः। श्रुत्वा चानन्तरमेभिस्तादृशैर्यसवनिकैरिन्दुभिः सोमैर्वर्धासे। पञ्चमो लकारः। वर्धसे वर्धस्व। एतदुक्तं भवति। स्तुतिभिः स्तूयमानः पीत्वा च सोमं वृद्धः सन् देवद्विषो जहीत्याहूयस इति ॥२॥

नकिरिन्द्र। इति स्तुतिः। वामदेवस्यार्षम्। गुणगुणिसम्बन्धप्रतिपादनं स्तुतिरुच्यते। नकिरिति न इत्येतस्य प्रतिषेधवचनस्याकच्प्रत्ययान्तस्य रूपम्। नास्तीत्यर्थः। हे इन्द्र त्वत् त्वत्त उत्तर उत्कृष्टः। देवेषु इत्यर्थः। कुत एतत्। इन्द्रो वै देवानामोजिष्ठो बलिष्ठ इति श्रुतेः। किं च न ज्यायान् ज्यायानपि नास्ति। कुतः। महत्त्वयोगात्। हे वृत्रहन्। वृत्रमसुरं त्वष्टुः पुत्रं मेघं वा। किं बहुना। नकिरेवा यथात्वम्। यादृशोऽसि त्वं तादृशोऽपि नास्ति। त्वत्तुल्योऽपि न कश्चित्त्रैलोक्ये विद्यत इत्यर्थः ॥३॥

मोघमिति निन्दा। भिक्षोरार्षम्। मोघं व्यर्थं निष्फलम्। अन्नं विन्दते लभते। भुङ्क्त इत्यर्थः। अप्रचेताः। अप्रचेता अप्रज्ञ इत्यर्थः। प्रकर्षेणाजानन् धर्ममित्यर्थः। सत्यं ब्रवीमि। यदेतदुक्तं तत्सत्यमेव। अथ वध इत्। वध इति वज्रनाम। इच्छन्दोऽवधारणार्थः। वर्जयति

प्राणानिति वज्रः। एव। सोऽन्नलाभोऽभ्यवहारः। तस्याभ्यवहर्तुः। तच्छब्दश्च तेरच्छब्दोऽध्याहर्तव्यः। उत्तरेऽर्धर्चे योजनीयः। नार्यमणं पुष्यति। अरीणां भयान्निर्हन्तारमग्निं न पुष्यति। नार्चयति। नाग्नौ जुहोति। वैश्वदेवादि न करोतीत्यर्थः। नो सखायम्। नापि सखायं सखिभूतमतिथिं पूजयति। केवलाघो भवति। अघमिति पापनाम। आङ्पूर्वाद्धन्तेरुपसर्गस्य ह्रस्वत्वेन हकारस्य च घत्वेन अघम्। आभिमुख्येन हन्ति तत्कर्तारं कदाचित्। केवलं पापरूपो भवति। केवलादी। केवलशब्दोऽसहायवचनः। केवलभोगी। असहायभोगीत्यर्थः। स मोघमन्नं विन्दते। ततस्य वधो भवतीति सम्बन्धः। कुत एतद्। अहमन्नमन्नमदन्तमद्मीति मन्त्रलिङ्गात्। यस्य चाग्नौ न क्रियते यस्य चान्नं न दीयते न तद्भोक्तव्यमित्यर्थः ॥४॥

गौरीरिति सङ्ख्या। दीर्घतमस्यार्षम। गौरीः। छान्दसत्वात्सुलोपाभावः। वाङ्मध्यमस्थाना। मेघजन्मा। स्तनयित्नुलक्षणोपचारः। अधिष्ठात्री गौरीत्युच्यते सा मिमाय माङ् माने मिमीते। कृत्स्नं जगदिति शेषः। सलिलानि वृष्टिलक्षणानि। तक्षती। तक्षतिः करोतिकर्मा। कुर्वती। एकपदी पदं स्थानमाश्रय इत्यर्थः। किं तत् अन्तरिक्षम्। तद्धि तस्याः स्थानम्। तद्यस्या सैकपदी। द्विपदी मध्यमेन सहिता वृत्रवधमाचरन्वृष्टिकर्मणि साहाय्यमस्याः प्रतिपद्यते। सा चतुष्पदी दिग्भिः। दिशोऽप्यवकाशदानेनास्या वृष्टिकर्मणि सहकारिकारणत्वं प्रतिपद्यते। अष्टापदी अवान्तरदिग्भिश्च। ताश्चैवं तद्धर्माणः। नवपदी ताभिश्चादित्येन च। असावपि यदा द्यां रश्मिभिः पर्यावर्ततेऽथ वर्षतीति वचनाद्वृष्टिकर्मणि साहाय्यमस्याः प्रतिपद्यते। तत एवमुच्यते नवपदी। बभूवुषी एकपद्यादिक्रमेण वर्धमानेत्यर्थः। सहस्राक्षरा सहस्रमिति बहुनाम। अक्षरमित्युदकनामाक्षयत्वात्। तथाहि श्रूयते तस्मादद्यमानाः पीयमाना आपो न क्षीयन्त इति। सहस्राक्षरा बहूदका। क्रमेणोपचीयमानेन वर्षेणापर्यन्तधारात्मना कृत्स्नं जगद्व्याप्नोतीत्यर्थः। परमे प्रकृष्टे व्योमन्। सुपां सुलुगिति सप्तम्येकवचनस्य लुग्द्रष्टव्यः। व्योमनि। अन्तरिक्षे स्वस्मिन्स्थाने स्थिता इति वाक्यशेषः ॥५॥

तच्चक्षुरित्याशीः। वसिष्ठस्यार्षम्। आदित्यो देवता। तच्छब्देन जगद्व्यापारकारणमादित्याख्यं ज्योतिरभिधीयते। अविनाशि वेदविद्भिरभिवाद्यमानं तच्चक्षुः। चष्ट इति पश्यतिकर्मा। पश्यति ह्यसावध्यक्षभूतो भगवानादित्यः प्राणिनां चेष्टितं शुभमशुभं वा। अथवा चक्षुर्दर्शनम्। कस्य देवानाम्। तथा च श्रूयते असौ वा आदित्यो देवानां चक्षुरिति। देवहितं देवानां दानादिगुणयुक्तानामग्न्यादीनां हितम्। आदित्यो ह्युदयास्तमयाभ्यामग्निहोत्रहविःप्रदानार्थमहोरात्रविभागं संपादयति। तस्माद्धितमुच्यते। देवैर्देवानां निहितं लोकरक्षणार्थं देवहितम्। अथवा देवा दानशीला अनुष्ठायिनः। तेषामात्मसायुज्यसम्पादनेन हितं श्रेयस्करं तत्र प्रविष्टानां नित्यानन्दत्वात्। पुरस्तादिति शाखान्तरम्। पूर्वस्यां दिशि। शुक्रम्। शोचतेर्दीप्तिकर्मणः। शुक् दीप्तिः। सा यस्यास्तीति मत्वर्थीयो रप्रत्ययः। मधुर इति यथा। शुक्रमतितेजस्वितया विराजमानमित्यर्थः। उच्चरदुद्यत्। उन्मुखमयूखं ज्योतिरादित्याख्यम्। पश्येम कियन्तं कालम्। शरदः शतम्। शरच्छब्दः संवत्सरपर्यायः। संवत्सरशतम्। अथवा शरच्छब्देन ऋतुरभिधीयते न संवत्सरः। शरदि हि व्याधिबहुलत्वाद्दुर्दर्शम् इति विशेषेण प्रार्थ्यते। शृणातीति शरद्। तथाच श्रूयते शरद्वा अस्यां कालः सा ते या वा एव हिनस्तीति। जीवेम। शरदः शतम्। जीवन्नेव

पश्यतीति पौनरुक्त्यप्रसङ्गो जातः। अतस्तत्परिहारार्थमेवं योजनीयम्। पश्यतिक्रियया दर्शनमात्रमभिहितम्। जीवन्नित्यनेन सर्वसंपत्सङ्गतं जीवनमाशास्यते न प्राणधारणमात्रम्। एतदुक्तं भवति देवमनुष्यादिसुखसाधनभूतमादित्याख्यं ज्योतिः पश्यन्तः सर्वाभिः संपद्भिः सङ्गत्य सुखं जीवेमेति। मन्त्रशेषो व्याख्यातः ॥६॥

बभ्रुरेक इति कर्म। कश्यपस्यार्षम्। सोमः स्तूयते। उत्तरेणार्द्धर्चेन वैद्युतोऽग्निः। बभ्रुर्बभ्रुवर्णः सोमः। एकोऽसहायो विपुणो विषमः। विषमशब्देन समर्थ उच्यते। एक एव कर्मसु समर्थ इत्यर्थः। सुनरः शोभनाः कर्तव्यपदार्थज्ञा नरा मनुष्या अध्वर्य्वादयो यस्य सम्बन्धित्वेन सन्ति स सुनरः। पदकारेणैतत्पदं नावगृहीतम्। तथापि भाष्यकारवचनात्पदकारमनादृत्यैतन्निरुक्तम्। युवा। यौतेः कनिन्प्रत्ययान्तस्य। प्रयौति मिश्रयति कर्माणि प्रातःसवनादीनि। इतरोऽपि युवा तरुणः। क्षिप्रं कर्माणि मिश्रयति। अञ्जि व्यञ्जनशीलः। अङ्क्ते अभिव्यञ्जयति। उत्पादयति इत्यर्थः। हिरण्यम्। हिरण्यशब्देनोदकमुच्यते। कुत एतद्। उदकमपि हिरण्यमुच्यत इति भाष्यकारवचनात्। हिरण्यमुदकसङ्घातम्। एतदुक्तं भवति इन्द्रादिदेवतातृप्तिद्वारेण सर्वप्राणिव्यञ्जनहेतुभूतमुदकं सोमः संपादयति इत्यर्थः। योनिम्। योनिशब्देनान्तरिक्षमुच्यते। अन्तरिक्षम्। एको वैद्युतोऽग्निः। आससाद। आगतवान्। प्राप्तवानित्यर्थः। द्योतनः। द्युत दीप्तौ। दीप्यमानः। अन्तः। अन्तःशब्दो मध्यमवचनः। देवेषु मध्यमस्थानेषु वाय्वादिषु। मेधिरः। मेधाशब्दो धनवचनः। प्रज्ञार्थोऽप्यस्ति मेधाशब्दः। मत्वर्थीयो रप्रत्ययः। मेघोदरगतेनोदकलक्षणेन धनेन धनवान् प्रज्ञावान्वा प्रज्ञाहेतुभूतः। अतिबहलतिमिरावगुण्ठितायां रात्र्यां घटपटादिभावानां प्रकाशयितेत्यर्थः ॥७॥

अहं भुवमिति विकत्थना। अर्थाभिव्यक्त्यर्थमस्याः प्रथमं तावदाख्यानं प्रस्तौति। प्रजापतेर्दुहिता विकुण्ठा नामासुरक्षेत्रे संभूता पुत्रमिन्द्रसममिच्छन्ती किल बहु तपश्चचार। तस्यास्तपसो महानुभावादिन्द्रत्वभयाच्च देवैश्वर्यमपहायेन्द्र एव पुत्रो जज्ञे। स जन्मान्तरतिरोहितपूर्वस्मरणानुसन्धानः सन् ससगुभिर्नाम ऋषिभिरभिष्टुतो हृष्टात्मा स्वमाहात्म्यानुकीर्तनपुरस्सरमेतेन श्लाघते। अतस्स्वार्थीयोऽयं मन्त्रः। उत्तमपुरुषयोगात्। अहमिति चैतस्य सर्वनाम्नः प्रयोगात् इन्द्र एव ऋषिः। इन्द्र एव देवता। कुत एतत्। उत्तमस्य तु वर्गस्य य ऋषिः सैव देवतेति वचनात्। अहमित्यात्मानं साभिनयं दर्शयति। भुवम्। नेदं पृथिवीनामधेयस्य भूशब्दस्य रूपम् किन्तर्हि भवतेर्लङि उत्तमपुरुषैकवचने। छान्दसत्वादडभावः। अकारस्योत्वञ्च। अभवम्। भवामि। वसुनः। वसु इति धननाम। धनस्य सर्वस्य। पूर्व्यः। पुराणनामेदम्। पुराणः नित्यः। पतिः स्वामी। अहमेव धनानि। प्रधन इति सङ्ग्रामनाम्नः प्रशब्दलोपे द्वितीयाबहुवचनान्तमेतत्। सञ्जयामि। सम्यक् बहु सुहृद्व्रज जयामि। शश्वतः। शश्वच्छब्दो बहुवचनः। बहून्। अथवा सञ्जयामि बहोः। शत्रोरिति शेषः। मामेव हवन्ते आह्वयन्ति सर्वे यजमाना ज्योतिष्टोमादिषु कर्मसु। कमिव पितरं न। नशब्द उपमार्थः। पितरमिव। जन्तवः। मनुष्यनामैतत्। मनुष्याः सर्वकर्मसु। अहमेव दाशुषे यजमानाय। विभजामि ददामि भोजनम्। धननामैतत्। धनं यो यावद्दाति हविर्मनाक् बहु वाऽहमपि तस्मै तावदेव ददामीत्यर्थः। कुतः। यादृगिव वै देवेभ्यः करोति तादृगिवास्मै देवाः कुर्वन्तीति श्रुतेः ॥८॥

पृच्छामीति प्रश्नः। दीर्घतमस आर्षम्। विज्ञानमयं क्षेत्रं पृच्छति ऋत्विग्गणो यजमानम्। पृच्छामि त्वा त्वां परमुत्कृष्टमन्तम्। अन्तःशब्दः प्रदेशवचनः। पृथिव्या अतिशयेन सारभूतं प्रदेशं त्वां पृच्छामि। पृच्छतेर्द्विकर्मकत्वस्मरणाद्द्विकर्मकप्रयोगः। यत्र शब्दो यः शब्दार्थं द्रष्टव्यः। यो भुवनस्य भूतजातस्य नाभिः। नाभिशब्देनाश्रय उच्यते। तथा च नाभिः सन्नहनात्प्रदेशवचन इति निरुक्तम्। सन्नद्धं हि तेनाङ्गेन कृत्स्नं शरीरं प्राणधारणात्वात्। तं त्वा पृच्छामीति सम्बन्धः। पृच्छामि त्वा त्वाम्। वृष्णो वर्षयितुरश्वस्य रेतः। पृच्छामि सर्वत्र। अध्वर्य्वादिरूपाया वाचः परममुत्कृष्टं व्योम स्थानम् ॥९॥

इयं वेदिरिति व्याकरणं प्रतिवचनम्। पूर्वस्मिन्मन्त्रे चत्वारः प्रश्नाः कृतास्तेषामानुपूर्व्येण चत्वारि प्रतिवचनान्यनेन प्रतिपाद्यते। इयं वेदिर्यागभूमिः। पर उत्कृष्टोऽन्तः सारभूतः पृथिव्याः। कुत एतत्। देवयजनं वै वरं पृथिव्या इति श्रुतेः। अयं यज्ञो भुवनस्य भूतजातस्य नाभिराश्रयः। तथाच स्मरणम्। यज्ञो विभूत्यं सर्वस्येति। अयं सोमो ग्रहचमसादिपात्रस्थो वृष्णो वर्षयितुरश्वस्य व्याप्तुरिन्द्रस्य रेतः। कथम्। अयमेवं हि पीतो रसादिक्रमेणेन्द्रस्य रेतो वीर्यं मदोत्सेधमापादयति। ब्रह्मायमयमेव हि ब्रह्मा ब्रह्मासनाध्यासीनः। वाचः सर्वस्या अध्वर्य्वादिरूपायाः परममुत्कृष्टं व्योम स्थानम्। कथम् ब्रह्मा परिवृढः श्रुत इति वचनात्। त्रय्या विद्यया ब्रह्मत्वं कुर्यादिति श्रुतेः। यो हि निगमनिरुक्तव्याकरणादिकलापयुक्तः स एव ब्रह्मत्वं कर्तुमर्हति नान्य इति ॥१०॥

इदमाप इति शोधितः। इदं दुरितमिति सम्बन्धः। हे आपः प्रवहत। प्रकर्षेणापनयत। शोधयतेत्यर्थः। यत्किञ्च मयि। पापमिति वाक्यशेषः। कीदृशं तत्। उच्यते। यद्वा अहमभिदुद्रोह। द्रुह जिघांसायाम्। अज्ञानेन प्राणिजातं जघान। यद्वा शेपे शप्तवान्। उक्तवान्। उतानृतमपि यत्। तत्सर्वं नाशयतेत्यर्थः। युष्मत्प्रसादादपगतसर्वकल्मषो भूयासमित्यर्थः ॥११॥

इन्द्र क्रतुमिति विकल्पः। अनेकवाक्यकल्पनया विकल्पः। देवताविकल्पो वा। वायुरिति नैरुक्ताः सूर्य इति याज्ञिकाः। शक्तिर्नाम वसिष्ठपुत्रः। तस्यार्षम्। प्रथमं तावद्याज्ञिकमतेन व्याख्यायते। इन्द्र। दीपयति रश्मिद्वारेणानुप्रविश्य भूतानीतीन्द्र आदित्य उच्यते। असौ वा आदित्य इन्द्र इति श्रुतेः। इन्द्र आदित्यः। क्रतुम्। क्रतुरिति कर्म वा प्रज्ञा वोच्यते। कर्मातिरात्रयागफललक्षणम्। नोऽस्माकमाभराहर। पिता पुत्रेभ्यो यथा। यथा पिता पुत्रहितेच्छया कर्म दृष्टानुश्रविकसुखसाधनमारभेत तद्वत्। किञ्च शिक्ष। शिक्षतिर्दानकर्मा। देहि। नोऽस्मभ्यमन्यदपि अभिलषितम्। अस्मिन्। हे पुरुहूत पुरुष्टुत यामनि। यातेर्मनिन् प्रत्ययः। यापयति स्वर्गं स्थानमिति यामन्शब्देन यज्ञोऽभिधीयते। यज्ञे। जीवाः। मत्वर्थीयोऽच्प्रत्ययः। जीववन्तः। चिरमपि जीवन्त इत्यर्थः। ज्योतिरभ्यन्तरमशीमहि। अशू व्याप्तौ। व्याप्नुयाम। त्वया सायुज्यं गमिष्याम इत्यभिप्रायः। नैरुक्तपक्षेऽपीन्द्रो दानादिगुणो मध्यमस्थानो वायुरुच्यते। हे इन्द्र क्रतुं वृष्टिलक्षणं नोऽस्माकमाभराहर पिता पुत्रेभ्यो यथा धननिमित्तं कर्म। शिक्ष देहि नोऽस्मभ्यं स्तोतृभ्यः। कामानिति शेषः। अस्मिन्। हे पुरुहूत पुरुष्टुत यामनि। यापयति क्षपयति भूतानीति यामन्शब्दः कालवचनः। काले वर्षारम्भे त्वद्दत्तेनोदकेन जीवा जीववन्तो ज्योतिः परमात्माख्यमशीमहि। तेन सायुज्यं गमिष्याम इत्यभिप्रायः ॥१२॥

यदिन्द्रेति सङ्कल्पः। गोसूक्तेर्वाऽश्वसूक्तेर्वा आर्षम्। यदि हे इन्द्राहं यथा त्वं सर्वस्य। धनस्येश्वरो भूस्तथाहमीशीयेश्वरो भवानि वस्वो वसुनो धनस्य सर्वस्य। एक इत्। इच्छन्दोऽवधारणार्थः। एक एव। तथा सति स्तोता मे मम गोसखा गवां स्वामी स्याद्भवेद्। प्रदर्शनार्थमिदं गोग्रहणम्। गवादीनां धनानां पतिर्भवतु। एतदुक्तं भवति। त्वं सर्वेश्वरो मह्यं स्तोत्रे बहु धनं ददासि अहमपि अभिलषितैरर्थैः स्तोतॄणां मनोरथं पूरयेयमिति सङ्कल्पः ॥१३॥

सुदेवो अद्येति वेदना। उर्वश्या वियुक्तः पुरूरवा विललाप। शोभनं देवनं क्रीडनं यस्य स सुदेवः। यथाभिलषितं परिभुक्तसर्वभोग इत्यर्थः। अद्य सम्प्रत्येव शिखरिशिखरमारुह्य प्रपतेत् प्रकर्षेण पतति। अनावृत्। आवर्तनमावृत्। अनावर्तनम्। क्रियाविशेषणमेतद्। किमर्थम्। परावतं परमाम् अत्यन्तदूरम्। यमलोकमित्यर्थः। गन्तवै गन्तुम्। उकारः पदपूरणः। गतश्च सन् अध। अथशब्दपर्यायः। अनन्तरं शयीत निर्ऋतेः प्रलयाधिदेवताया उपस्थे उत्सङ्गे। समीपसम्पेषा। कूपे गर्गकुलमिति यथा। यमस्य समीपे गत्वा शेत इत्यर्थः। शयितश्च। अथानन्तरमेव। एनं वृका विकर्तनयुक्तास्तत्पुरुषा रभसासः। रभसशब्दो वेगवचनः। मत्वर्थीयात्प्रत्ययान्तो द्रष्टव्यः। वेगवन्तः। अद्युर्भक्षयेयुः। अथवोत्तरार्द्धस्यान्या योजना। अध अनन्तरं शयीत निशेते इत्यर्थः। शयीत निर्ऋतेः। निर्ऋतिरिति पृथिवीनाम। पृथिव्याः। उपस्थे सानुदेशे शयीत। शयितं चाथानन्तरमेवैनं वृका विकर्तनशीला मृगा रभसासो वेगवन्तोऽद्युर्भक्षयेयुः। नैरुक्तपक्षे तु पुरूरवा मध्यमस्थानः। वाय्वादीनामेकत्वात्। पुरु रौतीति पुरूरवाः। उर्वशी विद्युत्। उरु विस्तीर्णमन्तरिक्षं व्यश्नुते इत्युर्वशी। वर्षकाले विद्युति विनष्टायां तया वियुक्तः। स्तनयित्नुलक्षणं शब्दं कुर्वन् विलपति। हे देवाः सुक्रीडोऽद्य प्रपतेत् अस्मात्स्थानादन्तरिक्षात्। अनावृत् अनावर्तनम्। परावतं परमामत्यन्तदूरं पृथिवीलोकं गन्तवै गन्तुमपर्यन्तधारात्मना। गतश्च। अथानन्तरं शयीत निर्ऋतेः पृथिव्या उपस्थे। उपगम्यापो यत्र तिष्ठन्ति स उपस्थः कटकादिप्रदेशः। तस्मिन्। अथानन्तरमेनमुदकात्मनावस्थितं वृका अद्युर्भक्षयेयुः। एवं नैरुक्तपक्षे योजना। औपचारिकोऽयं मन्त्रेष्वाख्यानसमयः। नित्यत्वविरोधात्। परमार्थेन तु नित्यपक्ष एवेति नैरुक्तानां सिद्धान्तः ॥१४॥

यत्ते यममित्यनुशयः। अत्रैवं श्रूयते। असमातिनाम्नो राज्ञः पुरोहिताभ्यां मायाविभ्यामपहृतप्राणं सुबन्धुं भ्रातरं दृष्ट्वा शोकसन्तप्तहृदयाः श्रुतबन्ध्वादयस्त्रयो भ्रातरो मनसः पुनरावर्तनं जेपुर्यत्ते यममिति सूक्तम्। यत्ते तव मन इति सम्बन्धः। यमं प्रेतराजं वैवस्वतमादित्यम्। सरण्यूरजीजनत्तं वैवस्वतम्। मनः। मनःशब्देनात्रान्तर्यामी प्रधानभूतः प्राण उच्यते। तथाहि श्रूयते प्राणमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति। जगाम गतवत् दूरकम्। विशेषणमेतद्। दूरेऽपि सन् प्राणिनां वृत्तान्तं केतति जानातीति दूरकम् तत्ते तव। आवर्तयामसि। आवर्तयामः। पुनरानेष्याम इत्यर्थः। किमर्थम् इह लोके क्षयाय निवासाय जीवसे जीवितुम्। सुखं जीवनाय चेत्यर्थः ॥१५॥

प्रयाजानिति याच्ञा। एवं कथा श्रूयते। सौचीकमग्निं विश्वे देवा ऊचुः। हव्यं नो वहेति सोऽग्निरब्रवीत्। अभागोऽहं यज्ञे मृत्योश्च बिभेमीति। ते देवाः पुनरब्रुवन् अभिलषितं ब्रूहीति। ततो हविर्भागमविनश्वरञ्चायुश्चानयर्चा याचते। प्रयाजान् मे मह्यमनूयाजांश्च केवलान्।

अनन्यदेवत्यान्। मद्देवत्यानेवेत्यर्थः। सिंहावलोकनन्यायेन दत्तेत्याख्यातमपकृष्टव्यम्। दत्त। ऊर्जस्वन्तोऽन्नवचनः। अन्नवन्तम्। अन्नविकारं पुरोडाशं हविषो भागं दत्त। घृतं चाज्यभागाख्यम्। अपाम्। विकारभूतमिति वाक्यशेषः। पुरुषं च। पुरु बहु कर्म सनोतीति पुरुषः सवनीयः पशुरुच्यते। तेन विधीयन्ते सवनानि। तथाहि वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यन्दिनेऽङ्गैस्तृतीय-सवने प्रचरन्ति इति वचनात्। तं च सवनीयम्। ओषधीनाम्। अत्तारमिति शेषः। अग्नेश्च मम दीर्घमायुरस्तु भवतु हे देवाः ॥१६॥

तव प्रयाजेति प्रसवोऽभ्यनुज्ञा। एवमग्निना याचिता विश्वे देवाः प्रत्यूचुः। तव प्रयाजा अनु-याजाश्च केवले। देवान्तररहिताः। ऊर्जस्वन्तः। ऊर्जशब्दो रसवचनः। हविषः सम्बन्धिनः सन्तु भवन्तु। भागाः परिगणिताः प्रार्थिताः। तदधिकमपि दद्मः। तवैव हे अग्ने यज्ञोऽयं सर्वोऽस्तु। यदि कामयसे। किञ्च तुभ्यम्। तादर्थ्ये चतुर्थ्येषा। त्वदर्थम्। नमन्तां प्रह्वीभवन्तु प्रदिशः प्रकृष्टा दिशः। चतस्रः प्राच्याद्याः सर्वासां च दिशां त्वमेवेश्वरो भवेरिति प्रसादातिरेकः कथ्यते। महतां हि प्रसादोऽनेकभद्र इति ॥१७॥

ओचिदिति संवादः। उक्तिप्रत्युक्तिरूपः संवाद इत्युच्यते। प्रथमं तावदैतिहासिकमतानु-सारेणायं मन्त्रो व्याख्यायते। यमयम्योः संवादसूक्तम्। विवस्वतो दुहिता यमं भ्रातरं मदन-परवशीकृता सर्वेन्द्रियप्रतिभोगार्थं चकमे। ओचित्। आउ ओ। उकारः पदपूरणश्चिच्छन्दश्च। आकारो ववृत्यामित्यनेन सम्बध्यते। सखायं यमम्। सख्या। तृतीयैकवचनं प्रथमैकवचनस्य स्थाने। सखी सती। ववृत्यामित्येतच्छान्दसं रूपम्। आभिमुख्येन कामये इत्यर्थः। तिरः। क्रियाविशेषणमेतद्। समयविरोधात्प्रच्छन्नम्। वाक्यार्थसम्पादनार्थं यत्तच्छब्दावध्याहार्यौ। यमहं कामये सोऽपि। पुरु इति बहुनाम। चिच्छब्दश्चार्थे। बहु च। अर्णवम्। अर्णशब्देनोदक-मुच्यते। द्रवरूपसामान्याद्रेत उच्यते। मत्वर्थीयो वकारः। अर्णसो लोपश्चेति सकारलोपः। अर्णवं बहुरेतस्यमित्यर्थः। जगन्वान् गतवान् प्राप्तवान्। प्राप्ताभिनवयौवन एवेत्यर्थः। अतः पितुः स्वस्यापि विवस्वतः। नपातम्। नपादित्यनन्तरायाः प्रजाया नामधेयम्। पौत्रमित्यर्थः। आदधीत कारणभूतगर्भं मयीति शेषः। वेधाः मेधावी। अधिक्षमि। अधीत्युपरिभावे। छान्द-समेतद्रूपम्। क्षमा पृथिवी तस्या उपरि। पृथिवीलोक इत्यर्थः। प्रतरं प्रकृष्टतरं पुत्रोत्पादनेन दीध्यानो दीप्यमानः। एवमैतिहासिकपक्षे योजना। नैरुक्तपक्षे तु यमी मध्यमस्थाना वाक्। यमश्च मध्यमस्थानः। सा यमी वर्षकाले मध्यमस्थानमाह। आ आभिमुख्येन। सखायं सहस्थान-योगात्। सख्या। सखीत्यर्थः। कामयेयमहम्। कामयेत्। सोऽपि। तिरः। तिर सत इति प्राप्तस्य नामनी। प्राप्तवर्षसमयः। बहुलमुदकभूयस्त्वं गतवान्। गतश्च स्वस्य पितुरादित्यस्य। कथमादित्योऽस्य पिता उच्यते। आदित्यो रश्मिभिः पर्यावर्तमाने रसान् मध्यमायार्पयन् तं पाति। ततोऽसौ अस्य पितेत्युच्यते। तस्यादित्यस्य नपातम्। एकान्तरितत्वात् पौत्रस्थानीय-मुदकसङ्घातमादधीत वेधा विविधं वृष्टिप्रदानेन पाता धारयिता सर्वस्य जगतः। अधिक्षमि पृथिव्या उपरि। पृथिव्यामित्यर्थः। दीध्यानः। ध्यै चिन्तायाम्। चिन्तयन् कथं नु नाम लोकः सुखं जीवेदिति। एवं नित्यत्वाविरोधेन योज्यम् ॥१८॥

सोमं राजानमिति समुच्चयः। अग्नेस्तापसस्यार्षम्। सोमं राजानम्। अवसे रक्षणाया-

त्मनोऽग्निं गीर्भिः स्तुतिभिर्हवामहे आह्वयामः। अभिष्टुम इत्यर्थः। आदित्यान् विष्णुं सूर्यं ब्रह्माणं बृहस्पतिं च। एतदुक्तं भवति। त्रिस्थाननिवासिनो देवान्वन्दामहे। तेऽपि नः प्रसीदन्तु भक्तानामभिलषितप्रदातार इति ॥१९॥

भोजायेति प्रशंसा। प्रजापतेर्दुहिता दक्षिणा नाम। तस्या आर्षम्। दानप्रशंसैषा। भोजयतीति भोजः। अन्नदातोच्यते। कुत एतत्। स इद्भोजो यो गृहवे ददात्यन्नकामाय चरते कृशायेति मन्त्रान्तरे दर्शनात्। तस्मै तदर्थम्। अश्वं सम्मृजन्ति संस्कुर्वन्ति विधिना शालिहोत्रोपदिष्टेन निपुणाः परिचारकाः। कीदृशमश्वम्। आशुं शीघ्रगतिं कम्बोजादिदेशजातम्। किञ्च भोजायास्ते कन्या कमनीया लावण्यातिशयविशेषेण शुम्भमाना वस्त्रालङ्कारादिना च दीप्यमाना भोजस्येदं पुष्करिणीव पुष्करिणीसदृशं हृदयाह्लादनसहितम्। देवमाना। प्रथमैकवचनस्य सुपां सुलुगित्याकारः। देवमानमिव चित्रं विचित्रमाश्चर्यभूतम्। अल्पमिदमुक्तम्। यत्किञ्चिद्दुर्लभं जगति भद्रमस्ति तस्य सर्वस्य भाजनं भोज इति ॥२०॥

अद्यामुरीयेति शपथः। वसिष्ठस्यार्षम्। अत्रेतिहासमाचक्षते। विश्वामित्रप्रयुक्तः किल कश्चिद्राक्षसो मायावी वसिष्ठरूपेण वसिष्ठस्य पुत्रशतं जघान। ततो वसिष्ठं प्रति अपवादशङ्काऽजायत। लोकनिर्वादवज्रेणाभिहतः पुत्रवियोगशोकाग्निसन्तप्यमानहृदयश्च वसिष्ठः प्रस्तुतनिवृत्तये पैजवनस्य राज्ञः समक्षं शपथं चकार। अद्यामुरीयेति। अद्यास्मिन्काले मुरीय म्रियेयं यदि यातुधानः पिशिताशनोऽस्मि भवामि। यदि वाऽऽयुः। यदि वाऽस्यायुर्जीवितम्। ततप। तपिरत्र नाशार्थः। नाशितवानहम्। पुरुषस्य यस्य कस्यचित्। अध अथशब्दपर्यायः। स च हेतौ। यत एतदलीकं स सोऽपि वीरैः पुत्रैर्दशभिः वियूयाः। पुरुषव्यत्ययः। वियूयात्। यौतिः पृथग्भावे वर्तते। पृथग्भवेत्। यो मा मां शुद्धात्मानं मोघं व्यर्थमेव यातुधान इत्याह यातुधान इत्येवमसूयया ऽक्षममाण आह। सोऽप्यहमिव हतपुत्रः पुत्रवियोगाग्निसन्तप्यमानः शयीतेत्यर्थः ॥२१॥

प्रतिचक्ष्वेति शापः। वसिष्ठस्यार्षम्। वसिष्ठो राक्षसैरभिभूयमानो रक्षोऽपनोदनार्थमिन्द्रासोमावाह। प्रतिचक्ष्व प्रतिवचनं कुरु। भर्त्सयेत्यर्थः। विचक्ष्व। विशब्दः कुत्सायां द्रष्टव्यः। कुत्सितान्यपि वचनानि दुर्जनस्त्वाह्वद। दुर्जनस्य हि कटुकवचनं शमनकरं न मधुरवचनम्। तथाहि लोकवादोऽक्षो नु खलु सारूप्यमित्यादि। इन्द्रश्च। चशब्दस्य कर्मोपसङ्ग्रहणार्थत्वात्त्वं चेति शेषः। हे सोम जागृतम्। जागृ निद्राक्षये। विनिद्रौ भवतम्। रन्ध्रान्वेषणतत्पराणि हि रक्षांसि। ततो विनिद्रौ भवन्तौ रक्षोभ्यो वधम्। वधमिति वज्रनाम। वज्रमस्यतम्। असु क्षेपणे। प्रक्षिपतमशनिमशनिसदृशं यातुमद्भ्यः पिशिताशिभ्यः। तादर्थ्ये चतुर्थ्येषा। निवृत्त्या चात्र प्रयोजनम्। मशकेभ्यो धूम इति यथा। रक्षसां विनाशार्थमित्यर्थः ॥२२॥

इदमह इत्यामन्त्रणम्। हारियोजनेऽहर्गणे प्रयुज्यते। विश्वामित्रस्यार्षम्। इह मदे एव इहैव यज्ञे। मदः सोमपानादिनिमित्तः। तद्वति मघवन्निन्द्र ते श्वोभूतेऽप्यहनि। अद्य गत्वा देवलोके भुक्तशय्यादिसम्भोगः सन् प्रभाते पुनरेहि अस्मद्यज्ञमेव। कीदृशस्य तव। वसुमन्। वसुप्रभृतिभिर्देवैस्तद्वतः। तैः सहितस्येत्यर्थः। श्वः सुत्याम्। हे अग्नीत् इन्द्राग्नेन्द्राग्निभ्यां च समुच्चिताभ्यां प्रब्रूहि। मित्रावरुणादिभ्यश्च। हे ब्रह्मन् वाचं यच्छ वाचंयम आस्स्व ॥२३॥

न मृत्युरित्याचिख्यासा। आख्यातुमिच्छा आचिख्यासा। प्रजापतेः परमेष्ठिनः परमेश्वरार्षम्। अवान्तरप्रलयादूर्ध्वं प्राग् जगत्सृष्टेर्याऽवस्था साऽनया ऋचोच्यते। न मृत्युरासीत् मर्त्यानामभावान्मृत्युश्च नासीत्। अमृतं जीवनमपि नैवासीत्। प्राणिनामभावात्। तर्हि तस्मिन्काले। न रात्र्या नापि रात्रेः। अह्नो वा। आसीत् प्रकेतः प्रज्ञानमियं रात्रिरिदमहरिति। तथा च स्मरणम्—आसीदिदं तमोभूतमप्रज्ञातमलक्षणमिति। अथवा प्रकेतः प्रज्ञापयिताऽऽदित्यः। स हि उदयास्तमयाभ्यां रात्र्यहनी विभजते। स नासीत्। प्रदर्शनार्थमिदम्। सर्वे देवाः प्रकृतिं गताः। आनीत्। अन प्राणने। प्राणितवत्। केवलमित्यर्थः। अवातं नाभिप्रदेशादुत्थितो यो वातो मुखनासिकाभ्यां निर्गच्छति तद्रहितम्। अलौकिकमेतत्प्राणनमित्यर्थः। स्वधया। स्वधाशब्दोऽन्नवचनः। स्वधया अन्नेन। तत्रैव शक्त्यात्मना अवस्थितवदित्यर्थः। तदेकं कारणमात्माख्यं ब्रह्म। तस्मात्। ह इति पदपूरणः। अन्यत्। नशब्द आसेत्यनेन संबध्यते। परः परम्। किञ्चन। चनशब्दोऽप्यर्थे। किमपि। नास न बभूव। तदेवैकमासीदित्यर्थः॥२४॥

एता अश्वा इति प्रलापः। असम्बद्धभाषणं प्रलापः। अत्रैवं श्रूयते। ऐतशो नाम मुनिस्तपसो महानुभावेनाग्नेरायुरविनश्वरं ददर्श। तद्दर्शनोपजातानन्तपरितोषः सन्दष्ट इव पूर्वापरासम्बद्धं प्रालापीत्। एता अश्वा आप्लवन्ते। कथम्। प्रतीपं प्रतिस्रोतः। कीदृशम्। प्रातिसत्वनम्। सत्वनशब्दः सत्त्वपर्यायः। सत्त्वशब्दश्च प्राणिपर्यायः। प्रतिसत्वनस्य भावः प्रातिसत्वनम्। क्रियाविशेषणमेतत्। प्रतिकूलैः सत्त्वैरपि सहैता अश्वा आप्लवन्त इत्यर्थः। अथवा सत्वानो विमता वाता उच्यन्ते। प्रातिसत्वनम् प्रतिवातमित्यर्थः। तासां वडवानामेका हरिक्णिका हरितवर्णा। तामाह। हरिक्णिके हरितवर्णिके किमिच्छसि। इत्येवंरूपः प्रलापः॥२५॥

किमयमिति व्रीडा। व्रीडा लज्जा। आहनस्यानामृचां प्रतिगरः। आहनस्याः सभ्येतरवादिन्य ऋच उच्यन्ते। कुत एतत्। अयं जीवो वै पुरुषोऽमेध्यो यदाहनस्यां जायते इति श्रुतेः। प्रतिप्रस्थाता प्रतिगृह्णाति किमयमिदमाहेति। किमयं ब्राह्मणाच्छंसी सभ्येतररूपं वचनमाहेति व्रीडा मे जायत इत्यर्थः॥२६॥

कस्य नूनमित्युपधावनम्। उपधावनमाश्रयणमित्यर्थः। अस्याः प्रथमं तावदाख्यानं प्रस्तूयते। अजीगर्तो नाम ब्रह्मर्षिः सूयवसस्य सूनुः पुत्रदारसहितो दुर्भिक्षे क्षुधा पीड्यमानो निरतिशयतपोमाहाभाग्ययुक्तः प्राधान्यात्प्रजापतिमेव देवानां मध्ये प्रथमं प्रार्थयते कस्य नूनमिति। को वै नाम प्रजापतिरिति श्रुतेः क इति प्रजापतिरुच्यते। कस्य प्रजापतेर्नूनम्। नूनंशब्दो निश्चयार्थः। निश्चयेन। कतमस्य। कं सुखम्। तदतिशयेन कर्तव्यं प्राणिनां येन तस्य। अमृतानाममरणधर्माणां देवानाम्। पितुरिति शेषः। मनामहे। अर्चयतिकर्मायम्। अर्चयामः। चारु शोभनं देवस्य दानादिगुणस्य नाम। नमनेन प्रह्वत्वेन स्तवनं लक्ष्यते। स्तवनेन प्रजापतिमर्चयामः। स्तुम इत्यर्थः। अथवा मनामहे इति याच्ञाकर्मायम्। याचामहे। किम्। प्रकरणसामर्थ्यादायुः। प्रजापतिमायुर्याचामह इत्यर्थः। कः प्रजापतिरस्माभिराराधितो नोऽस्मान्मह्यै पृथिव्यै। अदितयेऽक्षीणायै पुनर्दात् ददातु। पृथिव्यां स्थापयतु इत्यर्थः। ततश्च पितरं च दृशेयं मातरं च दृशेयमित्यनुषङ्गः। मातापितृगतस्नेहो मां बाधत इत्यभिप्रायः॥२७॥

किं ते कृण्वन्ति इति परिवादः। परगतदोषाविष्करणपूर्वो वादः परिवाद उच्यते। विश्वा-

मित्रो यज्ञार्थमिन्द्रं याचते। किं ते तव कृण्वन्ति किं कुर्वन्ति कीकटेषु गावः। कीकटाः किङ्कृताः। किमर्थमेता उत्पादिता अधर्मार्थाः सत्य इति किमः करोतेश्च वर्णव्यापत्त्यादिना कीकटाः। अथवा किं क्रियाभिरिति हीनाः कीकटा उच्यन्ते। क्रियाशब्दादुत्तरपदमिति भेदः। तेषु गावः। कुतः। यतो न आशिरं दुह्रे। आशिरमिति कारणस्य कार्येण व्यपदेशः। तत्कारणभूतं पयो न दुहन्ति इत्यर्थः। किञ्च। न तपन्ति घर्मम्। तपिरत्रान्तर्णीतण्यर्थः। न तापयन्ति नोज्ज्वलयन्ति घर्मम्। प्रवर्ग्येऽपि नोपयोगं गच्छन्तीत्यर्थः। यथा तैस्तव प्रयोजनं नास्ति एवम्। आ नो भर। अस्माकमाहर प्रमगन्दस्य। मगन्दः कुसीदी। मां समेष्यति वृद्ध्या वृद्धो धनराशिरिति यो ददाति स वार्धुषिको मगन्द इत्युच्यते। तस्यापत्यं प्रमगन्दः। प्रोऽपत्यार्थे। प्रस्कण्व इति यथा। प्रमादको वा प्रकर्षेणात्मानमेव यो मादयति नातिथ्यादीन्नास्तिकः स प्रमगन्दः। तस्य वेदो धनम्। किञ्च नैचाशाखम्। नीचा निर्गतास्त्यक्ता यैर्ऋगादयः शाखास्त्रयस्ते नीचाशाखाः। तेषां स्वभूतं नैचाशाखम्। तदपि हे मघवन् रन्धय। रध्यतिर्वशगमने। नोऽस्माकं तदप्यस्मद्वशं गमय। तथा हि अवस्थितं धर्मवचनम् योऽसाधुभ्योऽर्थमादायेत्यादि। अतो यष्टॄणामस्माकमयष्टॄणां धनमाहर इत्याशास्महे ॥२०॥

यदि क्षितायुरिति परित्राणम्। परित्राणं परिपालनम्। यक्ष्मनाशन ऋषिर्यक्ष्मगृहीतमाह। यदि क्षितायुः क्षीणायुः। यदि वा परेतः परागतः कथमपि। यदि वा मृत्योर्देवताया अन्तिकं समीपं नीत एव। एवशब्दोऽप्यर्थे। नीतोऽपि। तमाहरामि निर्ऋतेरुपस्थात् प्रलयाधिदेवताया अङ्कप्रदेशादपि अपहृत्यास्पार्षं रक्षामि शतशारदाय शतसंवत्सराय। शतसंवत्सरं जीवितुमित्यर्थः ॥२१॥

॥ इति वाररुचे निरुक्तसमुच्चये चतुर्थः कल्पः ॥

---

# संयोजनम्

## ११४-तमे पत्रे २२-पङ्क्त्यारम्भे

अन्वयव्यतिरेकाभ्यां दानं प्रशंसितुमाह। पृणन्तः देवादीन्हविरादिना प्रीणयन्तः सन्तो दुरितं दुष्टं यथा भवति तथा प्राप्तं दुःखमेनस्तत्साधनं पापं च मा आरन् मा प्राप्नुवन्। न केवलं दातार एवापि तु सूरयः देवानां स्तोतारः विद्वांसो मा जारिषुः जरया जीर्णा न भवेयुः। तथा सुव्रतासः शोभनकृच्छ्रचान्द्रायणादिनियमवन्तोऽपि मा जारिषुः। तर्हि एषामन्यो जनः क इति उच्यते। तेषां दातॄणां स्तोतॄणां वा अन्यस्तेभ्योऽन्यो यः कोऽपि पुरुषः परिधिः पापस्य परितो धारकोऽस्तु। यद्वा। अन्यो यः कश्च पापदेवः तेषां परिधिस्थानीयो व्यवधायकोऽस्तु। यथा अग्नेः परिधिः स्वयं रक्षःप्रभृतिभिर्बाध्यमानः स्वान्तर्हितमग्निं रक्षति तद्वत्। अथवा अन्यो धर्मविशेषस्तेषां परिधिः परिधानमस्तु कवचस्थानीयोऽस्तु। तर्हि किं प्राप्नुयुरिति। उच्यते। अपृणन्तं देवादीनप्रीणयन्तमदातारं शोकास्तत्साधनाः पाप्मानोऽभि अभिमुखं संयन्तु सम्यक् प्राप्नुवन्तु। वयं सुखिनो भवेमेत्यर्थः ॥७॥

---